श्रीराजराजेश्वरोजयति ।

# श्रीलघुकौमुदी ।




श्रीमद्वरदराजाचार्यविरचिता

परममाहेश्वरभट्टमाहेश्वरतनुजनुः

शीघ्रकविशंकरलालप्रणीतया

प्रयोगमणिमालाख्यया व्याख्यया समेता ।

रैक (रायकवाल) श्रीजीवरामशास्त्रिनिर्मितया

टिप्पण्या समलंकृता ।

इयं च

श्रीवेदधर्मसभया

मुम्बय्यां

जावजी दादाजी इत्येतेषां

निर्णयसागराख्यमुद्रालये मुद्रापयित्वा प्रसिद्धिं नीता ।

संवन्नेत्रेषुनन्देन्दु १९५२ मितवर्षीय चैत्रे पूर्णिमायां समाप्तिमफाणीत् ॥

मूल्यम् २॥ रूप्यकः ।

ॐ तत्सत्

व्यासाष्टकधरजीवनरामपुत्रो
मुद्रापय प्रणयत प्रभुरामनाम्ना ।
श्रीवेदधर्मपरिषत्परमानुमत्या
सत्पुस्तकं यदिदमस्तु मुदे विदां तत् ॥ १ ॥

---



श्रीमन्महाराजा ठाकोरसाहेब श्री ७ सर वाघजी बहादुर
के. सी. आइ. ई.
संस्थान श्रीमोरवी.




श्रीराजराजेश्वरो जयति ।

# अर्पणपत्रम् ।

श्रीकायाजिन्नृपकुलमणेः श्रीरयाजिक्षितीन्दोः
सत्पुत्रं त्वां सदयहृदयं स्वप्रजाश्रेयइच्छुम् ।
दृष्ट्वा विद्यासुरतरुलताः कर्तुमस्मिन् स्वकीये
राज्योद्याने फलभरनताः सर्वदोत्साहवन्तम् ॥ १ ॥
दर्शं दर्शं मयि नयनिधे सत्कृपादृष्टिवृष्टी-
र्दर्शं दर्शं मयि विरचितांश्चोपकारानपारान् ।
दर्शं दर्शं मयि च ममतां तावकीं ते च पित्रो-
स्त्वामेवात्र स्वकृतिरचनोपायनार्हं तु मन्ये ॥ २ ॥
तस्मादेतद्वरनरपते पुस्तकं प्रेमपूर्वम्
तुल्यं विद्याविनयनिधये संसमर्प्य प्रमोदात् ।
मन्ये राजन् सफलमखिलं स्वं श्रमं राज्यभक्तिं
स्वां स्वांतस्थामपि च सफलां मन्य एतावताहम् ॥ ३ ॥
महाराजश्रीरयाजित्पाठशालैकशास्त्रिणः ।
एषा शंकरलालस्य विज्ञप्तिः प्रति भूपतिम् ॥ ४ ॥

श्रीशिवो जयति.

# अर्पणपत्रिका.

## श्रीमन् महाराजाधिराज श्री ७ सर वाघजी बहादुर

के. सी. आइ. ई.;

आप दयाळु नामदार स्वप्रजाना श्रेयने अर्थे निरंतर प्रयत्नमां रहो छो,
स्वराज्यरूपी उत्तम उद्यानमां सर्वत्र विद्यारूपी कल्प-लताओ
फलित करवा अत्यंत उत्साह धरावो छो. अने आ माणस
उपर अनेक उपकारो करी कृपादृष्टिनी वृष्टी करो छोः
आ अने बीजा अनेक सद्गुणो जोई आ माणस
आपनेज पोतानी रचनानुं अर्पणपात्र माने तो
कंई आश्चर्य नही; अने तेथी आ पुस्तक
आप नामदारने अर्पण करी ते
स्वश्रमनी सफळता अने अंतः-
करणमां रहेली राज्यभक्तिनी
कृतार्थता गणेछे.

वि० महाराज श्रीरवाजीराज पाठशालाना शास्त्री

**शंकरलाल माहेश्वर.**

# प्रस्तावना.

---

यां विना नैकमर्द्धं वाप्यक्षरं लिखितुं जनः ।
शक्तस्तामीशकरुणां तरुणां प्रणमाम्यहम् ॥ १ ॥

मध्याल्पगध्या लघ्वी चाप्यलघ्वी स्वप्रसादतः ॥
नमस्तस्मै कृता येन कौमुदी जगतां मुदे ॥ २ ॥

अयि सर्वसहासहाध्यायिस्वान्ताः प्रशान्ताशया विपश्चिच्चिन्तामणयः संवद्गगनगुणनन्देन्दु १९३० मितवर्षीयाधिकाषाढशुक्लपक्षपञ्चम्यां देवदैशिकवासरे स्वस्थानश्रीमोरवीपुरपुरंदरस्य पुरंदरपुर-प्रियातिथेर्महाराजश्रीरवाजिराजवर्मणो धर्मपत्नी सांप्रतं स्वकीयं पितृपैतामहं राज्यसिंहासनमलं-कुर्वतः श्रीव्याघ्रजिन्नृजानेर्जननी परमपवित्रचरित्रा पतिव्रतारत्नं बाईश्रीमोंघीबाख्या संवद्रसनयन-नन्दक्ष्मा १९२६ मितवर्षीयवलक्षपक्षषष्ठीरविवासरसमासादितकैलासशैलावासस्यात्मप्राणप्रियस्य महाराजश्रीरवाजिराजवर्मणः पुण्यमभिधानमजरममरं च कर्तुं महाराजश्रीरवाजिराजपाठशालां स्थापयित्वा दत्वा च तदध्यक्षतापदं परमया मुदा पुत्रनिर्विशेषप्रीतिपरिपालितायास्मै जनाय वत्स प्रथममेतत्पाठशालाभ्यागतबालानां कौमुदीपरिशीलनं सुगमतमं यथा स्यात्तथा किमपि विधेयं वत्सेनानन्तरं चाभिनवानि काव्यकथानाटकानि निर्माय निर्माय तमाश्रयतया-सादितपरमशिवसालोक्यमुक्तेर्महाराजस्य पुण्या कीर्तिश्चिरस्थायिनी यथा स्यात्तथा प्रयतितव्य-मित्याज्ञापयन्निजाज्ञावशं जनममुं सा महाराज्ञी यदा तदा तदाज्ञां नन्दनवनचन्दनमालामिव सानन्दं शिरसा विधार्य बाल्ये लघुकौमुदीपाठपरिशीलनसमये स्वल्पज्ञतयाल्पप्रज्ञतया चाकुलाकुलस्वान्त-शुत्तये स्वस्मै स्वकीयैर्दयामृतमयाशयैः सकलशास्त्रज्ञताप्रणयिनी प्राणप्रियैः स्वौरसपुत्रनिर्वि-शेषीकृतधर्मपुत्रैः सद्गुरुवर्यैः श्रीकेशवशास्त्रिभिः स्वाभाविकशिष्यवात्सल्यविवशाशयतया तदा समर्पिता सूक्तिमुक्ताः स्मारं स्मारं किमाम्यः परं कौमुदीपाठपठनपाठनसुगमतमताकरणकर-णमिति चेतसि चिरं विचार्य स्वकीयस्वान्तनिशान्तनिहिताभिस्ताभिरेव श्रीसद्गुरुवर्यसूक्तिमुक्ताभिः श्रीकेशवकृपालेशलहरील्यपरपर्यायां प्रयोगमणिमालामिमामतिलघीयसीं लघुकौमुदीव्याख्यां व्यरचयज्जनोऽयम् । परं प्रत्यूहव्यूहपरंपरापराधीनतया न तां मुद्रापयित्वा प्रसिद्धिं प्रापयितुं प्राभवत् । इदानीं परमं साहाय्यं समर्पयित्वैनां प्रसिद्धिं प्रापयितुः श्रीवेदधर्मसमाव्यशाणां जीवनतनु-जानां वैद्यवराणां **प्रभुरामशर्मणां** टिप्पणीप्रणयनपूर्वकपुस्तकपरिशोधनपरिश्रमं स्वीकुर्वतां महावैया-करणवर्याणां परमहितैषिणां शास्त्रिवर्याणां रेके ( रायकवाल ) **श्रीजीवरामशर्मणा**मेतत्पुस्तकप्र-

सिद्धिसिद्धये प्रथमप्रवृद्धपरिकरस्य मद्गुहरिरामतनुजन्मनो वेदधर्मसभातन्त्रिणो केशवलालस्य बी. ए. उपपदधारिणो **विश्वनाथस्य** वत्सस्य च नोपकारभारमहं कदाचिदपि विस्मरिष्यामि। महांबापुरमुपेत्य परमया मुदा तन्मुद्रापणप्रयत्नपरंपराश्चाचरतो मदीयशिष्यस्य लक्ष्मीशङ्कर-स्याप्यस्त्यस्मिन्कर्मण्यविस्मार्यः परिश्रमो भवतु भवेऽस्मिन् भगवान् सर्वेषां मे संहायकराणां सो सहायकरः सकललोकशंकरः श्रीशंकर इति आर्थये प्रणतप्रियंकरं श्रीशंकरं प्रणामसहस्रसमर्पणपूर्वम्। शिवमस्तु सदा सदाशिवप्रसादात्सर्वेषामित्यलं पल्लवितेनेति ॥

अस्यां कृतौ किमपि सद्गुणवत्तु यच्चेत्
तन्मे दयार्द्रगुरुवर्यदयैकमूलम् ॥
यद्दोषवत्तदखिलं मम जाड्यजन्यम्
ज्ञात्वेति तत्सहृदयैर्दयया विशोध्यम् ॥ १ ॥

विज्ञशिरोमणिभट्टमाहेश्वरात्मजस्य शंकरलालस्य ॥

प्रयोगमणिमालेयं श्रीमद्गौरीगिरीशयोः
श्रीमत्पादाब्जयुगले पूर्णप्रेम्णा समर्प्यते ॥

एतत्पुस्तकसेवनात्कमपि यं बोधं बुधाः प्राप्नुयुः
सद्विद्यार्थिदशावशाः किमपि यत्सौख्यं च सद्बोधजम् ॥
तत्सत्पुण्यभुजस्तु तातचरणाः श्रीदेशिकेशाश्च मे
श्रीमन्तश्च रवाजिराजमणयः सन्त्वीश्वरानुग्रहात् ॥ १ ॥

---

॥ श्रीः ॥

# ॥ अथ लघुकौमुदी प्रारभ्यते ॥

॥ श्रीगणेशाय नमः ॥

नत्वा सरस्वतीं देवीं शुद्धां गुण्यां करोम्यहम् ॥
पाणिनीयप्रवेशाय लघुसिद्धान्तकौमुदीम् ॥ १ ॥

## ॥ अथ संज्ञाप्रकरणम् ॥

**अइउण् १ ऋऌक् २ एओङ् ३ ऐऔच् ४ हयवरट् ५ लण् ६ ञमङणनम् ७ झभञ् ८ घढधष् ९ जबगडदश् १० खफछठथचटतव् ११ कपय् १२ शषसर् १३ हल् १४** ॥ इति माहेश्वराणि सूत्राण्यणादिसंज्ञार्थानि । एषामन्त्या इतः । हकारादिष्वकार उच्चारणार्थः । लण्मध्ये त्वित्संज्ञकः ॥ **हलन्त्यम्** ।१।३।३। उपदेशेऽन्त्यं हलित्स्यात् । उपदेश आद्योच्चारणम् । सूत्रेष्वदृष्टं पदं सूत्रान्तरादनुवर्तनीयं सर्वत्र ॥ **अदर्शनं लोपः** ।१।१।६०। प्रसक्तस्यादर्शनं लोपसंज्ञं स्यात् ॥ **तस्य लोपः** ।१।३।९। तस्येतो लोपः स्यात् । णादयोऽणाद्यर्थाः ॥ **आदिरन्त्येन सहेता** ।१।१।७१। अन्त्येनेता सहित आदिर्मध्यगानां स्वस्य च संज्ञा स्यात् । यथाणिति अइउवर्णानां संज्ञा । एवमक् अच् हल् अलित्यादयः ॥ **ऊकालोऽज्झ्रस्वदीर्घप्लुतः** ।१।२।२७। उश्च ऊश्च ऊ३श्च वः । वां काल इव कालो यस्य सोऽच् क्रमाद्ध्रस्वदीर्घप्लुतसंज्ञः स्यात् । स प्रत्येकमुदात्तादिभेदेन त्रिधा ॥ **उच्चैरुदात्तः** ।१।२।२९। **नीचैरनुदात्तः** ।१।२।३०। **समाहारः स्वरितः** ।१।२।३१। स नवविधोऽपि प्रत्येकमनुनासिकाननुनासिकत्वाभ्यां द्विधा ॥ **मुखनासिकावचनोऽनुनासिकः** ।१।१।८। मुखसहितनासिकयोच्चार्यमाणो वर्णोऽनुनासिकसंज्ञः स्यात् । तदित्थम् । अइउऋ एषां वर्णानां प्रत्येकमष्टादश भेदाः । ऌवर्णस्य द्वादश । तस्य दीर्घाभावात् । एचामपि

द्वादश । तेषां ह्रस्वाभावात् ॥ **तुल्यास्यप्रयत्नं सवर्णम्** ।१।१।९। ताल्वादिस्थानमाभ्यन्तरप्रयत्नश्चेत्येतद्द्वयं यस्य येन तुल्यं तन्मिथः सवर्णसंज्ञं स्यात् । (ऋऌवर्णयोर्मिथः सावर्ण्यं वाच्यम्) अकुहविसर्जनीयानां कण्ठः । इचुयशानां तालु । ऋटुरषाणां मूर्धा । ऌतुलसानां दन्ताः । उपूपध्मानीयानामोष्ठौ । ञमङणनानां नासिका च । एदैतोः कण्ठतालु । ओदौतोः कण्ठोष्ठम् । वकारस्य दन्तोष्ठम् । जिह्वामूलीयस्य जिह्वामूलम् । नासिकाऽनुस्वारस्य ॥ यत्नो द्विधा । आभ्यन्तरो बाह्यश्च । आद्यः पञ्चधा । स्पृष्टेषत्स्पृष्टेषद्विवृतविवृतसंवृतभेदात् । तत्र स्पृष्टं प्रयतनं स्पर्शानाम् । ईषत्स्पृष्टमन्तःस्थानाम् । ईषद्विवृतमूष्मणाम् । विवृतं स्वराणाम् । ह्रस्वस्यावर्णस्य प्रयोगे संवृतम् । प्रक्रियादशायां तु विवृतमेव ॥ बाह्यप्रयत्नस्त्वेकादशधा । विवारः संवारः श्वासो नादोऽघोषो घोषोऽल्पप्राणो महाप्राण उदात्तोऽनुदात्तः स्वरितश्चेति । खरो विवाराः श्वासा अघोषाश्च । हशः संवारा नादा घोषाश्च । वर्गाणां प्रथमतृतीयपञ्चमा यणश्चाल्पप्राणाः । वर्गाणां द्वितीयचतुर्थौ शलश्च महाप्राणाः । कादयो मावसानाः स्पर्शाः । यणोऽन्तःस्थाः । शल ऊष्माणः । अचः स्वराः । ≍क≍ख इति कखाभ्यां प्रागर्धविसर्गसदृशो जिह्वामूलीयः । ≍प≍फ इति पफाभ्यां प्रागर्धविसर्गसदृश उपध्मानीयः । अं अः इत्यचः परावनुस्वारविसर्गौ ॥ **अणुदित्सवर्णस्य चाप्रत्ययः** ।१।१।६९। प्रतीयते विधीयत इति प्रत्ययः । अविधीयमानोऽणुदिच्च सवर्णसंज्ञः स्यात् । अत्रैवाण् परेण णकारेण । कुचुटुतुपु एते उदितः । तदेवम् । अ इत्यष्टादशानां संज्ञा तथेकारोकारौ । ऋकारस्त्रिंशतः । एवं ऌकारोऽपि । एचो द्वादशानाम् । अनुनासिकाननुनासिकभेदेन यवला द्विधा । तेनानुनासिकाननुनासिकास्ते द्वयोर्द्वयोः संज्ञा ॥ **परः सन्निकर्षः संहिता** ।१।४।१०९।[1] वर्णानामतिशयितः सन्निधिः संहितासंज्ञः स्यात् ॥ **हलोऽनन्तराः संयोगः** ।१।१।७। अज्भिरव्यवहिता हलः संयोगसंज्ञाः स्युः ॥ **सुप्तिङन्तं पदम्** ।१।४।१४।[2] सुबन्तं तिङन्तं च पदसंज्ञं स्यात् ॥ इति संज्ञाप्रकरणम् ॥

---

श्रीगणेशाय नमः ॥ श्रीसरस्वत्यै नमः ॥ श्रीसद्गुरुभ्यो नमः ॥ विद्यां हृद्यां प्रदद्यान्मे स्वच्छः प्रकृतिकोमलः । श्रुतिसेवी सरस्वत्या दयार्द्रकेशदेशिकः ॥१॥ धृत्वा धृत्वा हृदि गिरिसुताप्राणनाथाङ्घ्रिपद्मं नत्वा नत्वा सदयहृदयान् सद्गुरून् केशवाख्यान् । स्मृत्वा स्मृत्वा परशिवपदालम्बिनस्तातपादान् धर्तुं प्रेम्णा स्पृहयति करे लेखनीं स्वां जनोऽयम् ॥ २ ॥ तेषामेषा तरुणकरुणावीक्षणैर्लेखनी मे निर्जीवापि प्रचुरलिखने कुण्ठिता क्वापि मा स्तात् । लेख्यं चापि स्फुरतु हृदये निर्मलं सा दयार्द्रा श्रीवागीशा यदुत्थमधुना हन्तु मे बुद्धिजाड्यम् ॥ ३ ॥ आसीद्गौरीमरहरपदाम्भोजयुग्मैकबन्धुः शौर्यौदार्यप्रणयनिलयः श्रीरत्नाजिः क्षितीन्द्रः । यस्याद्यापि प्रहसितकरुणास्नानावृत्तेः समस्तैर्दिग्दर्यैः प्रतिदिशमहो गीयते कीर्तिरम्या ॥ ४ ॥ तस्मिन् याते स्मरहरपदं ना-

---

१ वर्णानामन्तरेणार्धमात्राधिककालव्यवायाभावः संहितात्वम् ॥ २ अनन्तरशब्दस्तु व्यवधानाभाववाची व्यवधानं तु विजातीयेनैवेत्याशयमिति ॥

## अथ अच्संधिप्रकरणम् ।

**इको यणचि** ।६।१।७७। इकः स्थाने यण् स्यादचि संहितायां विषये । सुधी उपास्य इति स्थिते ॥ **तस्मिन्निति निर्दिष्टे पूर्वस्य** ।१।१।६६। सप्तमीनिर्देशेन विधीयमानं कार्यं वर्णान्तरेणाव्यवहितस्य पूर्वस्य बोध्यम् ॥ **स्थानेऽन्तरतमः** ।१।१।५०।

---

मपुण्यं तदीयं कर्तुं स्नेहादजरममरं धर्मपत्नी तदीया । श्रीमोङ्घीबा सदयहृदया शुद्धसौशील्यशाला धर्म्यं कर्मप्रकरमकरोदात्मनाथैकभक्तिः ॥ ५ ॥ महाराजश्रीरवाजिपाठशालाभिधा तया । विशाला स्थापिता शाला स्वनाथाख्याभिवृद्धये ॥ ६ ॥ विद्यार्थिनोऽत्रागता ये पठेयुस्ते तु कौमुदीम् । यथाऽऽसा तथा कर्तुं सा मामाज्ञापयन्मुदा ॥ ७ ॥ विद्वद्वृन्दैकदासेन तदाज्ञाकुसुमावलिः । धृता मया स्वशिरसा प्रणयप्रणतेन सा ॥ ८ ॥ प्रयोगसिद्धौ सूत्राणां प्रातिक्रमम्नुक्षणस् । मया विस्मरता क्लेशो योऽनुभूतोऽस्ति दुःसहः ॥ ९ ॥ स मा भवतु बालानां पठतां लघुकौमुदीम् । विरच्यते विचार्येत्थं बालकण्ठार्पणोचिता ॥१०॥ श्रीकेशवकृपालेशलहरीस्पराहृया ॥ प्रयोगमणिमालेयं मया सरलया गिरा ॥ ११ ॥ इयं मे विश्वविख्यातगुणयोर्गुरुवर्ययोः । प्रियावलोकपूता स्ताच्छ्रीकेशवमहेशयोः ॥१२॥ प्रणतिकुसुममालां सर्वविद्वद्वराणां चरणकमलयुग्मेष्वादरेणार्पयित्वा । सदयहृदयवृत्तीन् प्रार्थये तान् प्रतीत्थं लघुमतिकृतमेतल्लाघवं मे क्षमध्वम् ॥१॥

सुधी अत्रे उपास्येत्यवस्थायां कस्य सूत्रस्य प्राप्तिः संजाघटीति । **इको यणचि** ॥ इक इति षष्ठ्यन्तं यण् इति प्रथमान्तं अचीति सप्तम्यन्तं त्रिपदावच्छिन्नमिदं सूत्रम् । इक्प्रत्याहारान्तःपातिनो वर्णस्य अच्प्रत्याहारान्तःपातिनि वर्णे परे सति यण्प्रत्याहारान्तःपाती वर्णः स्यात् सत्यां संहितायाम् । अत्र सकारोत्तरवर्त्युकार इक् धकारोत्तरवर्तीकार इक् उपास्येत्यस्योकारश्चेक् सकारोत्तरवर्त्युकारोऽच् धकारोत्तरवर्तीकारोऽच् उपास्येत्यस्योकारश्चाच् एवमत्र त्रय इकस्त्रयोऽचश्च सन्ति तेषां मध्ये कस्मिन् सति कस्य स्यादित्याशङ्कायां नहि सकारोत्तरवर्तिन उकारस्य धीकारोत्तरवर्तिनीकारे परे धकारव्यवधानात्संहिताया अभावात् यण्संभवः नाप्युपास्येत्यस्योकारस्य पकारोत्तरवर्तिन्याकारे परे पकारव्यवधानात्संहिताया अभावात् यणुसंभवः किंतु धकारोत्तरवर्तिन ईकारस्य उपास्येत्यस्योकारस्य चातिशयितसन्निधित्वाद्यण्संभवः परं स ईकारस्योकारे सति स्यात् उकारस्य वा ईकारे सति स्यादित्याशङ्कायां कस्य सूत्रस्य प्राप्तिर्बोभवीति । **तस्मिन्निति निर्दिष्टे पूर्वस्य** । तस्मिन्निति सप्तम्यन्तं इतीत्यव्ययं निर्दिष्ट इति सप्तम्यन्तं पूर्वस्येति षष्ठ्यन्तं चतुष्पदावच्छिन्नमिदं सूत्रम् । सप्तम्या निर्देशेन विधीयमानं यत्कार्यं तद्वर्णान्तरव्यवधानविरहितो यः पूर्वस्तस्य स्यात् कावात्र सप्तमी **इको यणची**ति सूत्रे अचीति सप्तमी तया निर्दिष्टं किंवा कार्यं इकः स्थाने यण्रूपं कार्यं तच्च व्यवधानविरहितस्य पूर्वस्य स्यात् । ततः पूर्वस्येकारस्य यण् प्रत्याहारान्तःपातिषु सर्वेषु वर्णेषु प्राप्तेषु तेषां मध्यात्कोऽनात्र माव्यमिति शङ्कायां कस्य सूत्रस्य प्राप्तिर्वरीवरीति । **स्थानेऽन्तरतमः** । स्थाने इति सप्तम्यन्तं अन्तरतम इति प्रथमान्तं द्विपदावच्छिन्नमिदं सूत्रम् ।

प्रसंगे सति सदृशतम आदेशः स्यात्। सुध् य् उपास्य इति जाते ॥ **अनचि च** ।८।४।४७। अचः परस्य यरो द्वे वा स्तो न त्वचि ॥ **झलां जश् झशि** ।८।४।५३। स्पष्टम्। इति धकारस्य दकारः ॥ **संयोगान्तस्य लोपः** ।८।२।२३। संयोगान्तं यत्पदं तदन्तस्य लोपः स्यात्॥ **अलोऽन्त्यस्य** ।१।१।५२। षष्ठीनिर्दिष्टस्यान्त्यस्याल आदेशः स्यात्। इति यलोपे प्राप्ते (यणः प्रतिषेधो वाच्यः) सुद्ध्युपास्यः, मद्ध्वरिः, धात्त्रंशः,

प्रसंगे सति यः सदृशतमः स आदेशः स्यात्। को वा प्रसंगः इकः स्थाने यण्रूपः प्रसंगस्तस्मिन् सति सदृशतम आदेशः स्यात्। कुतः सादृश्यं स्थानतः। कथमिति चेदित्थम्। इकारस्य किं स्थानं इचुयशानां तालुरिति तालुस्थानम्। तालुस्थाने च यण्प्रत्याहारान्तःपाती को वास्ति वर्णो यकारोऽस्ति ततो यकारो जातस्तत्र कस्य सूत्रस्य प्राप्तिर्बोभवीति। **अनचि च**। अनचीति सप्तम्यन्तं चेत्यव्ययं द्विपदावच्छिन्नं सूत्रमिदम्। अच्प्रत्याहारान्तःपातिनो वर्णात्परस्य यरो द्वित्वं स्यादचि परतो न स्यात् को वात्राच् सकारोत्तरवर्त्युकारोच् तस्मात्परः को वा यर् धकारस्तस्य द्वित्वे कृते सुध्ध्य्उपास्येति जातम्। तत्र कस्य सूत्रस्य प्राप्तिर्भवीवर्ति। **झलां जश् झशि** ॥ झलामिति षष्ठ्यन्तं जशिति प्रथमान्तं झशीति सप्तम्यन्तं त्रिपदावच्छिन्नमिदं सूत्रम्। झल्प्रत्याहारान्तर्वर्तिनां वर्णानां स्थाने जश्प्रत्याहारान्तर्वर्तिनो वर्णाः स्युः झश्प्रत्याहारान्तर्वर्तिनि वर्णे परे सति कोऽयात्र झल्प्रत्याहारान्तर्वर्ती वर्णः पूर्वधकारस्तस्मात्परः कोऽस्ति झश्प्रत्याहारान्तःपाती वर्णो वर्ततेऽत्र द्वितीयो धकारो झश्प्रत्याहारान्तःपाती वर्णस्तस्मिन् परे पूर्वधकारस्य जश्प्रत्याहारान्तःपातिनः पञ्चापि वर्णाः प्राप्तास्तेषां मध्यात्केनात्र भाव्यमित्याशङ्कायां **स्थानेऽन्तरतमः** कुतः सादृश्यं स्थानतः कथमिति चेदित्थं धकारस्य किं स्थानं दन्तस्थानं दन्तस्थानीयेषु जश्प्रत्याहारान्तःपाती कोऽस्ति वर्णो दकारोऽस्ति ततः पूर्वधकारस्य दकारे कृते सुद्ध्य्उपास्येति जातं तत्र कस्य सूत्रस्य प्राप्तिर्भवीवर्ति। **संयोगान्तस्य लोपः** ॥ संयोगान्तस्येति षष्ठ्यन्तं पदं लोप इति प्रथमान्तं पदं द्विपदघटितमिदं सूत्रम्। किमत्र वर्तते संयोगान्तं पदं सुद्ध्य् इति वर्ततेऽत्र संयोगान्तं पदं ततस्तस्य सर्वस्य लोपे प्राप्ते। **अलोऽन्त्यस्य** ॥ अल इति षष्ठ्यन्तं पदं अन्त्यस्येति षष्ठ्यन्तं पदमेवं द्विपदघटितमिदं सूत्रम्। षष्ठीनिर्दिष्ट आदेशोऽन्त्यस्य स्यात्। का वा षष्ठी **संयोगान्तस्य लोप** इतिसूत्रे संयोगान्तस्येति षष्ठी तया निर्दिष्टः को वादेशो लोपरूप आदेशः स तु अन्त्यस्य यकारस्य प्राप्तस्तथा सति यणः (प्रतिषेधो वाच्य इति वार्तिकेन यकारस्य लोपो न स्यात्। असिद्धं बहिरङ्गमन्तरङ्गे इत्यनया परिभाषया निरपेक्षमन्तरङ्गं सापेक्षं बहिरङ्गमिति पक्षे निरपेक्षत्वेनान्तरङ्गस्य **संयोगान्तस्य लोप** इति सूत्रेण प्राप्तस्य लोपविधेः प्राप्तौ **इको यणचि**ति सूत्रेण प्राप्तस्य अच्संहितादिसापेक्ष

१ अत्र प्रयत्नो नष्टः क्वापि न भवतीत्येव। स्पर्शुरुणाभावे तु यत्किञ्चित् यान्ते सत्येव भवति नान्यथा

लाकृतिः ॥ **एचोऽयवायावः** ।६।१।७८। एचः क्रमादय् अव् आय् आव् एते स्युरचि ॥ **यथासंख्यमनुदेशः समानाम्** ।१।३।१०। समसंबन्धी विधिर्यथासंख्यं स्यात् । हरये, विष्णवे, नायकः, पावकः ॥ **वान्तो यि प्रत्यये** ।६।१।७९। यकारादौ प्रत्यये परे ओदौतोरवावौ स्तः । गव्यम्, नाव्यम् ( अध्वपरिमाणे च ) गव्यूतिः ॥ **अदेङ् गुणः** ।१।१।२। अदेङ् च गुणसंज्ञः स्यात् ॥ **तपरस्तत्कालस्य** ।१।१।७०। तः परो यस्मात्स च तात्परश्चोच्चार्यमाणसमकालस्यैव संज्ञा स्यात् ॥ **आद्गुणः** ।६।१।८७।

---

बहिरङ्गस्य यण्विधेरसिद्धत्वादत्र यण एव प्रादुर्भावाभावः कुतस्तल्लोपप्रसंग इति यलोपाभावे अज्झीनं परेण संयोज्यमित्यनेनाज्झीनानां दकारधकारयकाराणां उपास्येत्यस्योकारेण सह संयोगे कृते ॥ सुद्ध्युपास्य इति सिद्धम् ॥ एवमेव च मधु अग्रे अरिरित्यत्र **इको यणची**ति सूत्रेण यण्संबन्धिषु चतुर्षु वर्णेषु प्राप्तेषु **स्थानेऽन्तरतम** इति सूत्रेण उकारस्योष्ठ्यत्वात् ओष्ठ्येषु च वकारस्यैव विद्यमानत्वाद्वकारे जाते **अनचि चे**त्यनेन धकारस्य द्वित्वे **झलां जश् झशी**ति पूर्वधस्य दत्वे **संयोगान्तस्य लोप** इति लोपे प्राप्ते **अलोऽन्त्यस्ये**त्यनेनान्त्यस्य वकारमात्रस्य लोपे प्राप्ते यणः प्रतिषेधो वाच्य इति वलोपाभावे अज्झीनं परेण संयोज्यमिति दकारधकारवकाराणामरिरित्यस्याकारेण सहसंयोगे कृते ॥ मद्ध्वरिः ॥ धातृ अग्रे अंश इत्यत्र **इको यणची**ति सूत्रेण तकारोत्तरवर्तिन ऋकारस्य मूर्धन्यत्वान्मूर्धन्येषु च यणोऽन्तःपातिनो रकारस्यैव विद्यमानत्वात् रकारे जाते । जाते **चानचि चे**त्यनने तकारस्य द्वित्वे संयोगे च कृते ॥ धात्त्रंशः ॥ लृ अग्रे आकृतिरित्यत्र **इको यणची**त्यनेन लृकारस्य दन्त्यत्वात् दन्त्येषु च यण्प्रत्याहारान्तःपातिनो लकारस्यैव विद्यमानत्वात् लकारे जाते संयोगे च कृते ॥ लाकृतिः ॥ हरे अग्रे ए इत्यवस्थायां कस्य सूत्रस्य प्राप्तिर्भवीति । **एचोयवायावः** ॥ इत्यनेन रकारोत्तरवर्तिन एकारस्य अयादिषु चतुर्ष्वादेशेषु प्राप्तेषु तेषां मध्यात्केनात्र भाव्यमित्याकाङ्क्षायां **यथासंख्यमनुदेशः समाना**मित्यनेनात्र एचोऽपि चत्वार आदेशा अपि चत्वारस्तत एकस्यैक एवादेशः स्यात् । अत एकारस्य अयादेशे कृते कृते च संयोगे ॥ हरये ॥ विष्णो अग्र ए इत्यत्र **एचोयवायाव** इत्यनेन यथासंख्यत्वात् अवादेशे कृते कृते च संयोगे ॥ विष्णवे ॥ नै अग्रे अकः इत्यत्र **एचोयवायाव** इत्यनेन चतुर्ष्वादेशेषु प्राप्तेषु यथासंख्यत्वादायादेशे कृते कृते च संयोगे ॥ नायकः ॥ पौ अग्रे अकः इत्यत्र **एचोयवायाव** इत्यनेन यथासंख्यत्वात् आवादेशे कृते कृते च संयोगे ॥ पावकः ॥ गो अग्रे यं इत्यत्र **वान्तो यि प्रत्यये** इत्यनेन यादौ प्रत्यये परे अवादेशे कृते कृते च संयोगे ॥ गव्यं ॥ नौ अग्रे यमित्यत्र **वान्तो यि प्रत्यये** इत्यनेन नकारोत्तरवर्तिन औकारस्य आवादेशे कृते ॥ नाव्यम् । गो अग्रे यूतिरित्यत्र अध्वपरिमाणे चेत्यनेन अवादेशे कृते ॥ गव्यूतिः ॥ उप अग्रे इन्द्र इत्यत्र **आद्गुण** इति सूत्रेण पूर्वपरयोः स्थाने

---

* अत्र तपरशब्दे आवृत्त्यादिकं कर्तव्यमन्यथा समासद्वयं न स्यात् । सकृदुच्चरितः शब्दः सकृदेवार्थं गमयतीत्यनेन बाधात् ।

अवर्णादचि परे पूर्वपरयोरेको गुणादेशः स्यात् । उपेन्द्रः, गङ्गोदकम् ॥ **उपदेशेऽजनुनासिक इत्** ।१।३।२। उपदेशेऽनुनासिकोऽजित्संज्ञः स्यात् । प्रतिज्ञाऽनुनासिक्याः पाणिनीयाः । लण्सूत्रस्थावर्णेन सहोच्चार्यमाणो रेफो रलयोः संज्ञा ॥ **उरण् रपरः** ।१।१।५१। ऋ इति त्रिंशतः संज्ञेत्युक्तं तत्स्थाने योऽण् स रपरः सन्नेव प्रवर्तते । कृष्णर्द्धिः, तवल्कारः ॥ **लोपः शाकल्यस्य** ।८।३।१९। अवर्णपूर्वयोः पदान्तयोर्यवयोर्लोपो वाशि परे ॥ **पूर्वत्रासिद्धम्** ।८।२।१। सपादसप्ताध्यायीं प्रति त्रिपाद्यसिद्धा त्रिपाद्यामपि पूर्वंप्रति परं शास्त्रमसिद्धम् । हर इह, हरयिह, विष्ण इह, विष्णविह ॥ **वृद्धिरादैच्**

---

गुणसंबन्धिनि वर्णत्रये प्राप्ते तेषां मध्यात्केनात्र भाव्यमित्याशङ्कायां पकारोत्तरवर्त्यकारस्य कण्ठ्यत्वात् इन्द्रशब्दस्यैकारस्य च तालव्यत्वात्कण्ठतालुस्थानमध्ये च गुणसंबन्धिन एकारस्यैव विद्यमानत्वात् एकारे कृते कृते च संयोगे ॥ उपेन्द्रः ॥ गङ्गोदकमपि तथैवोह्यम् ॥ कृष्ण अत्र ऋद्धिरित्यत्र कस्य सूत्रस्य प्राप्तिर्भवितुमर्हति । **आद्गुणः** ॥ को वा वर्णः ष्णकारोत्तरवर्त्यकारस्तस्मात्परः को वाचू ऋद्धिरित्यस्य ऋकारस्तस्मिन् परे पूर्वपरयोः स्थाने गुणसंबन्धिनस्त्रयो वर्णाः प्राप्तास्तेषां मध्यात्केनात्र भाव्यम् । **स्थानेन्तरतमः** ॥ को वात्र प्रसंगः पूर्वपरयोः स्थाने गुणरूपस्ततः सदृशतम एव स्यात् । कुतः सादृश्यं स्थानतः कथमिति चेदित्थं ष्णकारोत्तरवर्त्यकारस्य किं स्थानं कण्ठस्थानम् । ऋकारस्य किं स्थानं मूर्द्धास्थानम् । एवं कण्ठमूर्द्धस्थानयोर्मध्ये गुणसंबन्धी कोऽस्ति वर्णः कण्ठस्थाने त्वस्त्यकारः परं मूर्द्धस्थाने न कोप्यस्त्यतः किं विधेयमिति चेदुच्यते । **उरण्रपरः** ॥ अत्र ऋस्थाने अकारेण भवितव्यं तच्च रकारपरेणैव भवितव्यमिति रकारपरे अकारे जाते कृष्ण् अर् धिरिति जाते कृते च संयोगे ॥ कृष्णर्द्धिः ॥ एवमेव तव अत्र लृकार इत्यत्र लृस्थाने उपरेऽण् प्रत्याहारसंबन्धिन्यकारे जाते तवल्कारः । हरे अत्र इहेत्यवस्थायाम् ॥ **एचोयवायाव** इत्यनेन **यथासंख्यस्यात्** अयादेशे कृते ॥ हर् अय् इहेति जाते तत्र **लोपः शाकल्यस्येति** सूत्रेणावर्णपूर्वस्य यस्य लोपे कृते हर इहेति जाते तत्राद्गुण इत्यनेन गुणत्वे प्राप्ते **पूर्वत्रासिद्धमिति** सूत्रेण सपादसप्ताध्यायीस्थस्याद्गुण इति सूत्रस्य प्राप्त्यवसरे त्रिपादीस्थस्य **लोपः शाकल्यस्येति** सूत्रस्यासिद्धत्वात् रकारोत्तरवर्त्यकारस्य इहेत्यस्येकारस्य च मध्ये यकारस्य विद्यमानत्वात् **नाद्गुण** इति सूत्रस्य प्राप्तिरिति ॥ हरइह ॥ **लोपः शाकल्यस्येति** सूत्रस्याप्राप्तौ तु ॥ हरयिह ॥ विष्णो अत्र इहेत्यवस्थायामे**चोयवायाव** इति सूत्रेण ष्णकारोत्तरवर्तिन उकारस्य **यथासंख्यमनुदेशः समाना**मिति सूत्रेण अवादेशे कृते **लोपः शाकल्यस्येति** वकारलोपे च कृते **आद्गुण** इति गुणः प्राप्तः पर **पूर्वत्रासिद्धमिति** सपादसप्ताध्यायीस्थायिन आद्गुणस्याग्रे त्रिपाद्यन्तर्गतिनो **लोपः शाकल्यस्येति**

---

१ पूर्वशब्दस्तु सापेक्षवाचको यत्किंचित् परत्वे सत्येव तद्व्यवहारो नैरपेक्ष्यमिति पूर्वशब्देन परस्याक्षेपस्तथा च किमपेक्ष्य पूर्वत्व परत्वं चोपस्थितत्वादेतत्सूत्रापेक्षया तदालागत पूर्वो सपादसप्ताध्यायी परा त्रिपादी इति । तदेतत्सकलं मनसि निधायाह सपादेत्यादिः । २ अत्र चो" कुरिति कुत्व न भवति । अय, स्मयादीनि च्छन्दसीत्यनेन भ नात् ।

१।१।१। आदैच्च वृद्धिसंज्ञः स्यात् ॥ **वृद्धिरेचि** ।६।१।८८। आदेचि परे वृद्धिरेकादेशः स्यात्। गुणापवादः। कृष्णैकत्वम्, गङ्गौघः, देवैश्वर्यम्, कृष्णौत्कण्ठ्यम् ॥ **एत्येधत्यूठ्सु**। ६।१।८९। अवर्णादेजाद्योरेत्येधत्योरूठि च परे वृद्धिरेकादेशः स्यात्। उपैति, उपैधते, प्रष्ठौहः, एजाद्योः किम्। उपेतः। माभवान्प्रेदिधत्। (अक्षादूहिन्यामुपसंख्यानम्) अक्षौहिणी सेना। (प्रादूहोढोढ्येषैष्येषु) प्रौहः, प्रौढः, प्रौढिः, प्रैषः, प्रैष्यः, (ऋते च तृतीयासमासे) सुखेन ऋतः सुखार्तः। तृतीयेति किम्। परमर्तः। (प्रवत्सतरक-म्बलवसनार्णदशानामृणे) प्रार्णम्, वत्सतरार्णमित्यादि ॥ **उपसर्गाः क्रियायोगे**। १।४।५९। प्रादयः क्रियायोगे उपसर्गसंज्ञाः स्युः। प्र परा अप सम् अनु अव् निस् निर् दुस् दुर् वि आङ् नि अधि अपि अति सु उत् अभि प्रति परि उप। एते प्रादयः ॥ **भूवादयो धातवः** ।१।३।१। क्रियावाचिनो भ्वादयो धातुसंज्ञाः स्युः ॥

---

सूत्रस्यासिद्धत्वान्मध्ये यकारव्यवधानान्न गुणसंभवस्तेन ॥ विष्णइह ॥ वाग्रहणाल्लोपः **शाकल्यस्ये**त्यस्याप्राप्तौ तु ॥ विष्णविह ॥ कृष्ण अग्रे एकत्वमित्यत्र कस्य सूत्रस्य प्राप्तिर्वे-रीवरीति **वृद्धिरेचि** ॥ को वा वर्णः ष्णकारोत्तरवर्त्यकारः को वैच् एकत्वमित्यस्यैकारस्तस्मिन् परे सति पूर्वपरयोः स्थाने वृद्धिशब्देनात्र त्रयो वर्णाः प्राप्तास्तेषां मध्यात्केनात्र भाव्यम्। **स्थानेन्तरतमः** कथमितिचेदित्थं ष्णकारान्तःपातिनोकारस्य किं स्थानं कण्ठः। एका-रस्य किं स्थानं कण्ठतालुस्थानम्। एवं कण्ठतालुस्थानमध्ये वृद्धिसंबन्धी कोस्ति वर्ण एकारोस्ति तत ऐकारे जाते जाते च संयोगे ॥ कृष्णैकत्वम् ॥ एवमेव गङ्गौघः ॥ देवैश्वर्यं कृष्णौत्कण्ठ्यंच सिध्यति। उप अग्रे एतीत्यत्र **एत्येधत्यूठ्स्वि**ति सूत्रेण पकारोत्तरवर्त्यकारादेजादौ एति परे पूर्वपरयोः स्थाने वृद्धौ कृतायाम् ॥ उपैति ॥ एवं उपैधते, प्रष्ठौह इत्यादि ज्ञेयम्। उप अग्रे इत इत्यत्र प्र अग्रे इदिधत् इत्यत्र च **एत्येधत्यूठ्स्वि**ति सूत्रेण एजाद्योरेत्येधत्योर्ग्रहणात् अत्र च एजाद्यभावान्न वृद्धिः किंत्वा**द्गुण** इति गुणे कृते उपेतः प्रेदिधत् च सिद्ध्यति ॥ अक्ष अग्रे ऊहिनीत्यत्र। अक्षादूहिन्यामुपसंख्यानमिति वृद्धौ ॥ अक्षौहिणी ॥ प्र अग्रे ऊहः इत्यत्र प्रादूहेत्यनेन वृद्धौ प्रौहः। एवं प्रौढः, प्रौढिः, प्रैषः, प्रैष्य इत्याद्यूह्यम्। सुख अग्रे ऋत इत्यत्र ऋते च तृती-यासमासे इत्यनेन वृद्धौ ॥ सुखार्तः। परम अग्रे ऋत इत्यत्र ऋतशब्दे परेपि तृतीयासमा-साभावान्न वृद्धिर्जाता किंतु गुणे जाते ॥ परमर्तः ॥ प्र अग्रे ऋणमित्यत्र प्रवत्सतरकम्बलवसनार्ण-दशानामृणे इत्यनेन सूत्रेण वृद्धौ कृतायाम् ॥ प्रार्णम् ॥ एवं वत्सतरार्णमपि ज्ञेयम्। प्र अग्रे ऋच्छति इत्यत्र **उपसर्गाः क्रियायोगे** इत्यनेन प्रकारस्य उपसर्गतां विधाय **भूवादयो धातव**

---

१ यथा कर्तृकर्मणोः कृतीत्यादौ सप्तमीनिर्देशेन योगस्य लाभो भवति तथाऽत्रापि क्रियायामिति सप्तमीनि-र्देशेनैव तल्लाभे सिद्धे योगग्रहणं व्यर्थं सत् ज्ञापयति यत् क्रियायुक्ताः प्रादयस्तंप्रत्येव गत्युपसर्गसंज्ञेति। तेन च अमुं पुरः पश्यसि देवदारुमित्यत्र पुरोऽव्ययमित्यनेन नित्यगतित्वेऽपि नमस्पुरसोरित्येनेन न सत्वं कृत-मत्र स्थितपदाध्याहारेण तन्निरूपितमेव गतित्वं न तु दर्शिक्रियानिरूपितमिति विभावनीयम्।

**उपसर्गादृति धातौ** ।६।१।९१। अवर्णान्तादुपसर्गादृकारादौ धातौ परे वृद्धिरेकादेशः स्यात् । प्रार्छति ॥ **एङि पररूपम्** ।६।१।९४। आदुपसर्गादेङादौ धातौ परे पररूपमेकादेशः स्यात् । प्रेजते, उपोषति ॥ **अचोऽन्त्यादि टि** ।१।१।६४। अचां मध्ये योऽन्त्यः स आदिर्यस्य तट्टिसंज्ञं स्यात् ( शकन्ध्वादिषु पररूपं वाच्यम् ) तच्च टेः । शकन्धुः, कर्कन्धुः, मनीषा । आकृतिगणोऽयम् । मार्तण्डः ॥ **ओमाङोश्च** ।६।१।९५। ओमि आङि चात् परे पररूपमेकादेशः स्यात् । शिवायोन्नमः, शिव एहि, शिवेहि ॥ **अकः सवर्णे दीर्घः** ।६।१।१०१। अकः सवर्णेऽचि परे पूर्वपरयोर्दीर्घ एकादेशः स्यात् । दैत्यारिः, श्रीशः, विष्णूदयः, होतृकारः ॥ **एङः पदान्तादति** ।६।१।१०९। पदान्तादेङोऽति परे पूर्वरूपमेकादेशः स्यात् । हरेऽव, विष्णोऽव ॥ **सर्वत्र विभाषा गोः** ।६।१।१२२। लोके वेदे चैङन्तस्य गोरति वा प्रकृतिभावः पदान्ते । गोअग्रम्, गोऽग्रम् । एङन्तस्य किम् । चित्रग्वग्रम्, पदान्ते किम् । गोः ॥ **अनेकाल्शित्स-**

---

इत्यनेन स्यादीनां च धातुत्वं विधाय **उपसर्गादृति धातौ** इत्यनेन वृद्धौ कृतायां प्रार्छति । प्र अग्रे एजते इत्यत्र **एङि पररूपम्**इत्यनेन पररूपैकादेशे जाते ॥ प्रेजते ॥ एवमुपोषति । शक अग्रे अन्धुः इत्यत्र **अचोन्त्यादि टि** इत्यनेन ककारोत्तरवर्त्यकारस्य टिसंज्ञां विधाय शकन्ध्वादिषु पररूपं वाच्यं तच्च टेः इत्यनेन पररूपे कृते शकन्धुरिति सिद्धम् ॥ एवमेव कर्कन्धुः ॥ मनस् अग्रे ईषा इत्यत्र । **अचोन्त्यादि टि** इत्यनेन अन्त्याचो नकारान्तःपातिअकारस्य तदादेः सकारस्य च टिसंज्ञायां कृतायां कृते च शकन्ध्वादिष्विति नकारोत्तरवर्त्यकारस्य सकारस्य च पररूपत्वे मनीषा ॥ एवमेव मार्तण्डः ॥ इत्यत्रापि ज्ञेयम् । शिवाय अग्रे ॐनमः इत्यत्र **ॐमाङोश्चे**त्यनेन पररूपादेशे कृते ॥ शिवायोंनमः ॥ शिव अग्रे आइहि इत्यत्र पूर्वं धातुरुपसर्गेण युज्यत इति नियमात् **आद्गुण** इति सूत्रेण गुणे कृते शिव एहि इति जाते तत्र **ओमाङोश्चे**ति पररूपैकादेशे कृते ॥ शिवेहि ॥ दैत्य अग्रे अरिरित्यत्र **अकः सवर्णे दीर्घः** को वाऽक् यकारोत्तरवर्त्यकारः को वा परः सवर्णोच् अरिरित्यस्याकारस्तस्मिन् सति दीर्घैकादेशे कृते दैत्यारिः ॥ एवं विष्णूदय इत्यत्र होतृकार इत्यत्र चापि बोध्यम् । हरे अग्रे अव इत्यत्र कस्य सूत्रस्य प्राप्तिर्वीक्षतीति । **एङः पदान्तादति** ॥ कोऽत्र पादान्त एङ्रेकारान्तःपातिएकारः पदान्तएङ् तस्मात्परः को वाकारः अवेत्यस्याकारः सति तस्मिन् पूर्वपरयोः स्थाने पूर्वरूपादेशः प्राप्तः कोऽवापूर्व एकारस्तद्रूपैकादेशे जाते ॥ हरेव ॥ एवमेव विष्णोवेत्यत्रापि ज्ञेयम् ॥ गो अग्रे अग्रमित्यत्र । **सर्वत्र विभाषा गोः** इति सूत्रेण प्रकृतिभावे कृते ॥ गोअग्रम् ॥ विभाषाग्रहणात् पक्षे **एङः पदान्तादती**ति सूत्रेण पूर्वरूपैकादेशे कृते ॥ गोऽग्रम् ॥ यदि वृत्तौ एङन्तस्येति नापठिष्यंस्तर्हि चित्रग्वग्रमित्यत्रापि प्रकृतिभावः प्राभविष्यत् । यदि च पदान्ते इति नापठिष्यंस्तर्हि गोरिति गोशब्दस्य पञ्चमीषष्ठ्येकवचनेपि प्रकृतिभावः प्राभविष्यत् तदुभयमपि

---

१ अत्र स्थानिवद्भावेन गोशब्दत्वं बोध्यम् । एङन्तत्वं तु नायाति अनल्विधाविति निषेधात् ।

**वैस्य** ।१।१।५५। इति प्राप्ते ॥ **ङिच्च** ।१।१।५३। ङिदनेकालप्यन्त्यस्यैव स्यात् ॥ **अवङ् स्फोटायनस्य** ।६।१।१२३। पदान्ते एङन्तस्य गोरवङ् वाऽचि । गोऽग्रम्, गवाग्रम् । पदान्ते किम् । गवि ॥ **इन्द्रे च** ।६।१।१२४। गोरवङ् स्यादिन्द्रे । गवेन्द्रः ॥ **दूराद्धूते च** ।८।२।८४। दूरात्संबोधने वाक्यस्य टेः प्लुतो वा ॥ **प्लुतप्रगृह्या अचि नित्यम्** । ६।१।१२५। एतेऽचि प्रकृत्या स्युः । आगच्छ कृष्ण ३ अत्र गौश्चरति ॥ **ईदूदेद्द्विवचनं प्रगृह्यम्** ।१।१।११। ईदूदेदन्तं द्विवचनं प्रगृह्यं स्यात् । हरी एतौ, विष्णू इमौ, गङ्गे अमू ॥ **अदसो मात्** ।१।१।१२। अस्मात्परावीदूतौ प्रगृह्यौ स्तः । अमी ईशाः । रामकृष्णावमू आसाते । मात्किम् । अमुकेऽत्र ॥ **चादयोऽसत्त्वे** १।४।५७। अद्रव्यार्थाश्चादयो निपाताः स्युः ॥ **प्रादयः** ।१।४।५८। एतेऽपि तथा ॥ **निपात एकाजनाङ्** ।१।१।१४। एकोऽज्निपात आङ्वर्ज्यः प्रगृह्यः स्यात् । इ

---

माभूदिति मनसि विचार्य **एङन्तस्य** पदान्ते इति च पेठुः प्रज्ञावतां प्रथमे वृत्तिकाराः । गो अग्रे . इन्द्र इत्यत्र **इन्द्रे चे**त्यनेन अवङादेशे ङकारस्येत्संज्ञायां **तस्य लोप** इति लोपे **आद्गुण** इति गुणे च कृते ॥ गवेन्द्रः ॥ आगच्छ कृष्ण अत्र गौश्चरतीत्यत्र **दूराद्धूते चे**ति सूत्रेण आगच्छ कृष्णेति वाक्यस्य टेः प्लुतत्वं विधाय **प्लुतप्रगृह्या अचि नित्य**मित्यनेन प्रकृतिभावे कृते ॥ आगच्छ कृष्ण अत्र गौश्चरतीति जातम् । हरी अग्रे एतौ इत्यत्र । **ईदूदेद्द्विवचनं प्रगृह्यम्** इत्यनेन हरी इत्यस्य द्विवचनत्वात्प्रगृह्यतां विधाय **प्लुतप्रगृह्या अचि नित्य**मित्यनेन प्रकृतिभावे कृते ॥ हरी एतौ ॥ एवमेव विष्णू इमौ गङ्गे अमू इत्यादयो भवन्ति । अमी अग्र ईशा इत्यत्र । **अदसो मात्** ॥ इत्यनेनात्रादःशब्दसंबन्धिनो मकारात्परस्येकारस्य प्रगृह्यतां विधाय **प्लुतप्रगृह्या अचि नित्य**मित्यनेन प्रकृतिभावे कृते ॥ अमी ईशा इति सिद्धम् । एवमेव-रामकृष्णौ अमू आसाते इत्यत्रापि ज्ञेयम् । इ अग्रे इन्द्र इत्यत्र **चादयोऽसत्त्वे** इत्यनेन चाद्यन्तःपातिनां निपातता-विधाय विधाय च **निपातएकाजनाङ्** इत्यनेनेकारस्य प्रगृह्यत्वे कृते चानन्तरं **प्लुतप्रगृह्या** इति प्रकृतिभावे ॥ इइन्द्र इति सिद्धम् । एवम् ॥ उउमेश इत्यत्राप्यूह्यम् । ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः । एतमातं ङितं विद्याद्वाक्यस्मरणयोरङित् ॥ इत्यनेन आ अग्रे एवं नु मन्यसे इत्यत्र वाक्यार्थत्वात् आ अग्रे एवं किल तत् इत्यत्र स्मरणार्थकत्वाच्च **निपात एकाजनाङ्** इत्यनेनाकारस्य प्रगृह्यतायां **प्लुतप्रगृह्या अचि नित्य**मिति प्रकृतिभावे च तदुभयमपि सिद्धतामेति । आ अग्रे उष्णमित्यत्र ईषदर्थत्वादाकारस्य ङित्त्वं जातं ङित्त्वाच्च सूत्रेऽनाङित्युक्तत्वा-

---

१ माद्ग्रहणाभावे सन्नियोगशिष्टानां सह वा प्रवृत्तिः सह वा निवृत्तिरिति न्यायेन ईदूदेद्द्विवचनमिति सूत्राद्यथा ईदूदित्यस्यानुवृत्तिस्तथा एदित्यस्यापि स्यादनुवृत्तिस्तथा च अमुकेऽत्रेत्यत्र प्रगृह्यसंज्ञा स्यात्तस्यां च सत्यां प्रकृतिभावः स्यात् । सत्ते तु माद्ग्रहणे तस्मात् पर एकाराभावादेव नानुवृत्तिरिति तत्त्वम् । २ अत्र एकश्चासौ अच् चेति कर्मधारयः एकशब्दस्तु इतरव्यावृत्तिवाचकस्तेन अ इ उ इत्यादीनां केवलानां ग्रहणं जातम् । एकोऽच् यस्मिन्निति बहुव्रीहिसमासे तु प्र इदं प्रेदमित्यत्रापि प्रगृह्यत्वं स्यात् ।

इन्द्रः, उ उमेशः । वाक्यस्मरणयोरङित् । आ एवं नु मन्यसे, आ एवं किल तत् । अन्यत्र ङित् । ईषदुष्णम् ओष्णम् ॥ **ओत्** ।१।१।१५। ओदन्तो निपातः प्रगृह्यः । अहो ईशाः ॥ **संबुद्धौ शाकल्यस्येतावनार्षे** ।१।१।१६। संबुद्धिनिमित्तक ओकारो वा प्रगृह्योऽवैदिके इतौ परे । विष्णो इति, विष्ण इति, विष्णविति ॥ **मय उञो वो वा** ।८।३।३३। मयः परस्य उञो वो वाऽचि । किम्वुक्तम्, किमुउक्तम् ॥ **इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च** ।६।१।१२७। पदान्ता इको ह्रस्वा वा स्युरसवर्णेऽचि । ह्रस्वविधिसामर्थ्यान्न स्वरसन्धिः । चक्रि अत्र चक्र्यत्र, पदान्ता इति किम् ॥ **अचो रहाभ्यां द्वे** ।८।४।४६। अचः पराभ्यां रेफहकाराभ्यां परस्य यरो द्वे वा स्तः । गौर्य्यौ । (न समासे) वाप्यश्वः ॥ **ऋत्यकः** ।६।१।१२८। ऋति परे पदान्ता अकः प्राग्वद्वा । ब्रह्मऋषिः, ब्रह्मर्षिः, पदान्ताः किम् । आर्च्छत् ॥ इत्यच्सन्धिः ॥

---

ओकारस्य प्रगृह्यता ततश्चाद्**गुणे** इत्यनेन गुणे कृते ओष्णं जातम् । अहो अग्रे ईशा इत्यत्र **ओत्** इत्यनेन हकारोत्तरवर्तिन ओकारस्य प्रगृह्यतायां **प्लुतप्रगृह्या** इति प्रकृतिभावे च कृते अहो ईशा इति जातम् ॥ विष्णो अग्र इतीत्यत्र **संबुद्धौ शाकल्यस्येतावनार्षे** इत्यनेन ण्णकारोत्तरवर्तिन ओकारस्य इतौ परे प्रगृह्यतां विधाय **प्लुतप्रगृह्या अचि नित्यम्**इत्यनेन प्रकृतिभावे कृते । विष्णो इति ॥ वाग्रहणात्पक्षे **एचोऽयवायाव** इत्यनेनापि कृते विष्णविति ॥ किमु अग्रे उक्तमित्यत्र **मय उञो वो वे**ति सूत्रेण मकारोत्तरवर्तिन उकारस्य वकारे कृते ॥ किम्वुक्तम् ॥ पक्षे **निपात एकाजनाङ्**इत्यनेनोकारस्य प्रगृह्यतायां प्रकृतिभावे च कृते ॥ किमु उक्तम् ॥ चक्री अग्रे अत्र इत्यत्र **इकोऽसवर्णे शाकल्यस्य ह्रस्वश्चे**ति सूत्रेण ह्रस्वे कृते ॥ चक्रि अत्रेति जातम् ॥ पक्षे **इको यणची**त्यनेन यणि कृते ॥ चक्र्यत्र ॥ पदान्ता इति नापठिष्यच्चेदाचार्यस्तर्हि गौरी-औ इत्यत्रापि **इकोऽसवर्णे शाकल्यस्य ह्रस्वश्चे**त्यनेन रकारोत्तरवर्तिन ईकारस्य ह्रस्वप्राप्तिः समभाविष्यत् तन्निवारणाय पदान्ता इत्युक्तेऽत्र पदान्तत्वाभावात् न ह्रस्वश्च किन्तु **इको यणची**त्यनेन यणि **अचो रहाभ्यां** द्वे इत्यनेन यद्वित्वे च कृते ॥ गौर्य्यौ ॥ इति जातम् ॥ वापी अग्रे अश्व इत्यत्र यद्यपि **इकोऽसवर्णे शाकल्यस्य ह्रस्वश्चे**त्यनेन पकारोत्तरवर्तिन ईकारस्य ह्रस्वत्वं प्राप्तं परंतु **न समासे** इत्यनेनात्र समासत्वात् ह्रस्वत्वं निवार्य **इको यणची**ति यणि ॥ वाप्यश्वः ॥ ब्रह्मा अग्रे ऋषिरित्यत्र **ऋत्यकः** इत्यनेन पदान्तस्याक् प्रत्याहारान्तःपातिनो मकारोत्तरवर्तिन आकारस्य ह्रस्वत्वे कृते ॥ ब्रह्म ऋषिरिति भवति पक्षे **आद्गुण** इति गुणे कृते ब्रह्मर्षिरिति भवति । पदान्ता अकश्चेत् तर्हि ऋति परे ह्रस्वतां भजन्ते नान्यथा यथा आ अग्रे ऋच्छत् इत्यत्राकारस्य पदान्तत्वाभावान्न ह्रस्वत्वं किन्तु **आटश्चे**ति सूत्रेण वृद्धौ कृतायाम् ॥ आर्च्छत् ॥ इति जातम् ॥ इति श्रीमत्सद्गुरुकेदारनाथपाठकपदरीपल्लवायमानायां प्रयोगदीपिकायामच्सन्धिः पूर्णः ॥

## ॥ अथ हल्सन्धिप्रकरणम् ॥

**स्तोः श्चुना श्चुः** ।८।४।४०। सकारतवर्गयोः शकारचवर्गाभ्यां योगे शकारचवर्गौ स्तः ॥ रामश्शेते, रामश्चिनोति, सच्चित्, शार्ङ्गिञ्जय ॥ **शात्** ।८।४।४४। शात्परस्य तवर्गस्य श्चुत्वं न स्यात् । विश्नः, प्रश्नः ॥ **ष्टुना ष्टुः** ।८।४।४१। स्तोः ष्टुना योगे ष्टुः स्यात् । रामष्षष्ठः, रामष्टीकते, पेष्टा, तट्टीका, चक्रिण्ढौकसे ॥ **न पदान्ताट्टोरनाम्** ।८।४।४२। पदान्ताट्टवर्गात्परस्यानामः स्तोः ष्टुर्न स्यात् । षट्सन्तः, षट्ते, पदान्तात्किम् । ईट्टे । टोः किम् । सर्पिष्टमम् । ( अनाम्नवतिनगरीणामिति वाच्यम् )

---

श्रीमत्केशवसंज्ञश्रीदेशिकेशदयादृशः ।

पतन्तु तत्कृपापात्रे छात्रे मयि निरन्तरम् ॥

अथ हल्सन्धिः ॥ रामस् शेते इत्यत्र **स्तोः श्चुना श्चु**रित्यनेन सकारस्य शकारे कृते कृते च सं- योगे ॥ रामश्शेते ॥ रामस् अग्रे चिनोतीत्यत्र **स्तोः श्चुना श्चु**रिति सस्य शत्वे कृते ॥ रामश्चिनोति ॥ सत् अग्रे चित् इत्यत्र **स्तोः श्चुना श्चु**रिति सूत्रेण तकारस्य स्थाने चवर्गसंबन्धिषु सर्वेषु वर्णेषु प्राप्तेषु **यथासंख्यमनुदेशः समान**मित्यनेन तकारस्य चकारे कृते ॥ सच्चित् ॥ एवं शार्ङ्गिन् इत्यत्रापि तवर्गान्त्यस्य नस्य चवर्गान्त्य ञकारे कृते ॥ शार्ङ्गिञ्जयेति जातम् । विश् अग्रे नः इत्यत्र यद्यपि **स्तोः श्चुना श्चु**रिति नस्य ञत्वं प्राप्तं परंतु **शात्** इति सूत्रेण नकारस्य शकारात्परत्वान्नञत्वम् । एवमेव प्रश्न इत्यत्रापि ज्ञेयम् । रामस् षष्ठ इत्यत्र कस्य सूत्रस्य प्राप्तिर्भवतीत्यरीति **ष्टुना ष्टुः** अत्र सकारो वर्तते तवर्गो वा वर्ततेत्र सकारः षकारेण योगोस्ति वर्गेण वा अस्त्यत्र षकारेण योगस्ततः सकारस्य षकारे जाते ॥ रामष्षष्ठः ॥ एवं रामस् ढौकते इत्यत्र **ष्टुना ष्टु**रिति सस्य षत्वे ॥ रामष्टीकते ॥ पेष् अग्रे ता इत्यत्र **ष्टुना ष्टु**रिति तकारस्य टकारत्वे ॥ पेष्टा ॥ तत् अग्रे टीका इत्यत्रापि तेनैव सूत्रेण तस्य टत्वे ॥ तट्टीका ॥ चक्रिन् अग्रे ढौकसे इत्यत्र **ष्टुना ष्टु**रिति सूत्रेण तवर्गान्त्यस्य नस्य टवर्गान्त्ये णत्वे जाते ॥ चक्रिण् ढौकसे इति भवति ॥ षट् अग्रे सन्त इत्यत्र यद्यपि **ष्टुना ष्टु**रित्यनेन सस्य षत्वं प्राप्तं तथापि **न पदान्ताट्टोरनाम्** इति सूत्रेण पदान्तात् टवर्गात्परत्वात्सस्य षत्वं न जातं ततः ॥ षट्सन्त इति जातम् । एवमेव षट् अग्रे ते इत्यत्रापि ज्ञेयम् । सूत्रे पदान्तादित्युक्तं तेन इट्

---

१ टोः ग्रहणाभावे ष्टुनाष्टुरिति सूत्रात् सन्नियोगशिष्टन्यायेन ष्टुरित्यस्यानुवृत्तिस्तस्य विभक्तिविपरिणामेन षष्ठ्यन्तत्वं स्वीकृत्य । पदान्ताट्टवर्गात् पदान्तात् षकाराच्च स्तोः ष्टुर्नेत्यर्थे सर्पिष्टममित्यत्रापि ष्टुत्वनिषेधः स्यात् । न च कश्चिदेकदेशोऽप्यनुवर्तेत इत्यनेन षकारं परित्यज्य केवलं टुरित्यस्यैवानुवृत्तिस्तथा न सर्पिष्टममित्यत्र नास्ति दूषणमिति वाच्यम् । ष्टुत्वविषये तस्य न्यायस्यानुपस्थितेः । तोः षीत्यत्र तोः ग्रहणसामर्थ्यात् । अन्यथा कश्चिदेकदेशन्यायेन स्तोः श्चुनेति सूत्रात् तोरित्येकदेशस्यानुवृत्त्यैव सिद्धेः । न च सर्पिष्टममित्यत्र पदान्ते वर्तमानस्य षकारस्य जश्त्वं कस्मान्न भवतीति वाच्यम् । ह्रस्वात्तादौ तद्धित इत्यनेन जायमानषत्वस्यासिद्धत्वात् । सत्वदृष्ट्यापि न भवति षत्वविधायकस्यापवादत्वात् ॥

पण्णाम्, षण्णवतिः, षण्णगर्यः ॥ **तोः षि ।८।४।४३।** न ष्टुत्वम् । सन्षष्ठः ॥ **झलां जशोऽन्ते ।८।२।३९।** पदान्ते झलां जशः स्युः । वागीशः ॥ **यरोऽनुनासिकेऽनुनासिको वा ।८।४।४५।** यरः पदान्तस्यानुनासिके परेऽनुनासिको वा स्यात् । एतन्मुरारिः, एतद्मुरारिः । ( प्रत्यये भाषायां नित्यम् ) तन्मात्रम्, चिन्मयम् ॥ **तोर्लि ।८।४।६०।** तवर्गस्य लकारे परे परसवर्णः । तल्लयः, विद्वाँल्लिखति । नस्यानुनासिको लः ॥ **उदःस्थास्तम्भोः पूर्वस्य ।८।४।६१।** उदः परयोः स्थास्तम्भोः पूर्वसवर्णः ॥ **तस्मादित्युत्तरस्य ।१।१।६७।** पञ्चमीनिर्देशेन क्रियमाणं कार्यं वर्णान्तरेणाव्यवहि-

---

अग्रे ते इत्यत्र इट्संबन्धिनष्टकारस्य पदान्तत्वाभावात्ततः परस्य तकारस्य टकारे कृते ॥ इष्टे ॥ सूत्रे टोरित्युक्तं तेन सर्पिष् अग्रे तमम्नित्यत्र पदान्तादपि षकारात्परस्य तस्य टे कृते ॥ सर्पिष्टमम् ॥ षट् अग्रे नाम् इत्यत्र सूत्रे अनाम् इत्युक्तं तेन नामनवतिनगरीसंबन्धवर्जितस्य तवर्गस्य टवर्गो न स्यादित्यर्थस्ततोऽत्र नाम्संबन्धिनो नकारस्य णकारे जाते **प्रत्यये भाषायां नित्यमिति** टकारस्य स्थाने सर्वेष्वनुनासिकेषु प्राप्तेषु **स्थानेन्तरतम** इति सूत्रेण टकारस्य मूर्द्धस्थानीयत्वान्मूर्द्धन्येषु चानुनासिकान्तःपातिनो णकारस्यैव विधानलाभात् णकारे जाते ॥ षण्णामिति जातम् ॥ एवमेव षट् अग्रे नवतिरित्यत्र षट् अग्रे नगर्य इत्यत्र च बोध्यम् । सन् षष्ठ इत्यत्र यद्यपि **ष्टुना ष्टु**रिति ष्टुत्वं प्राप्तं तथापि **तोः षि** । इति सूत्रेण ष्टुत्वाभावे ॥ सन्षष्ठः ॥ वाक् अग्रे ईश इत्यत्र **झलां जशोऽन्ते** इत्यनेन ककारस्य स्थाने जशः पञ्चसु वर्णेषु प्राप्तेषु **स्थानेन्तरतम** इत्यनेन कण्ठस्थाने जश्संबन्धिनो गकारस्यैव विधानलाभाद्गकारे जाते ॥ वागीशः ॥ एतद् अग्रे मुरारिः इत्यत्र **यरोऽनुनासिकेऽनुनासिको** वेति सूत्रेण सर्वेष्वनुनासिकेषु प्राप्तेषु **स्थानेन्तरतम** इति दकारस्य दन्तस्थानत्वेन चानु-

स्य परस्य ज्ञेयम् ॥ **आदेः परस्य** ।१।१।५४। परस्य यद्विहितं तत्तस्यादेर्बोध्यम् । ति सस्य थः ॥ **झरो झरि सवर्णे** ।८।४।६५। हलः परस्य झरो वा लोपः सवर्णे झरि ॥ **खरि च** ।८।४।५५। खरि झलां चरः स्युः । इत्युदो दस्य तः । उत्थानम्, उत्तम्भनम् ॥ **झयो होऽन्यतरस्याम्** ।८।४।६२। झयः परस्य हस्य वा पूर्वसवर्णः । नादस्य घोषस्य संवारस्य महाप्राणस्य तादृशो वर्गचतुर्थः । वाग्घरिः ॥

---

वा थकारस्य स्यादित्याशङ्कायाम् । **आदेः परस्ये**त्यनेन स्थापदस्यादेः सकारस्य पूर्वसवर्णादेशः प्राप्तः को वास्त्यत्र पूर्वो वर्ततेऽत्र दकारः पूर्वस्ततस्तत्सवर्णाः सर्वेपि प्राप्तास्तेषां मध्यात्केनात्र भाव्यम् । **स्थानेन्तरतमः** । कुतः सादृश्यं स्थानतः कथमितिचेदित्थं सकारस्य किं स्थानं दन्ताः स्थानं दन्त्येषु च को वा दकारसवर्णो वर्णः सर्वोपि तवर्गस्तत्सवर्ण एव तत एवात्र स्थानतः सावर्ण्यं परित्यज्य प्रयत्नतः सावर्ण्यं ग्राह्यं तथा च सति **खरो विवाराः श्वासा अघोषाश्चे**त्यनेन सकारस्य विवारश्वासाघोषप्रयत्नवत्ता वर्तते सा च दकारसवर्णेषु वर्णेषु केषु केषु विवारश्वासाघोषप्रयत्नवत्ता परिस्फुरति वरीवर्ति खरप्रत्याहारान्तःपातित्वात्तकारे थकारे च ततस्तकारथकारौ द्वावपि प्राप्तौ तयोर्मध्यात्केन भाव्यमित्याशङ्कायां **वर्गाणां द्वितीयचतुर्थौ शलश्च महाप्राणा** इत्यनेन शलन्तःपातित्वात्सकारस्य महाप्राणप्रयत्नवत्ता वरीवरीति सा च महाप्राणप्रयत्नवत्ता वर्गचतुर्थत्वात्थकारस्यैव भवितुमर्हति न तकारस्य ततः सकारस्थाने थकारे जाते उद्थ्थानमिति जातं तत्र **झरो झरि सवर्णे** इत्यनेन थकारस्य लोपे कृते खरि चेत्यनेन दकारस्य तकारे च कृते ॥ उत्थानम् ॥ एवं उद् अग्रे स्तम्भनमित्यत्र **उदः स्थास्तम्भोः पूर्वस्ये**ति पूर्वसवर्णे जाते उद्थ्तम्भनमिति जाते तत्र **झरो झरि सवर्णे** इति थकारलोपे **खरि चे**त्यनेन दकारस्य तकारे च जाते ॥ उत्तम्भनम् ॥ वाक् अग्रे हरिरित्यवस्थायां कस्य सूत्रस्य प्राप्तिः **झयो होन्यतरस्याम्** कोवात्र झय् ककारस्तस्मात्परः कोवा हकारो हरिरित्यस्य हकारस्तस्य स्थाने ककारस्य सर्वेपि सवर्णाः संप्राप्तास्तत्र **हशः संवारा नादा घोषाश्चे**त्यनेन हकारसंवारनादघोषप्रयत्नवत्ता वर्तते । वर्तते च **वर्गाणां द्वितीयचतुर्थौ शलश्च महाप्राणा** इत्येनन महाप्राणप्रयत्नवत्ता कसवर्णेषु च सर्वेषु वर्णेषु संवारनादघोषप्रयत्नवत्ता महाप्राणप्रयत्नवत्ता च घकारस्यैव संजाघटीति नापरस्य ततो हकारस्थाने घकारे जाते **झलां जशोन्ते** इत्यनेन च झल्प्रत्याहारान्तःपातिनः पदान्ते वर्तमानस्य च ककारस्य स्थाने **स्थानेन्तरतम** इत्यनेन जश्प्रत्याहारान्तर्गते गकारे जाते ॥ वाग्घरिरिति जातम् । तद् अग्रे शिव इत्यत्र **स्तोः श्चुना श्चु**रित्यनेन **यथासङ्ख्यमनुदेशः समाना**मित्यनेन तवर्गतृतीये जकारे कृते तज्शिव इति जाते जकारस्य च **खरि चे**त्यनेन चकारे कृते कृते च **शश्छोटी**त्यनेन पदान्तात् झयन्तःपातिनश्चकारात्परस्य शस्य अट्प्रत्याहारान्तःपातिनि शकारोत्तरवर्तिनीकारे परे छत्वे ॥ तच्छिवः ॥ छत्वाभावे ॥ तच्शिवः ॥ तद् अग्रे श्लोकेनेत्यत्र **स्तोः श्चुना श्चु**-

**शश्छोऽटि** ।८।४।६३। झयः परस्य शस्य छो वाऽटि । तद्शिव इत्यत्र दस्य श्चुत्वेन जकारे कृते । खरि चेति जकारस्य चकारः । तच्शिवः, तच्छिवः (छत्वममीति वाच्यम्) तच्छ्लोकेन ॥ **मोऽनुस्वारः** ।८।३।२३। मान्तस्य पदस्यानुस्वारो हलि । हरिं वन्दे ॥ **नश्चापदान्तस्य झलि** ।८।३।२४। नस्य मस्य चापदान्तस्य झल्यनुस्वारः । यशांसि, आक्रंस्यते । झलि किम् । मन्यते ॥ **अनुस्वारस्य ययि परसवर्णः** ।८।४।५८। शान्तः ॥ **वा पदान्तस्य** ।८।४।५९। त्वङ्करोषि, त्वं करोषि ॥ **मो राजि समः क्वौ** ।८।३।२५। क्विबन्ते राजतौ परे समो मस्य म एव स्यात् । सम्राट् ॥ **हे मपरे वा** ।८।३।२६। मपरे हकारे परे मस्य मो वा । किम्ह्मलयति । किंह्मलयति (यवलपरे यवला वा) किँय्ह्यः, किंह्यः । किँव्ह्वलयति, किंह्वलयति, किँल्ह्लादयति, । किंह्लादयति ॥ **नपरे नः** ।८।३।२७। नपरे हकारे मस्य नो वा । किन्ह्नुते ॥ किंह्नुते ॥ **ङः सि धुट्** ।८।३।२९। डान्तस्य सस्य धुड्वा ॥ **आद्यन्तौ टकितौ** ।१।१।४६। टित्कितौ यस्यो-

---

क्तौ तौ क्रमादाद्यन्तावयवौ स्तः ॥ रिति दस्य जत्वे **खरि** चेति जस्य चत्वे छत्वममीति वाच्यमिति शस्य छत्वे च कृते ॥ तच्छ्लोकेन ॥ हरिम् अग्रे वन्दे इत्यत्र **मोऽनुस्वार** इत्यनेन मस्यानुस्वारे ॥ हरिं वन्दे ॥ यशान् अग्रे सि इत्यत्र **नश्चापदान्तस्य झली**त्यनेन पदान्तभिन्नस्य नस्य झलन्तःपातिनि सकारे परे सत्यनुस्वारे कृते ॥ यशांसि ॥ आक्रम् अग्रे स्यते इत्यत्रापि **नश्चापदान्तस्य झली**त्यनेन मस्यानुस्वारे कृते ॥ आक्रंस्यते ॥ शाम् अग्रे तः इत्यत्र **नश्चापदान्तस्य झली**ति मकारस्यानुस्वारे कृते शांतः इति जाते तत्र **अनुस्वारस्य ययि परसवर्णः** इति सूत्रेणानुस्वारस्य **स्थानेऽन्तरतम** इति नकारे कृते ॥ शान्तः ॥ त्वम् अग्रे करोषीत्यत्र **मोऽनुस्वार** इति मकारस्यानुस्वारे **वा पदान्तस्ये**त्यनेन च परसवर्णे प्राप्ते अत्र को यस्ति परः ककारस्तत्सवर्णेषु सर्वेषु वर्णेषु प्राप्तेषु तेषां मध्यात्केनात्र भाव्यमित्याशङ्कायां **स्थानेऽन्तरतमः** अनुस्वारस्य किं स्थानं नासिकास्थानं नासिकास्थानीयेषु कवर्गान्तःपाती कोऽस्ति वर्णो ङकारस्ततो ङकारे जाते ॥ त्वङ्करोषि ॥ वाग्रहणात्पक्षे ॥ त्वंकरोषि ॥ सम् अग्रे राट् इत्यत्र **मो राजि समः क्वौ** इत्यनेन समूसम्बन्धिनो मकारस्य क्विबन्ते राजतौ परे मकारे कृते ॥ सम्राट् ॥ किम् अग्रे ह्मलयतीत्यत्र **हे मपरे** इत्यनेन मकारस्य मकारे कृते किम्ह्मलयति ॥ पक्षे **मोऽनुस्वार** इति मस्यानुस्वारे ॥ किंह्मलयति ॥ किम् अग्रे ह्य इत्यत्र **यवलपरे यवला वा** इत्यनेनात्र हकारस्य यपरत्वात्तस्मिन्परे अनुनासिकस्य मकारस्य अनुनासिके यकारे कृते ॥ किँय्ह्य पक्षे अनुस्वारे किंह्य ॥ किम् ह्वलयतीत्यत्र हकारस्य वपरत्वात्तस्मिन् परे मकारस्य वकारे ॥ किँव्ह्वलयति किंह्वलयति । किम् ह्लादयतीत्यत्र लपरे हकारे मकारस्य लकारे कृते ॥ किँल्ह्लादयति किंह्लादयति ॥ किम् अग्रे ह्नुते इत्यत्र **नपरे नः** इति सूत्रेणात्र नपरे हकारे मस्य नत्वे कृते ॥ किन्ह्नुते ॥ षड् अग्रे सन्तः इत्यत्र **ङः सि धुट्** इत्यनेन डकारस्य धुट् प्राप्तः स धुट् स्यादित्याशङ्कायाम् । **आद्यन्तौ टकितौ** इति टित्त्वात् सकारस्यादौ धुटि जाते षट् धुट्

कौ तस्य क्रमादाद्यन्तावयवौ स्तः । षट्त्सन्तः, षट्सन्तः ॥ **ङ्णोः कुक् टुक् शरि** ।८।३।२८। वा स्तः । प्राङ्ख्षष्ठः, प्राङ्क्ष्षष्ठः । प्राङ्क्षष्ठः । (चयो द्वितीयाः शरि पौष्करसादेरिति वाच्यम्) सुगण्ट्षष्ठः, सुगण्ठ्षष्ठः, सुगण्षष्ठः ॥ **नश्च** ।८।३।३०। नान्तात्परस्य सस्य धुड्वा । सन्त्सः, सन्सः ॥ **शि तुक्** ।८।३।३१। पदान्तस्य नस्य शे परे तुग्वा । सञ्छंभुः, सञ्च्छंभुः, सञ्च्शंभुः, सञ्शंभुः ॥ **ङमो ह्रस्वादचि ङमुण्नित्यम्** ।८।३।३२। ह्रस्वात्परो यो ङम् तदन्तं यत्पदं तस्मात्परस्याचो

---

सन्त इति जातम् । तत्र टकारस्य **हलन्त्य**मित्यनेन धकारोत्तरवर्तिन उकारस्य **चोपदेशेऽजनुनासिक** इति सूत्रेणेत्संज्ञायां **तस्य लोप** इत्यनेन तयोर्लोपे कृते षड् ध् सन्त इति जातम् । तत्र **खरि चे**त्यनेन धस्य ते पुनश्च **खरि चे**त्यनेन डस्य टे कृते ॥ षट्त्सन्तः ॥ इति जातम् ॥ धुडभावपक्षे **खरि चे**ति डस्य टे कृते ॥ षट् सन्त इति भवति तत्र **ष्टुना ष्टु**रिति सूत्रस्य प्राप्त्याशङ्कायां **न पदान्ताट्टोरना**मित्यनेन सा शङ्का निवार्यते ॥ प्राङ् अग्रे षष्ठ इत्यत्र **ङ्णोः कुक् टुक् शरी**त्यनेन ङकारस्य कुक् प्राप्तः स**त्वाद्यन्तौ टकितौ**वित्यनेन कित्वादन्ते जातस्तथासति प्राङ् कुक् षष्ठ इति जाते ककारोकारयोरित्संज्ञायां लोपे च कृते प्राङ् क् षष्ठ इति जातं ककारषकारसंयोगात्क्षकारे जाते ॥ प्राङ्क्षष्ठ इति जातम् ॥ कुगभावे च ॥ प्राङ्षष्ठः ॥ सुगण् अग्रे षष्ठ इत्यत्र **ङ्णोः कुक् टुक् शरी**त्यनेन टुकि ककारोकारयोरित्संज्ञायां लोपे च ॥ सुगण्ट्षष्ठः ॥ पक्षे ॥ सुगण्षष्ठः ॥ सन् अग्रे सः इत्यत्र **नश्चे**ति सूत्रेण धुटि उकारस्य टकारस्य चेत्संज्ञायां लोपे च कृते सन् ध् सः इति जातं तत्र **खरि चे**त्यनेन धकारस्य तकारे कृते कृते च संयोगे ॥ सन्त्सः ॥ धुडागमाभावे च सन्सः ॥ सन् अग्रे शंभुरित्यत्र कस्य सूत्रस्य प्राप्तिः **शितुक्** इत्यनेन पदान्तनकारस्य तुकि कृते सन् तुक्शंभुरिति जातम् । तत्र **हलन्त्य**मिति ककारस्येत्संज्ञायामु**पदेशेऽजनुनासिक इत्** इति तकारोत्तरवर्तिन उकारस्येत्संज्ञायां **तस्य लोप** इति तकारोकारयोर्लोपे कृते सन्त्शंभुरिति जातम् । **शश्छोटी**त्यनेन शंभुरित्यस्य शस्य छत्वे कृते सन्तछंभुरिति जाते **स्तोः श्चुना श्चु**रिति तकारस्य चकारे कृते पुनः **स्तोः श्चुना श्चु**रित्यनेन नस्य ञत्वे सञ्च्छंभुरिति जातं तत्र **झरो झरि सवर्णे** इति चकारलोपे सञ्छंभुः । चलोपाभावे सञ्च्छंभु । छत्वाभावे सति च चुत्वे । सञ्च्शंभुः । तुकश्चाभावे नस्य चुत्वे च सञ्शंभुः । इति रूपचतुष्टयी भवति । प्रत्यङ् अग्रे आत्मा इत्यत्र **ङमो ह्रस्वादचि ङमुण् नित्य**मित्यनेन ह्रस्वात्परस्यङम् प्रत्याहारान्तःपातिनो ङकारात्परस्याऽच्प्रत्याहारान्तर्वर्तिन आकारस्य टित्वादादौ ङुटि जाते प्रत्यङ् ङुट् आत्मेति जातम् । उटोरित्त्वाल्लोपे कृते कृते च संयोगे ॥ प्रत्यङ्ङात्मा ॥ सुगण् अग्रे ईश इत्यत्र **ङमो ह्रस्वादचि ङमुण् नित्य**मिति सूत्रेण णुटि उटो लोपे संयोगे च कृते ॥ सुगण्णीशः ॥ सन् अग्रे अच्युत इत्यत्र **ङमो ह्रस्वादचि ङमुण् नित्य**मिति नुटि उटो लोपे संयोगे

डमुट् । प्रत्यङ्ङात्मा, सुगण्णीशः, सन्नच्युतः ॥ **समः सुटि** ।८।३।५। समो रुः सुटि ॥ **अत्रानुनासिकः पूर्वस्य तु वा** ।८।३।२। अत्र रुप्रकरणे रोः पूर्वस्यानुनासिको वा ॥ **अनुनासिकात्परोऽनुस्वारः** ।८।३।४। अनुनासिकं विहाय रोः पूर्वस्मात्परोऽनुस्वारागमः ॥ **खरवसानयोर्विसर्जनीयः** ।८।३।१५। खरि अवसाने च पदान्तस्य रेफस्य विसर्गः (संपुंकानां सो वक्तव्यः) सँस्स्कर्त्ता, संस्स्कर्त्ता ॥ **पुमः खय्यम्परे** ।८।३।६। अम्परे खयि पुमो रुः । पुँस्कोकिलः पुंस्कोकिलः ॥ **नश्छव्यप्रशान्** ।८।३।७। अम्परे छवि नान्तस्य पदस्य रुः ॥ **विसर्जनीयस्य सः** ।८।३।३४। खरि । चक्रिँस्त्रायस्व, चक्रिंस्त्रायस्व । अप्रशान् किम् । प्रशान्तनोति ।

---

च कृते सन्नच्युतः ॥ सम् अग्रे कर्ता इत्यत्र **संपरिभ्यां करोतौ भूषणे** इति सूत्रेण सुडागमे कृते सम् सुट् कर्तेति जातम् । तत्र टकारोकारयोर्लोपे कृते सम् स् कर्तेति जातं तत्र **समःसुटी**त्यनेन सुट् सबन्धिनि सकारे परे सर्वस्य समो रुत्वे प्राप्ते **अलोन्त्यस्ये**ति सूत्रेणान्त्यस्य मस्य रुत्वे उकारलोपे च कृते स र् स् कर्तेति जातम् । **अत्रानुनासिकः पूर्वस्य तुवा** इत्यनेनानुनासिके जाते सँ र् स् कर्तेति जातं यस्मिन्पक्षे वा ग्रहणादनुनासिको न जातस्तस्मिन् पक्षे **अनुनासिकात्परोनुस्वार** इत्यनेनानुस्वारे कृते सं र् स् कर्तेति जातम् । तत्र **खरवसानयोर्विसर्जनीय** इत्यनेन खर्प्रत्याहारान्तःपातिनि सकारे परे रेफस्य विसर्गे कृते ॥ सःस्कर्ता ॥ अथवा ॥ संःस्कर्ता इति जातं तत्र **विसर्जनीयस्य स** इत्यनेन प्राप्तं विसर्जनीयस्य सत्वं **वा शरी**ति सूत्रेण प्राप्तं विसर्जनीयस्य विसर्जनीयत्वं चेत्युभयमपि संबाध्य **संपुंकानां सो वक्तव्य** इत्यनेन विसर्गस्य सकारे कृते ॥ सँस्स्कर्ता ॥ अथवा ॥ संस्स्कर्ता ॥ पुम् अग्रे कोकिल इत्यत्र **पुमः खय्यम्परे** इत्यनेन पुमो मस्य रुत्वे रुकारोत्तरवर्त्युकारलोपे पुर् कोकिल इति जातम् **अत्रानुनासिकः पूर्वस्य तु वे**त्यनुनासिके पुँ र् कोकिलः पक्षे **अनुनासिकात्परोनुस्वार** इत्यनेनानुस्वारे पुं र् कोकिल इति जातं तत्र **खरवसानयोर्विसर्जनीय** इति रस्य विसर्गत्वे **संपुंकानां सो वक्तव्य इति** विसर्गस्य सकारे पुँस्कोकिलः ॥ अथवा ॥ पुंस्कोकिलः ॥ चक्रिन् अग्रे त्रायस्वेत्यत्र **नश्छव्यप्रशान्** इत्यनेन नस्य रुत्वे रुकारोत्तरवर्त्युकारलोपे **अत्रानुनासिकः पूर्वस्य तु वे**त्यनुनासिके चक्रिँ र् त्रायस्वेति जातं पक्षे **अनुनासिकात्परोनुस्वार** इत्यनुस्वारे चक्रिं र् त्रायस्वेति जातं **खरवसानयोर्विसर्जनीय** इति रस्य विसर्गे कृते कृते च **विसर्जनीयस्य स** इति विसर्गस्य सकारे ॥ चक्रिंस्त्रायस्व ॥ पक्षे ॥ चक्रिँस्त्रायस्व ॥ मूलसूत्रे अप्रशानित्युक्तं तस्य किं प्रयोजनमिति चेदुच्यते यद्यप्रशानित्याचार्यो नावदिष्यत्तर्हि प्रशान् अग्रे तनोतीत्यत्रापि **नश्छवी**ति सूत्रेण नस्य रुत्वमभविष्यत् तच्च शाब्दशास्त्रविरुद्धमतोऽप्रशानि युक्तं शान्तं पापम् । किंचपटन्येति नामनिष्पत्तेः हन्ति इत्यत्र नस्य रुत्वे सति च हंसीत्यपप्रयोगप्राप्ति-

पदान्तस्येति किम् । हन्ति ॥ **नॄन्पे** ।८।३।१०। नॄनित्यस्य रुर्वा पे ॥ **कुप्वोः ≍क ≍पौ च** ।८।३।३७। कवर्गे पवर्गे च विसर्गस्य ≍क ≍पौ स्तः। चाद्विसर्गः । नॄँ≍पाहि, नॄं≍पाहि, नॄँःपाहि, नॄंःपाहि, नॄन्पाहि ॥ **तस्य परमाम्रेडितम्** ।८।१।२। द्विरुक्तस्य परमाम्रेडितं स्यात्॥ **कानाम्रेडिते** ।८।३।१२। कान्नकारस्य रुः स्यादाम्रेडिते । काँस्कान् कांस्कान् ॥ **छे च** ।६।१।७३। ह्रस्वस्य छे तुगागमः । शिवच्छाया ॥ **पदान्ताद्वा** ।६।१।७६। दीर्घात्पदान्ताच्छे तुग्वा । लक्ष्मीच्छाया, लक्ष्मीछाया ॥ इति हल्सन्धिप्रकरणम् ॥

## ॥ अथ विसर्गसन्धिप्रकरणम् ॥

**विसर्जनीयस्य सः** ८।३।३४। खरि ॥ विष्णुस्त्राता ॥ **वा शरि** ।८।३।३६। शरि विसर्गस्य विसर्गो वा । हरिः शेते, हरिश्शेते ॥ **ससजुषो रुः** ।८।२।६६। पदान्तस्य सस्य सजुषश्च रुः स्यात्॥ **अतो रोरप्लुतादप्लुते**।६।१।११३। अप्लुतादतः परस्य रोरुः

---

रभविष्यत्ततः पदस्येत्युक्ते हनो नस्य पदत्वाभावाच्छान्तो व्याधिः ॥ नॄन् अग्रे पाहीत्यत्र **नॄन्पे** इत्यनेन नस्य रुत्वे उकारलोपे **अत्रानुनासिकः पूर्वस्य तु वे**त्यनुनासिके पक्षे **अनुनासिकात्परोनुस्वार** इत्यनुस्वारे **खरवसानयोर्विसर्जनीय** इति रस्य विसर्गे च नॄँः-पाहि अथवा नॄंः पाहीति जातं तत्र कुप्वोः≍क≍पौ चेति सूत्रेणोपध्मानीयेजाते ॥ नॄँ≍ पाहि ॥ नॄं≍ पाहि ॥ पक्षे ॥ नॄन् पाहि ॥ कान् अग्रे कान् इत्यत्र **कानाम्रेडिते** इति नस्य रुत्वे उकारलोपे **अत्रानुनासिकः पूर्वस्य तु वे**त्यनुनासिके काँ र् कानिति जातं पक्षे **अनुनासिकात्परोनुस्वार** इत्यनुस्वारे कां र् कान् इति जातं तत्र **खरवसानयोर्विसर्जनीय** इति रस्य विसर्गे **संपुंकानां सो वक्तव्य** इत्यनेन सकारे ॥ काँस्कान् ॥ पक्षे कांस्कान् ॥ शिव अग्रे छायेत्यत्र **छे चे**ति सूत्रेण तुकि जाते उकारककारयोर्लोपे शिव त् छायेति जातं तत्र **स्तोः श्चुना श्चु**रिति तकारस्य चकारे ॥ शिवच्छाया ॥ लक्ष्मी अग्रे छायेत्यत्र **पदान्ताद्वे**ति सूत्रेण तुकि कृते उको लोपे **स्तोः श्चुना श्चु**रिति तस्य चकारे कृते ॥ लक्ष्मीच्छाया ॥ तुगभावपक्षे ॥ लक्ष्मीछाया ॥ इति हल्सन्धिः पूर्णः ॥

सदा सदाशिवपदारविन्दयुगलं हृदा ॥
बिभर्ति यस्तस्य के केऽभ्युदया नोदयोन्मुखाः ॥ १ ॥

अथ विसर्गसन्धिः ॥ विष्णुः अग्रे त्राता इत्यत्र **विसर्जनीयस्य स** इत्यनेन खर्प्रत्याहारान्तःपातिनि तकारे परे विसर्गस्य सकारे कृते ॥ विष्णुस्त्राता ॥ हरिः अग्रे शेते इत्यवस्थायां **वा शरी**त्यनेन विसर्गस्य विसर्गे कृते ॥ हरिः शेते ॥ पक्षे **विसर्जनीयस्य स** इत्यनेन विसर्गस्य सकारे **स्तोः श्चुना श्चु**रिति सस्य शत्वे च कृते ॥ हरिश्शेते ॥ शिवस् अग्रे अर्च्य इत्यवस्थायां **ससजुषो रु**रित्यनेन सस्य रुत्वे **अतो रोरप्लुतादप्लुते** इत्यनेन रोरुत्वे **आद्गुण** इत्यनेन पूर्वपरयोः स्थाने गुणे एङः **पदान्तादती**ति सूत्रेणार्च्य इत्यस्याकारस्य पूर्वरूपादेशे

स्यादप्लुतेऽति । शिवोऽर्च्यः ॥ **हशि च** ।६।१।११४। तथा । शिवो वन्द्यः ॥ **भोभगोअघोअपूर्वस्य योऽशि** ।८।३।१७। एतत्पूर्वस्य रोर्यादेशोऽशि । देवा इह, देवायिह । भोस् भगोस् अघोस् इति सान्ता निपाताः । तेषां रोर्यत्वे कृते ॥ **हलि सर्वेषाम्** ।८।३।२२। भो भगो अघो अपूर्वस्य यस्य लोपः स्याद्धलि । भो देवाः, भगो नमस्ते । अघो याहि ॥ **रोऽसुपि** ।८।३।६९। अह्नो रेफादेशो न तु सुपि । अहरहः, अहर्गणः ॥ **रो रि** ।८।३।१४। रेफस्य रेफे परे लोपः ॥ **ढ्रलोपे पूर्वस्य दीर्घोऽणः**

---

कृते ॥ शिवोर्च्य ॥ शिवस् वन्द्य इत्यत्र **ससजुषो रु**रिति सस्य रुत्वे **हशि** चेत्यनेन हश्प्रत्याहारान्तर्गततिनि वन्द्य इत्यस्य वकारे परे रोरुत्वे **आद्गुण** इत्यनेन पूर्वपरयोः स्थाने गुणे च कृते ॥ शिवो वन्द्य ॥ देवास् अग्रे इहेत्यत्र **ससजुषो रु**रिति सस्य रुत्वे **भोभगोअघोअपूर्वस्य योऽशी**त्यनेन रोर्यत्वे देवा य् इहेति जातम् । तत्र **लोपः शाकल्यस्ये**ति यलोपे ॥ देवा इहेति जातम् ॥ यलोपाभावपक्षे ॥ देवायिह ॥ भोस् अग्रे देवा इत्यत्र **ससजुषो रु**रिति सस्य रुत्वे **भोभगोअघोअपूर्वस्य योशी**त्यनेन रोर्यत्वे **हलि सर्वेषा**मिति यलोपे ॥ भो देवा ॥ भगोस् अग्रे नमस्ते इत्यत्र **ससजुषो रु**रिति सस्य रुत्वे **भोभगोअघोअपूर्वस्य योशी**ति रोर्यत्वे **हलि सर्वेषा**मिति यलोपे च ॥ भगो नमस्ते ॥ अघोस् अग्रे याहीत्यत्र **ससजुषो रु**रिति सस्य रुत्वे **भोभगोअघोअपूर्वस्य योऽशी**ति रोर्यत्वे **हलि सर्वेषा**मिति यलोपे च कृते ॥ अघोयाहि ॥ अहन् अग्रे गण इत्यत्र **रोऽसुपी**त्यनेन सर्वस्याहन्शब्दस्य रुत्वे प्राप्ते **अलोऽन्त्यस्ये**ति सूत्रेणान्त्यस्य नस्य रेफादेशे कृते कृते च संयोगे ॥ अहर्गण ॥ अहन् अग्रे अहरित्यत्र **रोऽसुपी**त्यनेन नस्य रेफत्वे संयोगे च ॥ अहरह ॥ पुनर् अग्रे रमते इत्यत्र **रो री**त्यनेन रस्य लोपे कृते **ढ्रलोपे पूर्वस्य दीर्घोऽण** इत्यनेनात्र लोपनिमित्ते रेफे परे पूर्वापूर्वस्ये नकारोत्तरवर्तिन्यकारे दीर्घे कृते ॥ पुनारमते ॥ एवमेव हरिस् अग्रे रम्य इत्यत्र **ससजुषो रु**रिति सस्य रुत्वे उकारस्येत्सञ्ज्ञायां लोपे **रो री**त्यनेन रलोपे **ढ्रलोपे पूर्वस्य दीर्घोऽण** इत्यनेन रेफोत्तरवर्तिन इकारस्य दीर्घत्वे च कृते ॥ हरीरम्य ॥ एवं शम्भूराजते ॥ **ढ्रलोपे पूर्वस्य दीर्घोऽण** इति सूत्रेऽण इत्युक्तं तस्य किं प्रयोजनमित्याशङ्कायां तृहू हिंसायामित्यस्माद्धातोर्निष्ठाया क्तप्रत्यये कृते तृह् त इति जातमुदित्वेन वेट्कत्वात् **यस्य विभाषे**ति सूत्रेणेडभावे ढत्वधत्वष्टुत्वढलोपे च कृते तृढ इति जातं तत्र **ढ्रलोपे पूर्वस्य दीर्घोऽण** इति सूत्रेण पूर्वस्य तकारोत्तरवर्तिन ऋकारस्य दीर्घता प्राप्ता ऋकारस्य अण्प्रत्याहारान्तर्वर्तित्वाभावान्न दीर्घत्वम् । यद्यण इति नावदिष्यदाचार्यास्तर्हि सेयमपप्रयोगापत्तिरभविष्यत् ॥ एवं वृढ इत्यत्रापि न दीर्घता जाता ॥ मनस् अग्रे रथ इत्यत्र **ससजुषो रु**रित्यनेन

मासे किम् । वसतिशिवः । हलि किम् । एषोऽत्र ॥ **सोऽचि लोपे चेत्पादपूरणम्** ।६।१।१३४। स इत्यस्य सोर्लोपः स्यादचि पादश्चेल्लोपे सत्येव पूर्येत । सेमामविड्ढि प्रभृतिम्, सैष दाशरथी रामः ॥ इति विसर्गसन्धिप्रकरणम् ॥

## ॥ अथ अजन्तपुंलिङ्गप्रकरणम् ॥

**अर्थवदधातुरप्रत्ययः प्रातिपदिकम्** ।१।२।४५। धातुं प्रत्ययं प्रत्ययान्तं च वर्जयित्वार्थवच्छब्दरूपं प्रातिपदिकसंज्ञं स्यात् ॥ **कृत्तद्धितसमासाश्च** ।१।२।४६। कृत्तद्धितान्तौ समासाश्च तथा स्युः ॥ **स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्यस्ङसोसाम्ङ्योस्सुप्** ।४।१।२। सु औ जस् इति प्रथमा । अम् औट् शस् इति द्वितीया । टा भ्यां भिस् इति तृतीया । ङे भ्याम् भ्यस् इति चतुर्थी । ङसि भ्यां भ्यस् इति पञ्चमी । ङस् ओस् आम् इति षष्ठी । ङि ओस् सुप् इति सप्तमी

---

सस् इमामविड्ढिप्रभृतीत्यत्र **सोऽचि लोपे चेत्पादपूरण**मिति सकारस्य लोपाभावे पाद एव न पूर्यते ततः सकारलोपे **आद्गुण** इत्यनेन गुणे च कृते ॥ सेमामविड्ढिप्रभृतीति जातम् ॥ एवमेव सैष दाशरथीराम इत्यादौ सुलोप ऊहनीयः ॥ इति श्रीमत्सद्गुरुकेशवकृपाकल्पवल्लरीपल्लवायमानायां प्रयोगमणिमालायां विसर्गसन्धिः पूर्णः ॥

श्रेयःश्रीपोषिणी लोकालोकशोकार्तिशोषिणी ॥
भूत्यै भूयादिह सदा सदाशिवपदार्हणा ॥ १ ॥
प्रोल्लसन्तु कृपापूर्णाः श्रीकेशवमहेशयोः ॥
श्रीसद्गुर्वोर्दृशोऽजस्रं मयि तच्चरणाश्रये ॥ २ ॥

अथ विभक्तिप्रकरणम् ॥

अजन्तपुंलिङ्गः व्याकरणेहि पक्षद्वयमङ्गीक्रियते रूढिर्यौगिकश्चेति तत्र यदा रूढिपक्षः समाश्रीयते तदा रामशब्दस्य **अर्थवदधातुरप्रत्ययः प्रातिपदिक**मित्यनेन प्रातिपदिकसंज्ञा संजायतेति यदास्ते यौगिकः पक्षः समाश्रीयते तदा रमु क्रीडायामित्यस्माद्धातोरधिकरणे घञि कृते रामशब्दः सिद्ध्यति ततः **कृत्तद्धितसमासा**श्चेत्यनेन रामशब्दस्य कृदन्तत्वात्प्रातिपदिकसंज्ञा बोभवीत्येयम् । पक्षद्वयेपि सूत्रद्वयेन कृतायां रामशब्दस्य प्रातिपदिकसंज्ञायां [illegible]स्य सूत्रस्य प्राप्तिः ।

---

१ अत्र प्रत्ययपदस्यावृत्तिः कर्तव्या । एकस्य प्रत्ययपदस्य प्रत्ययग्रहणे यस्मात् विहितस्तदादेस्तदन्तस्य ग्रहणमित्यनया परिभाषया तदन्तपरत्वम् । न च संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्तीति तदन्तस्याप्राप्तिरिति वाच्यम् । आवृत्तिकरणसामर्थ्यात्तस्या प्रवृत्त्युपस्थितेः । आद्यं चोत्तरसूत्रे तद्धितग्रहणमेव ज्ञापकम् ।

---

१ रामो नाम तथाम कश्चिद्व्यक्तिः । २ रमन्ते योगिनोऽस्मिन्निति राम इति ।

॥ **ङ्याप्प्रातिपदिकात्** ।४।१।१। **प्रत्ययः** ।३।१।१। **परश्च** ।३।१।२। इत्यधि-
कृत्य । ङ्यन्तादाबन्तात्प्रातिपदिकाच्च परे स्वादयः प्रत्ययाः स्युः ॥ **सुपः** ।१।४।१०३।
सुपस्त्रीणि त्रीणि वचनान्येकश एकवचनद्विवचनबहुवचनसंज्ञानि स्युः ॥ **द्व्येकयो-
र्द्विवचनैकवचने** ।१।४।२२। द्वित्वैकत्वयोरेते स्तः ॥ **बहुषु बहुवचनम्** । १।४।
२१। बहुत्वविवक्षायां बहुवचनं स्यात् ॥ **विरामोऽवसानम्** ।१।४।११०। वर्णाना-
मभावोऽवसानसंज्ञः स्यात् । रुत्वविसर्गौ रामः॥ **सरूपाणामेकशेष एकविभक्तौ**
।१।२।६४। एकविभक्तौ यानि सरूपाण्येव दृष्टानि तेषामेक एव शिष्यते ॥ **प्रथमयोः
पूर्वसवर्णः**।६।१।१०२। अकः प्रथमाद्वितीययोरचि पूर्वसवर्णदीर्घ एकादेशः स्यात् ।
इति प्राप्ते ॥ **नादिचि** ।६।१।१०४। आदिचि न पूर्वसवर्णदीर्घः । वृद्धिरेचि । रामौ
॥ **बहुषु बहुवचनम्** ।१।४।२१। **चुटू** ।१।३।७। प्रत्ययाद्यौ चुटू इतौ स्तः ॥ **विभ-
क्तिश्च** ।१।४।१०४। सुप्तिङौ विभक्तिसंज्ञौ स्तः ॥ **न विभक्तौ तुस्माः** ।१।३।४।
विभक्तिस्थास्तवर्गसमा नेतः । इति सस्य नेत्त्वम् । रामः रामौ, रामाः॥ **एकवचनं संबुद्धिः**
।२।३।४९। संबोधने प्रथमाया एकवचनं संबुद्धिसंज्ञं स्यात् ॥ **यस्मात्प्रत्ययविधिस्त-**

---

**ङ्याप्प्रातिपदिकात्** । इत्यनेन प्रातिपदिकसंज्ञाद्रामशब्दात्खलकपोतन्यायेन स्वादयः
प्राप्तास्तेषां मध्यात्केनात्र भाव्यं **सुप** इत्यनेन वचनानामेकवचनद्विवचनसंज्ञां विधाय **द्व्येकयो-
र्द्विवचनैकवचने** इत्यनेनात्रैकवचनविवक्षास्तीति ततः प्रथमाया एकवचने सु इत्यागते राम
सु इति जातं तत्र **उपदेशेऽजनुनासिक इत्** इत्यनेन सकारोत्तरवर्तिन उकारस्येत्संज्ञां
विधाय **तस्य लोप** इत्यनेन चोकारस्य लोपे कृते राम स् इति जातम् । तत्र **ससजुषो रु-**
रित्यनेन सस्य रुत्वे रकारोत्तरवर्तिन उकारस्येत्संज्ञाविधानपूर्वं लोपे **खरवसानयोर्विसर्ज-
नीय** इति रस्य विसर्गे च कृते ॥ रामः ॥ रामशब्दात्प्रथमाया द्विवचने औ इत्यागते राम
राम औ इति जातम् तत्र **सरूपाणामेकशेष एकविभक्तौ** इति सूत्रेणात्रैकस्मिन्नव-
शिष्टे **प्रथमयोः पूर्वसवर्ण** इत्यनेन पूर्वसवर्णादेशे प्राप्ते **नादिची**त्यनेन पूर्वसवर्णा-
देशाभावे **वृद्धिरेची**त्यनेन वृद्धौ कृतायां ॥ रामौ ॥ रामशब्दात्प्रथमाया बहुवचने जसि
समागते राम जस् इति जातं तत्र **चुटू** इत्यनेन प्रत्ययाद्यस्य चवर्गान्तःपातिनो जकारस्येत्सं-
ज्ञायां **तस्य लोप** इति लोपे च कृते राम अस् इति जातम् । तत्र **प्रथमयोः पूर्वसवर्ण**
इति पूर्वसवर्णादेशे कृते रामास् जातं तत्र **ससजुषो रु**रिति सस्य रुत्वे उकारलोपे **खरव-
सानयो**रिति रस्य विसर्गे च कृते ॥ रामाः ॥ हेपूर्वकरामशब्दात्प्रथमाया एकवचने सौ समागते
**एकवचनं संबुद्धि**रिति सूत्रेण सोः संबुद्धिसंज्ञायां कृतायां कृते च **यस्मात्प्रत्ययवि-**

---

१ नच राम औ इत्यवस्थायां वृद्धिः प्राप्ता तां बाधित्वा प्रथमयोरिति दीर्घः प्राप्तस्तस्य नादिचीत्य-
नेन निषेधः कृतः पुनर्देवदत्तहन्तृहतन्यायेन वृद्धिर्न स्यादिति वाच्यम् । तौ सदित्यादिनिर्देशेन तस्यानित्य-
त्वद्योतनात् । वस्तुतस्तु नात्र न्यायस्य विषयः । वृद्धिहन्तुः पूर्वसवर्णदीर्घस्य हननोद्यमसजातीयप्रसङ्गमात्रं
न तु हननस्थानीया लक्ष्ये प्रवृत्तिरिति ॥ तस्मादत्र सात्यकिन्यायस्य विषयः ॥

**दादिप्रत्ययेऽङ्गम्** ।१।४।१३। यः प्रत्ययो यस्मात्क्रियते तदादि शब्दस्वरूपं तस्मिन्नङ्गं स्यात् ॥ **एङ्ह्रस्वात्संबुद्धेः** ।६।१।६९। एङन्ताद्ध्रस्वान्ताच्चाङ्गाद्धल्लुप्यते संबुद्धेश्चेत् । हे राम, हे रामौ हेरामाः ॥ **अमि पूर्वः** ।६।१।१०७। अकोऽम्यचि पूर्वरूपमेकादेशः । रामम्, रामौ ॥ **लशक्वतद्धिते** ।१।३।८। तद्धितवर्जप्रत्ययाद्या लशकवर्गा इतः स्युः ॥ **तस्माच्छसो नः पुंसि** ।६।१।१०३। पूर्वसवर्णदीर्घात्परो यः शसः सः नः स्यात्पुंसि ॥ **अट्कुप्वाङ्नुम्व्यवायेऽपि** ।८।४।२। अट् कवर्गः पवर्ग आङ् नुम् एतैर्व्यस्तैर्यथासंभवं मिलितैश्च व्यवधानेऽपि रषाभ्यां परस्य नस्य णः समानपदे । इति प्राप्ते ॥ **पदान्तस्य** ।८।४।३७। नस्य णो न । रामान् ॥ **टाङसिङसामिनात्स्याः** ।७।१।१२। अदन्ताट्टादीनामिनादयः स्युः । णत्वम्, रामेण ॥ **सुपि च** ।७।३।१०२। यञादौ सुपि अतोऽङ्गस्य दीर्घः । रामाभ्याम् ॥ **अतो भिस ऐस्** ।७।१।९। अनेकाल्शित्सर्वस्य । रामैः ॥ **ङेर्यः** ।७।१।१३। अतोऽङ्गात्परस्य ङेर्यादेशः ॥ **स्थानिवदादेशोऽनल्विधौ** ।१।१।५६। आदेशः स्थानिवत्स्यान्न तु स्थान्यलाश्रयविधौ । इति

---

**धिस्तदादिप्रत्ययेऽङ्ग**मित्यनेन रामशब्दस्याङ्गत्वे **एङ् ह्रस्वात्संबुद्धे**रित्यनेन संबुद्धिसंबन्धिनि हल्रूपे सकारे लुप्ते ॥ हे राम ॥ हे रामौ ॥ हे रामाः ॥ इति प्रथमाया द्विवचनबहुवचनसाधने परिपाट्येव सिद्ध्यति । राम अग्रे द्वितीयैकवचने अमि समागते **अमि पूर्व** इत्यनेन पूर्वरूपैकादेशे कृते ॥ रामम् ॥ रामौ ॥ पूर्ववत् ॥ राम अग्रे द्वितीयाबहुवचने शसि समागते **लशक्वतद्धिते** इत्यनेन शस्येत्संज्ञाया **तस्य लोप** इति शस्य लोपे राम अस् इति जातं तत्र **प्रथमयोः पूर्वसवर्ण** इति पूर्वसवर्णादेशे रामा स् इति जातं तत्र **तस्माच्छसो नः पुंसी**त्यनेन सकारस्य नकारे कृते रामान् इति जातं तत्र **अट्कुप्वाङ्नुम्व्यवायेपि** इत्यनेन नकारस्य णत्वे प्राप्ते **न पदान्तस्ये**त्यनेन णत्वाभावे ॥ रामान् ॥ राम अग्रे तृतीयैकवचने टा इत्यागते राम टा इति जातं तत्र **टाङसिङसामिनात्स्या** इत्यनेन इनादेशे कृते **आद्गुण** इति गुणे कृते कृते **चाट्कुप्वाङ्नुम्व्यवायेपी**ति नस्य णत्वे ॥ रामेण ॥ राम अग्रे तृतीयाद्विवचने भ्यामि समागते **सुपि** चेत्यनेन यञादिसुबन्तःपातिनि भ्यामि परे मकारोत्तरवर्तिनोऽदन्ताङ्गरूपस्याकारस्य दीर्घत्वे ॥ रामाभ्याम् ॥ राम अग्रे तृतीयाबहुवचने भिसि समागते **अतो भिस ऐसि**त्यनेन अदन्तादङ्गसंज्ञाच्च रामशब्दात्परस्य भिस ऐसि कृते **वृद्धिरेची**त्यनेन वृद्धौ कृतायां **ससजुषो** रुरिति सस्य रुकारोत्तरवर्तिन उकारस्य लोपे **खरवसानयोर्विसर्जनीय** इति रस्य विसर्गत्वे च विहिते ॥ रामैः ॥ राम अग्रे चतुर्थ्येकवचने ङे इत्यागते **ङेर्यः** इत्यनेन ङेर्यादेशे रामय इति जातं तत्र कस्य सूत्रस्य प्राप्तिः '**सुपि** च कोशान यञादिः सुप् ङेः स्थाने जातो योयं यादेशः स तु यञादिर्वर्तते परं तस्मिन् सुप्त्वं नास्तीत्याशङ्कायां **स्थानिवदादेशोऽनल्विधा**विति सूत्रेण ङेः स्थाने आदेशत्वेन प्राप्तस्य यस्य स्थानिवत्त्वे कृते यकारस्य सुप्त्वं सिद्धं ततो यञादिसुप्त्वे यकारे परे मकारोत्तरवर्ति-

इतर त्वत् त्व नेम सम सिम । पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम् । स्वमज्ञातिधनाख्यायाम् । अन्तरं बहिर्योगोपसंव्यानयोः । त्यद् तद् यद् एतद् इदम् अदस् एक द्वि युष्मद् अस्मद् भवतु किम् ॥ **जसः शी** ।७।१।१७। अदन्तात्सर्वनाम्नो जसः शी स्यात् । अनेकाल्त्वात्सर्वादेशः । सर्वे ॥ **सर्वनाम्नः स्मै** ।७।१।१४। अतः सर्वनाम्नो ङे स्मै । सर्वस्मै ॥ **ङसिङ्योः स्मात्स्मिनौ** ।७।१।१५। अतः सर्वनाम्न एतयोरेतौ स्तः । सर्वस्मात् ॥ **आमि सर्वनाम्नः सुट्** ।७।१।५२। अवर्णान्तात्परस्य सर्वनाम्नो विहितस्यामः सुडागमः । एत्वषत्वे । सर्वेषाम् सर्वस्मिन् । शेषं रामवत् । एवं विश्वादयोऽप्यदन्ताः । उभशब्दो द्विवचनान्तः । उभौ २ उभाभ्याम् ३ उभयोः २ । तस्येह पाठोऽकजर्थः । डतरडतमौ प्रत्ययौ । प्रत्ययग्रहणे तदन्तग्रहणमिति तदन्ता ग्राह्याः । नेम इत्यर्धे । समः सर्वपर्यायस्तुल्यपर्यायस्तु न । यथासंख्यमनुदेशः समानामिति ज्ञापकात् ॥ **पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम्** ।१।१।३४। एतेषां व्यवस्थायामसंज्ञायां सर्वनामसंज्ञा गणसूत्रात्सर्वत्र या

---

एकादेशे कृते सर्व शीति जाते तत्र **लशक्वतद्धिते** इति शकारस्येत्संज्ञायां **तस्य लोपः** इति शकारलोपे एते कृते **आद्गुणः** इति गुणे ॥ सर्वे ॥ सर्वशब्दाच्चतुर्थ्येकवचने ङे इत्यागते **सर्वनाम्नः स्मै** इत्यनेन ङे इत्यस्य स्मै आदेशे कृते ॥ सर्वस्मै ॥ सर्वशब्दात्पञ्चम्या एकवचने ङसावागते **ङसिङ्योः स्मात् स्मिनावि**त्यनेन ङसीत्यस्य स्मात् इत्यादेशे कृते ॥ सर्वस्मात् ॥ सर्वशब्दात्षष्ठ्या बहुवचने आमि प्राप्ते **आमि सर्वनाम्नः सुट्** इति सुटि सर्व सुट् आम् इति जाते टकारोकारयोर्लोपे सकारस्य आम आकारेण सहसंयोगे कृते सर्वसामिति जाते तत्र **बहुवचने झल्येदि**त्यनेन वकारोत्तरवर्तिनोऽकारस्यैकारे कृते । कृते च **आदेशप्रत्यययोः** इति सस्य षत्वादेशे ॥ सर्वेषाम् ॥ सर्वशब्दात्सप्तम्या एकवचने ङौ समागते **ङसिङ्योः स्मात्स्मिना**वित्यनेनात्र ङेः स्मिन्नित्यादेशे कृते ॥ सर्वस्मिन् ॥ एवमेव विश्वादयोऽदन्ता बोध्याः ॥ उभशब्दस्य द्विवचनान्तत्वात्किं सर्वनामसंज्ञासूत्रे तत्पाठेन फलमिति चेदुच्यते । **अव्ययसर्वनाम्नामकच्प्राक्टेः** इत्यनेन प्राप्तस्याकचः प्रवृत्तौ यदि नापठिष्यत् भगवतः पाणिनेः सर्वनामसंज्ञासूत्रे उभशब्दं तर्हि नाभविष्यदेवंविधोऽस्यात्र पाठो विहितः इत्यवगमयो । सर्वादिषु पाठं कृत्वा उभशब्दस्याकजर्थं सर्वनामसंज्ञार्थं विहितम् । नेमशब्दोऽर्धपर्य-

प्राप्ता सा जसि वा स्यात् । पूर्वे पूर्वाः । असंज्ञायां किम् । उत्तराः कुरवः । स्वाभिधेयापेक्षाऽवधिनियमो व्यवस्था । व्यवस्थायां किम् । दक्षिणा गाथकाः । कुशला इत्यर्थः ॥ **स्वमज्ञातिधनाख्यायाम्** ।१।१।३५। ज्ञातिधनान्यवाचिनः स्वशब्दस्य प्राप्ता संज्ञा सा जसि वा । स्वे स्वाः । आत्मीयाः आत्मान इति वा । ज्ञातिधनवाचिनस्तु स्वाः । ज्ञातयोऽर्था वा ॥ **अन्तरं बहिर्योगोपसंव्यानयोः** ।१।१।३६। बाह्ये परिधानीये चार्थेऽन्तरशब्दस्य प्राप्ता संज्ञा सा जसि वा । अन्तरे अन्तरा वा गृहाः । बाह्या इत्यर्थः । अन्तरे अन्तरा वा शाटकाः । परिधानीया इत्यर्थः ॥ **पूर्वादिभ्यो नवभ्यो वा** ।७।१।१६। एभ्यो ङसिङ्योः स्मात्स्मिनौ वा स्तः । पूर्वस्मात् पूर्वात्, पूर्वस्मिन् पूर्वे । एवं परादीनाम् । शेषं सर्ववत् ॥ **प्रथमचरमतयाल्पार्धकतिपयनेमाश्च** ।१।१।३३। एते जसि उक्तसंज्ञा वा स्युः । प्रथमे प्रथमाः । तयः प्रत्ययः । द्वितये द्वितयाः । शेषं रामवत् । नेमे नेमाः । शेषं सर्ववत् । (तीयस्य ङित्सु वा) द्वितीयस्मै द्वितीयायेत्यादि ॥ एवं तृतीयः । निर्जरः ॥ **जराया जरसन्यतरस्याम्** ।७।२।१०१। अजादौ विभक्तौ । पदा-

---

सर्वनामसंज्ञायां **जसः शी**त्यनेन जसः श्यादेशे शकारलोपे गुणे च कृते ॥ पूर्वे ॥ यस्मिन् पक्षे न सर्वनामसंज्ञा तस्मिन् पक्षे ॥ पूर्वाः ॥ रामवत् । उत्तराः कुरव इत्यत्र देशवाचकत्वान्न सर्वनामसंज्ञा । दक्षिणा गाथका इत्यत्र अव्यवस्थावाचकत्वाद्दक्षिणशब्दस्य न सर्वनामसंज्ञा । **स्वमज्ञातिधनाख्याया**मिति स्वशब्दस्य सर्वनामसंज्ञायां (स्वे) इति रूपं तदभावे तु (स्वाः) इति रूपं भवति । स्वशब्दस्य ज्ञातिधनवाचकत्वे तु न सर्वनामता बोभवीति ॥ पितृपैतामहायैव स्वाय स्पृहयतानिशं ॥ विद्याधनाय च जने स्वे स्नेहस्तु विधीयताम् ॥ अन्तरशब्दस्य बाह्यत्वे परिधानीयत्वेन **अन्तरं बहिर्योगोपसंव्यानयो**रिति सर्वनामसंज्ञायाम् ॥ अन्तरे ॥ तदभावे च (अन्तरा) इति भवति । पूर्वशब्दात्पञ्चम्येकवचने ङसौ **पूर्वादिभ्यो नवभ्यो** वेति स्मादित्यादेशे ॥ पूर्वस्मात् ॥ तदभावे ॥ पूर्वात् ॥ पूर्वशब्दात्सप्तम्येकवचने ङावागते **पूर्वादिभ्यो नवभ्यो** वेति सूत्रेण ङेः स्मिन्नित्यादेशे कृते ॥ पूर्वस्मिन् ॥ पक्षे ॥ पूर्वे ॥ प्रथम अग्रे जसि **प्रथमचरमतयाल्पार्धकतिपयनेमाश्चे**ति सूत्रेण सर्वनामसंज्ञकत्वा**ज्जसः शी**ति सूत्रेण जसः श्यादेशे कृते ॥ प्रथमे ॥ पक्षे ॥ प्रथमाः ॥ एवमेव द्वितीये ॥ द्वितीयाः ॥ तथैव ॥ नेमे ॥ नेमाः ॥ द्वितीय अग्रे चतुर्थ्येकवचने ङे समागते **तीयस्य ङित्सु** वेत्यनेन सर्वनामसंज्ञा वैकल्प्यात् ॥ द्वितीयस्मै ॥ पक्षे ॥ द्वितीयाय ॥ तृतीयशब्देऽप्येवमेवोह्यम् । निर्जर अग्रे प्रथमैकवचने सावागते सकारोत्तरवर्तिन उकारस्येत्संज्ञाकरणपूर्वं लोपे कृते **ससजुषोरु**रिति सस्य रुत्वे पुनरुकारलोपे **खरवसानयोर्विसर्जनीय** इति विसर्जनीयत्वे ॥ निर्जरः ॥ निर्जर अग्रे प्रथमाद्विवचने औ समागते **जराया जरसन्यतरस्याम्** । इत्यनेन जरसा-

---

१ अत्र जराया असुङ्वेति न सूत्रितं पदद्वित्वे तदनुकरणे च जराजरा औ इत्यवस्थायामन्त्याकारस्यासुङि जराजरसावित्यनिष्टं प्रसज्येत । राद्धान्ते तु स्थाने द्वित्वपक्षे द्वित्वविशिष्टे स्थानिवद्भावेन जराशब्दत्वमानीय तद्विशिष्टस्यैव जरसादेशे जरसाविति भाष्यरांमतम् ।

ङ्गाधिकारे तस्य तदन्तस्य च। निर्दिश्यमानस्यादेशा भवन्ति। एकदेशविकृतमनन्यवदिति जरशब्दस्य जरस्। निर्जरसौ निर्जरस इत्यादि॥ पक्षे हलादौ च रामवत्। विश्वपाः॥ **दीर्घाज्जसि च** ।६।१।१०५। विश्वपौ विश्वपाः॥ विश्वपाम् विश्वपौ॥ **सुडनपुंसकस्य** ।१।१।४३। स्वादिपञ्चवचनानि सर्वनामस्थानसंज्ञानि स्युरक्लीबस्य॥ **स्वादिष्वसर्वनामस्थाने** ।१।४।१७। कप्प्रत्ययावधिषु स्वादिष्वसर्वनामस्थानेषु पूर्वं पदं स्यात्॥ **यचि भम्** ।१।४।१८। यादिष्वजादिषु च कप्प्रत्ययावधिषु स्वादिष्वसर्वनामस्थानेषु पूर्वं भसंज्ञं स्यात्॥ **आ कडारादेका संज्ञा** ।१।४।१। इत ऊर्ध्वं कडाराः कर्मधारय इत्यतः प्रागेकस्यैकैव संज्ञा ज्ञेया या पराऽनवकाशा च॥ **आतो धातोः** ।६।४।१४०। आकारान्तो यो धातुस्तदन्तस्य भस्याङ्गस्य लोपः। अलोऽन्त्यस्य। विश्वपः विश्वपा विश्वपाभ्यामित्यादि॥ एवं शङ्खध्मादयः। धातोः किम्। हाहान्।

---

देशे प्राप्ते सूत्रे जराशब्दस्य जरसादेशः प्रोक्तो न तु निर्जरशब्दस्य अतः। कथं जरसादेशः स्यादित्याशङ्कायाम्। पदाङ्गाधिकारे तस्य तदन्तस्येत्यनेनात्र अङ्गाधिकारत्वात् तदन्तस्यापि स्यादिति प्राप्ते निर्दिश्यमानस्यादेशा भवन्तीत्यनेन जराशब्दस्यैव जरसादेशेन भाव्यं कथमत्र जरशब्दस्य जरसा भाव्यमित्याशङ्कायामे**कदेशविकृतमनन्यव**दिति जरसादेशे कृते कृते च सयोगे॥ जरसौ॥ जसि च॥ जरस॥ पक्षे हलादौ रामवत्॥ विश्वपा अग्रे सौ सस्य रुत्वे रोर्विसर्गत्वे च॥ विश्वपाः॥ विश्वपा औ इत्यत्र **प्रथमयोः पूर्वसवर्ण** इति पूर्वसवर्णादेशे प्राप्ते **दीर्घाज्जसि चे**ति सूत्रेण पूर्वसवर्णदीर्घाभावे **वृद्धिरेची**त्यनेन वृद्धौ कृतायाम्॥ विश्वपौ॥ विश्वपा अग्रे जसि **चुटू** इति जस्येत्संज्ञाया **तस्य लोप** इत्यनेन जस्य लोपे **अकः सवर्णे दीर्घ** इति सवर्णदीर्घत्वे सस्य रुत्वे रस्य विसर्गत्वे च॥ विश्वपाः॥ विश्वपा अग्रे अमि। **अमि पूर्व** इति पूर्वरूपैकादेशे॥ विश्वपाम्। विश्वपौ॥ विश्वपा शस् इत्यत्र **लशक्वतद्धिते** इति शस्येत्संज्ञाया लोपे च विश्वपा अस् इत्यवशिष्टे तत्र **सुडनपुंसकस्ये**ति सूत्रेण स्वादिपञ्चवचनानां सर्वनामस्थानसंज्ञाया जाताया विश्वपाशब्दस्य **स्वादिष्वसर्वनामस्थाने**ष्विति सूत्रेण पदसंज्ञा **यचि भ**मिति सूत्रेण भसंज्ञा च प्राप्ता तयोर्मध्यात्कयानु भाव्यमित्याशङ्कायामा**कडारादेका संज्ञे**ति सूत्रेण भसंज्ञाया परत्वादनवकाशत्वाच्च भसंज्ञयैव भाव्यमिति भसंज्ञाया**मातो धातो**रिति सूत्रेण पकारोत्तरवर्तिन आकारस्य लोपे पकारस्याकारेण सह सयोगे सस्य रुत्वे रस्य विसर्गत्वे च॥ विश्वपः॥ विश्वपा अग्रे ङे समागते ङस्येत्संज्ञाया लोपे च विश्वपा ए इत्यवशिष्टे तत्र **यचि भ**मिति भसंज्ञाया**मातो धातो**रिति पकारान्तःपातिन आकारस्य लोपे सयोगे च कृते॥ विश्वपे॥ एवं पञ्चम्याएकवचनेऽप्यूह्यम्॥ शङ्खध्मादयः शब्दा अप्येवमेवोहनीयाः। हरिशब्दो वर्ततेऽग्रे प्रथमैकवचने सावागते **उपदेशेऽजनुनासिक इत्। ससजुषो रुः। खरवसानयोर्विसर्जनीय** इत्येभिः सूत्रैः॥ हरिः॥ हरि अग्रे प्रथमाद्विवचने औ समागते **प्रथमयोः पूर्वसवर्ण** इत्यनेन पूर्वसवर्णदीर्घादेशे कृते

**अनङ् सौ** ।७।१।९३। सख्युरङ्गस्यानङादेशोऽसंबुद्धौ सौ ॥ **अलोऽन्त्यात्पूर्व उपधा** ।१।१।६५। अन्त्यादलः पूर्वो वर्ण उपधासंज्ञः ॥ **सर्वनामस्थाने चासंबुद्धौ** ।६।४।८। नान्तस्योपधाया दीर्घोऽसंबुद्धौ सर्वनामस्थाने ॥ **अपृक्त एकाल् प्रत्ययः** ।१।२।४१। एकाल्प्रत्ययो यः सोऽपृक्तसंज्ञः स्यात् ॥ **हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्** ।६।१।६८। हलन्तात्परं दीर्घौ यौ ङ्यापौ तदन्ताच्च परं सुतिसीत्येतदपृक्तं हलुप्यते ॥ **नलोपः प्रातिपदिकान्तस्य** ।८।२।७। प्रातिपदिकसंज्ञकं यत्पदं तदन्तस्य नस्य लोपः । सखा ॥ **सख्युरसंबुद्धौ** ।७।१।९२। सख्युरङ्गात्परं संबुद्धिवर्जं सर्वनामस्थानं णिद्वत्स्यात् ॥ **अचो ञ्णिति** ।७।२।११५। अजन्ताङ्गस्य वृद्धिर्ञिति णिति च परे । सखायौ सखायः । हे सखे । सखायम् सखायौ सखीन् । सख्या सख्ये ॥ **ख्यत्यात्परस्य** ।६।१।११२। खितिशब्दाभ्यां खीतीशब्दाभ्यां

---

सूत्रेण पूर्वपरयो. स्थाने वृद्धिरूपादेशे कृते ॥ हरौ ॥ हरि अग्रे सप्तमीबहुवचने सुप्यागते षकारलोपे **आदेशप्रत्ययोरि**ति सूत्रेण सस्य मूर्द्धन्यादेशे कृते ॥ हरिषु ॥ सखिशब्दो वर्ततेऽग्रे प्रथमैकवचने सौ समागते **अनङ्सौ** इत्यनेन अनङ्प्राप्तः स कुत्र स्यादित्याशङ्कायामनेकाल्शित्सर्वस्येति सर्वस्य प्राप्तः परं **ङिच्चे**त्यनेन अन्त्यस्य खकारोत्तरवर्तिन इकारस्य अनङादेशे कृते— सख्— अनङ् स् इति जातं तत्र नकारोत्तरवर्त्यङ्कारस्य **उपदेशेऽजनुनासिक इत्** इत्यनेन ङकारस्य **हलन्त्यमि**त्यनेन चेत्संज्ञां विधाय द्वयोरपि **तस्य लोप** इति लोपे कृते सख्— अन्— स् इत्यवशिष्टं तत्र **अलोन्त्यात्पूर्व उपधा** इत्यनेनाकारस्योपधासंज्ञायां कृतायां **सर्वनामस्थाने चासंबुद्धौ** इति सूत्रेण नान्तस्य पदस्योपधाया दीर्घे कृते सखान् स् इति जातं तत्र **अपृक्त एकाल् प्रत्यय** इत्यनेन सकारस्यापृक्तसंज्ञायां कृतायाम् **हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हलि**त्यनेन सकारस्य लोपे सखान् इत्यवशिष्टं तत्र **नलोपः प्रातिपदिकान्तस्ये**ति सूत्रेण नस्य लोपे च कृते ॥ सखा ॥ सखि अग्रे औ समागते **सख्युरसंबुद्धौ** इत्यनेनौकारस्य णिद्भावे कृते **अचो ञ्णिति** इति अजन्ताङ्गस्य वृद्धौ कृतायां सखै— औ इति जातं तत्र **एचोयवायाव** इत्यायादेशे संयोगे च कृते ॥ सखायौ ॥ एवं जसि ॥ सखायः ॥ अमि **सख्युरसंबुद्धौ । अचो ञ्णिति । एचोयवायावः ।** इत्येभिः सूत्रैः क्रमात् णिद्भावे वृद्धौ आयादेशे च कृते ॥ सखायम् ॥ सखायौ ॥ पूर्ववत् ॥ सखिशब्दात् टा इत्यागते **चुटू** इति टकारस्येत्संज्ञायां **तस्य लोप** इति लोपे **इको यणचीति** यणि च कृते ॥ सख्या ॥ एवमेव ॥ सख्ये ॥ सखिशब्दात् ङसि समागते टकारस्येत्संज्ञायां लोपे च कृते कृते च **इको यणचीति** यणादेशे सख्— य्— अस् इति जाते तत्र **ख्यत्यात्परस्ये**ति सूत्रेण अकारस्योकारादेशे सकारस्य च विसर्गत्वे कृते ॥ सख्युः ॥ षष्ठ्येकवचनेऽपि ॥ सख्युः ॥ पूर्ववत् ।

कृतयणादेशाभ्यां परस्य ङसिङसोरत उः । सख्युः ॥ **औत्** ।७।३।११८। इतः परस्य ङेरौत् । सख्यौ । शेषं हरिवत् ॥ **पतिः समास एव** ।१।४।८। घिसंज्ञा । पत्ये । पत्युः २ पत्यौ । शेषं हरिवत् । समासे तु भूपतये । कतिशब्दो बहुवचनान्तः ॥ **बहुगणवतुडति संख्या** ।१।१।२३। **डति च** ।१।१।२५। डत्यन्ता संख्या षट्संज्ञा स्यात् ॥ **षड्भ्यो लुक्** ।७।१।२२। जश्शसोः ॥ **प्रत्ययस्य लुक्श्लुलुपः** १।१।६१। लुक्श्लुलुप्शब्दैः कृतं प्रत्ययादर्शनं क्रमात्तत्तत्संज्ञं स्यात् ॥ **प्रत्ययलोपे प्रत्ययलक्षणम्** ।१।१।६२। प्रत्यये लुप्तेऽपि तदाश्रितं कार्यं स्यात् । इति जसि चेति गुणे प्राप्ते ॥ **न लुमताङ्गस्य** ।१।१।६३। लुमता शब्देन लुप्ते तन्निमित्तमङ्गकार्यं न स्यात् । कति२कतिभिः कतिभ्यः२ कतीनाम् कतिषु । युष्मदस्मत्षट्संज्ञकास्त्रिषु सरूपाः । त्रिशब्दो नित्यं बहुवचनान्तः । त्रयः त्रीन् त्रिभिः त्रिभ्यः २ ॥ **त्रेस्त्रयः** ।७।१।५३।

---

सखिशब्दात्सप्तम्येकवचने ङौ समागते **औत्** इति सूत्रेण ङेरौकारादेशे **इको यणची**ति यणादेशे च कृते ॥ सख्यौ ॥ आद्वितीयाबहुवचनं पतिशब्दस्य हरिशब्दसाम्यम् । तृतीयैकवचने तु **पतिः समास एवे**ति सूत्रेणात्र समासाभावाद्घित्वविरहात् । **आङो नाऽस्त्रियामि**त्यस्याप्राप्तौ **इको यणची**ति यणि कृते ॥ पत्या ॥ एवमेव ॥ पत्ये ॥ पञ्चम्येकवचने ङस्यागते ङकारलोपे यणि **ख्यत्यात्परस्ये**त्यकारस्योकारे सस्य रुत्वे रस्य विसर्गे च कृते ॥ पत्युः ॥ एवम् ॥ पत्युः ॥ सप्तम्येकवचने ङौ समागते **औत्** इति सूत्रेण ङेरौत्वे यणादेशे च कृते ॥ पत्यौ ॥ समासश्चेद्घिसंज्ञत्वात् ॥ भूपतिना ॥ भूपतये ॥ इत्यादि भवत्येव ॥ कतिशब्दस्याग्रे प्रथमाबहुवचने जसि समागते **बहुगणवतुडति संख्या** इति संख्यासंज्ञां विधाय **डति चे**ति सूत्रेण षट्संज्ञां च विधाय **षड्भ्यो लुक् जश्शसो**रिति जसो लोपं विधाय **प्रत्ययलोपे प्रत्ययलक्षण**मिति **जसि चे**ति गुणे प्राप्ते **न लुमताङ्गस्ये**ति सूत्रेण गुणाभावे ॥ कति ॥ त्रिशब्दात्प्रथमाबहुवचने जस्यागते जस्य लोपे **ह्रस्वस्य गुण** इति गुणे **एचोऽयवायाव** इति अयादेशे च कृते ॥ त्रयः ॥ त्रिशब्दात् द्वितीयाबहुवचने शसि **प्रथमयोः पूर्वसवर्ण** इति पूर्वसवर्णदीर्घत्वे **तस्माच्छसो नः पुंसी**ति सस्य नत्वे कृते ॥ त्रीन् ॥ त्रिशब्दात्षष्ठीबहुवचने आम्यागते **त्रेस्त्रय** इति

---

१ न च ङौ यद्विभक्तित्वं तत्स्थानिवद्भावेन औति आयास्यति तदा तु न विभक्तौ तुस्मा इति निषेधात्तकारस्येत्संज्ञा न स्यादिति वाच्यम् । इदमस्थमुरिति सूत्रे मकारेत्संज्ञापरित्राणार्थेन उकारोच्चारणेन तन्निषेधस्यानित्यत्वद्योतनात् । उकाराभावे मकारस्येत्संज्ञा तु न भवति प्राग्दिशोविभक्तिरित्यधिकारात् थमुरित्यस्य विभक्तित्वेन तेन निषेधेनैव सिद्धिः । २ अत्र एवकार इष्टतोऽवधारणार्थस्तेन । सीतायाः पतये नमः । क्लीबे च पतिते पतौ । सखिना वानरेन्द्रेणेत्यादीनां सिद्धिः । विपरीतनियमवारणार्थस्तु न धात्वादेः पःस इत्यादिनिर्देशात् । ३ नित्यविशिष्टसंख्यावाचिनस्त्रिशब्दस्यैव बहुवचनान्तत्वम् । अत एव त्रैस्त्रय इत्यत्रैकवचनान्तत्वमपि सम्यगेव तत्र स्वरूपपरत्वात् ।

त्रिशब्दस्य त्रयादेशः स्यादामि । त्रयाणाम् त्रिषु । गौणत्वेऽपि प्रियत्रयाणाम् ॥ **त्यदादीनामः ।७।२।१०२।** एषामकारो विभक्तौ । द्विपर्यन्तानामेवेष्टिः । द्वौ द्वौ द्वाभ्याम् द्वाभ्याम् द्वाभ्याम् द्वयोः द्वयोः । पाति लोकमिति पपीः सूर्यः ॥ **दीर्घाज्जसि च ।६।१।१०५।** दीर्घाज्जसि इचि च परे न पूर्वसवर्णः । पप्यौ पप्यः । हे पपीः पपीम् पपीन् पप्या पपीभ्याम् पपीभिः पप्ये पपीभ्यः पप्यः पप्योः । दीर्घत्वान्न नुट् । पप्याम् । ङौ तु सवर्णदीर्घः । पपी पप्योः पपीषु । एवं वातप्रम्यादयः । बह्व्यः श्रेयस्यो यस्य स बहुश्रेयसी ॥ **यू स्त्र्याख्यौ नदी ।१।४।३।** ईदूदन्तौ नित्यस्त्रीलिङ्गौ नदीसंज्ञौ स्तः । प्रथमलिङ्गग्रहणं च । पूर्वं स्त्र्याख्यस्योपसर्जनत्वेऽपि नदीत्वं वक्तव्यमित्यर्थः[1] ॥ **अम्बार्थनद्योर्ह्रस्वः ।७।३।१०७।** संबुद्धौ । हे बहुश्रेयसि ॥ **आण्नद्याः ।७।३।११२।** नद्यन्तात्परेषां

त्रयादेशे कृते त्रय—आम् इति जाते तत्र **ह्रस्वनद्यापो नुट्** इति नुटि उटो लोपे नकारस्याकारेण सह संयोगे **नामि** इति दीर्घे **अट्कुप्वाङ् नुम्व्यवायेपी**ति नस्य णत्वे च कृते ॥ त्रयाणाम् ॥ द्विशब्दात्प्रथमाद्वितीयाद्विवचने औ समागते **त्यदादीनाम** इत्यकारान्तादेशे कृते कृतायां च **वृद्धिरेची**त्यनेन वृद्धौ ॥ द्वौ ॥ द्वौ ॥ द्विशब्दात् तृतीयाचतुर्थीपञ्चमीनां द्विवचने भ्यामि समागते **त्यदादीनाम** इत्यकारान्तादेशे **सुपि चे**ति सूत्रेणाजन्तस्याङ्गस्य दीर्घत्वे कृते ॥ द्वाभ्याम् ॥ द्वाभ्याम् ॥ द्वाभ्याम् ॥ द्विशब्दात्षष्ठीसप्तम्योर्द्विवचने ओसि समागते **त्यदादीनाम** इत्यकारान्तादेशे **ओसि चे**त्यजन्ताङ्गस्यैकारादेशे कृते **एचोऽयवायाव** इति अयादेशे संयोगे सस्य रुत्वे रस्य विसर्गत्वे च कृते ॥ द्वयोः ॥ द्वयोः ॥ पपी अग्रे औ समागते **प्रथमयोः पूर्वसवर्ण** इति पूर्वसवर्णदीर्घादेशे प्राप्ते **दीर्घाज्जसि चे**ति पूर्वसवर्णदीर्घाभावे **इको यणची**ति यणि कृते ॥ पप्यौ ॥ एवम् ॥ पप्यः ॥ पपीशब्दात् द्वितीयाबहुवचने शसि समागते **प्रथमयोः पूर्वसवर्ण** इति पूर्वसवर्णदीर्घादेशे कृते ॥ **तस्माच्छसो नः पुंसी**त्यनेन सकारस्य नकारे कृते ॥ पपीन् ॥ पपीशब्दात्सप्तम्येकवचने ङौ समागते **लशक्वतद्धिते** इति ङकारस्येत्संज्ञायां **तस्य लोप** इति ङकारस्य लोपे च कृते **अकः सवर्णे दीर्घ** इति दीर्घादेशे ॥ पपी ॥ पपीशब्दात्सप्तमीबहुवचने सुप्यागते **आदेशप्रत्यययो**रित्यनेन सकारस्य मूर्धन्यादेशे कृते ॥ पपीषु ॥ बहुश्रेयसीशब्दात्प्रथमैकवचने स्वागते सकारोत्तरवर्तिन उकारस्य लोपे **अपृक्त एकाल्प्रत्यय** इति सकारस्यापृक्तसंज्ञायां **हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं ह**लिति सस्य लोपे ॥ बहुश्रेयसी ॥ बहुश्रेयसी अग्रे संबोधनैकवचने स्वागते सकारोत्तरवर्तिन उकारस्य लोपे सकारस्य च **हल्ङ्याब्भ्य** इति लोपे **यू स्त्र्याख्यौ नदी** इत्यनेन नदीसंज्ञायामम्बार्थनद्योर्ह्रस्व इति ह्रस्वत्वे कृते ॥ हे बहुश्रेयसि ॥ बहुश्रेयसी अग्रे चतुर्थ्येकवचने ङे समागते **आण् नद्या** इति सूत्रेण आट् आतः स कुत्र स्यात् । **आद्यन्तौ टकिता**वित्यनेन टि-

[1] उपसर्जनत्वं च । अन्यपदार्थनिष्ठविशेष्यतानिरूपितप्रकारताप्रयोजकत्वम् ।

ङिताम् आडागमः ॥ **आटश्च** ।६।१।९०। आटोऽचि परे वृद्धिरेकादेशः ॥ बहुश्रेयस्यै बहुश्रेयस्याः बहुश्रेयसीनाम् ॥ **ङेराम्नद्याम्नीभ्यः** ।७।३।११६। नद्यन्तादाबन्तान्नीशब्दात्परस्य ङेराम् । बहुश्रेयस्याम् । शेषं पपीवत् । अङ्यन्तत्वान्न सुलोपः । अतिलक्ष्मीः । शेषं बहुश्रेयसीवत् । प्रधीः ॥ **अचि श्नुधातुभ्रुवां य्वोरियङुवङौ ।** ।६।४।७७। श्नुप्रत्ययान्तस्येवर्णोवर्णान्तस्य धातोर्भ्रू इत्यस्य चाङ्गस्येयङुवङौ स्तोऽजादौ प्रत्यये परे । इति प्राप्ते ॥ **एरनेकाचोऽसंयोगपूर्वस्य** ।६।४।८२। धात्ववयवसंयोगपूर्वो न भवति य इवर्णस्तदन्तो यो धातुस्तदन्तस्यानेकाचोऽङ्गस्य यण् स्यादजादौ प्रत्यये । प्रध्यौ प्रध्यः प्रध्यम् प्रध्यौ प्रध्यः प्रध्या । शेषं पपीवत् । एवं ग्रामणीः । ङौ तु ग्रामण्याम् । अनेकाचः किम् । नीः नियौ नियः । अमि शसि च परत्वादियङ् । नि-

---

त्वात् ङे इत्यस्याद्यवयवे आटि जाते बहुश्रेयसी—आट्—ङे इति जातं तत्र **लशक्वतद्धिते** इति ङस्य **हलन्त्यम्**िति टस्य चेत्संज्ञायां **तस्य लोप** इति तयोर्लोपे च कृते बहुश्रेयसी—आ—ए इति जातं तत्र **आटश्चे**ति सूत्रेण पूर्वपरयोः स्थाने वृद्धौ कृतायां कृते **इको यणची**ति यणि ॥ बहुश्रेयस्यै ॥ बहुश्रेयसीशब्दात् ङस्यागते **आण् नद्याः । आटश्च । इको यणचि । ससजुषो रुः । खरवसानयोर्विसर्जनीयः ।** इत्येभिः सूत्रैराटि वृद्धौ यणि सस्य रुत्वे रस्य च विसर्गे कृते ॥ बहुश्रेयस्याः ॥ एवं षष्ठ्येकवचनमपि ज्ञेयम् ॥ बहुश्रेयसी अग्रे षष्ठीबहुवचने आमि **ह्रस्वनद्यापो नुट्** इति नुटि उटो लोपे संयोगे च कृते ॥ बहुश्रेयसीनाम् ॥ बहुश्रेयसीशब्दात्सप्तम्येकवचने ङावागते **ङेराम्नद्याम्नीभ्य** इत्यनेन ङेरामादेशे **इको यणची**ति यणि च कृते ॥ बहुश्रेयस्याम् ॥ बहुश्रेयसी अग्रे सुप्यागते **आदेशप्रत्यययो**रित्यनेन सस्य मूर्धन्यादेशे ॥ बहुश्रेयसीषु ॥ अतिलक्ष्मीशब्दात्प्रथमैकवचने सौ समागते अतिलक्ष्मीशब्दस्य ङ्यन्तत्वाभावात् **हल्ङ्याब्भ्य** इति सूत्रेण सलोपाभावे **ससजुषो रुः । खरवसानयोर्विसर्जनीय** इत्येताभ्यां सूत्राभ्यां सस्य रुत्वे रस्य च विसर्गे कृते ॥ अतिलक्ष्मीः ॥ शेषं बहुश्रेयसीवत् ॥ प्रधीशब्दस्याङ्यन्तत्वात् **हल्ङ्याब्भ्य** इति सूत्रस्याप्रवृत्तेः **ससजुषो** रुरिति सस्य रुत्वे **खरवसानयो**रिति रस्य विसर्गे च कृते ॥ प्रधीः ॥ प्रधी अग्रे औ इत्यवस्थायां कस्य सूत्रस्य प्राप्तिः **अचि श्नुधातुभ्रुवां य्वोरियङुवङौ ।** अत्र श्नुप्रत्ययान्तमङ्गं वर्तते इवर्णान्तधात्वन्तमङ्गं वर्तते । उवर्णान्तधात्वन्तमङ्गं वर्तते किंवा भ्रूसंबन्धकाङ्गं वर्तते । वर्ततेऽत्र इवर्णान्तधात्वन्तमङ्गं तत इयङि प्राप्ते **एरनेकाचोऽसंयोगपूर्वस्ये**त्यनेन यण् स्यात्कथमिति चेदित्थम् । अत्र अधात्ववयवसंयोगपूर्वः कोऽस्तिवा । इवर्णः धकारोत्तरवर्ती योयमीवर्णः स त्वधात्ववयवसंयोगपूर्व एवास्ति तदन्तः को वात्र धातुः धीधातुस्तदन्त एवास्ति । तदन्तमनेकाच् किंवात्राङ्गं वर्तते वर्तते प्रधीरूपं तदन्तमनेकाजङ्गं ततस्तस्य अजादिप्रत्ययरूपे औकारे परे यणि जाते ॥ प्रध्यौ ॥ जसि ॥ प्रध्यः ॥ एवमेव

यम् । ङेराम् नियाम् । असंयोगपूर्वस्य किम् । सुश्रियौ यवक्रियौ ॥ **गतिश्च** ।१।४।६०। प्रादयः क्रियायोगे गतिसंज्ञाः स्युः । गतिकारकेतरपूर्वपदस्य यण् नेष्यते । शुद्धधियौ ॥ **न भूसुधियोः** ।६।४।८५। एतयोरचि सुपि यण्न । सुधियौ सुधिय इत्यादि । सुखमिच्छतीति सुखीः । सुतीः सुख्यौ सुत्यौ सुख्युः सुत्युः । शेषं प्रधीवत् । शंभुर्हरिवत् । एवं भान्वादयः ॥ **तृज्वत्क्रोष्टुः** ।७।१।९५। असंबुद्धौ सर्वनामस्थाने परे । क्रोष्टुशब्दस्य क्रोष्टृशब्दः प्रयोक्तव्य इत्यर्थः ॥ **ऋतो ङि सर्वनामस्थानयोः** ।७।३।११०। ऋतोऽङ्गस्य गुणो ङौ सर्वनामस्थाने च इति प्राप्ते ॥ **ऋदुशनस्पुरुदं**-

---

ग्रामणीशब्दोप्याषष्ठीबहुवचनं बोध्यः । सप्तम्यां तु ग्रामणी अग्रे ङौ **ङेराम्नद्याम्नीभ्य** इत्यामि यणि च ॥ ग्रामण्याम् ॥ नीशब्दात्सौ सस्य रुत्वे रस्य विसर्गे च कृते ॥ नीः ॥ नी औ इत्यत्र **अचि श्नुधातुभ्रुवां य्वोरियङुवङाविति** इयङि कृते ॥ नियौ ॥ नियः ॥ इत्यादि ज्ञेयमाषष्ठीबहुवचनम् । सप्तम्यां **ङेराम्नद्याम्नीभ्य** इत्येतत्सूत्रे नीग्रहणादत्रापि ङेरामि कृते कृते चेयङादेशे ॥ नियाम् ॥ **एरनेकाचोऽसंयोगपूर्वस्येति** सूत्रे असंयोगपूर्वस्येत्युक्तत्वात् सुश्रीशब्दान्तर्गतेवर्णस्य तु धात्ववयवसंयोगपूर्वत्वात् । **अचि श्नुधातुभ्रुवा**-मिति सूत्रेणैव सर्वत्राजादौ प्रत्यये परे इयङादेशं विधाय नीशब्दवद्रूपाणि विधेयान्याषष्ठीबहुवचनम् । सप्तम्येकवचने त्वङयन्तत्वात् **ङेराम्नद्याम्नीभ्य** इति सूत्रस्याप्राप्तौ ङकारस्येत्संज्ञालोपौ विधाय इयङि कृते ॥ सुश्रियि ॥ शुद्धधी अग्रे सौ सस्य रुत्वे रस्य विसर्गे च शुद्धधीः । शुद्धधी औ इत्यत्र **एरनेकाचोऽसंयोगपूर्वस्येति** सूत्रेण यणि प्राप्ते **गतिकारकेतरपूर्वपदस्य यण् नेष्यत** इत्यनेन शुद्धशब्दस्य गतित्वाभावात्कारकत्वाभावाच्च यणोऽप्राप्तौ । **अचि श्नुधातुभ्रुवा**मित्यनेन इयङि कृते ॥ शुद्धधियौ ॥ शुद्धधिय इत्यादि ॥ शेषाणि सुश्रीवद्रूपाणि । सुधी अग्रे औ इत्यत्र **गतिश्चे**ति गतिसंज्ञां विधाय **एरनेकाचोऽसंयोगपूर्वस्ये**ति यणि प्राप्ते **न भूसुधियो**रिति यणादेशाभावे । **अचि श्नुधातुभ्रुवा**मित्यनेनेयङि कृते ॥ सुधियौ ॥ सुधियः ॥ शेषं सुश्रीवत् ॥ सुखीशब्दात् सुतीशब्दाच्च प्रथमाद्विवचने औकारे समागते **एरनेकाचोऽसंयोगपूर्वस्ये**ति यणि ॥ सुख्यौ ॥ सुत्यौ ॥ सुखी ङस्–सुती ङस् इत्यत्र ङस्येत्संज्ञायां लोपे च कृते **एरनेकाचोऽसंयोगपूर्वस्ये**ति यणि च कृते **ख्यत्यात्परस्ये**ति ङसिसंबन्धिनो ङकारस्योकारे सस्य रुत्वे रस्य विसर्गे च ॥ सुख्युः ॥ सुत्युः ॥ सुखी ङि–सुती ङि इत्यत्र ङस्येत्संज्ञायां लोपे च **एरनेकाचोऽसंयोगपूर्वस्ये**ति यणि ॥ सुख्यि ॥ सुत्यि ॥ इति रूपं भवति । शंभुर्हरिवद्बोध्यः ॥ एवं भान्वादयोपि ज्ञेयाः । क्रोष्टुशब्दो वर्ततेऽग्रे सौ समागते **तृज्वत् क्रोष्टु**रित्यनेन सर्वनामस्थाने परे क्रोष्टुशब्दस्य तृजन्ततुल्यतायां कृतायां **ऋतो ङि सर्वनामस्थानयो**रित्यनेन सर्वनामस्थानपरत्वाद्गुणे प्राप्ते परत्वात् **ऋदुशनस्पुरुदंसोऽनेहसां** चेत्यनेन अनङि कृते क्रोष्टृ अनङ् सु इति जाते

१ शुद्धा धीर्यस्येति विग्रहाभिप्रायेणेदम् । शुद्ध ध्या ध्यायतीति विग्रहे तु यण् भवत्येवेत्याशयः ।

**सोऽनेहसां च ।७।१।९४।** ऋदन्तानामुशनसादीनां चानङ्स्यादसंबुद्धौ ॥ **अप्तृन्तृच्स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तॄणाम् ।६।४।११।** अबादीनामुपधाया दीर्घोऽसंबुद्धौ सर्वनामस्थाने । क्रोष्टा क्रोष्टारौ क्रोष्टारः क्रोष्टून् ॥ **विभाषा तृतीयादिष्वचि ।७।१।९७।** अजादिषु तृतीयादिषु क्रोष्टुर्वा तृज्वत् । क्रोष्ट्रा क्रोष्ट्रे ॥ **ऋत उत् ।६।१।१११।** ऋतो ङसिङसोरति उदेकादेशोरपरः ॥ **रात्सस्य ।८।**

तत्र ङकारस्य नकारान्तःपात्यकारस्य चेत्संज्ञायां लोपे च कृते क्रोष्ट् अन् स् इति जातं तत्र **हल्ङ्याब्भ्यो दीर्घा**दिति सुलोपे **अप्तृन्तृजि**त्यनेन संबुद्धिभिन्नसर्वनामस्थानपरत्वात् उपधाया दीर्घत्वे कृते क्रोष्टान् इति जातं तत्र **नलोपः प्रातिपदिकान्तस्ये**त्यनेन नस्य लोपे ॥ क्रोष्टा ॥ क्रोष्टु औ इत्यत्र **तृज्वत् क्रोष्टु**रित्यनेन तृजन्ततुल्यत्वे कृते **ऋतो ङिसर्वनामस्थानयो**रिति गुणे प्राप्ते **उरण्रपर** इत्यनेन रपरे अकारे जाते क्रोष्ट् अर् औ इति जातं तत्र **अप्तृन्तृजि**त्यनेनोपधाया दीर्घत्वे कृते कृते च संयोगे ॥ क्रोष्टारौ ॥ एवम् ॥ क्रोष्टारः ॥ क्रोष्टु अग्रे शसि समागते असर्वनामस्थानत्वात् शसस्तस्मिन् परे क्रोष्टुशब्दस्य तृज्वद्भावाभावात् **तस्माच्छसो नः पुंसी**त्यनेन सस्य नत्वे कृते **प्रथमयोः पूर्वसवर्ण** इति पूर्वसवर्णदीर्घादेशे कृते ॥ क्रोष्टून् ॥ क्रोष्टु अग्रे टा इत्यागते **चुटू** इत्यनेन टकारस्येत्संज्ञायां **तस्य लोप** इति लोपे **विभाषा तृतीयादिष्वचि** इत्यनेन तृज्वत्तायां कृतायां**मिको यणची**ति यणि कृते ॥ क्रोष्ट्रा ॥ यस्मिन् पक्षे तृज्वद्भावो न स्यात् तस्मिन्पक्षे **आङो ना स्त्रिया**मित्यनेन टा इत्यस्य नाकारादेशे कृते ॥ क्रोष्टुना ॥ क्रोष्टु ङे इत्यत्र **लशक्वतद्धित** इति ङस्येत्संज्ञायां **तस्य लोप** इति ङस्य लोपे **विभाषा तृतीयादिष्वची**ति तृज्वद्भावे **इको यणची**ति यणि च कृते ॥ क्रोष्ट्रे ॥ पक्षे **घेर्ङिती**ति गुणे कृते कृते च **एचोयवायाव** इति अवादेशे ॥ क्रोष्टवे ॥ क्रोष्टु अग्रे ङसि सकारोत्तरवर्तिन इकारस्येत्संज्ञायां लोपे च कृते **घेर्ङिती**ति गुणे कृते क्रोष्टो अस् इति जातं तत्र **ङसिङसोश्चे**ति पूर्वरूपादेशे सस्य रुत्वे रस्य विसर्गे च कृते ॥ क्रोष्टोः ॥ पक्षे **विभाषा तृतीयादिष्वची**ति तृजन्ततुल्यतायामु**पदेशेऽजनुनासिक इत्** इति सकारोत्तरवर्तिन इकारस्येत्संज्ञायां **तस्य लोप** इत्यनेनेकारस्य लोपे **लशक्वतद्धित** इति ङकारस्येत्संज्ञायां **तस्य लोप** इति ङस्य लोपे च कृते क्रोष्टृ अस् इति जातं तत्र **ऋत उत्** इत्यनेन अकारस्य रपरे उकारादेशे जाते क्रोष्टुर् स् इति जातं तत्र **रात्सस्ये**त्यनेन सस्य लोपे **खरवसानयोर्विसर्जनीय** इति रस्य विसर्गादेशे ॥ क्रोष्टुः ॥ एवं षष्ठ्येकवचनेपि ज्ञेयम् ॥ क्रोष्टु अग्रे ओस् इत्यत्र **इको यणची**ति यणि सस्य विसर्गे च कृते ॥ क्रोष्ट्रोः ॥ तृज्वद्भावपक्षे **इको यणची**ति यणि ॥ क्रोष्ट्रोः ॥ क्रोष्टु अग्रे आमि समागते **विभाषा-तृतीयादिष्वची**त्यनेन तृज्वद्भावे प्राप्ते **ह्रस्वनद्यापो नुट्** इत्यनेन नुटि च प्राप्ते **विप्रतिषेधे परं कार्य**मित्यनेन परत्वात्तृज्वद्भावे प्राप्ते । **नुमचिरतृज्वद्भावेभ्यो नुट्** इत्यनेन

२।२४। रेफात्संयोगान्तस्य सस्यैव लोपो नान्यस्य । रस्य विसर्गः । क्रोष्टुः क्रोष्टोः (नुमचिरतृज्वद्भावेभ्यो नुट् पूर्वविप्रतिषेधेन) क्रोष्टूनाम् क्रोष्टरि । पक्षे हलादौ च शंभुवत् । हूहूः हूह्वौ हूह्वः हूहूम् इत्यादि । अतिचमूशब्दे तु नदीकार्यं विशेषः । हे अतिचमु । अतिचम्वै अतिचम्वाः अतिचमूनाम् । खलपूः ॥ **ओः सुपि** ।६।४।८३। धात्ववयवसंयोगपूर्वो न भवति य उवर्णस्तदन्तो यो धातुस्तदन्तस्यानेकाचोऽङ्गस्य यण् स्यादचि सुपि । खलप्वौ खलप्वः । एवं सुल्वादयः । स्वभूः स्वभुवौ स्वभुवः । वर्षाभूः ॥ **वर्षाभ्वश्च** ।६।४।८४। अस्य यण् स्यादचि सुपि । वर्षाभ्वावित्यादि । दृन्भूः (दृन्क-

---

नुम्वेर कृते उटि गते नकारस्याकारेण सह संयोगे कृते **नामि** इत्यनेनाजन्ताङ्गस्य दीर्घादेशे कृते ॥ क्रोष्टूनाम् ॥ क्रोष्टु अग्रे ङि इत्यत्र **अच्च घेरि**त्यनेन ङेरौकारादेशे घेश्चाकारादेशे कृते **वृद्धिरेची**त्यनेन वृद्धौ च कृतायाम् ॥ क्रोष्टौ ॥ पक्षे **विभाषा तृतीयादिष्वची**त्यनेन तृजन्ततुल्यत्वे कृते **ऋतो ङिसर्वनामस्थानयो**रिति गुणशब्देनात्र अयो वर्णा प्राप्तास्तत्र **उरण् रपर** इत्यनेन रपरे अकारे जाते क्रोष्ट् अर् इ इति जाते तत्र संयोगे कृते ॥ क्रोष्टरि ॥ हूहू अग्रे प्रथमाद्विवचने औ इत्यागते **इको यणची**ति यणि ॥ हूह्वौ ॥ हूह्वः ॥ हूहूम् ॥ इत्यादि ॥ अतिचमूशब्दे तु नदीकार्ये विशेषस्तत्रचतुर्थ्येकवचने ङे इत्यागते **आण्नद्या** इत्यनेन आटि कृते **आटश्चे**त्यनेन वृद्धौ कृतायाम् ॥ अतिचम्वै ॥ अतिचमू अग्रे षष्ठीबहुवचने आम्यागते **ह्रस्वनद्यापो नुट्** इत्यनेन नुटि कृते ॥ अतिचमूनाम् ॥ हे पूर्वकातिचमूशब्दात् सम्बोधनैकवचने स्वागते । **अम्बार्थनद्योर्ह्रस्व** इत्यनेन ह्रस्वत्वे कृते ॥ हे अतिचमु ॥ खलपूशब्दात्प्रथमाद्विवचने औ इत्यागते **ओः सुपी**ति यणि कृते ॥ खलप्वौ ॥ स्वभू अग्रे औ इत्यत्र **न भूसुधियो**रित्यनेन यणादेशाभावे **अचि श्नुधातुभ्रुवां य्वोरियङुवङौ** इत्यनेन उवङि कृते कृते च संयोगे ॥ स्वभुवौ ॥ एवं सर्वत्र बोध्यम् ॥ वर्षाभू अग्रे औ आगते **न भूसुधियो**रित्यनेन यणादेशाभावे सिद्धेऽपि **वर्षाभ्वश्चे**त्यनेन यणि कृते कृते च संयोगे ॥ वर्षाभ्वौ ॥ वर्षाभ्वः इत्यादि । दृन्भू अग्रे औ इत्यत्र **दृन्करपुनःपूर्वस्य भुवो यण् वक्तव्य** इति वार्तिकेन यणि कृते ॥ दृन्भ्वौ ॥ करभ्वौ ॥ पुनर्भ्वौ ॥ इत्यादि ॥ धातृ अग्रे सौ समागते **ऋदुशनस्पुरुदंसोऽनेहसां चे**त्यनेन अनङि कृते **अप्तृन्तृच्** इत्यनेनोपधाया दीर्घे कृते **हल्ङ्याब्भ्य** इति सकारस्य लोपे **नलोपः प्रातिपदिकान्तस्ये**ति नकारस्य लोपे च ॥ धाता ॥ धातृ औ इत्यत्र **ऋतोऽङि सर्वनामस्थानयो**रिति गुणे धातर् औ इति जातम् । **अप्तृन्तृजि**त्यनेनोपधाया दीर्घत्वे कृते ॥ धातारौ ॥

---

[1] अत्र सम्बुद्धिं मत्वा जायमानो ह्रस्वः सन्निपातपरिभाषया सम्बुद्धिविघातको न स्यात् । सत्यम् । एङ्ह्रस्वात्सम्बुद्धेरित्यत्र गुणात्सम्बुद्धेरित्येव वक्तव्ये एङ्ह्रस्वग्रहणमेव ज्ञापयति सम्बुद्धौ तस्या अनुपस्थिति । एवं (हे बहुश्रेयसि हे वधु) इत्यादिषु तत्परिभाषाप्रवृत्तिर्बोध्या ॥

रपुनःपूर्वस्य भुवो यण् वक्तव्यः ) दृन्भ्वौ । एवं करभूः । धाता हे धातः धातारौ धातारः । (ऋवर्णान्नस्य णत्वं वाच्यम्) धातॄणाम् । एवं नप्त्रादयः । नप्त्रादिग्रहणं व्युत्पत्तिपक्षे नियमार्थम् । तेनेह न पिता पितरौ पितरः पितरम् । शेषं धातृवत् । एवं जामात्रादयः । ना नरौ ॥ **नृ च** ।६।४।६। अस्य नामि वा दीर्घः । नृणाम् नॄणाम् ॥ **गोतो णित्** ।७।१।९०। ओकाराद्विहितं सर्वनामस्थानं णिद्वत् । गौः गावौ गावः ॥ **औतोऽम्शसोः** ।६।१।९३। ओकारादम्शसोरचि आकार एकादेशः । गाम् गावौ गाः । गवा गवे गोः । इत्यादि ॥ **रायो हलि** ।७।२।८५। अस्याकारादेशो हलि विभक्तौ ।

---

धातार इत्यत्राप्ययमेव ज्ञेयम् ॥ धातृ अग्रे आम् इत्यत्र **ह्रस्वनद्यापो नुट्** इत्यनेन नुटि **नामि** इत्यनेन दीर्घादेशे कृते **ऋवर्णान्नस्य णत्वं वाच्यम्**इति नस्य णत्वे कृते ॥ धातॄणाम् ॥ हेपूर्वकधातृशब्दात्सौ समागते **ऋतो ङिसर्वनामस्थानयोः**रिति गुणे कृते धात् अर् स् इति जातं तत्र **हल्ङ्याब्भ्यो दीर्घा**दिति सस्य लोपे **खरवसानयोर्विसर्जनीय** इति विसर्जनीये ॥ हे धातः ॥ एवं नप्त्रादयः ॥ पितृ औ इत्यत्र **ऋतो-ङिसर्वनामस्थानयो**-रित्यनेन गुणे कृते । **अप्तृन्तृच्**इति सूत्रे प्रोक्तानामेव शब्दानामुपधाया दीर्घः स्यादित्युक्तत्वात् । अत्र दीर्घत्वाभावे ॥ पितरौ ॥ यद्यपि **अप्तृन्तृच्**इति सूत्रे तृन्तृजन्तानां ग्रहणे कृते **स्वसृनप्त्रि**त्यादीनामपि ग्रहणं जातमेव तथापि पुनस्तद्ग्रहणमेव सिद्धे सत्यारभ्यमाणो विधिर्नियमार्थ इति वचनात् तृन्तृजन्तानामुपधाया दीर्घः स्याच्चेन्नप्त्रादीनामेवेति निवेदयति । नृशब्दात्षष्ठीबहुवचने आमि **ह्रस्वनद्यापो नुट्** इति नुटि उटो लोपे संयोगे **नामीति** दीर्घे कृते **ऋवर्णान्नस्य णत्वं वाच्यमि**ति नस्य णत्वे ॥ नॄणाम् ॥ **नृचे**ति सूत्रेण पक्षे दीर्घाभावे ॥ नृणाम् ॥ गोशब्दात्सौ समागते **गोतो णित्** इत्यनेन सोर्णिद्वत्त्वे कृते **अचोञ्णिती**ति सूत्रेण वृद्धौ सस्य रुत्वे रस्य विसर्गे च कृते ॥ गौः ॥ गो अग्रे औ इत्यत्र **गोतो णित्** इति णिद्भावे **अचोञ्णिती**ति वृद्धौ **एचोयवायाव** इत्यनेन आवादेशे च कृते ॥ गावौ ॥एवम् ॥ गावः ॥ गोशब्दात् अमि समागते **औतोऽम्शसो**रित्यनेन गकारोत्तरवर्तिन ओकारस्याकारादेशे **अमि पूर्व** इति पूर्वरूपैकादेशे च ॥ गाम् ॥ गो अग्रे शस् इत्यत्र **लशक्वतद्धिते** इति शस्येत्संज्ञायां **तस्य लोप** इति लोपे **औतोम्शसो**-रिति पूर्वपरयोः स्थाने आकारादेशे सस्य रुत्वे रस्य विसर्गे च कृते ॥ गाः ॥ गो अग्रे टा इत्यत्र **चुटू** इत्यनेन टस्येत्संज्ञायां **तस्य लोप** इति लोपे **एचोयवायाव** इति अवादेशे च ॥ गवा ॥ गो अग्रे पञ्चम्येकवचने ङस्यागते ङस्येत्संज्ञायां लोपे च कृते गो अस् इति जातं तत्र **ङसिङसोश्चे**त्यनेन पूर्वरूपैकादेशे सस्य रुत्वे रस्य विसर्गे च ॥ गोः ॥ रैशब्दात्प्रथमैकवचने सौ समागते **रायो हली**त्यनेन रैशब्दस्य सर्वस्याप्याकारादेशे

---

१ अत्र गकारोऽविवक्षितस्तकारोच्चारणसामर्थ्यात् । अतएवाह ओकारान्तादिति ॥

राः रायौ रायः । राभ्यामित्यादि । ग्लौः ग्लावौ ग्लावः ग्लौभ्यामित्यादि ॥ इत्यजन्ताः पुंलिङ्गाः ॥

## ॥ अथाजन्तस्त्रीलिङ्गप्रकरणम् ॥

रमा ॥ **औङ आपः** ।७।१।१८। आबन्तादङ्गात्परस्यौङः शी स्यात् । औङित्यौकारविभक्तेः संज्ञा । रमे रमाः ॥ **संबुद्धौ च** ।७।३।१०६। आप एकारः स्यात्संबुद्धौ । एङ्ह्रस्वादिति संबुद्धिलोपः । हे रमे हे रमे हे रमाः । रमाम् रमे रमाः ॥ **आङि चापः** ।७।३।१०५। आङि ओसि चाप एकारः । रमया रमाभ्याम् रमाभिः ॥ **याडापः** ।७।३।११३। आपो ङितो याट् । वृद्धिः । रमायै रमाभ्यः रमाभ्यः । रमायाः रमयोः

---

प्राप्ते **अलोन्त्यस्ये**त्यनेनान्त्यस्यैकारस्याकारादेशे सस्य रुत्वे विसर्गे च कृते ॥ राः ॥ रै अग्रे औ इत्यत्र **एचोयवायाव** इत्यनेन आयादेशे कृते ॥ रायौ ॥ राय इत्याद्यप्यूह्यम् ॥

इति श्रीमत्सद्गुरुकेशवकृपाकल्पवल्लरीपल्लवायमानायां प्रयोगमणिमालायामजन्तपुंलिङ्गाः पूर्णाः ॥

बालामुपास्महे गौरीं बालाः स्तो जननीमिव ॥ स्वयं बालाप्यबालान् या बालान्निर्मोति विद्यया॥ १॥

नामं नामं गुरुवरौ श्रीकेशवमहेश्वरौ ॥ स्मारं स्मारं च वागीशां लिखाम्येतद्यथामति ॥ २ ॥

रमाशब्दो वर्तते **ङ्याप्प्रातिपदिका**दित्यनेन सर्वेपि स्वादयः प्राप्तास्तेषां मध्यादत्र प्रथमैकवचने सौ समागते **उपदेशेजनुनासिक इत्** इति सकारोत्तरवर्त्युकारस्येत्संज्ञायां **तस्य लोप** इति लोपे **हल्ङ्याब्भ्य** इत्यनेन सकारस्य लोपे च कृते ॥ रमा ॥ रमा अग्रे औ इत्यत्र **औङ आप** इत्यनेनौकारस्य शीकारादेशे कृते रमा शी इति जातं तत्र **लशक्वतद्धिते** इत्यनेन शस्येत्संज्ञायां **तस्य लोप** इति लोपे कृते रमा ई इत्यवशिष्टे तत **आद्गुण** इति गुणे ॥ रमे ॥ रमा जस् इत्यत्र **चुटू** इति जस्येत्संज्ञायां **तस्य लोप** इति लोपे **प्रथमयोः पूर्वसवर्ण** इति पूर्वसवर्णदीर्घादेशे सस्य रुत्वे रस्य विसर्गे च रमाः ॥ रमा अग्रे संबोधनैकवचने सौ समागते **संबुद्धौ चे**त्यनेनाबन्ताङ्गस्य एकारादेशे कृते **एङ्ह्रस्वात्संबुद्धे**रित्यनेन सस्य लोपे कृते ॥ रमे ॥ रमा अग्रे टा इत्यत्र **चुटू** इति टस्येत्संज्ञायां **तस्य लोप** इति लोपे रमा आ इति जाते **आङि चाप** इत्यनेनाबन्ताङ्गस्यैकारादेशे **एचोयवायाव** इति अयादेशे च कृते ॥ रमया ॥ रमा ङे ङकारस्येत्संज्ञायां लोपे च कृते रमा ए इति जातं तत्र **याडाप** इति याटि टस्येत्संज्ञायां लोपे **वृद्धिरेची**त्यनेन वृद्धौ च कृतायाम् ॥ रमायै ॥ रमा अग्रे ङस् इत्यत्र ङस्येत्संज्ञायां लोपे **याडाप** इति याटि टकारस्येत्संज्ञायां लोपे च कृते धृते च **अकः सवर्णे दीर्घ** इति दीर्घादेशे सस्य रुत्वे रस्य विसर्गे च ॥ रमायाः ॥ एवं पञ्चम्येकवचनमपि ज्ञेयम् ॥ रमा ओस् इत्यत्र **आङि चाप** इत्यनेन आबन्ताङ्गस्यैकारादेशे **एचोयवायाव** इति अयादेशे सकारस्य च रुत्वे रस्य विसर्गत्वे कृते ॥ रमयोः ॥ रमा आम् इत्यत्र **ह्रस्वनद्यापो नुट्** इति नुटि उटो लोपे संयोगे **अट्कुप्वाङ्नुम्व्यवायेपी**ति

रमाणाम् । रमायाम् रमासु । एवं दुर्गाम्बिकादयः ॥ **सर्वनाम्नः स्याड्ढ्रस्वश्च** ।७।३।११४। आबन्तात्सर्वनाम्नो ङितः स्याट् स्यादापश्च ह्रस्वः । सर्वस्यै सर्वस्याः सर्वासाम् सर्वस्याम् । शेषं रमावत् । एवं विश्वादय आबन्ताः ॥ **विभाषा दिक्समासे बहुव्रीहौ** ।१।१।२८। सर्वनामता वा । उत्तरपूर्वस्यै उत्तरपूर्वायै । (तीयस्य वा संज्ञा) द्वितीयस्यै द्वितीयायै । एवं तृतीया । अम्बार्थेति ह्रस्वः । हे अम्ब हे अक्क हे अल्ल ।

---

नस्य णत्वे च कृते ॥ रमाणाम् ॥ रमा ङि इत्यत्र **ङेराम्नद्याम्नीभ्य** इत्यनेन ङेरामि कृते रमा आम् इति जातं तत्र **याडापः** इति याटि विहिते विहिते **चाकः सवर्णे दीर्घ** इति दीर्घादेशे ॥ रमायाम् ॥ सर्वा ङे इत्यत्र ङकारस्येत्संज्ञायां लोपे च कृते **सर्वनाम्नः स्याड्ढ्रस्वश्चे**त्यनेन स्याटि आबन्तस्य ह्रस्वत्वे च कृते सर्व स्याट् ए इति जातं तत्र **वृद्धिरेची**त्यनेन वृद्धौ ॥ सर्वस्यै ॥ सर्वा आम् षष्ठीबहुवचने आमि समागते **आमि सर्वनाम्नः सुट्** इति सुटि उटि गते सकारस्याकारेण सह संयोगे च कृते ॥ सर्वासाम् ॥ सर्वा ङि इत्यत्र **ङेराम्नद्याम्नीभ्य** इति ङेरामि सर्वा आम् इति जातं तत्र **सर्वनाम्नः स्याड्ढ्रस्वश्चे**ति ङितः स्याटि विहिते विहिते चाबन्तस्य ह्रस्वत्वे सर्वस्या आम् इति जातं **तत्राकः सवर्णे दीर्घ** इति दीर्घादेशे ॥ सर्वस्याम् ॥ उत्तरपूर्वा ङे इत्यत्र **सर्वनाम्नः स्याड्ढ्रस्वश्चे**ति स्याटि आबन्तस्य ह्रस्वत्वे **वृद्धिरेची**ति वृद्धौ च ॥ उत्तरपूर्वस्यै ॥ यस्मिन् पक्षे उत्तरपूर्वाशब्दस्य **विभाषा दिक्समासे बहुव्रीहौ** इत्यनेन सर्वनामता न स्यात्तस्मिन् पक्षे **याडापः** इत्यनेन याटि **वृद्धिरेची**ति वृद्धौ च ॥ उत्तरपूर्वायै ॥ द्वितीया ङे इत्यत्र **तीयस्य ङित्सु** वेत्यनेन सर्वनामतावैकल्पे यस्मिन् पक्षे सर्वनामता जाता तस्मिन् पक्षे **सर्वनाम्नः स्याड्ढ्रस्वश्चे**ति स्याटि ह्रस्वत्वे च विहिते विहितायां च वृद्धौ ॥ द्वितीयस्यै ॥ सर्वनामत्वाभावे तु **याडापः** इति याटि वृद्धौ च विहितायाम् ॥ द्वितीयायै ॥ हे अम्बा सु इत्यत्र सकारोत्तरवर्त्युकारस्येत्संज्ञायां लोपे च कृते **अम्बार्थनद्योर्ह्रस्वः** इति ह्रस्वत्वे कृते ॥ **एङ्ह्रस्वात्संबुद्धे**रिति संबुद्धिलोपे ॥ हे अम्ब ॥ जरा औ इत्यत्र **जराया जरसन्यतरस्याम्** इति जरसि कृते ॥ जरसौ ॥ यस्मिन् पक्षे जरसादेशो न जातस्तस्मिन्पक्षे **औङ आपः** इति औकारस्य शीकारे शकारस्येत्संज्ञायां लोपे विहिते विहिते **चाद्गुणः** इति ॥ जरे ॥ मति शस् इत्यत्र शकारस्येत्संज्ञायां लोपे च कृते **प्रथमयोः पूर्वसवर्णः** इति पूर्वसवर्णदीर्घत्वे सस्य रुत्वे रस्य विसर्गत्वे च ॥ मतीः ॥ मति ङे इत्यत्र **शेषो घ्यसखि** इति सूत्रेण मतिशब्दस्य

---

१ अत्र केचित् वदन्ति । सर्वनाम्नोऽसुड्ड्चेत्येव सूत्र्यताम् । एवमन्तरङ्गत्वात्पूर्वं याटि तस्मिन् परे ङित्वादन्त्यादेशे असुडि सर्वस्या इत्यादि सिद्धम् । स्याट् करणे ह्रस्वविधाने च प्रयोजनं चिन्त्यम् । अत्रोच्यते । उक्तन्यासेऽमुष्यै इत्यादि न सिद्ध्येत् । असान्तत्वाभावेन मुत्वानापत्तेः । किञ्च आदेशरूपसकाराभावात् षत्वानापत्तेश्च । यदि चादेशप्रत्यययोरित्यत्रादेशावयवो गृह्यते चेत्तदा तिसृणामित्यत्रापि षत्वापत्तेः । तस्माद्यथोक्तमेव साधु ॥

जरा जरसौ जरे इत्यादि । पक्षे रमावत् । गोपा विश्वपावत् । मतीः मत्या ॥ **ङिति ह्रस्वश्च** ।१।४।६। इयङुवङ्स्थानौ स्त्रीशब्दभिन्नौ नित्यस्त्रीलिङ्गावीदूतौ ह्रस्वौ च इवर्णोवर्णौ स्त्रियां वा नदीसंज्ञौ स्तो ङिति । मत्यै मतये मत्याः २ मतेः ॥ **इदुद्भ्याम्** ।७।३।११७। नदीसंज्ञकाभ्यामिदुद्भ्यां परस्य ङेराम् । मत्याम् मतौ । शेषं हरिवत् । एवं बुद्ध्यादयः ॥ **त्रिचतुरोः स्त्रियां तिसृ चतसृ** ।७।२।९९। स्त्रीलिङ्गयोरेतौ स्तो विभक्तौ ॥ **अचि र ऋतः** ।७।२।१००। तिसृ चतसृ एतयोर्ऋकारस्य रेफादेशः स्यादचि । गुणदीर्घोत्वानामपवादः । तिस्रः तिस्रः तिसृभिः तिसृभ्यः तिसृभ्यः । आमि नुट् ॥ **न तिसृचतसृ** ।६।४।४। एतयोर्नामि दीर्घो न । तिसृणाम् तिसृषु । [2]द्वे द्वे द्वाभ्याम् द्वाभ्याम् द्वाभ्याम् द्वयोः द्वयोः । गौरी गौर्यौ गौर्यः । हे गौरि गौर्यै इत्यादि । एवं नद्यादयः ।

---

घिसंज्ञायां **घेर्ङिति**ति गुणे **एचोऽयवायावः** इति अयादेशे च कृते ॥ मतये ॥ **ङिति ह्रस्वश्चे**ति सूत्रेण यस्मिन् पक्षे मतिशब्दस्य नदीसंज्ञा जाता तस्मिन्पक्षे **आण्नद्याः** इत्यनेन आटि कृते **आटश्चे**ति वृद्धौ च कृतायाम् ॥ मत्यै ॥ मति ङि इत्यत्र **ङिति ह्रस्वश्चे**ति नदीसंज्ञायाम् **इदुद्भ्या**मित्यनेन ङेरामि विहिते विहिते च यणि ॥ मत्याम् ॥ नदीसंज्ञाभावे **शेषो घ्यसखि** इत्यनेन घिसंज्ञायाम् **अच्च घेः** इत्यनेन ङेरौकारे घेरकारादेशे वृद्धौ च कृतायाम् ॥ मतौ ॥ त्रि जस् इत्यत्र **त्रिचतुरोः स्त्रियां तिसृचतसृ** इत्यनेन तिसृ इत्यादेशे कृते तिसृ अस् इति जातम् तत्र **ऋतो ङिसर्वनामस्थानयोः** इत्यनेन प्राप्तं गुणं **प्रथमयोः पूर्वसवर्णः** इत्यनेन प्राप्तं पूर्वसवर्णदीर्घत्वं प्रियतिसृः समागतः प्रियतिसृः स्यामित्यत्र **ऋत उत्** इत्यनेन प्राप्तमुत्वं च निवार्य **अचि र ऋतः** इत्यनेन रेफादेशे कृते कृते च संयोगे सस्य रुत्वे रस्य विसर्गे च ॥ तिस्रः ॥ त्रि आम् आमि **त्रिचतुरोः स्त्रिया**मित्यनेन तिसृ इत्यादेशे कृते **ह्रस्वनद्यापो नुट्** इति नुटि उटि गते संयोगे कृते तिसृ नामिति जाते तत्र **नामि** इति दीर्घत्वे प्राप्ते **न तिसृचतसृ** इति दीर्घत्वाभावे ऋवर्णान्नस्य णत्वमित्यनेन णत्वे ॥ तिसृणाम् ॥ एवं चतुःशब्दोऽपि बोध्यः ॥ द्वि औ इत्यत्र **त्यदादीनामः** इत्यनेन अकारादेशे कृते कृते च टापि गते च **चुटू** इत्यनेन टकारेत्संज्ञाकरणपूर्वं **तस्य लोपः** इत्यनेन टकारे लोपे द्व आ औ इति जातं तत्र **अकः सवर्णे दीर्घः** इति दीर्घादेशे **औङः शी** इत्यनेन औकारस्य शीकारे शकारे गते कृते **चाद्गुणः** इत्यनेन गुणे ॥ द्वे ॥ गौरी सु इत्यत्र **हल्ङ्याब्भ्यो** इति सकारलोपे ॥ गौरी ॥ गौरी

---

1 अप्राप्तविभाषेयम् । ह्रस्वयोः प्राप्तावितरयोस्तु नेयङुवङ्स्थानाविति निषेधे प्राप्ते आरम्भः । २ विभक्तिं मत्वा जायमानं त्यदाद्यत्वं टापि कृते सन्निपातपरिभाषया तयोरव्यवहितपौर्वापर्यविघातकं स्यादिति । तथाच न भवत्येवात्र टाप् । कथं द्वे इति रूपम् । उच्यते त्यदादीनामिति सूत्रनिर्देशेन तदाद्यत्वविषये तत्परिभाषाऽनित्यत्वबोधनात् ॥

लक्ष्मीः । शेषं गौरीवत् । एवं तरीतन्त्र्यादयः । स्त्री हे स्त्रि ॥ **स्त्रियाः** ।६।४।७९। अस्येयङ् स्यादजादौ प्रत्यये परे । स्त्रियौ स्त्रियः ॥ **वाम्शसोः** ।६।४।८०। अमि शसि च स्त्रिया इयङ् वा स्यात् । स्त्रियम्, स्त्रीम् स्त्रियः स्त्रीः स्त्रिया स्त्रियै स्त्रियाः । परत्वान्नुट् स्त्रीणाम् स्त्रीषु । श्रीः श्रियौ श्रियः ॥ **नेयङुवङ्स्थानावस्त्री** ।१।४।४।

---

औ इत्यत्र **प्रथमयोः पूर्वसवर्ण** इति पूर्वसवर्णदीर्घे प्राप्ते **दीर्घाज्जसि च**त्यनेन पूर्वसवर्णदीर्घाभावे **इको यणची**ति यणि कृते **अचोरहाभ्यां द्वे** इति यद्वित्वे ॥ गौर्य्यौ ॥ गौरी ङे इत्यत्र **यूस्त्र्याख्यौ नदी** इति नदीसंज्ञायां कृतायां **आण्नद्याः** इति आटि **आटश्चे**ति वृद्धौ कृतायां कृते च **इको यणची**ति यणि ॥ गौर्य्यै ॥ गौरी ङि इत्यत्र **ङेराम्नद्याम्नीभ्यः** इति सूत्रेण ङेरामि **इको यणची**ति यणि ॥ गौर्य्याम् ॥ हे गौरी सु इत्यत्र **अम्बार्थनद्योर्ह्रस्वः** इति ह्रस्वत्वे ॥ हे गौरि ॥ लक्ष्मी अग्रे सु इत्यत्र अङ्यन्तत्वात् **हल्ङ्याब्भ्यो दीर्घा**दिति सकारलोपाभावे सस्य रुत्वे रस्य विसर्गत्वे ॥ लक्ष्मीः ॥ शेषं गौरीवत् ॥ स्त्री अग्रे सु इत्यत्र **हल्ङ्याब्भ्यो दीर्घा**दिति सुलोपे ॥ स्त्री ॥ स्त्री औ इत्यत्र **स्त्रियाः** इत्यनेन इयङि कृते ॥ स्त्रियौ ॥ स्त्री अग्रे अमि समागते **अमि पूर्वः** इति पूर्वरूपैकादेशे कृते ॥ स्त्रीम् ॥ पक्षे **वाम्शसो**रित्यनेन इयङि कृते । स्त्रियम् ॥ स्त्रीशब्दात् द्वितीयाबहुवचने शसि शकारलोपे **प्रथमयोः पूर्वसवर्ण** इति पूर्वसवर्णदीर्घत्वे सस्य रुत्वे रस्य विसर्गे च ॥ स्त्रीः ॥ स्त्री ङे इत्यत्र **आण्नद्याः** इति आटि **आटश्चे**त्यनेन वृद्धौ **स्त्रियाः** इत्यनेन इयङि च कृते ॥ स्त्रियै ॥ हेपूर्वकस्त्रीशब्दात्संबोधनैकवचने सौ समागते **यूस्त्र्याख्यौ नदी** इति नदीसंज्ञायाम**म्बार्थनद्योर्ह्रस्वः** इत्यनेन ह्रस्वत्वे ॥ हे स्त्रि ॥ श्रीशब्दात् सौ समागते अङ्यन्तत्वात्सुलोपाभावे **ससजुषो रुः**रिति सस्य रुत्वे **खरवसानयो**रिति रस्य विसर्गे च कृते ॥ श्रीः ॥ श्री औ इत्यत्र **अचि श्नुधातुभ्रुवां य्वोरियङुवङौ** इत्यनेनेयङि कृते ॥ श्रियौ ॥ एवं श्रियः॥ संबुद्धौ **नेयङुवङ्स्थानावस्त्री** इत्यनेन नदीसंज्ञानिषेधा**दम्बार्थनद्योर्ह्रस्वः** इति ह्रस्वाभावे । हे श्रीः श्रियौ श्रियः। श्री ङे इत्यत्र **आण्नद्याः** इति सूत्रेणाटि **आटश्चे**ति वृद्धौ **अचि श्नुधातुभ्रुवां य्वो**रित्यनेनेयङि च कृते ॥ श्रियै ॥ पक्षे **ङिति ह्रस्वश्चे**ति नदीसंज्ञाविरहे **अचि श्नुधातुभ्रुवा**मिति इयङि ॥ श्रिये ॥ श्री अग्रे आम् इत्यत्र **वामि** इत्यनेन नदीसंज्ञाभावे **अचि श्नुधातुभ्रुवा**मिति इयङि कृते ॥ श्रियाम् ॥ नदीसंज्ञायां तु **ह्रस्वनद्यापो नुट्** इति नुटि उटि गते **अट्कुप्वाङ्नुम्व्यवायेऽपी**ति नस्य णत्वे च ॥ श्रीणाम् ॥ श्री ङि इत्यत्र **ङिति ह्रस्वश्चे**ति नदीसंज्ञायां **ङेराम्नद्याम्नीभ्यः** इति ङेरामि **अचि श्नुधातुभ्रुवा**मिति इयङि ॥ श्रियाम् ॥ यस्मिन् पक्षे **ङिति ह्रस्वश्चे**ति सूत्रे वाग्रहणान्नदीसंज्ञा न जाता तस्मिन् पक्षे ङस्येत्संज्ञायां लोपे **अचि श्नुधातुभ्रुवा**मिति इयङि ॥ श्रियि ॥ श्री ओस् इत्यत्र इयङं विधाय सस्य रुत्वे रस्य विसर्गे च

इयङुवङोः स्थितिर्ययोस्तावीदूतौ नदीसंज्ञौ न स्तः स्त्रीभिन्नौ । हे श्रीः श्रियै श्रिये श्रियाः श्रियः ॥ **वामि** ।१।४।५। इयङुवङ्स्थानौ स्त्र्याख्यौ यू आमि वा नदीसंज्ञौ स्तः स्त्रीभिन्नौ । श्रीणाम् श्रियाम् । श्रियि श्रियाम् । धेनुर्मतिवत् ॥ **स्त्रियां च** ।७।१।९६। स्त्रीवाची क्रोष्टुशब्दस्तृजन्तवद्रूपं लभते ॥ **ऋन्नेभ्यो ङीप्** ।४।१।५। ऋदन्तेभ्यो नान्तेभ्यश्च स्त्रियां ङीप् । क्रोष्ट्री गौरीवत् । भ्रूः श्रीवत् । स्वयंभूः पुंवत् ॥ **न षट्स्वस्रा-**

---

कृते ॥ श्रियोः ॥ श्री सु इत्यत्र **आदेशप्रत्यययो**रिति सस्य षत्वे ॥ श्रीषु ॥ धेनु सु इत्यत्र सस्य रुत्वे रस्य विसर्गे ॥ धेनुः ॥ धेनु औ इत्यत्र **प्रथमयोः पूर्वसवर्ण** इति पूर्वसवर्णदीर्घादेशे ॥ धेनू ॥ धेनु जस् इत्यत्र जस्येत्संज्ञायां लोपे च **जसि चे**ति गुणे **एचोऽयवायाव** इति अवादेशे सस्य रुत्वे रस्य विसर्गे ॥ धेनवः ॥ धेनु अम् इत्यत्र **अमि पूर्व** इति पूर्वरूपैकादेशे ॥ धेनुम् ॥ धेनु शस् इत्यत्र शकारस्येत्संज्ञायां लोपे च कृते **प्रथमयोः पूर्वसवर्ण** इति पूर्वसवर्णदीर्घादेशे कृते सस्य रुत्वे रस्य विसर्गे च ॥ धेनूः ॥ धेनु ङे इत्यत्र **घेर्ङिती**ति गुणे अवादेशे च धेनवे ॥ **ङिति ह्रस्वश्चे**ति पक्षे नदीत्वे **आण् नद्या** इति आटि **आटश्चे**ति वृद्धौ **इको यणची**ति यणि च ॥ धेन्वै ॥ धेनु ङस् इत्यत्र **घेर्ङिती**ति गुणे **ङसिङसोश्चे**ति पूर्वसवर्णे सस्य रुत्वे रस्य विसर्गे च ॥ धेनोः ॥ **ङिति ह्रस्वश्चे**ति पक्षे नदीत्वे **आण्नद्या** इति आटि **अकः सवर्णे दीर्घ** इति दीर्घे **इको यणची**ति यणि सस्य रुत्वे रस्य विसर्गे च धेन्वाः ॥ धेनु ङि इत्यत्र **अच्च घेरि**ति ङेरौकारादेशे घेरकारादेशे वृद्धौ च ॥ धेनौ ॥ **ङिति ह्रस्वश्चे**ति पक्षे नदीत्वे **इदुद्भ्याम्**इत्यनेन ङेरामि **आण्नद्या** इत्यनेन आटि कृते दीर्घे **इको यणची**ति यणि च कृते ॥ धेन्वाम् ॥ हे धेनु सु इत्यत्र **ह्रस्वस्य गुण** इत्यनेन गुणे **एङ्ह्रस्वात्संबुद्धे**रिति सस्य लोपे ॥ हे धेनो ॥ क्रोष्टुशब्दो वर्तते तत्र **स्त्रियां चे**त्यनेन तृजन्तवत्त्वे कृते **ऋन्नेभ्यो ङीप्** इत्यनेन ङीपि च कृते क्रोष्टृ ङीप् इति जातं तत्र ङकारपकारयोरित्संज्ञां लोपं च विधाय **इको यणची**ति यणि कृते क्रोष्ट्री शब्दो जातस्तत्र स्वावागते **हल्ङ्याब्भ्यो दीर्घा**दिति सलोपे ॥ क्रोष्ट्री ॥ शेषं गौरीवत् ज्ञेयम् ॥ भ्रू सु इत्यत्र सस्य रुत्वे रस्य विसर्गे च ॥ भ्रूः ॥ भ्रू औ इत्यत्र **अचि श्नुधातुभ्रुवा**मिति उवङि कृते ॥ भ्रुवौ ॥ भ्रू ङे इत्यत्र **ङिति ह्रस्वश्चे**ति नदीत्वे **आण्नद्या** इति आटि **आटश्चे**ति वृद्धौ **अचि श्नुधातुभ्रुवा**मिति उवङि च विहिते ॥ भ्रुवै ॥ नदीत्वविरहे ङकारेत्संज्ञां विधाय उवङि कृते ॥ भ्रुवे ॥ भ्रू ङि इत्यत्र **ङेराम्नद्याम्नीभ्य** इति ङेरामि उवङि च कृते ॥ भ्रुवाम् ॥ **ङिति ह्रस्वश्चे**ति सूत्रे वाग्रहणान्नदीत्वविरहे ङकारलोपं विधाय उवङि कृते ॥ भ्रुवि ॥ स्वयंभूशब्दः स्वभूतुल्यो बोध्यः । स्वसृ सु इत्यत्र **ऋन्नेभ्यो ङीप्** इत्यनेन ङीपि प्राप्ते **न षट्स्वस्रादिभ्य** इत्यनेन ङीबभावे । ऋदुश-

---

१ अस्मिन् गणे तिसृचतसृशब्दयोः पाठो न कर्तव्यः । सन्निपातपरिभाषयैव ङीब्निरसिष्यति ॥

**दिभ्यः** ।४।१।१०। ङीप्टापौ न स्तः । स्वसा तिस्रश्चतस्रश्च ननान्दा दुहिता तथा ॥ याता मातेति सप्तैते स्वस्रादय उदाहृताः ॥ स्वसा स्वसारौ । माता पितृवत् । शसि मातृः । द्यौर्गोवत् । राः पुंवत् । नौर्ग्लौवत् ॥ इत्यजन्ताः स्त्रीलिङ्गाः ॥

## अथाजन्तनपुंसकलिङ्गप्रकरणम् ।

**अतोऽम्** ।७।१।२४। अतोऽङ्गात् क्लीबात्स्वमोरम् । अमि पूर्वः । ज्ञानम् । एङ्ह्रस्वादिति हल्लोपः । हे ज्ञान ॥ **नपुंसकाच्च** ।७।१।१९। क्लीबादौङः शी स्यात् । भसंज्ञायाम् ॥ **यस्येति च** ।६।४।१४८। ईकारे तद्धिते च परे भस्येवर्णावर्णयोर्लोपः । इत्यलोपे प्राप्ते । (औङः श्यां प्रतिषेधो वाच्यः) ज्ञाने ॥ **जश्शसोः शिः** ।७।१।२०। क्ली-

---

**नस्पुरुदंसोनेहसां** चेत्यनेन अनङि कृते स्वस् अनङ् सु इति जातं तत्र **अप्तृन्तृजि**त्यनेनोपधाया दीर्घे **हल्ङ्याब्भ्य** इति सुलोपे **न लोपः प्रातिपदिकान्तस्ये**ति नलोपे च ॥ स्वसा ॥ स्वसृ औ इत्यत्र **ऋतो ङि सर्वनामस्थानयो**रिति गुणे **अप्तृन्तृजि**ति उपधाया दीर्घे ॥ स्वसारौ ॥ स्वसृ शस् इत्यत्र शकारस्येत्संज्ञायां लोपे च कृते **प्रथमोः पूर्वसवर्ण** इति पूर्वसवर्णदीर्घादेशे सस्य रुत्वे रस्य विसर्गे च ॥ स्वसॄः ॥ स्वसृ ङस् इत्यत्र **ऋत उत्** इत्यनेन सकारोत्तरवर्तिन ऋकारस्य असित्यकारस्य च स्थाने **उरण् रपर** इत्यनेन रपरे उकारे जाते स्वस् उर् स् इति जातं तत्र **रात्सस्ये**ति सलोपे रस्य विसर्गे सस्योकारेण सह संयोगे च कृते ॥ स्वसुः ॥ स्वसृ ङि इत्यत्र **ऋतो ङिसर्वनामस्थानयो**रिति गुणे ॥ स्वसरि ॥ हे स्वसृ सु इत्यत्र **ह्रस्वस्य गुण** इति गुणे **रात्सस्ये**ति सकारलोपे **खरवसानयो**रिति रकारस्य विसर्गे च ॥ हे स्वसः ॥ मातृशब्दस्य रूपाणि पितृतुल्यानि ज्ञेयानि ॥ केवलं शसि । मातॄः ॥ इति स्यात् ॥ द्यो सु इत्यत्र **गोतो णित्** इत्यनेन सकारस्य णिद्वत्त्वं विधाय **अचो ञ्णिति** इति वृद्धौ सस्य रुत्वे रस्य विसर्गे च ॥ द्यौः ॥ द्यो शस् इत्यत्र **औतोम्शसो**रित्यनेन पूर्वपरयोः स्थाने आकारादेशे कृते सस्य विसर्गादेशे च ॥ द्याः ॥ रैशब्दस्य पुंलिङ्गस्थरैशब्दसदृशानि रूपाणि नौशब्दस्य च ग्लौशब्दतुल्यानि रूपाणि ज्ञेयानि ॥ इति श्रीमत्सद्गुरुकेशवकृपाकल्पवल्लीपल्लवायमानायां प्रयोगमणिमालायामजन्तस्त्रीलिङ्गाः पूर्णाः ॥

महेशकेशवाङ्घ्रयब्जनखचिन्तामणीन्नुमः । कवेर्गुरोर्बुधस्यापि पदं यच्छन्ति येऽर्चिताः ॥ १ ॥

ज्ञानशब्दात्प्रथमैकवचने सौ **अतोम्** इत्यनेन अमि कृते **अमि पूर्व** इत्यनेन पूर्वरूपैकादेशे च ॥ ज्ञानम् ॥ ज्ञान औ इत्यत्र **नपुंसकाच्चे**त्यनेन औकारस्य शीकारे शकारस्येत्संज्ञायां लोपे च ज्ञान ई इति जातं तत्र **यचि भ**मित्यनेन भसंज्ञायां **यस्येति चे**त्यनेन नकारोत्तरवर्त्यकारस्य लोपे प्राप्ते **औङः श्यां प्रतिषेधो वाच्य** इत्यकारलोपाभावे **आद्गुण** इति गुणे ॥ ज्ञाने ॥ ज्ञान जस् इत्यत्र **जश्शसोः शि**रिति सूत्रेण **अनेकाल्शित्सर्वस्ये**ति सर्वस्य जसः शिकारा-

रीणि । नलुमतेत्यस्यानित्यत्वा[1]त्पक्षे संबुद्धिनिमित्तो गुणः । हे वारि हे वारे । घेर्ङितीति गुणे प्राप्ते (वृद्ध्यौत्वतृज्वद्भावगुणेभ्यो नुम् पूर्वविप्रतिषेधेन ) वारिणे । वारिणः वारिणः वारिणोः । नुमचिरेति नुट् । वारीणाम् वारिणि । हलादौ हरिवत् ॥ **अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः** ।७।१।७५। एषामनङ् स्यात् टादावचि ॥ **अल्लोपोऽनः** ।६।४।१३४। अङ्गावयवोऽसर्वनामस्थानयजादिस्वादिपरो योऽन् तस्याकारस्य लोपः । दध्ना दध्ने दध्नः दध्नः दध्नोः ॥ **विभाषा ङिश्योः** ।६।४।१३६। अङ्गावयवोऽसर्वनामस्थानयजादिस्वादिपरो योऽन् तस्याकारस्य लोपो वा स्यात् ङिश्योः परयोः । दध्नि दधनि । शेषं वा-

---

कृते कृते च संयोगे ॥ वारिणी ॥ वारि जस् इत्यत्र **जश्शसोः शि**रित्यनेन जसः शित्वे **शि सर्वनामस्थान**मिति शिकारस्य सर्वनामस्थानत्वे **लशक्वतद्धिते** इति शकारस्येत्संज्ञायां **तस्य लोप** इति शस्य लोपे **इकोऽचि विभक्तौ** इति नुमि उमि गते **सर्वनामस्थाने चासंबुद्धौ** इति नान्तोपधाया दीर्घत्वे **अट्कुप्वाङ्नुम्व्यवायेपी**ति नस्य णत्वे णस्य इकारेण सह संयोगे कृते ॥ वारीणि ॥ वारि टा इत्यत्र **चुटू** इति टस्येत्संज्ञायां **तस्य लोप** इति लोपे **इकोऽचि विभक्तौ** इति नुमि उमि गते **अट्कुप्वाङ्नुम्व्यवायेपी**ति नस्य णत्वे संयोगे च ॥ वारिणा ॥ वारि ङे इत्यत्र ङकारस्येत्संज्ञायां लोपे च वारि ए इति जातं तत्र **घेर्ङिती**त्यनेन गुणः प्राप्तः **इकोऽचि विभक्ता**वित्यनेन नुम् च प्राप्तस्तयोर्मध्ये केन भाव्यमित्याशङ्कायां परत्वाद्गुणे प्राप्ते **वृद्ध्यौत्वतृज्वद्भावगुणेभ्यो नुम् पूर्वविप्रतिषेधेने**ति अतिसखिनी इत्यत्र **सख्युरसंबुद्धौ** इत्यनेन ईकारस्य णिद्वद्भावत्वा**दचो ञ्णिती**ति सूत्रेण प्राप्तां वृद्धिं वारिणीत्यत्र **अच्च घे**रित्यनेन प्राप्ते ङेरौत्वं प्रियक्रोष्टुनी इत्यत्र **तृज्वत्क्रोष्टु**रित्यनेन प्राप्तं तृज्वद्भावं वारिणे इत्यत्र **घेर्ङिती**त्यनेन प्राप्तं च गुणं बाधित्वा **पूर्वविप्रतिषेधेन** नुमेव भाव्यम्, जाते च नुमि गते च उमि वारिन् ए इति जातं तत्र नस्य णत्वे संयोगे च ॥ वारिणे ॥ हे वारि सु इत्यत्र **स्वमोर्नपुंसका**दित्यनेन सोर्लोपे ॥ हे वारि ॥ **न लुमते**त्यस्यानित्वात्पक्षे **ह्रस्वस्य गुण** इति गुणे ॥ हे वारे ॥ शेषं हरिवत् ॥ दधि टा इत्यत्र **अस्थिदधिसक्थ्यक्ष्णामनङुदात्त** इत्यनेनानङादेशे कृते दध् अनङ् आ इति जाते नकारोत्तरवर्त्यकारस्य ङकारस्य चेत्संज्ञायां लोपे च कृते **अल्लोपोऽन** इत्यनेनाकारलोपे विहिते त्रिहिते च संयोगे ॥ दध्ना ॥ दधि ङि इत्यत्र **अस्थिदधी**ति सूत्रेणानङि कृते **विभाषा ङिश्यो**रित्यनेन अन्संबन्धिनोऽकारस्य लोपे ॥ दध्नि ॥ लोपाभावे च ॥ दधनि ॥ एवमेव अस्थि–सक्थि–अक्षि–शब्दानां रूपाणि बोध्यानि ॥

---

१ अनित्यत्वे च इकोऽचिविभक्ताविति सूत्रेऽचिग्रहणमेव । भ्यामादिषु सत्यपि नुमि तल्लोपसंभवात् । नन्वचिग्रहणाभावे संबुद्धौ नुमापत्तिस्तत्र न ङिसंबुद्ध्योरिति नलोपनिषेध इति चेन्न । संबुद्धिपरत्वाभावात् । प्रत्ययलक्षणं तु नलुमतेति निषेधस्यानित्यतां विना दुर्लभम् ।

रिवत् । एवमस्थिसक्थ्यक्षि । सुधि सुधिनी सुधीनि । हे सुधे, हे सुधि सुधिनेत्यादि । मधु मधुनी मधूनि । हे मधो, हे मधु । सुलु सुलुनी सुलूनि सुलुनेत्यादि । धातृ धातृणी धातॄणि धातॄणाम् हे धातः । एवं ज्ञात्रादयः ॥ **एच इग्घ्रस्वादेशे** ।१।१।४८। आदिश्यमानेषु ह्रस्वेषु मध्ये एच इगेव स्यात् । प्रद्यु प्रद्युनी प्रद्यूनि प्रद्युनेत्यादि । प्ररि प्ररिणी प्ररीणि प्ररिणा । एकदेशविकृतमनन्यवत् । प्रराभ्याम् प्ररीणाम् । सुनु सुनुनी सुनूनि सुनुनेत्यादि ॥ इत्यजन्ता नपुंसकलिङ्गाः ॥

---

सुधी सु इत्यत्र **ह्रस्वो नपुंसके प्रातिपदिकस्ये**ति ह्रस्वत्वे **स्वमोर्नपुंसका**दिति सोर्लोपे ॥ सुधि ॥ सुधी औ इत्यत्र **ह्रस्वो नपुंसके प्रातिपदकस्ये**ति ह्रस्वत्वे **नपुंसकाच्चे**ति औकारस्येकारत्वे **इकोचि विभक्ता**विति नुमि च कृते ॥ सुधिनी ॥ सुधी जस् इत्यत्र **ह्रस्वो नपुंसके प्रातिपदिकस्ये**ति ह्रस्वत्वे **जश्शसोः शि**रिति जसः शित्वे **शि सर्वनामस्थान**मिति शेः सर्वनामस्थानत्वे शकारलोप **इकोचि विभक्ता**विति नुमि उमि गते **सर्वनामस्थाने चासंबुद्धा**विति नान्तोपधाया दीर्घत्वे संयोगे च ॥ सुधीनि ॥ मधु सु इत्यत्र **स्वमोर्नपुंसका**दित्यनेन सोर्लोपे ॥ मधु ॥ मधु औ इत्यत्र **नपुंसकाच्चे**ति औकारस्य शीकारे **इकोचि विभक्ता**विति नुमि उमि गते संयोगे च ॥ मधुनी ॥ मधु जस् इत्यत्र **जश्शसोः शि**रिति जसः शित्वे **शि सर्वनामस्थान**मिति शिकारस्य सर्वनामस्थानत्वे **इकोचि विभक्ता**विति नुमि उमि गते **सर्वनामस्थाने चासंबुद्धा**विति नान्तस्योपधाया दीर्घत्वे संयोगे ॥ मधूनि ॥ धातृ सु इत्यत्र **स्वमोर्नपुंसका**दिति सोर्लोपे ॥ धातृ ॥ धातृ औ इत्यत्र **नपुंसकाच्चे**ति औकारस्य शीकारे **इकोचि विभक्ता**विति नुमि उमि गते **अट्कुप्वाङ्नुम्व्यवायेपी**ति नस्य णत्वे संयोगे च ॥ धातृणी ॥ धातृ जस् इत्यत्र **जश्शसोः शि**रित्यनेन जसः शित्वे **शि सर्वनामस्थान**मिति सर्वनामस्थानत्वे **इकोचि विभक्ता**विति नुमि उमि गते **सर्वनामस्थाने चासंबुद्धा**वित्युपधादीर्घत्वे नस्य णत्वे संयोगे च ॥ धातॄणि ॥ एवं ज्ञातृशब्दस्यापि रूपाणि ज्ञेयानि॥ प्रद्यो सु इत्यत्र **एच इग्घ्रस्वादेशे** इत्यनेन एज्रूपस्योकारस्य उकारे **स्वमोर्नपुंसका**दिति सोर्लोपे ॥ प्रद्यु ॥ शेषं मधुवत् ॥ प्रै सु इत्यत्र **एच इग्घ्रस्वादेशे** इति इकि कृते **स्वमोर्नपुंसका**दिति सोर्लोपे । प्ररि ॥ शेषं वारिवत् ॥ अजादौ विभक्तौ । हलादौ तु एकदेशविकृतमनन्यवदिति यथा छिन्नपुच्छे शुनि पुच्छत्वाभ्यवहाराभावः परं श्वत्वव्यवहारस्तु नित्य एव तथैव प्रैशब्दस्य इग्रूपेण विकृतत्वेपि **रायो हली**त्यनेन आकारादेशे ॥ प्रराभ्याम् प्रराभिः ॥ इति भवति ॥ एवं सुनौ सु इत्यत्र **एच इग्घ्रस्वादेशे** इत्येव इकृत्वे **स्वमोर्नपुंसका**दिति सोर्लोपे च ॥ सुनु ॥ शेषं मधुवत् ॥ इति श्रीमत्सद्गुरुश्रीकेशवगुरुकृपापात्रवल्लरी पल्लव्यमानायां प्रयोगमणिमालायामजन्तनपुंसकलिङ्गाः पूर्णाः ॥

## अथ हलन्तपुल्लिङ्गप्रकरणम्

**हो ढः** ।८।२।३१। हस्य ढः स्याज्झलि पदान्ते च । लिट् लिड् लिहौ लिहः । लिड्भ्याम् लिट्सु लिट्त्सु ॥ **दादेर्धातोर्घः** ।८।२।३२। उपदेशे दादेर्धातोर्हस्य घः झलि पदान्ते च ॥ **एकाचो बशो भष् झषन्तस्य स्ध्वोः** ।८।२।३७। धात्ववयवस्यैकाचो झषन्तस्य बशो भष् से ध्वे पदान्ते च । धुक् धुग् दुहौ दुहः धुग्भ्याम् धुक्षु ॥ **वा द्रुहमुहष्णुहष्णिहाम्** ।८।२।३३। एषां हस्य वा घो झलि पदान्ते च । ध्रुक् ध्रुग् ध्रुट् ध्रुड् द्रुहौ द्रुहः ध्रुग्भ्याम् ध्रुड्भ्याम् ध्रुक्षु ध्रुट्सु ध्रुट्त्सु । एवं मुह् ॥ **धात्वादेः षः**

---

नमः श्रीगुरुवर्येभ्यस्तेभ्यो येभ्यः कृताञ्जलिः । अत्यल्पज्ञोपि सर्वज्ञप्रज्ञानामग्रणीर्भवेत् ॥ १ ॥

लिह्शब्दो वर्ततेऽग्रे प्रथमाया एकवचने सौ समागते **होढ** इत्यनेन हस्य ढत्वे **हल्ङ्याब्भ्यो दीर्घा**दिति सुलोपे **झलां जशोन्ते** इति ढस्य डत्वे **वावसाने** इति डस्य टत्वे च कृते ॥ लिट् ॥ **वावसाने** इत्यस्याप्राप्तौ ॥ लिड् ॥ लिह् अग्रे भ्यामि समागते **स्वादिष्वसर्वनामस्थाने** इत्यनेन पदसंज्ञायां कृतायां **होढ** इति हस्य ढत्वे **झलां जशोन्त** इति ढस्य डत्वे संयोगे च कृते ॥ लिड्भ्याम् ॥ लिह् सुप् इत्यत्र **स्वादिष्वसर्वनामस्थाने**इति पदसंज्ञायां **होढ** इति हस्य ढत्वे **झलां जशोन्ते** इति ढस्य डत्वे **डः सि धुट्** इति धुटि टटि गते **खरि चेति** धस्य तत्वे पुनश्च **खरि चे**ति डस्य टत्वे कृते ॥ लिट्त्सु ॥ वाग्रहणात् धुडभावे ॥ लिट्सु । दुह् सु इत्यत्र **हल्ङ्याब्भ्यो दीर्घा**दिति सुलोपे **दादेर्धातोर्घः** इति हस्य घत्वे **झलां जशोन्त** इति घस्य गत्वे **वावसाने** इति गकारस्य ककारे कृते **एकाचो बशो भषझषन्तस्य स्ध्वो**रिति धात्ववयवस्यैकाचो झषन्तस्य बश्प्रत्याहारान्तःपातिनो दकारस्य भष्प्रत्याहारान्तःपातिनि धकारे कृते ॥ धुक् ॥ **वावसाने** इत्यस्याप्राप्तौ ॥ धुग् ॥ द्रुह् सु इत्यत्र **वाद्रुहमुहष्णुहष्णिहा**मित्यनेन हस्य घत्वे द्रुघ् स् इति जातं तत्र **एकाचो बशो भष्झषन्तस्य स्ध्वो**रिति दकारस्य धकारे ध्रु घ् स् इति जातम् । तत्र **हल्ङ्याब्भ्य** इति सकारलोपे **झलां जशोन्ते** इति घस्य गत्वे **वावसाने** इति गस्य कत्वे च ॥ ध्रुक् ॥ **वावसाने** इत्यस्याप्राप्तौ ॥ ध्रुग् ॥ यस्मिन् पक्षे **वाद्रुहमुहष्णुहष्णिहा**मिति सूत्रस्याप्राप्तिस्तस्मिन् पक्षे **होढ** इति हस्य ढत्वे **झलां जशोन्ते** इति ढस्य डत्वे **वावसाने** इति डस्य टत्वे च कृते ॥ ध्रुट् ॥ **वावसाने** इत्यस्याप्राप्तौ ॥ ध्रुड् ॥ एवं ॥ ध्रुक् ॥ ध्रुग् ॥ ध्रुट् ॥ ध्रुड् ॥ इति रूपचतुष्टयं जातम् ॥ द्रुह् भ्यामित्यत्र **वाद्रुहमुहि**त्यनेन हस्य घत्वे **एकाचो बशो भष् झषन्तस्य स्ध्वो**रिति दकारस्य धकारे कृते **झलां जश् झशी**ति

---

१ अत्र धुत्वं न भवति न पदान्तेति निषेधात् । चर्त्वस्यासिद्धत्वाचयो द्वितीया इति न द्वितीयादेशः ।

२ अत्र धातोरित्यस्यावृत्तिः कर्तव्या एकं धातुपदमतिरिच्यमानमुपदेशकालं लक्षयति । इदं प्राचामनुरोधेन । नव्यैस्तु दादेरित्यस्यावृत्तिः कृता ।

सः ।६।१।६४। स्नुट् स्नुड् स्नुक् स्नुग् । एवं ष्णिह् ॥ **इग्यणः संप्रसारणम्** ।१।१।४५। यणः स्थाने प्रयुज्यमानो य इक् स संप्रसारणसंज्ञः स्यात् ॥ **वाह ऊठ्** ।६।४।१३२। भस्य वाहः संप्रसारणमूठ् ॥ **संप्रसारणाच्च** ।६।१।१०८। संप्रसारणादचि पूर्वरूपमेकादेशः । वृद्धिः । विश्वौहः इत्यादि ॥ **चतुरनडुहोरामुदात्तः** ।७।१।९८।

---

घकारस्य गकारे कृते ॥ ध्रुग्भ्याम् ॥ घकारविधायकसूत्रप्राप्त्यभावे **हो ढः** इति हस्य ढत्वे ढस्य च **झलां जश् झशि** इति डत्वे ॥ ध्रुड्भ्याम् ॥ द्रुह् अग्रे सप्तमीबहुवचने सुपि **वा द्रुहमुहे**ति हस्य घकारे **एकाचो बशो भष् झषन्तस्ये**ति दकारस्य धकारे **खरि चे**ति घकारस्य ककारे **आदेशप्रत्यययोरि**ति सकारस्य षकारे कषोः संयोगे क्ष इति क्षकारे च कृते ॥ ध्रुक्षु ॥ यस्मिन् पक्षे **वा द्रुहमुहे**त्यस्य प्राप्तिर्न जाता तस्मिन् पक्षे **हो ढः** इति हस्य ढत्वे ढस्य **झलां जश् झशी**ति डत्वे **ड्ः सि धुट्** इति धुटि उटि गते **झलां जश् झशी**ति धकारस्य दकारे **खरि चे**ति दकारस्य तकारे पुनश्च **खरि चे**ति डकारस्य टकारे ॥ ध्रुट्त्सु ॥ **ड्ः सि धुट्** इति सूत्रस्याप्राप्तौ तु **खरि चे**ति डस्य टत्वे ॥ ध्रुट्सु ॥ स्नुह् सु इत्यत्र **वा द्रुहमुहे**ति हस्य घत्वे **झलां जशोऽन्ते** इति घस्य गत्वे **वाऽवसाने** इति गस्य कत्वे ॥ स्नुक् ॥ **वाऽवसाने** इत्यस्याप्राप्तौ ॥ स्नुग् ॥ वाग्रहणात् घत्वाभावे **हो ढः** इति हस्य ढत्वे **झलां जशोऽन्ते** इति ढस्य डत्वे **वाऽवसाने** इति डस्य टत्वे ॥ स्नुट् ॥ **वाऽवसाने** इत्यस्याप्राप्तौ ॥ स्नुड् ॥ विश्ववाह् सु इत्यत्र **हो ढः** इति हस्य ढत्वे **झलां जशोऽन्ते** इति ढस्य डत्वे **वाऽवसाने** इति डस्य टत्वे ॥ विश्ववाट् ॥ पक्षे ॥ विश्ववाड् ॥ विश्ववाह् शस् इत्यत्र शस्य **लशक्वतद्धिते** इतीत्संज्ञायां **तस्य लोपः** इति लोपे च **यचि भम्** इति विश्ववाहशब्दस्य भसंज्ञायां **वाह ऊठ्** इत्यनेन संप्रसारणं प्राप्तं किं नाम संप्रसारण**मिग्यणः संप्रसारण**मित्यनेनात्र परूपस्य यणः स्थाने उकाररूपे संप्रसारणे कृते विश्व उ आह् अस् इति जातं तत्र **वाह ऊठ्** इत्यनेन पूर्वं कृतस्य संप्रसारणस्य ऊठ्संज्ञायां कृतायां **संप्रसारणाच्चे**ति पूर्वरूपैकादेशे कृते विश्वऊह् अस् इति जातं तत्र **एत्येधत्यूठ्सु** इति सूत्रेण वृद्धौ संयोगे सस्य रुत्वे रस्य विसर्गे च ॥ विश्वौहः ॥ एवं विश्वौहेत्यादि ॥ अनडुह् अग्रे सौ समागते **चतुरनडुहोरामुदात्तः** इति सूत्रेण प्राप्त आम् **मिदचोऽन्त्यात्परः** इति मित्वात् उकारोत्तरवर्त्युकारात्परो जातस्तथा सति अनडुआम् ह् सु इति जातं तत्र भस्येत्संज्ञायां लोपे च अनडु आ ह् सु इति जातं तत्र **सावनडुहः** इति नुमि उमि गते अनडु आन् ह् स् इति जातं तत्र **हल्ङ्याब्भ्यः** इति सकारलोपे **संयोगान्तस्य लोपः** इति हकारलोपे नकारस्य च **नलोपः प्रातिपदिकान्तस्ये**ति सूत्रेण लोपः प्राप्तः परं **पूर्वत्रासिद्ध**मिति सूत्रेण हकारलोपविधायिनः **संयोगान्तस्य लोपः** इति सूत्रस्य नकारलोपविधायिनो **नलोपः प्रातिपदिके**ति सूत्रस्याग्रे असिद्धत्वान्नलोपाभावे **इको यणची**ति डकारोत्तरवर्तिन उकारस्य वकारे संयोगे च कृते ॥ अनड्वान् ॥ अनडुह् औ इत्यत्र **चतुरनडुहोरा**मिति आमि

रेफहकाराभ्यां परस्य यरो द्वे वा स्तः। चतुर्ण्णाम् ॥ **रोः सुपि** ।८।३।१६। रोरेव विसर्गः सुपि। सत्वम्, सस्य द्वित्वे प्राप्ते ॥ **शरोऽचि** ।८।४।४९। अचि परे शरो न द्वे स्तः। चतुर्षु ॥ **मो नो धातोः** ।८।२।६४। धातोर्मस्य नः पदान्ते। प्रशान् ॥ **किमः कः** ।७।२।१०३। किम कः स्याद्विभक्तौ। कः कौ के इत्यादि। शेषं सर्ववत् ॥ **इदमो मः** ।७।२।१०८। त्यदाद्यत्वापवादः ॥ **इदोऽय् पुंसि** ।७।२।१११। इदम इदोय् स्यात्सौ पुंसि। अयम्। त्यदाद्यत्वे ॥ **अतो गुणे** ।६।१।९७। अपदान्तादतो गुणे पररूपमेकादेशः ॥ **दश्च** ।७।२।१०९। इदमो दस्य मः स्याद्विभक्तौ। इमौ इमे। त्यदादेः संबोधनं नास्तीत्युत्सर्गः ॥ **अनाप्यकः** ।७।२।११२। अककारस्य इदम इदोऽन् स्यादापि विभक्तौ। आबिति प्रत्याहारः। अनेन ॥ **हलि लोपः** ।७।२।११३।

---

चतुर्ण्णाम् ॥ चतुर् अग्रे सुपि समागते **रोः सुपि** इत्यनेन **खरवसानयो**रिति सूत्रेण प्राप्तं रस्य विसर्गत्वं न जातं ततश्चतुर् सु इति जातं तत्र **आदेशप्रत्यययो**रिति सस्य षत्वे **अचोरहाभ्या**मिति षस्य द्वित्वे प्राप्ते **शरोची**ति सूत्रेण षकारद्वित्वाभावे ॥ चतुर्षु ॥ प्रशाम् अग्रे सु इत्यत्र **हल्ङ्याब्भ्य** इति सुलोपे **सुप्तिङन्त**मिति पदसंज्ञायां **मो नो धातो**रिति मस्य नकारे कृते ॥ प्रशान् ॥ प्रशाम् अग्रे भ्यामि **स्वादिष्वसर्वनामस्थाने** इति पदसंज्ञायां **मो नो धातो**रिति मस्य नकारे ॥ प्रशान्भ्याम् ॥ किम् सु इत्यत्र **किमः क** इति किमः कादेशे सस्य रुत्वे रस्य विसर्गे च ॥ कः ॥ किम् अग्रे औ इत्यत्र **किमः क** इति कादेशे वृद्धौ च ॥ कौ ॥ किम् जस् इत्यत्र **जसः शी** इति जसः शीत्वे शकारस्येत्संज्ञायां लोपे **किमः क** इति किमः कादेश **आद्गुण** इति गुणे च कृते ॥ के ॥ इदम् सु इत्यत्र **त्यदादीनाम** इत्यनेन अकारः प्राप्तः परं **इदमो म** इत्यनेन तदपवादके मकारे जाते **इदोय् पुंसि** इत्यनेन इदम इद्भागस्य अयादेशे कृते यकारस्याकारेण सह संयोगे सकारस्य च **हल्ङ्याब्भ्य** इति लोपे ॥ अयम् ॥ इदम् औ इत्यत्र **त्यदादीनाम** इति मकारस्याकारे **अतो गुणे** इति पररूपैकादेशे इद औ इति जातं तत्र **दश्चे**त्यनेन दस्य मकारे इम औ इति जाते **वृद्धिरेची**ति वृद्धौ ॥ इमौ ॥ इदम् जस् इत्यत्र **जसः शी** इति जसःशीत्वे शकारस्येत्संज्ञायां लोपे च इदम् ई इति जातं तत्र **त्यदादीनाम** इति मकारस्य अकारादेशे **अतो गुणे** इति पूर्वरूपैकादेशे **दश्चे**ति दस्य मकारे **आद्गुण** इति गुणादेशे ॥ इमे ॥ इदम् टा इत्यत्र **टाङसिङसामिनात्स्या** इति सूत्रेण इनादेशे **त्यदादीनाम** इति मकारे **अतो गुणे** इति पररूपे **अनाप्यक** इति अनादेशे **आद्गुण** इति गुणे च कृते ॥ अनेन ॥ इदम् भ्याम् इत्यत्र **त्यदादीनाम** इत्यकारादेशे **अतो गुणे** इति पररूपैकादेशे इद भ्यामिति जातं तत्र **हलि लोप** इत्यनेन इद्भागस्य लोपे प्राप्ते **अलोन्त्यस्ये-**

---

१ अत्र नलस्यासिद्धत्वान्नलोपः प्रातिपदिकान्तस्येति सूत्रेण नलोपो नेति भावः।

अककारस्येदम इदो लोप आपि हलादौ । नानर्थकेऽलोऽन्त्यविधिरनभ्यासविकारे ॥ **आद्यन्तवदेकस्मिन्** ।१।१।२१।एकस्मिन् क्रियमाणं कार्यमादाविवान्त इव स्यात् । सुपि चेति दीर्घः । आभ्याम् ॥ **नेदमदसोरकोः** ।७।१।११। अककारयोरिदमदसोर्भिस ऐस् न । एभिः अस्मै एभ्यः अस्मात् अस्य अनयोः २ एषां अस्मिन् एषु ॥ **द्वितीयाटौस्स्वेनः** ।२।४।३४। इदमेतदोरेनादेशः स्यादन्वादेशे । किंचित्कार्यं विधातुमुपात्तस्य कार्यान्तरं विधातुं पुनरुपादानमन्वादेशः । यथा अनेन व्याकरणमधीतमेनं छन्दोऽध्यापयेति । अनयोः पवित्रं कुलम् एनयोः प्रभूतं स्वं धनमिति । एनम् एनौ एनान् एनेन एनयोः एनयोः । राजा ॥ **न ङिसंबुद्ध्योः** ।८।२।८। नस्य लोपो न ङौ संबुद्धौ च । हे राजन् ( ङावुत्तरपदे प्रतिषेधो वक्तव्यः ) ब्रह्मनिष्ठः । राजानौ राजानः राज्ञः ॥ **नलोपः सुप्स्वरसंज्ञातुग्विधिषु कृति** ।८।२।२। सुब्विधौ स्वरविधौ संज्ञाविधौ

---

त्यनेन दकारस्यैव लोपे प्राप्ते **नानर्थकेऽलोन्त्यविधिरनभ्यासविकारे** इत्यनेनाऽलोन्त्यविध्यभावे इद्भागस्य लोप आभ्यामिति जातम्। **सुपि चे**ति सूत्रेणादन्ताङ्गस्य दीर्घता प्राप्ता परमत्र विद्यमानस्याकारस्याऽदन्तता वर्तते न वेति शङ्कायाम**ाद्यन्तवदेकस्मिन्** इत्यनेनात्रैकस्मिन्नकार एव दीर्घत्वविधेयत्वात् अकार एवादितामन्ततां च मत्वाकारस्य दीर्घत्वे कृते ॥ आभ्याम् ॥ इदम् भिस् इत्यत्र **त्यदादीनाम** इति मकारस्यात्वे **अतो गुणे** इति पररूपत्वे **हलि लोप** इति इद्भागलोपे **अतो भिस ऐस्** इत्यनेन प्राप्तमैस्त्वं **नेदमदसोरको**रित्यनेन बाधित्वा **बहुवचने झल्ये**दित्येकारे कृते ॥ एभिः ॥ इदम् अम् इत्यत्र **द्वितीयाटौस्स्वेन** इत्यनेन इदम एनादेशे कृते **अमि पूर्वः** इत्यनेन पूर्वरूपादेशे च ॥ एनम् ॥ राजन् सु इत्यत्र **सर्वनामस्थाने चासंबुद्धौ** इत्यनेन नान्तोपधाया दीर्घत्वे **हल्ङ्याब्भ्यो दीर्घा**दित्यनेन सलोपे **नलोपः प्रातिपदिकान्तस्ये**ति सूत्रेण नलोपे च कृते ॥ राजा ॥ हे राजन् सु इत्यत्र **हल्ङ्याब्भ्यो दीर्घा**दिति सलोपे **न ङि संबुद्ध्यो**रित्यनेन नलोपाभावे च ॥ हे राजन् ॥ ब्रह्मणि निष्ठा यस्येति बहुव्रीहौ प्रत्ययलोपलक्षणेन ङेः परत्वात् **न ङि संबुद्ध्यो**रित्यनेन प्राप्तस्य नलोपाभावस्य **ङावुत्तरपदे प्रतिषेधो वाच्य** इति नलोपे जाते ॥ ब्रह्मनिष्ठ इति जातम् ॥ राजन् शस् इत्यत्र **यस्मात्प्रत्ययविधि**रिति सूत्रेण राजन्शब्दस्याङ्गसंज्ञायां **अल्लोपोऽन** इति अन्संबन्धिनोऽकारस्य लोपे **लशक्वतद्धिते** इति शकारलोपे सस्य विसर्गत्वे **स्तोः श्चुना श्चु**रिति नस्य ञत्वे जकारञकारयोः संयोगात् ज्ञकारे कृते ॥ राज्ञः ॥ राजन् भ्यामित्यत्र **नलोपः प्रातिपदिकान्तस्ये**ति नलोपे **सुपि चे**ति दीर्घत्वे प्राप्ते **नलोपः सुप्स्वरसंज्ञातुग्विधिषु**

१ अस्य सूत्रस्य वृत्तिस्तु आद्यन्ते च क्रियमाणं कार्यमेकस्मिन्नपि भवतीति संग्रहीतुमुचिता । आदित्वमन्तत्वं च ससहायत्वमेकस्मिन्नित्यस्यासहायेऽपि तत् कार्यं भवतीत्यर्थः । २ अत्र विषयसप्तमी बोध्या ङिविषयके उत्तरपदे न ङिसंबुद्ध्योरित्यस्य प्रतिषेधो वक्तव्य इत्यर्थः ।

कृति तुग्विधौ च नलोपोऽसिद्धो नान्यत्र राजाश्व इत्यादौ । इत्यसिद्धत्वादात्वमेत्वमैस्त्वं च न । यज्वा यज्वानौ यज्वानः ॥ **न संयोगाद्वमन्तात्** ।६।४।१३७। वमन्तसंयोगादनोऽकारस्य लोपो न । यज्वनः यज्वना यज्वभ्याम् ब्रह्मणः ब्रह्मणा ॥ **इन्हन्पूषार्यम्णां शौ** ।६।४।१२। एषां शावेवोपधाया दीर्घो नान्यत्र इति निषेधे प्राप्ते ॥ **सौ च** ।६।४।१३। इन्नादीनामुपधाया दीर्घोऽसंबुद्धौ सौ । वृत्रहा हे वृत्रहन् ॥ **एकाजुत्तरपदे णः** ।८।४।१२। एकाजुत्तरपदं यस्य तस्मिन्समासे पूर्वपदस्थान्निमित्तात्परस्य

---

कृति चेत्यनेन लोपस्यासिद्धत्वात् दीर्घत्वाभावे ॥ राजभ्याम् ॥ राजन् ङि इत्यत्र ङकारस्येत्संज्ञायां लोपे च **विभाषाङिश्योरि**त्यनोऽकारस्य लोपे **स्तोः श्चुना श्चु**रिति नस्य ञत्वे जकारञकारयोः संयोगात् ज्ञकारे कृते ॥ राज्ञि ॥ सूत्रे विभाषेत्युक्तत्वात् यस्मिन् पक्षे अनोऽकारस्य लोपो न जातस्तस्मिन् पक्षे ॥ राजनि ॥ राजन् ओस् इत्यत्र **अल्लोपोऽन** इत्यनेन जकारोत्तरवर्त्यकारस्य लोपे **स्तोः श्चुना श्चु**रिति नस्य ञत्वे जञोर्ज्ञ इति ज्ञकारे च कृते ॥ राज्ञोः ॥ राजन् सु इत्यत्र **नलोपः प्रातिपदिकान्तस्ये**ति नलोपे ॥ राजसु ॥ राज्ञोऽश्वो राजाश्व इत्यत्र **नलोपः सुप्स्वरसंज्ञातुग्विधिषु कृति** इति सूत्रोक्तस्य नैकस्यापि विधेः सत्वात् **नलोपः प्रातिपदिकान्तस्येति** नलोपे **अकः सवर्णे दीर्घ** इति दीर्घे च कृते ॥ राजाश्वः ॥ राजभ्यामित्यत्र **सुपि** चेति दीर्घत्वं प्राप्तमपि सुब्विधित्वेन नलोपस्यासिद्धत्वान्न दीर्घत्वम् । एवं राजभ्य इत्यत्र **बहुवचने झल्येत्** इत्येत्वं प्राप्तमपि सुब्विधित्वेन नलोपस्यासिद्धत्वान्नेत्वम् । एवमेव राजभिरित्यत्र **अतो भिस ऐस्** इत्यनेनैस्त्वमसुब्विधित्वान्न भवतीति । यज्वन् सु इत्यत्र **हल्ङ्याब्भ्य** इति सुलोपे **सर्वनामस्थाने चासंबुद्धा**वित्युपधादीर्घत्वे **नलोपः प्रातिपदिकान्तस्येति** नलोपः ॥ यज्वा ॥ यज्वन् औ इत्यत्र **सर्वनामस्थाने चासंबुद्धा**वित्युपधादीर्घत्वे ॥ यज्वानौ ॥ एवं यज्वानः ॥ यज्वन् शस् इत्यत्र शलोपे**न संयोगाद्वमन्ता**दिति सूत्रेणात्र वान्तसंयोगत्वादनोऽकारस्य लोपाभावात् नकारस्याकारेण संयोगे कृते ॥ यज्वनः ॥ वृत्र हन् सु इत्यत्र सोर्लोपे **इन्हन्पूषार्यम्णां शा**विति नियमादुपधादीर्घत्वाभावे प्राप्ते **सौ चे**ति सोपधाया दीर्घत्वे **नलोपः प्रातिपदिकान्तस्ये**ति नलोपे कृते ॥ वृत्रहा ॥ वृत्रहन् औ इत्यत्र **इन्हन्पूषार्यम्णां शा**विति नियमादुपधादीर्घत्वाभावे **एकाजुत्तरपदे ण** इति नस्य णत्वे संयोगे च कृते ॥ वृत्रहणौ ॥ वृत्रहन् जस् इत्यत्र **चुटू** इति जस्येत्संज्ञायां **तस्य लोप** इति जस्य लोपे **एकाजुत्तरपदे ण** इति नस्य णत्वे संयोगे च ॥ वृत्रहणः ॥ वृत्रहन् शस् इत्यत्र शकारलोपे **अल्लोपो न** इत्यनेन ह-

---

१ न संयोगाद्वमन्तात् । अत्र न हलोऽनमादित्येव सूत्रमस्तु, हल्परौ यौ वकारमकारौ ततः परस्यानोऽकारस्य लोपो न स्यादित्यर्थे न कुत्राप्यनुपपत्तिः ॥ अस्य समाधानं यत्किंचिदुच्यते । संयोग इति पदस्य संज्ञात्वात्संज्ञाशब्दानामर्थमात्रकत्वं हल् इति पदे नाभाद्धस्य तदुच्चारणे गौरवम् । एकवचनं राद्धिरित्यत्र सुससुद्धिरित्येन वक्तव्ये एकवचनग्रहणं ज्ञापयति संज्ञाशब्दानामर्थमात्रकत्वमिति ॥

प्रातिपदिकान्तनुम्विभक्तिस्थस्य नस्य णः । वृत्रहणौ ॥ **हो हन्तेर्ञ्णिन्नेषु** ।७।३।५४। ञिति णिति च प्रत्यये नकारे च परे हन्तेर्हकारस्य कुत्वम् । वृत्रघ्नः । इत्यादि । एवं शार्ङ्गिन् यशस्विन् अर्यमन् पूषन् ॥ **मघवा बहुलम्** ।६।४।१२८। मघवन्शब्दस्य वा तृ इत्यन्तादेशः। ऋ इत्॥ **उगिदचां सर्वनामस्थानेऽधातोः** ।७।१।७०। अधातोरुगितो नलोपिनोऽञ्चतेश्च नुम्स्यात्सर्वनामस्थाने परे । मघवान् मघवन्तौ मघवन्तः । हे मघवन् मघवद्भ्याम् । तृत्वाभावे मघवा । सुटि राजवत् ॥ **श्वयुवमघोनामतद्धिते** ।६।४। १३३। अन्नन्तानां भानामेषामतद्धिते संप्रसारणम् । मघोनः मघवभ्याम् । एवं श्वन् युवन् ॥ **न संप्रसारणे संप्रसारणम्** ।६।१।३७। संप्रसारणे परतः पूर्वस्य यणः

---

कारोत्तरवर्त्यकारलोपे वृत्रहन् अस् इति जातं तत्र **हो हन्तेर्ञ्णिन्नेष्वि**त्यनेनात्र हकारस्य नकारे परे कवर्गसंबन्धिनः पञ्चवर्णाः प्राप्तास्तत्र संवारनादघोषमहाप्राणप्रयत्नवतो हस्य स्थाने तावत्प्रयत्नवति घकारे कृते कृते च सस्य रुत्वे रस्य च विसर्गे ॥ वृत्रघ्नः ॥ वृत्रहन् टा इत्यत्र **चुटू** इति टस्येत्संज्ञायां **तस्य लोप** इति टलोपे **अल्लोपो न** इत्यकारलोपे **हो हन्तेर्ञ्णिन्नेष्विति** हकारस्य घकारे ॥ वृत्रघ्ना ॥ वृत्रहन् भ्यामित्यत्र **नलोपः प्रातिपदिकान्तस्ये**ति नकारलोपे **नलोपः सुप्स्वरसंज्ञातुग्विधिषु कृती**ति नलोपस्यासिद्धत्वात्**सुपि चे**ति सूत्रेण प्राप्ते दीर्घत्वे निवृत्ते ॥ वृत्रहभ्याम् ॥ एवम् ॥ वृत्रहभिः ॥ मघवन् सु इत्यत्र **मघवा बहुल**मित्यनेन तृ इत्यन्तादेशे कृते मघव तृ इति जातं ऋकारस्येत्संज्ञायां लोपे च कृते मघवत् सु इति जातं तत्र **उगिदचां सर्वनामस्थानेऽधातो**रिति सूत्रेण नुमि कृते उमो लोपे मघवन् त् स् इति जातं **हल्ङ्याब्भ्यो दीर्घादि**ति सकारलोपे **संयोगान्तस्य लोप** इति तकारलोपे **सर्वनामस्थाने चासंबुद्धावि**ति नान्तोपधाया दीर्घत्वे च कृते ॥ मघवान् ॥ मघवन् औ इत्यत्र **मघवा बहुल**मितिं तृइत्यंतादेशे ऋकारस्येत्संज्ञायां लोपे च मघवत् औ इति जातं तत्र **उगिदचां सर्वनामस्थानेऽधातो**रिति नुमि उमि गते संयोगे च कृते ॥ मघवन्तौ ॥ एवं मघवन्तः ॥ यस्मिन् पक्षे बहुलग्रहणात् तृइत्यन्तादेशाभावस्तस्मिन् पक्षे ॥ मघवा ॥ मघवानौ ॥ मघवानः॥ इत्यादि सुटि राजवत् ॥ शसि तु **श्वयुवमघोनामतद्धिते** इत्यनेन संप्रसारणे मघउन् अस् इति जातं तत्र**आद्गुण** इति गुणे संयोगे सस्य रुत्वे रस्य विसर्गे च कृते ॥ मघोनः ॥ एवमन्येष्वप्यजादिषु प्रत्ययेषु रूपाणि ज्ञेयानि ॥ मघवन् भ्यामित्यत्र **नलोपः प्रातिपदिकान्तस्ये**ति नलोपे ॥ मघवभ्याम् ॥ एवमन्येष्वपि हलादिषु प्रत्ययेषु रूपाणि ज्ञेयानि ॥ युवन् सु इत्यत्र **अलोन्त्यात्पूर्व उपधा** इत्यनेन वकारोत्तरवर्त्यकारस्योपधासंज्ञायां **सर्वनामस्थाने चासंबुद्धावि**ति नान्तोपधाया दीर्घत्वे **हल्ङ्याब्भ्यो दीर्घादि**ति सकारलोपे **नलोपः प्रातिपदिकान्तस्ये**ति नकारलोपे च ॥ युवा ॥ युवन् शस् इत्यत्र **श्वयुवमघोनामतद्धिते** इति संप्रसारणे यु उअन् अस् इति जातं तत्र **संप्रसारणाच्चे**त्यनेन अकार उकारयोः पूर्वरूपैकादेशे ततः

संप्रसारणं न स्यात् । इति यकारस्य नेत्वम् । अत एव ज्ञापकादन्त्यस्य यणः पूर्वं संप्रसारणम् । यूनः यूना युवभ्यामित्यादि । अर्वा । हे अर्वन् ॥ **अर्वणस्त्रसावनञः** ।६।४।१२७। नञा रहितस्यार्वन्नित्यस्याङ्गस्य तृ इत्यन्तादेशो न तु सौ । अर्वन्तौ अर्वन्तः अर्वद्भ्यामित्यादि ॥ **पथिमथ्यृभुक्षामात्** ।७।१।८५। एषामाकारोऽन्तादेशः स्यात्सौ परे ॥ **इतोऽत्सर्वनामस्थाने** ।७।१।८६। पथ्यादेरिकारस्याकारः स्यात्सर्वनामस्थाने परे ॥ **थोऽन्थः** ।७।१।८७। पथिमथोस्थस्य न्थादेशः सर्वनामस्थाने । पन्थाः पन्थानौ पन्थानः ॥ **भस्य टेर्लोपः**[1] ।७।१।८८। भस्य पथ्यादेष्टेर्लोपः । पथः पथा पथिभ्याम् । एवं मथिन् ऋभुक्षिन् ॥ **ष्णान्ता षट्** ।१।१।२४। षान्ता नान्ता च

---

सवर्णदीर्घे यून् अस् इति जाते **श्वयुवमघोनामतद्धिते** इति पुनर्वकारस्य संप्रसारणे प्राप्ते **न संप्रसारणे संप्रसारणम्** इति संप्रसारणाभावे संयोगे सस्य रुत्वे रस्य विसर्गे च ॥ यूनः ॥ अर्वन् सु इत्यत्र **हल्ङ्याब्भ्य** इति सकारलोपे **अलोऽन्त्यात्पूर्व उपधा** इति नकारान्तःपातिवकारस्योपधासंज्ञायां **सर्वनामस्थाने चासंबुद्धौ** इत्युपधादीर्घत्वे **न लोपः प्रातिपदिकान्तस्य** इति नकारलोपे च ॥ अर्वा ॥ अर्वन् औ इत्यत्र **अर्वणस्त्रसावनञः** इत्यनेन तृइत्यन्तादेशे कृते अर्व तृ औ इति जातं तत्र **उपदेशेऽजनुनासिक इत्** इति तकारोत्तरवर्तिन ऋकारस्येत्संज्ञायां **तस्य लोप** इति ऋकारस्य लोपे च कृते विहिते च **उगिदचां सर्वनामस्थानेऽधातोः** इति नुमि उमो लोपे संयोगे च ॥ अर्वन्तौ ॥ अर्वन् शस् इत्यत्र **अर्वणस्त्रसावनञ** इति तृ इत्यन्तादेशे असर्वनामस्थानत्वान्नुमभावे ऋकारस्येत्संज्ञायां लोपे च सस्य रुत्वे रस्य विसर्गे संयोगे च कृते ॥ अर्वतः ॥ पथिन् सु इत्यत्र **पथिमथ्यृभुक्षामात्** इत्यनेनाकारान्तादेशे कृते पथि आ सु इति जातं तत्र **इतोत्सर्वनामस्थाने** इत्यनेन थकारान्तःपातिन इकारस्याकारादेशे कृते पथ आ सु इति जातं तत्र **थोन्थ** इत्यनेन थस्य न्थादेशे कृते कृते च **अकः सवर्णे दीर्घ** इति दीर्घत्वे सस्य रुत्वे रस्य विसर्गत्वे च ॥ पन्थाः पन्थानौ पन्थानः ॥ पथिन् शस् इत्यत्र **भस्य टेर्लोप** इति सूत्रेण टिरूपस्येन्भागस्य लोपे संयोगे सस्य रुत्वे रस्य विसर्गे च ॥ पथः ॥ एवं मथिन् शब्दस्य रूपाणि ज्ञेयानि ॥ पञ्चन् जस् इत्यत्र **ष्णान्ता षट्**

---

[1] भस्य टेर्लोपः । नन्वत्र भाद्विदित्येव सूत्रमस्तु. भसंज्ञकात्पथ्यादेः परोयः प्रत्ययः सङित् इत्यर्थे । भसंज्ञा तु अजादिष्वेव भवति तेषामेव ङित्वं नतु हलादिषु ङित्वाट्टिलोपे सिद्ध पथ इति । अत्र पर्वतवदरूप्य समाधानमुच्यते । सुपथिन् शब्दात् प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्चेत्यनेन णिचि कृते तस्येष्ठवत्त्वात् टेः ६।४।१५५ भस्य टेर्लोपः स्यादिष्ठेमेयस्सु इति सूत्रेण इन्भागस्य लोपे सुपथयति तस्मात् क्विपि णिलोपे सुपथ् राँच पथिमथीत्यनेनात्वे सुपा-न्थादेशे सुपन्थौ सुपन्थः । शसि तस्य ङित्वात् । टेः ६।४।१४३। इति सूत्रेण टिलोपे कर्तव्ये पूर्वं थोवे इन् इत्यस्य लोपोजातस्तस्य (असिद्धवदत्राभात्) इत्यनेनासिद्धत्वाद् इन् इत्यस्यैवलोपो नतु अथ् इत्यस्य तथाच सुप इति रूपं नैव सेत्स्यति । अत्र णिजन्तानां साधुत्वमस्ति नवेति विचारस्तु मत्कृतव्याकरणतरङ्गतोऽवसेयः ।

संख्या षट्संज्ञा स्यात्। पञ्चन्शब्दो नित्यं बहुवचनान्तः। पञ्च पञ्च पञ्चभिः पञ्चभ्यः पञ्चभ्यः। नुट्॥ **नोपधायाः** ।६।४।७। नान्तस्योपधाया दीर्घो नामि। पञ्चानाम् पञ्चसु॥ **अष्टन आ विभक्तौ** ।७।२।८४। हलादौ वा स्यात्॥ **अष्टाभ्य औश्** ।७।१।२१। कृताकारादष्टनो जश्शसोरौश्। अष्टभ्य इति वक्तव्ये कृतात्वनिर्देशो जश्शसोर्विषये आत्वं ज्ञापयति। अष्टौ अष्टौ अष्टाभिः अष्टाभ्यः अष्टाभ्यः अष्टानाम् अष्टासु। आत्वाभावे अष्ट पञ्चवत्॥ **ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च** ।३।२।५९। एभ्यः क्विन्। अञ्चेः सुप्युपपदे युजिक्रुञ्चोः केवलयोः क्रुञ्चेर्नलोपाभावश्च निपात्यते। कनावितौ॥ **कृदतिङ्** ।३।१।९३। अत्र धात्वधिकारे तिङ्भिन्नः प्रत्ययः कृत्संज्ञः स्यात्॥ **वेरपृक्तस्य** ।६।१।६७। अपृक्तस्य वस्य लोपः॥ **क्विन्प्रत्ययस्य कुः** ।८।२।६२। क्विन्प्रत्ययो यस्मात्तस्य कवर्गोऽन्तादेशः पदान्ते। तस्मा-

इत्यनेन पञ्चन्शब्दस्य षट्संज्ञायां कृतायां **षड्भ्यो लुगि**त्यनेन जसो लोपे **नलोपः प्रा-**
**तिपदिकान्तस्ये**ति नकारलोपे च॥ पञ्च॥ पञ्चन् आमित्यत्र **षट्चतुर्भ्यश्चे**त्यनेन नुट्
प्राप्तः परं स कुत्रस्यादित्याशङ्कायां**माद्यन्तौटकिता**वित्यनेनामः पूर्वं नुटि कृते उटि गते
पञ्चन् न् आम् इति जातं तत्र नकारस्याकारेण सह संयोगे कृते नोपधाया इत्यनेनोपधाया
दीर्घत्वे **नलोपः प्रातिपदिकान्तस्येति** नकारलोपे च॥ पञ्चानाम्॥ अष्टन् जस् इत्यत्र
**अष्टन आविभक्ता**वित्यनेन आकारान्तादेशे कृते अष्टा जस् इति जातं तत्र **अष्टाभ्य**
**औश्** इत्यनेन जस औशि कृते शकारस्येत्संज्ञायां लोपे च कृते कृतायां च वृद्धौ॥ अष्टौ॥
अष्टन् भिस् इत्यत्र **अष्टन आविभक्ता**वित्यनेन आकारान्तादेशे सस्य रुत्वे रस्य वि-
सर्गे च॥ अष्टाभिः॥ एवमग्रेपि॥ पक्षे पञ्चन् शब्दवद्रूपाणि ज्ञेयानि॥ ऋत्विज्शब्दोवर्तते
तत्र '**ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां चे**त्यनेन क्विनि कृते ऋत्विज्
क्विन् इति जातं तत्र **लशक्वतद्धिते** इति कस्येत्संज्ञायां **हलन्त्यमि**ति नस्येत्संज्ञायां **उप-**
**देशेऽजनुनासिक इत्** इत्यनेन च ककारोत्तरवर्तिन इकारस्येत्संज्ञायां कृतायां कृते च क-
कारेकारनकाराणां **तस्य लोप** इत्यनेन लोपे वकार एवमावशिष्टे ऋत्विज् व् इति जातं तत्र
**कृदतिङ्** इत्यनेन वस्य कृत्संज्ञायां जातायां **वेरपृक्तस्ये**त्यनेन वकारस्य लोपे च कृते क्विन्-
प्रत्ययसंबंधि न किञ्चिदप्यवशिष्टम् तथापि **कृत्तद्धितसमासाश्चे**त्यनेन क्विन्प्रत्ययसंब-
न्धात् ऋत्विज्शब्दस्य कृदंतत्वात्प्रातिपदिकसंज्ञा जाता जातायां च तस्यां प्रथमैकवचने सौ स-
मागते ऋत्विज् सु इति जातं तत्र **क्विन्प्रत्ययस्य कुरि**त्यनेन कवर्गान्तादेशे प्राप्ते **यथा-**
**संख्यमनुदेशः समाना**मित्यनेन चवर्गतृतीयस्य जस्य स्थाने कवर्गतृतीये गकारे जाते

१ क्विन्प्रत्ययस्य कुः। अत्र प्रत्ययग्रहणं बहुव्रीहिवीप्सालाभार्थं तेन क्विन्प्रत्ययो यस्माद्यस्माद् दृष्टस्तस्य सर्वस्य कुत्वं भवतीत्यर्थे क्विप्यपि कुत्वं स्पृक्। अनुदके सुप्युपपदे स्पृश् धातोः क्विन् प्रत्ययो दृष्टस्तथाच केवलात्स्पृश धातोः क्विप्यपि कुत्वं जातम्॥

सिद्धत्वाच्चोः कुरिति कुत्वम् । ऋत्विग् ऋत्विक् ऋत्विजौ ऋत्विग्भ्याम् ॥ **युजेरसमासे** ।७।१।७१। युजेः सर्वनामस्थाने नुम् स्यादसमासे । सुलोपः संयोगान्तलोपः । कुत्वेन नस्य ङः । युङ् युञ्जौ युञ्जः युग्भ्याम् ॥ **चोः कुः** ।८।२।३०। चवर्गस्य कवर्गः स्याज्झलि पदान्ते च । सुयुक् सुयुजौ सुयुग्भ्याम् । खन् खञ्जौ खन्भ्याम् ॥ **व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः** ।८।२।३६। झलि पदान्ते च । जश्त्वचर्त्वे । राट् राड् राजौ राजः राड्भ्याम् । एवं विभ्राट् देवेट् विश्वसृट् ( परौ व्रजेः षः पदान्ते ) परावु-

---

हल्ङ्याब्भ्य इति सकारलोपे **वावसाने** इति गस्य ककारे च कृते ॥ ऋत्विक् । पक्षे । ऋत्विग् ॥ ऋत्विज्भ्यामित्यत्र **क्विन्प्रत्ययस्य कुरिति** कवर्गादेशे कृते ॥ ऋत्विग्भ्याम् ॥ एवमग्रेऽप्यूह्यम् ॥ ऋत्विज् सु इत्यत्र **क्विन्प्रत्ययस्य कु**रित्यनेन जस्य स्थाने गकारे **खरि च** इत्यनेन च गकारस्य ककारे **आदेशप्रत्यययो**रिति सस्य षत्वे कषोः संयोगात् क्षे च कृते ॥ ऋत्विक्षु ॥ युज् सु इत्यत्र **युजेरसमासे** इति नुमि उमोर्लोपे सकारोत्तरवर्त्युकारस्य लोपे **हल्ङ्याब्भ्य** इति सकारलोपे **संयोगान्तस्य लोप** इति जकारलोपे **क्विन्प्रत्ययस्य कु**रितिसूत्रेण नकारस्य स्थाने कवर्गपञ्चमे ङकारे कृते ॥ युङ् ॥ युज् औ इत्यत्र **युजेरसमासे** इति नुमि उम्भागलोपे **स्तोः श्चुना श्चु**रित्यनेन नस्य ञत्वे संयोगे च ॥ युञ्जौ ॥ एवम् ॥ युञ्जः इत्यादि ॥ युज् शस् इत्यत्र जकारस्याकारेण सह संयोगे सस्य रुत्वे रस्य विसर्गे च कृते ॥ युजः ॥ युज् भ्यामित्यत्र **क्विन्प्रत्ययस्य कु**रित्यनेन कवर्गादेशे कृते ॥ युग्भ्याम् ॥ युज् सु इत्यत्र **ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां चेति** क्विनि क्विनो लोपे **क्विन्प्रत्ययस्य कु**रिति कवर्गादेशे जकारस्य गकारे **खरि चेति** गकारस्य ककारे **आदेशप्रत्यययो**रिति सस्य षत्वे संयोगे च कृते ॥ युक्षु ॥ सुयुज् सु इत्यत्र क्विनि क्विनो लोपे सौ समागते सस्य लोपे **चोः कु**रिति जस्य गकारे **वावसाने** इति गस्य ककारे ॥ सुयुक् ॥ सुयुग् ॥ सुयुजौ ॥ सुयुग्भ्यामित्यादि ॥ खन्ज् सु इत्यत्र सकारलोपे ॥ **संयोगान्तस्ये**ति जकारलोपे ॥ खन् ॥ खन् ज् औ इत्यत्र जकारस्यौकारेण सह संयोगे **स्तोः श्चुना श्चु**रिति नस्य ञत्वे ॥ खञ्जौ ॥ खन्ज् भ्यामित्यत्र **संयोगान्तस्य लोप** इति जकारलोपे ॥ खन्भ्याम् ॥ राज् सु इत्यत्र सकारोत्तरवर्त्युकारलोपे **व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां ष** इत्यनेन षकारान्तादेशे कृते राष् सु इति जाते तत्र सकारस्य **हल्ङ्याब्भ्य** इति लोपे **झलां जशोऽन्ते** इति षस्य डत्वे डस्य **वावसाने** इति टत्वे च कृते ॥ राट् ॥ **वावसाने** इत्यस्याप्राप्तौ ॥ राड् ॥ विभ्राज् सु इत्यत्र हल्ङ्या

पपदे व्रजेः क्विप् स्यात् दीर्घश्च पदान्ते षत्वमपि । परिव्राट् परिव्राजौ ॥ **विश्वस्य वसुराटोः** ।६।३।१२८। विश्वशब्दस्य दीर्घोऽन्तादेशः स्याद्वसौ राट्शब्दे च परे । विश्वाराट् विश्वाराड् विश्वराजौ विश्वाराड्भ्याम् ॥ **स्कोः संयोगाद्योरन्ते च** ।८।२।२९। पदान्ते झलि च यः संयोगस्तदाद्योः स्कोर्लोपः । भृट् । सस्य श्चुत्वेन शः । झलां जश् झशीति सस्य जः । भृज्जौ भृड्भ्याम् । त्यदाद्यत्वं पररूपत्वम् ॥ **तदोः सः सावनन्त्ययोः** ।७।२।१०६। त्यदादीनां तकारदकारयोरनन्त्ययोः सः स्यात्सौ । स्यः त्यौ त्ये । सः तौ ते । यः यौ ये । एषः एतौ एते ॥ **ङेप्रथमयोरम्** ।७।१।२८। युष्मद-

---

इति डस्य ढत्वे ॥ परिव्राट् ॥ पक्षे ॥ परिव्राड् ॥ विश्वराज् सु इत्यत्र **व्रश्चभ्रस्जे**ति जस्य षत्वे सस्य लोपे **झलां जशोन्ते** इति षस्य डत्वे डस्य च **वावसाने** इति टत्वे **विश्वस्य वसुराटो**रिति दीर्घत्वे च कृते ॥ विश्वाराट् ॥ पक्षे ॥ विश्वाराड् ॥ भ्रस् ज् सु इत्यत्र **स्कोः संयोगाद्योरन्ते**चेत्यनेन संयोगाद्यस्य सकारस्य लोपे भ्रज् स् इति जाते **व्रश्चे**ति जस्य षत्वे **हल्ङ्याब्भ्य** इति सलोपे **झलां जशोन्ते** इति षस्य डत्वे **वावसाने** इत्यनेन डस्य टत्वे **ग्रहिज्ये**ति सूत्रेण संप्रसारणे कृते ॥ भृट् । भृड् ॥ भ्रस् ज् औ इत्यत्र **स्तोः श्चुना श्चु**रित्यनेन सस्य शत्वे **झलां जश् झशी**त्यनेन शस्य जत्वे संयोगे विहिते च **ग्रहिज्ये**ति संप्रसारणे ॥ भृज्जौ ॥ त्यद् सु इत्यत्र **त्यदादीनामः** इत्यनेन दकारस्याकारे कृते **अतो गुणे** इत्यनेन पररूपे कृते कृते च **तदोः सः सावनन्त्ययो**रित्यनेन तकारस्य सकारे सकारस्य च रुत्वे रस्य च विसर्गत्वे ॥ स्यः ॥ त्यद् औ इत्यत्र **त्यदादीनामः** इत्यनेन दकारस्याकारे **अतो गुणे** इति पररूपे **वृद्धिरेची**त्यनेन वृद्धौ ॥ त्यौ ॥ त्यद् जस् इत्यत्र **त्यदादीनामः** इत्यनेन दस्यात्वे **अतो गुणे** इति पररूपत्वे **जसः शी**ति जसः शीत्वे शकारस्येत्संज्ञायां लोपे **आद्गुणे** इति गुणे ॥ त्ये ॥ शेषं सर्ववत् ॥ तद् अग्रे सु इत्यत्र **त्यदादीनामः** इति दकारस्याकारे **अतो गुणे** इति पररूपत्वे **तदोः सः सावनन्त्ययो** रित्यनेन दकारस्य सकारे सस्य रुत्वे रस्य विसर्गे च कृते ॥ सः ॥ एतद् सु इत्यत्र **त्यदादीनामः** इति दकारस्याकारे **अतो गुणे** इति पररूपत्वे **तदोः सः सावनन्त्ययो**रिति तकारस्य सकारे **ससजुषोरु**रिति सस्य रुत्वे **खरवसानयोर्विसर्जनीय** इति रस्य विसर्गादेशे **आदेशप्रत्यययो**रिति सकारस्य मूर्धन्यादेशे च कृते ॥ एषः ॥ युष्मद् अग्रे सु । अस्मद् अग्रे सु–इत्यत्र **ङेप्रथयोरम्** इत्यनेन सोरमादेशे

---

१ विश्वस्य वसुराटोः । अत्र णिजन्तस्य रट परिभाषणे इत्यस्य न ग्रहणं लाक्षणिकत्वात् । आदित्यविश्ववसव इत्यत्र तु न दीर्घः । नरेसंज्ञायामित्यतः संज्ञापदापकर्षात् ॥ २ तदोः सः सावनन्त्ययोः । अनन्त्ययोर्ग्रहणाभावे हेस परत्वात् त्यदाद्यत्वं बाधित्वा सत्वं स्यात् । ततोहल्ङ्यादिलोपे रुत्वविसर्गौ स्याताम् । किंच ह्रिलिङ्गे सा इति रूपमपि नैव सेत्स्यति त्यदाद्यत्वाभावेन टावनुत्पत्तिः । प्रगल्भविचारस्तु मत्कृतवैयाकरणतरङ्गतोऽवसेयः ॥

स्मद्भ्या परस्य ङे इत्येतस्य प्रथमाद्वितीययोश्चामादेशः ॥ **त्वाहौ सौ** ।७।२।९४। अनयोर्मपर्यन्तस्य त्वाहावादेशौ स्तः ॥ **शेषे लोपः** ।७।२।९०। एतयोष्टिलोपः । त्वम् अहम् ॥ **युवावौ द्विवचने** ।७।२।९२। द्वयोरुक्तावनयोर्मपर्यन्तस्य युवावौ स्तो विभक्तौ ॥ **प्रथमायाश्च द्विवचने भाषायाम्** ।७।२।८८। औङ्येतयोरात्व लोके । युवाम् आवाम् ॥ **यूयवयौ जसि** ।७।२।९३। अनयोर्मपर्यन्तस्य । यूयम् वयम् ॥ **त्वमावेकवचने** ।७।२।९७। एकस्योक्तावनयोर्मपर्यन्तस्य त्वमौ स्तो विभक्तौ ॥ **द्वितीयायां च** ।७।२।८७। अनयोरात्स्यात् । त्वाम् माम् ॥ **शसो न** ।७।१।२९। आभ्यां शसो नः स्यादमोऽपवादः । आदेः परस्य । संयोगान्तलोपः । युष्मान् अस्मान् ॥

---

कृते युष्मद् अम् । अस्मद् अम् । इति जाते तत्र **त्वाहौ सौ** इत्यनेन युष्मदोर्मपर्यन्तस्य त्वादेशे अस्मदश्च मपर्यन्तस्य अहादेशे कृते त्व अद् अम् । अह अद् अम् । इति जाते तत्र **अतो गुणे** इति पररूपत्वे कृते कृते च **शेषे लोप** इत्यनेन अद्भागस्यलोपे त्व् अम् । अह् अम्–इति जाते तत्र सयोगे कृते ॥ त्वम् । अहम् ॥ इति सिद्धम् ॥ युष्मद् औ । अस्मद् औ–इत्यत्र **ङेप्रथमयो**रित्यनेन अमि **युवावौ द्विवचने** इत्यनेन युष्मदो मपर्यन्तस्य युवादेशे अस्मदो मपर्यन्तस्य च आवादेशे कृते युव अद् अम् । आव अद् अम् । इति जाते तत्र **अतोगुणे** इति पररूपे **प्रथमायाश्च द्विवचने भाषायामि**त्यनेन आकारान्तादेशे युव आ अम्–आव आ अम्–इति जाते तत्र **अकः सवर्णे दीर्घ** इति दीर्घैकादेशे कृते कृते च **अमि पूर्व** इति पूर्वरूपैकादेशे ॥ युवाम् । आवाम् ॥ युष्मद् जस् अस्मद् जस्–इत्यत्र **ङे प्रथयोरम्** इत्यनेन जस स्थाने अमि जाते **यूयवयौ जसी**त्यनेन युष्मदोर्मपर्यन्तस्य यूयादेशे अस्मदो मपर्यन्तस्य च वयादेशे कृते यूय अद् अम् । वय अद् अम्–इति जाते तत्र **अतो गुणे** इति पररूपादेशे **शेषे लोप** इत्यनेन अद्भागस्यलोपे च कृते॥ यूयम् । वयम्॥ युष्मद् अम्–अस्मद् अम्–इत्यत्र **त्वमावेकवचने** इत्यनेनयुष्मदो मपर्यन्तस्य त्व इत्यादेशे अस्मदो मपर्यन्तस्य च म इत्यादेशे कृते त्व अद् अम् । म अद् अम् इति जाते तत्र **अतो गुणे** इति पररूपे **शेषे लोप**इति अद्भागस्य लोपे **द्वितीयायां च**त्यनेनाकारान्तादेशे **अमि पूर्व** इति पूर्वरूपादेशे च कृते ॥ त्वाम् । माम् ॥ इति जातम् ॥ युष्मद् शस् । अस्मद् शस् इत्यत्र **लशक्वतद्धिते** इति शकारस्येत्सञ्ज्ञायां **तस्य लोप** इति शकारलोपे च कृते **शसो न** इत्यनेन नादेशे **तस्मादित्युत्तरस्ये**ति सूत्रेणोत्तरस्य सकारस्य प्राप्त **परमादेः परस्ये**ति सूत्रेणादेरकारस्य नकारे जाते युष्मद् न् स् । अस्मद् न् स्–इति जाते तत्र **द्वितीयायां च**त्यनेनाकारान्तादेशे दीर्घत्वे **संयोगान्तस्य लोप** इत्यनेन सस्यलोपे च कृते ॥ युष्मान् । अस्मान् ॥ युष्मद्–टा अस्मद् टा इत्यत्र **चुटू** इति टस्येत्सञ्ज्ञायां **तस्यलोप** इति टलोपे च **त्वमावेकवचने** इति युष्मदो मपर्यन्तस्य त्वादेशे अस्मदो मपर्यन्तस्य मादेशे च कृते त्व अद् आ–म अद् आ–इति जात

**योऽचि** ।७।२।८९। अनयोर्यकारादेशः स्यादनादेशेऽजादौ परतः । त्वया मया ॥ **युष्मदस्मदोरनादेशे** ।७।२।८६। अनयोरात्स्यादनादेशे हलादौ विभक्तौ । युवाभ्याम् आवाभ्याम् युष्माभिः अस्माभिः ॥ **तुभ्यमह्यौ ङयि** ।७।२।९५। अनयोर्मपर्यन्तस्य । टिलोपः । तुभ्यम् मह्यम् ॥ **भ्यसोऽभ्यम्** ।७।१।३०। आभ्यां परस्य । युष्मभ्यम् अस्मभ्यम् ॥ **एकवचनस्य च** ।७।१।३२। आभ्यां ङसेरत् । त्वत् मत् ॥ **पञ्चम्या अत्** ।७।१।३१। आभ्यां पञ्चम्या भ्यसोऽत्स्यात् । युष्मत् अस्मत् ॥ **तवममौ ङसि** ।७।२।९६। अनयोर्मपर्यन्तस्य तवममौ स्तो ङसि ॥ **युष्मदस्मद्भ्यां ङसोऽश्** ।७।१।२७। तव मम युवयोः आवयोः ॥ **साम आकम्**[1] ।७।१।३३। आभ्यां परस्य साम

---

तत्र **अतो गुणे** इति पररूपैकादेशे **योऽचि** इति सूत्रेण सर्वस्य प्राप्तो यादेशस्तु **अलोऽन्त्यस्ये**ति सूत्रेणान्त्यस्य दकारस्य जातस्तथा सति त्वय् आ—मय् आ इति जातं तत्र संयोगे कृते॥ त्वया ॥ मया ॥ युष्मद् भ्याम्—असमद् भ्यामित्यत्र **युवावौ द्विवचने** इति युवादेशे आवादेशे च कृते युव अद् भ्याम्—आव अद् भ्याम् जाते **अतो गुणे** इति पररूपादेशे कृते **युष्मदस्मदोरनादेशे** इति दकारस्याकारे कृते कृते च **अकः सवर्णे दीर्घः** इति दीर्घादेशे ॥ युवाभ्याम् । आवाभ्याम् ॥ युष्मद् भिस्—असमद् भिसित्यत्र **युष्मदस्मदोरनादेशे** इति दस्य स्थाने आकारे कृते कृते च दीर्घत्वे ॥ युष्माभिः । अस्माभिः ॥ युष्मद् ङे—असमद् ङे इत्यत्र **तुभ्यमह्यौ ङयी**ति युष्मदो मपर्यन्तस्य तुभ्यादेशे असमदो मपर्यन्तस्य मह्यादेशे च कृते तुभ्य अद् ङे—मह्य अद् ङे इति जातं तत्र **अतो गुणे** इति पररूपत्वे **शेषे लोप** इति अद् लोपे **ङेप्रथमयोरम्** इत्यमि कृते ॥ तुभ्यम् । मह्यम् ॥ युष्मद् भ्यस्—असमद् भ्यस्–इत्यत्र **शेषे लोप** इति युवाभ्याम् । आवाभ्याम् ॥ युष्मद् भ्यस्—असमद् भ्यस्–इत्यत्र **शेषे लोप** इति अद् लोपे **भ्यसोऽभ्यम्** इत्यभ्यमि च कृते ॥ युष्मभ्यम् । असमभ्यम् । युष्मद् ङसि—असमद् ङसीत्यत्र **त्वमावेकवचने** इति युष्मदो मपर्यन्तस्य त्वादेशे अस्मदश्च मपर्यन्तस्य मादेशे **अतो गुणे** इति पररूपत्वे **शेषे लोप** इति अद्लोपे **एकवचनस्ये**ति सूत्रेण ङसेरति कृते कृते च संयोगे ॥ त्वत् । मत् ॥ युष्मद् भ्यस्—असमद् भ्यस् इत्यत्र **शेषे लोप** इति अद् लोपे **पञ्चम्या अत्** इति सूत्रेण भ्यसोऽति कृते ॥ युष्मत् । असमत् ॥ युष्मद् ङस्–असमद् ङस्–इत्यत्र **तवममौ ङसि** इति युष्मदो मपर्यन्तस्य तवादेशे असमदो मपर्यन्तस्य ममादेशे च तत्र तव अद् ङस्—मम अद् ङस् इति जातम् **अतो गुणे** इति पररूपे **शेषे लोप** इति अद् लोपे **युष्मदस्मद्भ्यां ङसोऽश्** इति ङसोशि कृते **हलन्त्यमि**ति शस्येत्संज्ञायां **तस्य लोप** इति

---

१ साम आकम् । यदि न शेषे लोप इत्यत्र टिलोपपक्ष एव स्वीक्रियते चेत्तदा अदन्तत्वाभावात्सुट्प्राप्तिरेव नेति ससुट्कनिर्देशो व्यर्थस्तेनान्त्यलोपपक्षोऽपि ज्ञाप्यते । तदात्वदन्तत्वात्सुट्प्राप्तिः समागता ससुट्कनिर्देशः सार्थकः । एतच्च सर्वमेतद्ग्रन्थानुसारेण सिद्धान्तानुसारेण त्वन्त्यदेवेति तट्टिप्पणीतोऽवसेयम् ।

आकम् स्यात् । युष्माकम् अस्माकम् । त्वयि मयि युवयोः आवयोः युष्मासु अस्मासु ॥ **युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्वान्नावौ** ।८।१।२०। पदात्परयोरपादादौ स्थितयोः षष्ठ्यादिविशिष्टयोर्युष्मदस्मदोर्वान्नावित्यादेशौ स्तः ॥ **बहुवचनस्य वस्नसौ** ।८।१।२१। उक्तविधयोरनयोः षष्ठ्यादिबहुवचनान्तयोर्वस्नसौ स्तः ॥ **तेमयावेकवचनस्य** ।८।१।२२। उक्तविधयोरनयोः षष्ठीचतुर्थ्येकवचनान्तयोस्ते मे एतौ स्तः ॥ **त्वामौ द्वितीयायाः** ।८।१।२३। द्वितीयैकवचनान्तयोस्त्वा मा इत्यादेशौ स्तः ॥ श्रीशस्त्वा-

---

ऽवतु मापीह दत्तात्ते मेऽपि शर्म सः । स्वामी ते मेऽपि स हरिः पातु वामपि नौ विभुः ॥ सुखं वां नौ ददात्वीशः पतिर्वामपि नौ हरिः । सोऽव्याद्वो नः शिवं वो नो दद्यात्सेव्योऽत्र वः स नः ॥

शलोपे ॥ तव । मम ॥ युष्मद् ओस्—अस्मद् ओस् इत्यत्र **युवावौ द्विवचने** इति युष्मदो मपर्यन्तस्य युवादेशे अस्मदो मपर्यन्तस्य आवादेशे **अतो गुणे** इति पररूपे युवद् ओस्—आवद् ओस्—इति जातम् तत्र **योऽचि** इति दकारस्य यकारे कृते सयोगे सस्य रुत्वे रस्य विसर्गत्वे च ॥ युवयो । आवयो ॥ युष्मद् आम्—अस्मद् आम् तत्र **शेषे लोप** इति अद् लोपे **साम आकमिति** साम आकमि कृते च ॥ युष्माकम् ॥ अस्माकम् ॥ युष्मद् ङि—अस्मद् ङि इत्यत्र **लशक्वतद्धिते** इति ङस्येत्संज्ञाया **तस्य लोप** इति ङलोपे **त्वमावेकवचने** इति युष्मदो मपर्यन्तस्य त्वादेशे अस्मदो मपर्यन्तस्य च मादेशे त्व अद् इ—म अद् इ—इति जाते तत्र **अतो गुणे** इति पररूपत्वे **योऽचीति** दस्य यत्वे सयोगे च ॥ त्वयि । मयि ॥ युवयो । आवयो —पूर्ववत् ॥ युष्मद् सु—अस्मद् सु—इत्यत्र **युष्मदस्मदोरनादेशे** इत्यनेनाकारादेशे कृते दीर्घे च । युष्मासु ॥ अस्मासु ॥ श्रीशस्त्वावतु मापीहेत्यत्र **त्वामौ द्वितीयाया** इत्यनेन त्वामित्यस्य त्वादेशो मामित्यस्य मादेशो जातोऽस्ति । दत्तात्ते मेऽपि शर्म स इत्यत्र **तेमयावेकवचनस्ये**त्यनेन तुभ्य स्थाने ते मह्य स्थाने च मे इत्यादेश सम्भूत । स्वामी ते मेऽपि स हरिरित्यत्र **तेमयावेकवचनस्ये**ति सूत्रेण तव स्थाने ते मम स्थाने च मे इत्यादेश सवृत्त । पातु वामपि नौ विभुरित्यत्र **युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्वान्नावौ** इत्यनेन युवामित्यस्य वाम्—आवामित्यस्य च नौ इत्यादेशो दरीदृश्यते । सुखं वां नौ ददात्वीश इत्यत्र युवाभ्यामित्यस्य स्थाने वाम्—आवाभ्यामित्यस्य स्थाने च नौ इत्यादेश सपन्न । पतिर्वामपि नौ हरिरित्यत्रापि युवयोरित्यस्य स्थाने वाम्—आवयोरित्यस्य च स्थाने नौ इत्यादेश समभूत । सोऽव्याद्वो न इत्यत्र **बहुवचनस्य वस्नसौ** इत्यनेन युष्मानित्यस्य व —अस्मानित्यस्य च न इत्यादेशो वरीवर्तीति ॥ शिव वो नो दद्यादित्यत्रापि युष्मभ्यमित्यस्य स्थाने व —अस्मभ्यमित्यस्य च स्थाने च न इत्यादेश सजातोऽस्ति । एवमेव सेव्योऽत्र व स न इत्यत्रापि **बहुवचनस्य वस्नसौ** इत्यनेन युष्माक स्थाने व —अस्माक स्थाने च न इत्यादेशश्चकास्ते । धाता ते भक्तोऽस्तीत्यत्र **एकवाक्ये युष्मदस्मदादेशा वक्तव्या** इत्यनेन तव स्थाने ते आदेशो जातोऽस्ति य स्मिन् पक्षे ते इत्यादेशो न जातस्तस्मिन् पक्षे धाता तव भक्तोऽस्तीति जातम् । तस्मै

ऽवतु मापीह दत्तात्ते मेऽपि शर्म सः ॥ स्वामी ते मेऽपि स हरिः पातु वामपि नौ विभुः ॥ १ ॥ सुखं वां नौ ददात्वीशः पतिर्वामपि नौ हरिः । सोऽव्याद्वो नः शिवं वो नो दद्यात्सेव्योऽत्र वः स नः ॥२॥ ( एकवाक्ये युष्मदस्मदादेशा वक्तव्याः ) अन्वादेशे तु नित्यं स्युः । धाता ते भक्तोऽस्ति । धाता तव भक्तोऽस्ति तस्मै ते नम इत्येव । सुपात् सुपाद् सुपादौ ॥ **पादः पत् ।६।४।१३०।** पाच्छब्दान्तं यदङ्गं भं तदवयवस्य पदादेशः । सुपदः सुपदा सुपाद्भ्याम् । अग्निमत् अग्निमद् अग्निमथौ अग्निमथः ॥ **अनिदितां हल उपधायाः क्ङिति ।६।४।२४।** हलन्तानामनिदितामङ्गानामुपधाया नस्य लोपः किति ङिति । नुम् । संयोगान्तस्य लोपः । तस्य कुत्वे ङः । प्राङ् प्राञ्चौ प्राञ्चः ॥

---

ते नम इत्यत्र अन्वादेशत्वात् नित्य आदेशो जातः ॥ सुपाद् सु इत्यत्र **हल्ङ्याब्भ्य** इत्यनेन सलोपे **वावसाने** इति दस्य तकारे च कृते ॥ सुपात् पक्षे सुपाद् ॥ सुपाद् शस् इत्यत्र **पादःपद्**इत्यनेन पदादेशे कृते कृते च संयोगे ॥ सुपदः । सुपदा । सुपाद्भ्यामित्यादि । अग्निमथ् सु इत्यत्र **हल्ङ्याब्भ्य** इत्यनेन सुलोपे **झलां जशोन्ते** इत्यनेन थस्य दकारे **वावसाने** इत्यनेन दकारस्य तकारे च कृते ॥ अग्निमत् ॥ पक्षे ॥ अग्निमद् ॥ अग्निमथ् भ्यामित्यत्र **झलां जश् झशी**त्यनेन थस्य दकारे कृते ॥ अग्निमद्भ्याम् ॥ प्र अग्रे अन् चु इत्यवस्थायां **ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां** चेति सूत्रेण क्विनि कृते प्र अन् चु क्विन् इति जाते **लशक्वतद्धिते** इति ककारस्येत्संज्ञायां **हलन्त्य**मित्यनेन नकारस्येत्संज्ञायां **उपदेशेऽजनुनासिक इदि**ति वकारोत्तरवर्तिन इकारस्य चेत्संज्ञायां कृतायां कृते च **तस्य लोप** इत्यनेन ककारेकारनकाराणां लोपे प्र अन् चु व् इति जातं तत्र **वेरपृक्तस्ये**ति वकारलोपे न किमपि क्विन्संबन्धावशिष्टं तथापि क्विना प्राञ्चशब्दे कृदन्तता निष्पादिता ततश्च **कृत्तद्धितसमासाश्चे**त्यनेन प्रातिपदिकसंज्ञायां प्रथमैकवचने सौ समागते प्र अन् चु सु इति जातं तत्र **अनिदितां हलउपधायाः क्ङिति** इति सूत्रेण नकारस्य लोपे प्र अच् सु इति जातं तत्र **उगिदचां सर्वनामस्थानेऽधातो**रित्यनेन नलोपिन्यञ्चती परे नुमि जाते उम्भागस्य लोपे कृते प्र अन् चु सु इति जातं तत्र सकारोत्तरवर्तिन उकारस्य **उपदेशेऽजनुनासिक इदि**ति इत्संज्ञायां **तस्य लोप** इत्यनेन लोपे च कृते प्र अन् चु स् इति जातं तत्र **हल्ङ्याब्भ्यो दीर्घा**दिति सकारलोपे **संयोगान्तस्य लोप** इति चकारलोपे **क्विन् प्रत्ययस्य कु**रित्यनेन नकारस्य स्थाने **यथासंख्यमनुदेशः समाना**मिति नकारस्य ङकारादेशे **अकः सवर्णे दीर्घ** इति प्रकारोत्तरवर्तिनो अकारस्य दीर्घत्वे च कृते ॥ प्राङ् ॥ प्रान् चु औ इत्यत्र चकारस्यौकारेण सह संयोगे कृते **स्तोः श्चुना श्चु**रित्यनेन नकारस्य ञकारे च कृते ॥ प्राञ्चौ ॥ एवं जसि ॥ प्राञ्चः ॥ प्रान् चु शस् इत्यत्र शकारस्येत्संज्ञायां लोपे च **अनिदितां हल उपधायाः क्ङिती**ति

**अचः** ।६।४।१३८। लुप्तनकारस्याञ्चतेर्भस्याकारस्य लोपः ॥ **चौ** ।६।३।१३८। लुप्ताकारनकारेऽञ्चतौ परे पूर्वस्याणो दीर्घः ॥ प्राचः प्राचा प्राग्भ्याम् । प्रत्यङ् प्रत्यञ्चौ प्रतीचः प्रत्यग्भ्याम् । उदङ् उदञ्चौ ॥ **उद ईत्** ।६।४।१३९। उच्छब्दात्परस्य लुप्तनकारस्याञ्चतेर्भस्याकारस्य ईत् । उदीचः उदीचा उदग्भ्याम् ॥ **समः समि** ।६।३।९३।

---

नकारलोपे प्र अच् अस् इति जातं तत्र **अचः** इति सूत्रेण अकारस्य लोपे **चौ** इत्यनेन पूर्वस्याणो दीर्घत्वे कृते च संयोगे ॥ प्राचः ॥ प्राचा ॥ प्राग्भ्यामित्यादि ॥ प्रति अन् च् इत्यत्र **ऋत्विग्दधृग्**इत्यनेन क्विनि ककारवकारेकारनकाराणां लोपे **इको यणची**ति यकारे **कृत्तद्धितसमासाश्चे**ति प्रातिपदिकसंज्ञायां प्रथमैकवचने सौ च समागते प्रत्यन् च् सु इति जातं तत्र **हल्ङ्याब्भ्य** इति सकारलोपे **संयोगान्तस्य लोप** इति चकारलोपे **क्विन्प्रत्ययस्य कु**रिति कवर्गान्तादेशे ॥ प्रत्यङ् ॥ प्रति अन् च् अस् इत्यत्र **अनिदितां हल उपधायाः क्ङिती**ति नकारलोपे प्रति अच् अस् इति जातं तत्र **अच** इत्यकारलोपे **चौ** इत्यनेन पूर्वस्याणो दीर्घत्वे ॥ प्रतीचः ॥ प्रति अन् च् भ्याम् इत्यत्र **इको यणची**ति यणि **अनिदितां हल उपधायाः क्ङिति** इति नकारलोपे **चोः कु**रिति कवर्गादेशे प्रत्यक्भ्यामिति जातं तत्र **झलां जशोऽन्ते** इति ककारस्य गकारे कृते ॥ प्रत्यग्भ्याम् ॥ उत् अन् च् शस् इत्यत्र शकारस्येत्संज्ञायां लोपे च **अनिदितां हल उपधायाः क्ङिती**ति नकारलोपे उत् अच् अस् इति जातं तत्र **उद ईदि**त्यनेन अकारस्य ईकारादेशे **झलां जशोऽन्ते** इति तकारस्य दकारे संयोगे सस्य रुत्वे रस्य विसर्गत्वे च कृते ॥ उदीचः ॥ एवं ॥ उदीचा ॥ उदन् च् भ्यामित्यत्र **अनिदितां हल उपधायाः क्ङिति** नकारलोपे **चोः कु**रिति कवर्गादेशे उदक् भ्याम् जाते **झलां जशोऽन्ते** इति कस्य गकारे कृते ॥ उदग्भ्याम् ॥ सम् अन् च् इत्यत्र **समः समी**त्यनेन समः स्थाने सम्यादेशो कृते कृते **चेको यणची**ति सूत्रेण यणि सम्यन् च् जाते **ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां** चेति क्विनि क्विनः सर्वस्य लोपे **कृत्तद्धितसमासाश्चे**ति प्रातिपदिकसंज्ञायां सौ सुकारोत्तरवर्त्युकारस्येत्संज्ञायां लोपे च सम्यन् च् स् इति जातं तत्र **अनिदितां हल उपधायाः क्ङिति** इति नकारलोपे **उगिदचां सर्वनामस्थाने धातोः**रिति नुमि उम्भागलोपे **संयोगान्तस्य लोप** इति चकारलोपे **हल्ङ्याब्भ्य** इति सकारलोपे **क्विन्प्रत्ययस्य कु**रिति सूत्रेण कवर्गान्तादेशे च ॥ सम्यङ् ॥ सम् अन् च् शस् इत्यत्र **समः समी**ति समौ समि अन् च् शस् इति जातं तत्र श-

---

१ अचः । अत्र निरनुस्वारनिर्देशादेव वृत्तौ लुप्तनकारस्याञ्चतेरित्यर्थो जातः । २ समः समि । अत्र समोमिडिति न्यासः कार्यः डियेति सूत्रेणान्त्यादेशे सिद्धं सम्यङिति किं गौरवेण सूत्रम् । सम् इत्यस्याव्ययत्वादव्ययसर्वनाम्नामकच् प्राक् टेरित्यनेन सूत्रेण अकचि कृते समकम् इति जातं तत्र तन्मध्यपतितन्यायेन समोग्रहणेन समकोऽपि ग्रहणं स्यात्तथा चान्त्यादेशे समकम्यङिति अनिष्टं प्रसज्येत तद्वान्ते तु समि आदेशस्यानेकाल्त्वादकचोविशिष्टस्यैवादेशे सम्यङिति भाष्यसमर्तं तस्माद्यथोक्तमेव रमणीयम् ॥

वप्रत्ययान्तेऽञ्चतौ । सम्यङ् सम्यञ्चौ समीचः सम्यग्भ्याम् ॥ **सहस्य सध्रिः** ।६।३।९५। तथा सध्र्यङ् ॥ **तिरसस्तिर्यलोपे** ।६।३।९४। अलुप्ताकारेऽञ्चतौ वप्रत्ययान्ते तिरसस्तिर्यादेशः । तिर्यङ् तिर्यञ्चौ तिरश्चः तिर्यग्भ्याम् ॥ **नाञ्चेः पूजायाम्** ।६।४।३०। पूजार्थस्याञ्चतेरुपधाया नस्य लोपो न ॥ प्राङ् प्राञ्चौ । नलोपाभावादलोपो न । प्राञ्चः प्राङ्भ्याम् प्राङ्क्षु । एवं पूजार्थे प्रत्यङ्ङादयः । क्रुङ् क्रुञ्चौ क्रुङ्भ्याम् । प-

---

कारस्येत्संज्ञायां लोपे **अनिदितां हल उपधायाः** इति नलोपे **अच** इति अकारलोपे समिच् अस् इति जाते तत्र **चौ** इति सूत्रेण पूर्वस्याणो दीर्घत्वे संयोगे च ॥ समीचः ॥ एवं समीचा ॥ सम् अन् च् भ्यामित्यत्र **समः समि**ति सम्यादेशे **इको यणचीति** यणि **अनिदितां हल उपधायाः क्ङितीति** नकारलोपे **चोः कु**रित्यनेन कवर्गादेशे कृते कृते च **झलां जशः झशीति** कस्य गत्वे ॥ सम्यग्भ्याम् ॥ सह अन् च् इत्यत्र **ऋत्विग्दधृग्ि**ति क्विनि ककारवकारेकारनकाराणां लोपे प्रातिपदिकत्वात्सौ सकारोत्तरवर्त्युकारलोपे सह अन् च् स् इति जातं तत्र **सहस्य सध्रि**रित्यनेन सध्र्यादेशे **अनिदितां हल उपधाया** इति नलोपे **उगिदचां सर्वनामस्थाने धातो**रिति नुमि उमो लोपे **इको यणची**ति यणि **संयोगान्तस्य लोप** इति चकारलोपे **हल्ङ्याब्भ्य** इति सकारलोपे **क्विन्प्रत्ययस्य कु**रिति कवर्गान्तादेशे च कृते ॥ सध्र्यङ् ॥ एवमग्रेपि ज्ञेयम् ॥ तिरस् अन् च् इत्यत्र **ऋत्विगिति** क्विनि क्विनो लोपे सौ सकारोच्चारणार्थुकारलोपे **हल्ङ्याब्भ्यो दीर्घा**दिति सलोपे **इको यणची**- **तिरसस्तिर्यलोपे** इति तिरि कृते ति यणि तिर्यन् च् इति जाते **अनिदितां हल उपधायाः क्ङिति** इति नलोपे **उगिदचां सर्वनामस्थाने धातो**रिति नुमि उमो लोपे **संयोगान्तस्य लोप**इति चकारलोपे **क्विन्प्रत्ययस्य कु**रिति कवर्गान्तादेशे ॥ तिर्यङ् ॥ तिरस् अन् च् शस् इत्यत्र शकारस्येत्संज्ञायां लोपे **अनिदितां हल उपधायाः क्ङिति** इति नलोपे **अच** इत्यकारलोपे **स्तोः श्चुना श्चु**रिति सस्य शत्वे कृते कृते च संयोगे ॥ तिरश्चः ॥ एवम् ॥ तिरश्चा ॥ तिरस् अन् च् भ्यामित्यत्र **अनिदितां हल उपधाया** इति नलोपे **तिरसस्तिर्यलोपे** इति तिर्यादेशे **इको यणची**ति यणि **चोः कु**रिति कवर्गादेशे **झलां जश् झशीति** जश्त्वे ॥ तिर्यग्भ्याम् ॥ प्र अन् च् शस् इत्यत्र **नाञ्चेः पूजायामि**त्यनेन नकारलोपाभावे **स्तोः श्चुने**ति नस्य ञत्वे संयोगे च कृते ॥ प्राञ्चः ॥ एवमग्रे सम्यङ् सध्र्यङ् तिर्यङ् शब्दावोध्याः । क्रु अन् च् इत्यत्र क्विनि क्विनो लोपे सौ समागते क्रु अन् च् स् इति जातं तत्र **अनिदितां हल उपधायाः क्ङिति** इति नकारलोपे **अच** इत्य-

---

१ तिरसस्तिर्यलोपे । अत्र अलोप इति पदे बहुव्रीहिसमासः । न विद्यते अस्य लोपो यस्मिन्निति विग्रहः । सौत्रत्वात्लुङभावः शकन्ध्वादित्वात् पररूपं च । तदेव मनसि निधाय वृत्तौ अलुप्ताकारेऽञ्चतावित्युक्तम् । उक्तार्थास्वीकारे तु अलोप इत्यस्य लोपाभाव इत्येवार्थः ।

योमुक् पयोमुग् पयोमुचौ पयोमुग्भ्याम् । उगित्त्वान्नुम् ॥ **सान्तमहतः संयोगस्य** ।६।४।१०। सान्तसंयोगस्य महतश्च यो नकारस्तस्योपधाया दीर्घोऽसंबुद्धौ सर्वनामस्थाने । महान् महान्तौ महान्तः । हे महन् महद्भ्याम् ॥ **अत्वसन्तस्य चाधातोः** ।६।४।१४। अत्वन्तस्योपधाया दीर्घो धातुभिन्नासन्तस्य चासंबुद्धौ सौ परे । धीमान् धीमन्तौ धीमन्तः । हे धीमन् । शसादौ महद्वत् । भातेर्डवतुः । डित्त्वसामर्थ्यादभस्यापि टेर्लोपः । भवान् भवन्तौ । शत्रन्तस्य तु भवन् ॥ **उभे अभ्यस्तम्** ।६।१।५। षाष्ठ-

---

कारलोपे **उगिदचां सर्वनामस्थानेधातो**रिति नुमि उमो लोपे **क्विन्प्रत्ययस्य कु**रिति कवर्गान्तादेशे कृते च ॥ क्रुङ् ॥ क्रु अन् च् औ इत्यत्र **अनिदिता**मिति नकारलोपे अच इत्यनेनाकारलोपे **उगिदचां सर्वनामस्थाने धातो**रिति नुमि उम्भागलोपे **स्तोः श्चुना श्चु**रिति नस्य ञत्वे सयोगे च कृते ॥ क्रुञ्चौ ॥ एवमग्रेऽपि बोध्यम् ॥ पयोमुच् स् इत्यत्र **हल्ङ्याब्भ्य** इति सलोपे **चोः कु**रिति चस्य कत्वे **वावसाने** इति कस्य गत्वे ॥ पयोमुग् ॥ पयोमुक् ॥ पयोमुच् भ्यामित्यत्र **चोः कु**रिति चस्य कत्वे **झलां जश् झशि**ति कस्य गत्वे ॥ पयोमुग्भ्याम् ॥ महत् सु इत्यत्र **हल्ङ्याब्भ्यो दीर्घा**दिति सकारलोपे **उगिदचां सर्वनामस्थानेधातो**रिति नुमि उमो लोपे **संयोगान्तस्य लोप** इति तलोपे **सान्तमहतः संयोगस्ये**त्यनेनोपधाया दीर्घत्वे च कृते ॥ महान् ॥ महद्भ्याम् ॥ धीमत् सु इत्यत्र **उगिदचां सर्वनामस्थाने धातो**रिति नुमि उमो लोपे **हल्ङ्याब्भ्य** इति सकारलोपे **संयोगान्तस्य लोप** इति तलोपे **अत्वसंत्यस्य चाधातोः** इत्यनेनोपधाया दीर्घत्वे ॥ धीमान् । धीमन्तौ । धीमन्तः ॥ **भातेर्डवतु**रित्यनेन भाधातोर्डवतौ कृते **चुटू** इत्यनेन डस्येत्संज्ञाया **तस्य लोप** इति डकारलोपे **उपदेशेऽजनुनासिक इत्** इत्यनेन तकारोत्तरवर्त्युकारस्येत्संज्ञाया **तस्य लोप** इत्युकारलोपे **टेः** इत्यनेन भकारोत्तरस्याकारलोपे भवत् इति जाते तत्र प्रातिपदिकसंज्ञायां सौ सान्त पात्युकारलोपे **हल्ङ्याब्भ्य** इति मस्य लोपे **उगिदचामिति** नुमि उमो लोपे **संयोगान्तस्य लोप** इति तकारलोपे **अत्वसन्तस्य चाधातो**रित्यनेनोपधाया दीर्घत्वे च कृते ॥ भवान् ॥ यदा च टटः शतृशानचावित्यनेन भूधातोः शतृप्रत्यये कृते शकारस्य लोपे तकारान्त.पानिन ऋकारस्य लोपे भू अत् इति जाते **तिङ् शित् सार्वधातुक**मिति सार्वधातुकत्वं विधाय **कर्तरि शप्**िति शपि शकारपकारयोर्लोपे च कृते भू अ अत् इति जातम्, तत्र **सार्वधातुकार्धधातुकयो**रिति गुणे **एचोऽयवायाव** इति सूत्रेणावादेशे भव अत् इति जातम्, तत्र **अतो गुणे** इति पररूपादेशे भवत् इति जातं तत्र [illegible]

द्विरुक्तप्रकरणे ये द्वे विहिते ते उभे समुदिते अभ्यस्तसंज्ञे स्तः ॥ **नाभ्यस्ताच्छतुः ।७।१।७८।** अभ्यस्तात्परस्य शतुर्नुम् न । ददत् ददद् ददतौ ददतः ॥ **जक्षित्यादयः षट् ।६।१।६।** षट् धातवोऽन्ये जक्षितिश्च सप्तम एते अभ्यस्तसंज्ञाः स्युः । जक्षत् जक्षद् जक्षतौ जक्षतः । एवं जाग्रत् दरिद्रत् शासत् चकासत् । गुप् गुपौ गुपः गुब्भ्याम् ॥ **त्यदादिषु दृशोऽनालोचने कञ्च ।३।२।६०।** त्यदादिषूपपदेष्वज्ञानार्थाद्दृशेः कञ् स्यात्, चात्क्विन् ॥ **आ[1] सर्वनाम्नः ।६।३।९१।** सर्वनाम्न आकारोऽन्तादेशः स्याद्दृग्दृशवतुषु । तादृशौ तादृशः तादृग्भ्याम् । व्रश्चेति षः । जश्त्वचर्त्वे । विट् विड् विशौ विशः विड्भ्याम् ॥ **नशेर्वा ।८।२।६३।** नशेः कवर्गोऽन्तादेशो वा पदान्ते । नक् नग् नट् नड् नशौ नशः । नग्भ्याम् नड्भ्याम् ॥ **स्पृशोऽनुदके क्विन् ।३।२**

---

**उगिदचां सर्वनामस्थानेऽधातो**रिति नुमि उमो लोपे **हल्ङ्याब्भ्यो दीर्घा**दिति सलोपे **संयोगान्तस्येति** तलोपे च कृते ॥ भवन् ॥ इति रूपं भवति दीर्घत्वं न भवति अत्वन्तत्वाभावात् ॥ ददत् स् इत्यत्र **नाभ्यस्ताच्छतु**रित्यनेन नुमोऽभावे **हल्ङ्याब्भ्य** इति सलोपे च ॥ ददत् ॥ एवं जक्षत् जाग्रत् दरिद्रत् शासत् चकासत् दीध्यत् वेव्यत् इत्यादि शब्दानामपि **जक्षित्यादयः षट्** इत्यनेनाभ्यस्तसंज्ञायां जातायां **नाभ्यस्ताच्छतु**रिति नुमोऽभावे ददत् वद्रूपाणि ज्ञेयानि । तादृशशब्दोऽस्त्यग्रे **त्यदादिषु दृशोऽनालोचने कञ्चे**त्यनेन कनि क्विनि च जाते सर्वस्यापि कनः क्विनश्च लोपे **कृत्तद्धितसमासाश्चेति** प्रातिपदिकतायां प्रथमैकवचने सौ समागते तद् दृश् सु इति जातम्, तत्र **आ सर्वनाम्न** इति सूत्रेणाकारान्तादेशे कृते कृते **चाकः सवर्णे दीर्घ** इति दीर्घे तादृश् स् इति जातम्, तत्र **हल्ङ्याब्भ्य** इति सलोपे **व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां ष** इत्यनेन शस्य षत्वे **झलां जशोऽन्ते** इति षस्य डत्वे **क्विन्प्रत्ययस्य कुरि**त्यनेन डस्य गत्वे **वावसाने** इति गस्य कत्वे च कृते ॥ तादृक् । तादृग् । तादृशौ । तादृशः । तादृग्भ्याम् ॥ इत्यादि विश् सु इत्यत्र **व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां ष** इत्यनेन शकारस्य षत्वे **झलां जशोऽन्ते** इति षस्य डत्वे **वावसाने** इत्यनेन डस्य टत्वे ॥ विट् पक्षे विड् ॥ विशौ ॥ विशः ॥ विड्भ्याम् ॥ इत्यादि ॥ नश् सु इत्यत्र **व्रश्चेति** शस्य षत्वे **झलां जशोऽन्ते** इति षस्य डत्वे **हल्ङ्याब्भ्य** इति सकारलोपे नड् इति जातं तत्र **नशेर्वा** इत्यनेन डस्य कुत्वेन गत्वे **वावसाने** इत्यनेन गस्य कत्वे ॥ नक् ॥ चर्त्वाभावे ॥ नग् ॥ कुत्वाभावे चर्त्वे च ॥ नट् ॥ चर्त्वाभावे च ॥ नड् ॥ नशौ ॥ नशः ॥ नग्भ्याम् ॥

---

१ आ सर्वनाम्नः । न चानेन शास्त्रेण सर्वदृक् विश्वदृगित्यादिष्वात्वं कस्मान्न भवतीति वाच्यम् । त्यदादिषु दृशोऽनालोचने कञ्चेति सूत्रात्त्यदादिपदस्यानुवृत्त्यैव सिद्धेः । अनुवृत्त्यैवेष्टसिद्धौ सर्वनामग्रहणं तु विष्वग्देवयोश्च टेरद्र्यञ्चतौ वप्रत्यये इत्यस्मिन्ननुवृत्त्यर्थम् ।

।५८। अनुदके सुप्युपपदे स्पृशेः क्विन् । घृतस्पृक् घृतस्पृग् घृतस्पृशौ घृतस्पृशः । दधृक् दधृग् दधृषौ दधृग्भ्याम् । रत्नमुट् रत्नमुड् रत्नमुषौ रत्नमुड्भ्याम् । षट् षड् षड्भिः षड्भ्यः षण्णाम् षट्सु । रुत्वं प्रति षत्वस्यासिद्धत्वात्ससजुषो रुरिति रुत्वम् ॥ **र्वोरुपधाया दीर्घ इकः** ।८।२।७६। रेफवान्तयोरुपधाया इको दीर्घः पदान्ते । पिपठीः

---

भ्याम् ॥ इत्यादि ॥ घृतस्पृश् इत्यत्र **स्पृशोऽनुदके क्विनिति** क्विनि क्विनो लोपे प्रातिपदिकत्वात्सौ सकारस्य **हल्ङ्याब्भ्य** इति लोपे **व्रश्चे**ति शस्य षत्वे **झलां जशोन्ते** इति षस्य डत्वे **क्विन्प्रत्ययस्य कुरि**त्यनेन डस्य गत्वे **वावसाने** इति गस्य चर्त्वेन कत्वे ॥ घृतस्पृक् ॥ चर्त्वाभावे ॥ घृतस्पृग् । घृतस्पृशौ । घृतस्पृशः ॥ इत्यादि दधृष् इत्यत्र **ऋत्विग्दधृगि**त्यनेन क्विनि क्विनो लोपे प्रातिपदिकत्वात्सौ सकारस्य च **हल्ङ्याब्भ्य** इति लोपे **झलां जशोन्ते** इति षस्य डत्वे **क्विन्प्रत्ययस्य कुरि**ति डस्य गत्वे **वावसाने** इत्यनेन गस्य कत्वे ॥ दधृक् ॥ चर्त्वाभावे ॥ दधृग् ॥ दधृषौ ॥ दधृषः ॥ दधृग्भ्याम् ॥ इत्यादि ॥ रत्नमुष् सु इत्यत्र **हल्ङ्याब्भ्य** इति सकारलोपे **झलां जशोन्ते** इति षस्य डत्वे **वावसाने** इति डस्य टत्वे ॥ रत्नमुट् ॥ पक्षे ॥ रत्नमुड् ॥ रत्नमुषौ ॥ रत्नमुषः ॥ रत्नमुड्भ्याम् ॥ इत्यादि ॥ षष् सु इत्यत्र **हल्ङ्याब्भ्य** इति सकारलोपे **झलां जशोन्ते** इति षस्य डत्वे **वावसाने** इति डस्य टत्वे ॥ षट् । पक्षे । षड् ॥ षष् आमित्यत्र **षट्चतुर्भ्यश्चे**ति नुटि उटो लोपे **झलां जशोन्ते** इति षस्य डत्वे **ष्टुना ष्टुरि**ति नस्य णत्वे षड्णामिति जाते तत्र **प्रत्यये भाषायां नित्य**मित्यनेन डस्य णत्वे ॥ षण्णाम् ॥ षष् सुप् इत्यत्र **झलांजशोऽन्ते** इति षस्य डत्वे **ङ्णोः कुक्टुक् शरि**, ... **डः सि धुट्** इति धुटि उटो लोपे **खरि चे**ति धस्य तत्वे पुनश्च **खरि चे**ति डस्य टत्वे कृते ॥ षट्त्सु । धुडभावे । षट्सु ॥ पिपठिस् सु इत्यत्र **हल्ङ्याब्भ्यो दीर्घा**दिति सकारलोपे **आदेशप्रत्यययो**रिति मूर्धन्यादेशे तस्यासिद्धत्वात् **ससजुषोरु**रित्यनेन षस्य रुत्वे **उपदेशोऽजनुनासिक इत्** इत्यनेन रकारोत्तरवर्त्युकारलोपे पिपठिर् इति जाते ■न **र्वोरुपधाया दीर्घ इक** इत्यनेनोपधाभूतठकारोत्तरवर्तिनीकारे दीर्घे कृते **खरवसानयोर्विसर्जनीय** इत्यनेन रस्य विसर्गत्वे च कृते ॥ पिपठीः ॥ पिपठिस् औ इत्यत्र **आदेशप्रत्यययो**रिति सस्य षत्वे सयोगे च कृते ॥ पिपठिषौ ॥ पिपठिस् भ्याम् इत्यत्र **ससजुषोरु**रित्यनेन सस्य रुत्वे रकारोत्तरवर्त्युकारलोपे **र्वोरुपधाया दीर्घ इक** इति ठकारोत्तरवर्तिन इकारस्य दीर्घत्वे ॥ पिपठीर्भ्याम् ॥ पिपठिस् सु इत्यत्र **ससजुषोरु**रित्यनेन सस्य रुत्वे **र्वोरुपधाया दीर्घ इक** इति दीर्घत्वे **खरवसानयोर्विसर्जनीय** इति रस्य

---

१ स्पृशोऽनुदके क्विन् । अनुदके किमुदकस्पर्शः । २ र्वोरुपधाया दीर्घ इक । अत्र सिपि धातोरि त्यतो धातोरित्यनुवर्तते तच्च र्वोभ्यां विशेष्यते तथा च धातोर्वोरुपधाया इको दीर्घस्तेन हरिभिरित्यादौ न दीर्घः ।

शनसौ उशनोभ्याम् उशनःसु । अनेहा अनेहसौ हे अनेहः । वेधाः वेधसौ हे वेधः वेधोभ्याम् ॥ **अदस औ सुलोपश्च** ।७।२।१०७। अदस औत्स्यात्सौ परे सुलोपश्च । तदोरिति सः । असौ । त्यदाद्यत्वं पररूपत्वम् वृद्धिः ॥ **अदसोऽसेर्दादु दो मः** ।८।२।८०। अदसोऽसान्तस्य दात्परस्य उदूतौ स्तो दस्य मश्च । आन्तरतम्याद्ध्र-

---

इत्यनेनोपधाया दीर्घत्वे **नलोपः प्रातिपदिकान्तस्ये**ति नलोपे च कृते ॥ उशना ॥ हे पूर्वकोशनस् सु इत्यत्र **हल्ङ्याब्भ्य** इति सलोपे **अस्य संबुद्धौ वानङ्नलोपश्चे**ति वार्तिकेनान्त्यस्य सकारस्यानङि कृते कृते च नलोपे ॥ हे उशन ॥ वाग्रहणात् नलोपाभावे ॥ हे उशनन् ॥ अनङादेशाभावे सस्य रुत्वे रस्य विसर्गत्वे च ॥ हे उशनः ॥ उशनस् भ्यामित्यत्र **ससजुषो रु**रिति सस्य रुत्वे **हशि चे**त्यनेन रोरुत्वे **आद्गुण** इति गुणे च कृते ॥ उशनोभ्याम् ॥ एवमेव ॥ अनेहा ॥ अनेहसौ ॥ हे अनेहः ॥ इत्यादि ॥ वेधस् सु इत्यत्र **अत्वसन्तस्य चाधातो**रित्यनेनोपधाया दीर्घत्वे **हल्ङ्याब्भ्य** इति प्रत्ययसकारलोपे **ससजुषो रु**रिति सस्य रुत्वे रस्य विसर्गत्वे च ॥ वेधाः ॥ अदस् सु इत्यत्र **अदस औ सुलोपश्चे**त्यनेन सस्य स्थाने औकारे जाते सकारलोपे च अद औ इति जातम्, तत्र **तदोः सः सावनन्त्ययो**रिति दस्य सकारे **वृद्धिरेची**ति वृद्धौ च ॥ असौ ॥ अदस् औ इत्यत्र **त्यदादीनामः** इति अकारे अद अ औ इति जाते तत्र **अतो गुणे** इति पररूपे अद औ इति जाते **वृद्धिरेची**त्यनेन वृद्धौ अदौ इति जाते तत्र **अदसोऽसेर्दादु दो मः** इति सूत्रेणौकारस्य ऊकारे दकारस्य च मकारे कृते ॥ अमू ॥ अदस् जस् इत्यत्र **त्यदादीनामः** इति अकारे **अतो गुणे** इति पररूपत्वे **जसः शी**ति जस शीकारे शकारस्येत्संज्ञाया लोपे च कृते अद ई इति जाते **आद्गुण** इति गुणे अदे इति जाते तत्र **एत ईद्बहुवचने** इत्यनेन एकारस्य ईकारे दकारस्य च मकारे कृते ॥ अमी ॥ अदस् अम् इत्यत्र यद्यपि **अदसोऽसेर्दादु दो मः** इति सूत्रं प्राप्तं परं च **पूर्वत्रासिद्धम्** इति सूत्रेण तस्यासिद्धत्वात्प्रथमं **त्यदादीनामः** इत्यत्वे **अतो गुणे** इति पररूपे **अमि पूर्वः** इति पूर्वरूपे अदम् इति जाते तत्र **अदसोऽसेर्दादु दो मः** इति दकारस्य मकारे अकारस्य च उत्वे कृते ॥ अ-

---

१ अदस औ सुलोपश्च । ननु सोरेवौकारो विधीयतां त्यदाद्यत्वेनासाविति सिद्धं किं सुलोपविधानेन । मैवम् । असकौ इत्यत्र असक अ औ इत्यवस्थायामतो गुणे कृते त्यापि प्रत्ययस्थेति सूत्रेणेत्त्वापत्तिः । टाबन्ते तु अदन्तत्वाभावादेव न टाप् । इति मनोरमायाम् । अदस सोर्डौ इति न सूत्रितं टिलोपे कृते नित्यत्वात्त्यदाद्यत्वं बाधित्वा त्यदाद्यत्वेऽप्यावित्यसिद्धेरिति शेखरे प्रतिपादितम् । न च तदोः स इति सूत्रेण दकारस्य सत्वविधानात्तदाद्यत्वं नेति वाच्यम् । असकावित्यत्र चरितार्थत्वात् । अत्रोच्यते । डौ आदेशस्तदाद्यपवादः सत्यपि संभवे बाधनं भवतीति न्यायेन । एवं च टिलोपापेक्षया परत्वात्त्वे पुनः प्रसङ्गविज्ञानाट्टिलोपे असौ इत्यस्य सिद्धिः । सकृद्गतिन्यायेनौकारे तु नित्यत्वाट्टिलोपे कृते न दोषः । तदोरिति सूत्रे सकृद्गतिन्यायेन अदस इति विभज्य सत्वविधायकनियमेन गाण्वेऽनन्त्यग्रहणप्रत्याख्यानेन सत्वसिध्याऽदोषात् ।

स्वस्य उः दीर्घस्य ऊः । अमू । जसः शी । गुणः ॥ **एतईद्बहुवचने** ।८।२।८१। अदसो दात्परस्यैत ईद्दस्य मो बह्वर्थोक्तौ । अमी । पूर्वत्रासिद्धमिति विभक्तिकार्यं प्राक् पश्चादुत्वमत्वे । अमुम् अमू अमून् । मुत्वे कृते घिसंज्ञायां नाभावः ॥ **न मुने** ।८।२।३।

---

मुम् ॥ अदस् शस् इत्यत्र **लशक्वतद्धिते** इति शकारस्येत्संज्ञायां **तस्य लोप** इति शस्य लोपे अदस् अस् इति जातं तत्र **त्यदादीनाम** इत्यकारे **अतोगुणे** इत्यनेन प्राप्तं पररूपं बाधित्वा **प्रथमयोः पूर्वसवर्ण** इति पूर्वसवर्णदीर्घादेशे **तस्माच्छसो नः पुंसि** इति सकारस्य नकारे अदान् इति जातं तत्र **अदसोऽसेर्दादुदोम** इति दकारस्य मकारे आकारस्य ऊकारे च कृते ॥ अमून् ॥ अदस् टा इत्यत्र **त्यदादीनाम** इत्यकारे **अतो गुणे** इति पररूपत्वे **अदसोऽसेर्दादुदोम** इति दस्य मकारे अकारस्य च उकारे अमु टा इति जातं तत्र **शेषोध्यसखी**ति घिसंज्ञायां कृतायां कृते च **आङो नाऽस्त्रि-याम**मित्यनेन टाकारस्य नाकारे । अमुना । इति जातं परंतु मुभावस्य घिसंज्ञाविधायकशास्त्रस्याग्रे असिद्धत्वात् घिसंज्ञाया अप्यसिद्धत्वे प्राप्ते **नमुने** इत्यनेन मुभावस्य सिद्धत्वात् घिसंज्ञायां सिद्धायां नाभावे जाते ॥ अमुना । अदस् अग्रे तृतीयाद्विवचने भ्यामि समागते **त्यदादी-नाम** इत्यनेन सस्यात्वे **अतो गुणे** इति पररूपत्वे **सुपि चे**ति दीर्घे **अदसोऽसे-र्दादुदोम** इत्यनेन दान्तःपात्याकारस्योत्वे दस्य मत्वे च ॥ अमूभ्याम् ॥ अदस् अग्रे तृतीयाया बहुवचने भिसि **त्यदादीनाम** इति सस्यात्वे **अतो गुणे** इति पररूपत्वे **बहु-वचने झल्येदि**ति दस्यैत्वे **एत ईद्बहुवचने** इत्यनेन एकारस्य ईकारे दस्य च मत्वे ॥ अमीभिः ॥ अदस् अग्रे चतुर्थ्येकवचने ङे समागते **त्यदादीनाम** इत्यत्वे **अतो गुणे** इति पररूपत्वे **सर्वनाम्नः स्मै** इत्यनेन स्मै कृते **अदसोसेर्दादुदोम** इति दस्य मत्वे तदुत्तरवर्त्यकारस्य चोत्वे **आदेशप्रत्यययो**रिति मूर्धन्यादेशे च कृते ॥ अमुष्मै ॥ एवं पञ्चम्या एकवचने ङसौ समागते **त्यदादीनाम** इत्यकारे **अतो गुणे** इति पररूपे **ङसि-ङ्योः स्मात्स्मिना**विति ङसेः स्मात् कृते **अदसोऽसेर्दादुदोम** इति दस्य मत्वे दकारान्तःपात्यकारस्योत्वे च **आदेशप्रत्यययो**रिति सस्य षत्वे च अमुष्मात् ॥ **षष्ठ्येक-**वचने ङसि **त्यदादीनाम** इत्यत्वे **अतो गुणे** इति पररूपत्वे **टाङसिङसामिना-त्स्या** इति ङसः स्यादेशे **अदसोऽसेर्दादुदोम** इति दस्य मत्वे तदुत्तरवर्त्यकारस्योत्वे **आदेशप्रत्यययो**रिति सस्य षत्वे ॥ अमुष्य ॥ अदस् अग्रे ङौ इत्यत्र **त्यदादीनाम** इति अत्वे **अतो गुणे** इति पररूपत्वे **ङसिङ्योः स्मात्स्मिनौ** इति ङेः स्मिन्कृते

---

१–नमुने अत्र ने इति विषयसप्तमीत्यत आह नाभावे कर्तव्य इति । अन्यथा घेः परत्वाभावान्नाभावो न स्यादिति भावः । नन्वेवमपि कृते नाभावे सुपि चेति दीर्घः स्याद्दीर्घं प्रति मुत्वस्यासिद्धत्वादत आह कृते चेति । अथवा सन्निपातपरिभाषया समाधेयम् ॥ इतिम०

नाभावे कर्तव्ये कृते च मुभावो नासिद्धः । अमुना अमूभ्यां अमीभिः अमुष्मै अमीभ्यः अमुष्मात् अमुष्य अमुयोः अमीषाम् अमुष्मिन् ॥ इति हलन्ताः पुंलिङ्गाः ॥

## ॥ अथ हलन्तस्त्रीलिङ्गप्रकरणम् ॥

**नहो धः** ।८।२।३४। नहो हस्य धः स्याज्झलि पदान्ते च ॥ **नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ** ।६।३।११६। क्विबन्तेषु पूर्वपदस्य दीर्घः । उपानत् उपानहौ उपानत्सु । क्विन्नन्तत्वात्कुत्वेन घः । उष्णिक् उष्णिहौ उष्णिग्भ्याम् । द्यौः दिवौ दिवः द्युभ्याम् । गीः गिरौ गिरः । एवं पूः । चतस्रः चतसृणाम् । का के काः । सर्वावत् ॥ **यः सौ** ।७।२।११०। इदमो दस्य यः । इयम् । त्यदाद्यत्वं पररूप-

---

**अदसोसेर्दादु दोमः** इति दस्य मत्वे दान्तःपातिसकारस्योत्वे **आदेशप्रत्यययोः** रिति सस्य षत्वे च ॥ अमुष्मिन् ॥ इति संपूर्णतामगच्छन् हलन्ताः पुंलिङ्गाः ॥

उपपूर्वकनहधातोः क्विपि ककारपकारेकाराणां लोपे **वेरपृक्तस्ये**ति वकारलोपे **नहो धः** इति हस्य धत्वे सौ समागते **नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ** इत्यनेन पूर्वपदस्य दीर्घत्वे **हल्ङ्याब्भ्य** इति सलोपे **झलां जशोऽन्ते** इति धस्य दत्वे **वावसाने** इति दस्य तत्वे ॥ उपानत् ॥ पक्षे ॥ उपानद् ॥ उष्णिह्शब्दो वर्तते तत्र **ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां चे**ति क्विनि क्विनो लोपे प्रातिपदिकत्वात्सौ **हल्ङ्याब्भ्य** इति सुलोपे **क्विन्प्रत्ययस्य कुः** रित्यनेन हस्य घत्वे **झलां जशोऽन्ते** इति घस्य गत्वे **वावसाने** इति गस्य कत्वे ॥ उष्णिक् ॥ पक्षे ॥ उष्णिग् ॥ दिव् अत्रे सु इत्यत्र **दिव औ**दित्यनेन वकारस्यौकारे **इको यणची**ति यणि सस्य रुत्वे रस्य विसर्गत्वे च ॥ द्यौः ॥ गिर् सु इत्यत्र **हल्ङ्याब्भ्य** इति सलोपे **र्वोरुपधाया दीर्घ इकः** इति यकारोत्तरवर्तिन इकारस्य दीर्घत्वे **खरवसानयोर्विसर्जनीय** इति रस्य विसर्गत्वे ॥ गीः ॥ एवं ॥ पूः ॥ चतुर् जस् इत्यत्र **चुटू** इति जस्येत्संज्ञायां **तस्य लोप** इति जस्य लोपे **त्रिचतुरोः स्त्रिया**मित्यनेन चतुर्शब्दस्य चतसृ इत्यादेशे कृते **अचि र ऋतः** इति ऋकारस्य रेफत्वे सस्य रुत्वे रस्य विसर्गत्वे च ॥ चतस्रः ॥ चतुर् आम् इत्यत्र **त्रिचतुरोः स्त्रिया**मिति चतसादेशे चतसृ आम् इति जाते तत्र **ह्रस्वनद्यापो नुट्** इति नुटि उटि गते नकारस्याकारेण सह संयोगे **नामी**ति दीर्घत्वे प्राप्ते **न तिसृचतसृ** इति दीर्घाभावे च कृते **ऋवर्णान्नस्य णत्वं वाच्य**मित्यनेन नस्य णत्वे ॥ चतसृणाम् ॥ किं सु इत्यत्र **किमः क** इत्यनेन ककारादेशे **अजाद्यतष्टाप्** इति टापि **चुटू** इति टकारस्येत्संज्ञायां **तस्य लोप** इति लोपे **अकः सवर्णे दीर्घ** इति दीर्घादेशे **हल्ङ्याब्भ्य** इति सलोपे ॥ का ॥ इदम् सु इत्यत्र **यः सौ** इत्यनेन दस्य यत्वे **हल्ङ्याब्भ्य** इति सकारलोपे ॥ इयम् ॥ इदम् औ इत्यत्र **त्यदादीनाम** इत्यकारे **अतो गुणे** पररूपत्वे **अजाद्यतष्टाप्**

त्वम् । टाप् । दश्चेति मः । इमे इमाः इमाम् अनया । हलि लोपः । आभ्याम् आभिः अस्यै अस्याः अनयोः आसाम् अस्याम् आसु । त्यदाद्यत्वम् टाप् । स्या स्ये स्याः । एवं तद् एतद् । वाक् वाग् वाचौ वाग्भ्याम् वाक्षु । अप्शब्दो नित्यं बहुवचनान्तः । अप्तृन्निति दीर्घः । आपः अपः ॥ **अपो भि ।७।४।४८।** अपस्तकारो भादौ प्रत्यये । अद्भिः अद्भ्यः अपाम् अप्सु । दिग् दिक् दिशः दिग्भ्याम् । त्यदादिष्विति दृशेः क्विन्विधानादन्यत्रापि

---

इत्यापि इदा औ इति जातं तत्र **दश्च** इत्यनेन दस्य मत्वे **औङ आपः** इत्यनेनौकारस्य शीकारे शकारलोपे **आद्गुणः** इति गुणे ॥ इमे ॥ इदम् जस् इत्यत्र जस इत्संज्ञायां लोपे **त्यदादीनाम** इत्यत्वे **अतो गुणे** इति पररूपत्वे **अजाद्यतष्टाप्** इति टापि **इदमो मः** इति दस्य मत्वे **अकः सवर्णे दीर्घः** इति दीर्घत्वे सस्य रुत्वे रस्य विसर्गे च ॥ इमाः ॥ इदम् टा इत्यत्र **अनाप्यकः** इत्यनेन इदम इद्भागस्य अनादेशे **त्यदादीनाम** इति मकारस्यात्वे **अतो गुणे** इति पररूपत्वे **अजाद्यतष्टाप्** इति टापि टलोपे पूर्वसवर्णदीर्घादेशे **आङि चापः** इति आकारस्यैकारे **एचोऽयवायावः** इति अयादेशे ॥ अनया ॥ इदम् भ्यामित्यत्र **त्यदादीनाम** इति अकारे **अतो गुणे** इति पररूपे **अजाद्यतष्टाप्** इति टापि पूर्वसवर्णदीर्घत्वे **हलि लोपः** इति इद्भागलोपे च कृते ॥ आभ्याम् ॥ इदम् ङे इत्यत्र **त्यदादीनाम** इति मकारस्याकारे **अतो गुणे** इति पररूपत्वे **अजाद्यतष्टाप्** इति टापि **सर्वनाम्नः स्याड् ह्रस्वश्च** इत्यनेन स्याटि आपो ह्रस्वत्वे च कृते इदस्या ङे इति जातं तत्र **हलि लोपः** इति इद्भागलोपे ङकारस्येत्संज्ञायां लोपे **वृद्धिरेचि** इति वृद्धौ च कृतायाम् ॥ अस्यै । एवम् । अस्याः ॥ इदम् ओस् इत्यत्र **त्यदादीनाम** इत्यत्वे **अजाद्यतष्टाप्** इत्यापि सवर्णदीर्घत्वे इदा ओस् इति जातं तत्र **अनाप्यकः** इति सूत्रेण इद्भागस्य अनादेशे **आङि चापः** इति नकारान्तःपात्याकारस्यैकारे **एचोऽयवायावः** इति अयादेशे सस्य रुत्वे रस्य विसर्गे च ॥ अनयोः ॥ त्यद् सु इत्यत्र **त्यदादीनाम** इति मस्यात्वे **अतो गुणे** इति पररूपत्वे **अजाद्यतष्टाप्** इत्यापि **तदोः सः सावनन्त्ययोः** इति, सकारादेशे **हल्ङ्याब्भ्यः** इति सुलोपे च ॥ स्या ॥ तद्एतद्शब्दयोः ॥ सा । एषा । इति प्रथमैकवचनं । वाच् सु इत्यत्र **हल्ङ्याब्भ्यः** इति सुलोपे **चोः कुः** इति चकारस्य ककारे **झलां जशोऽन्ते** इति ककारस्य गकारे । वाग् । **वावसाने** इत्यनेन पाक्षिके ककारे ॥ वाक् ॥ अप् जस् इत्यत्र **अप्तृन्तृच्स्वसृ** इत्यनेनोपधाया दीर्घत्वे जस इत्संज्ञायां लोपे संयोगे सस्य रुत्वे रस्य विसर्गे च ॥ आपः ॥ शसि ॥ अपः ॥ अप् भिस् इत्यत्र **अपो भि** इत्यनेन पकारस्य तकारे **झलां जशोऽन्ते** इति तकारस्य दकारे सस्य रुत्वे रस्य विसर्गे च ॥ अद्भिः ॥ दिश् इत्यत्र **ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां**

---

१ अपो भि । अत्र सूत्रे भादौ प्रत्यय इत्यर्थस्तु (यस्मिन्विधिस्तदादावल्ग्रहणे) अल्ग्रहणे सप्तम्यन्ते यो विधिर्विधीयते स तदादौ ज्ञेय इत्यनया परिभाषया बोध्यः ।

कुलम् । दृक् दृग् दृशौ दृग्भ्याम् । लिट् लिड् लिशौ लिड्भ्याम् । ससजुषोरुरिति रुत्वम् । सजूः सजुषौ सजूर्भ्याम् । आशीः आशिषौ आशीर्भ्याम् । असौ । उत्वमत्वे । अमू अमूः अमुया अमूभ्याम् अमूभिः अमुष्यै अमूभ्यः अमुष्याः अमुयोः अमूषां अमुष्याम् अमूषु ॥ इति हलन्ताः स्त्रीलिङ्गाः ॥

---

न्वेति क्विनि क्विनो लोपे प्रातिपदिकत्वात्सौ समागते **हल्ङ्याब्भ्य** इति सकारलोपे **क्विन्प्रत्ययस्य** कुरिति कवर्गान्तादेशे **झलां जशोऽन्ते** इति कस्य गत्वे **वावसाने** इति गस्य कत्वे दिक् ॥ वाग्रहणात् ॥ दिग् ॥ एवमेव दृश्शब्दात् **त्यदादिषु दृशोऽनालोचने कञ्चे**ति क्विन्विधानादन्यत्रापि कुत्वम् इति कुत्वे कस्य गत्वे गस्य **वावसाने** इति कत्वे । दृक् ॥ पक्षे ॥ दृग् ॥ लिह् सु इत्यत्र **झलां जशोऽन्ते** इति धस्य डत्वे **वावसाने** इति डस्य टत्वे सुलोपे च ॥ लिट् ॥ लिड् ॥ सजुष् सु इत्यत्र **हल्ङ्याब्भ्य** इति सलोपे **ससजुषोरु**रिति षस्य रुत्वे उकारलोपे **र्वोरुपधाया दीर्घ इक** इति अकारोत्तरवर्त्युकारदीर्घत्वे **खरवसानयोर्विसर्जनीय** इति विसर्गे ॥ सजूः ॥ आशिष् सु इत्यत्र सुलोपे षत्वस्यासिद्धत्वात्**ससजुषोरु**रितिरुत्वे उत्वे गते **र्वोरुपधाया दीर्घ इक** इत्युपधादीर्घत्वे **खरवसानयोर्विसर्जनीय** इति रस्य विसर्गत्वे ॥ आशीः ॥ आशिष् औ संयोगे च ॥ आशिषौ ॥ आशिष् भ्यामित्यत्र षत्वस्यासिद्धत्वात् **ससजुषो रु**रिति सस्य रुत्वे उत्वे गते **र्वोरुपधाया दीर्घ इक** इति उपधादीर्घत्वे च ॥ आशीर्भ्याम् ॥ अदस् सु इत्यत्र **अदस औ सुलोपश्चे**त्यनेन सस्य औत्वे सुलोपे च कृते अद औ इति जातं तत्र **तदोः सः सावनन्त्ययो**रिति दस्य सकारे **वृद्धिरेची**ति वृद्धौ ॥ असौ ॥ अदस् औ इत्यत्र **त्यदादीनाम** इत्यत्वे **अतो गुणे** इति पररूपत्वे वृद्धौ अदौ इति जातं तत्र **अदसोऽसेर्दादु दो मः** इति दस्य मत्वे दकारान्तःपात्यौकारस्य ऊकारत्वे च कृते ॥ अमू ॥ एवम् ॥ अमूः ॥ अदस् टा इत्यत्र **त्यदादीनाम** इति अत्वे **अतो गुणे** इति पररूपत्वे **अजाद्यतष्टाप्**यापि सवर्णदीर्घत्वे **आङि चाप** इत्येकारे **एचोऽयवायावः** इति अयादेशे अदया इति जातं तत्र **अदसोऽसेर्दादु दो मः** इति दस्य मत्वे तदुत्तरवर्त्यकारस्य चोत्वे ॥ अमुया ॥ अदस् भ्यामित्यत्र त्यदाद्यत्वे पररूपत्वे **अजाद्यतष्टाप्**येति टापि सवर्णदीर्घत्वे च अदाभ्यामिति जातं तत्र **अदसोऽसेर्दादु दो मः** इति दस्य मत्वे आकारस्य च ऊकारत्वे ॥ अमूभ्याम् ॥ एवम् ॥ अमूभिः ॥ अदस् ङे इत्यत्र ङकारस्येत्संज्ञायां लोपे त्यदाद्यत्वे पररूपत्वे **अजाद्यतष्टाप्** टापि सवर्णदीर्घत्वे अदा ए इति जातं तत्र **सर्वनाम्नः स्याड् ढ्रस्वश्चे**ति स्याटि ह्रस्वत्वे च वृद्धौ **अदसोऽसेर्दादु दो मः** इति दस्य मत्वे तदुत्तरवर्त्यकारस्योत्वे सस्य षत्वे च ॥ अमुष्यै ॥ अदस् ओस् इत्यत्र त्यदाद्यत्वे पररूपत्वे टापि सवर्णदीर्घत्वे **आङि चाप** इत्येकारे **एचोऽयवायावः** इत्ययादेशे संयोगे सस्य रुत्वे रस्य विसर्गत्वे च अदयोः इति जातं तत्र **अदसोऽसेर्दादु दो मः** इति दस्य मत्वे दकारान्तःपात्यकारस्य चोत्वे ॥ अमुयोः ॥ अदस्

## ॥ अथ हलन्तनपुंसकलिङ्गप्रकरणम् ॥

स्वमोर्लुक् । दलम् । स्वनडुद् स्वनडुत् स्वनडुही । चतुरनडुहोरित्याम् । स्वनड्वांहि । पुनस्तद्वत् शेषं पुंवत् । वाः वारी वारि वार्भ्याम् । चत्वारि । किम् के कानि । इदम् इमे इमानि । ( अन्वादेशे नपुंसके एनद्वक्तव्यः ) एनत् एने एनानि । एनेन एनयोः ।

---

ङि इत्यत्र त्यदाद्यत्वे पररूपत्वे **अजाद्यतष्टाप्**इति टापि पूर्वसवर्णदीर्घत्वे **सर्वनाम्नः स्याड् ह्रस्वश्चे**ति स्याटि आपो ह्रस्वत्वे अदस्या ङि इति जातं तत्र **ङेराम्नद्याम्नीभ्य** इति ङेरामादेशे पूर्वसवर्णदीर्घत्वे च अदस्यामिति जातं तत्र **अदसोसेर्दादु दो म** इति दस्य मत्वे तदुत्तरवर्त्यकारस्योत्वे **आदेशप्रत्यययो**रिति सस्य षत्वे च कृते ॥ अमुष्याम् ॥ अदस् सुप् इत्यत्र त्यदाद्यत्वे पररूपत्वे टापि दीर्घत्वे अदा सु इति जातं तत्र **अदसोसेर्दादु दो म** इति दस्य मत्वे तदन्तर्वर्त्याकारस्य चोत्वे **आदेशप्रत्यययो**रिति सस्य षत्वे च कृते ॥ अमूषु ॥ इति हलन्ताः स्त्रीलिङ्गाः संपूर्णाः ॥

स्वनडुह् सु इत्यत्र स्वमोर्लुक् इति सुलोपे **वसुस्रंसुध्वंस्वनडुहां द** इति हस्य दत्वे **वावसाने** इति दस्य तकारे ॥ स्वनडुत् ॥ स्वनडुद् ॥ स्वनडुह् औ इत्यत्र **नपुंसकाच्चे**त्यनेनौकारस्य शीकारे शकारस्येत्संज्ञायां लोपे च कृते कृते च संयोगे ॥ स्वनडुही ॥ स्वनडुह् जस् इत्यत्र **जश्शसोः शि**रित्यनेन जसः स्थाने शिकारे **शि सर्वनामस्थान**मिति शिकारस्य सर्वनामस्थानत्वे **चतुरनडुहोराम्नुदात्त** इति आमि **इको यणची**ति यणि च कृते स्वनड्वाह् शि इति जातं तत्र **नपुंसकस्य झलच** इति नुमि उभो लोपे शकारस्येत्संज्ञायां लोपे संयोगे **नश्चापदान्तस्य झली**ति नस्यानुस्वारे ॥ स्वनड्वांहि ॥ वार् सु इत्यत्र **स्वमोर्लुक्** इति सुलोपे **खरवसानयोर्विसर्जनीय** इति रस्य विसर्गे ॥ वाः ॥ वार् औ इत्यत्र **नपुंसकाच्चे**ति औकारस्य ईकारे संयोगे च ॥ वारी ॥ वार् जस् इत्यत्र **जश्शसोः शि**रिति जसः शौ शकारस्येत्संज्ञायां लोपे रस्येकारेण सह संयोगे कृते ॥ वारि ॥ चतुर् जस् इत्यत्र **जश्शसोः शि**रिति जसः शौ शकारस्येत्संज्ञायाम् **चतुरनडुहोराम्नुदात्त** इत्यामि मलोपे **इको यणची**ति यणि संयोगे च ॥ चत्वारि ॥ किम् सु इत्यत्र **स्वमोर्लुक्** इति सुलोपे ॥ किम् ॥ किम् औ इत्यत्र **किमः क** इत्यनेन किमः कादेशे **नपुंसकाच्चे**ति औकारस्य शीकारे शकारलोपे **आद्गुण** इति गुणे च ॥ के ॥ किम् जस् इत्यत्र **जश्शसोः शि**रिति जसः शित्वे शकारस्येत्संज्ञायां लोपे **किमः क** इति किमः कादेशे क इ इति जातं तत्र **नपुंसकस्य झलच** इति नुमि उमो लोपे **सर्वनामस्थाने चासंबुद्धौ** इति नान्तोपधादीर्घत्वे संयोगे च ॥ कानि ॥ इदम् सु इत्यत्र **स्वमोर्लुक्** इति सुलोपे ॥ इदम् ॥ इदम् औ इत्यत्र **त्यदादीनाम** इति मस्य अत्वे **अतो गुणे** इति पररूपत्वे **नपुंसकाच्चे**ति औकारस्य शीकारे शकारलोपे **दश्चे**त्यनेन दस्य मत्वे **आद्गुण** इति

अहः । विभाषा ङिश्योः । अह्नी अहनी अहानि ॥ **अहन्** ।८।२।६८। अहन्नित्यस्य रुः पदान्ते । अहोभ्याम् । दण्डि दण्डिनी दण्डीनि । दण्डिना दण्डिभ्याम् । सुपथि । टेर्लोपः । सुपथी सुपन्थानि । ऊर्क् ऊर्जी ऊर्ञ्जि । नरजानां संयोगः । तत् ते तानि । यत् ये यानि । एतत् एते एतानि । गवाक् गोची गवाञ्चि । पुनरुद्वत् । गोचा ।

---

गुणे च ॥ इमे ॥ इदम् जस् इत्यत्र **जश्शसोः शिरिति** जस शित्वे शकारस्येत्संज्ञाया लोपे **त्यदादीनाम** इत्यत्वे **अतो गुणे** इति पररूपत्वे इद इ इति जात तत्र **दश्चेत्यनेन** दस्य मत्वे **नपुंसकस्य झलच** इति नुमि उमो लोपे **सर्वनामस्थाने चासंबुद्धौ** इति नान्तोपधादीर्घत्वे सयोगे च ॥ इमानि ॥ इदम अम् इत्यत्र **स्वमोर्लुक्** इत्यमो लोपे **अन्वादेशे नपुंसके एनद्वक्तव्य** इत्येनदादेशे **वावसाने** इति दस्य तकारे च कृते एनत् ॥ पक्षे ॥ एनद् ॥ इदम् औ इत्यत्र एनदि कृते एनद् औ इति जात तत्र त्यदाद्यत्वे पररूपत्वे **नपुंसकाच्चेत्यौकारस्य** शीकारे शस्येत्संज्ञाया लोपे गुणे च कृते ॥ एने ॥ इदम् शस् इत्यत्र **अन्वादेशे नपुंसके एनद् वक्तव्य** इति एनदि एनद् शस् इति जात तत्र **जश्शसोः शिरिति** शस शौ शस्येत्संज्ञाया लोपे त्यदाद्यत्वे पररूपत्वे **नपुंसकस्य झलच** इति नुमि उमो लोपे **सर्वनामस्थाने चासंबुद्धौ** इति नान्तोपधादीर्घत्वे सयोगे च ॥ एनानि ॥ अहन् सु इत्यत्र **स्वमोर्नपुंसकादि**ति सुलोपे **रोऽसुपी**ति नस्य रेफादेशे **खरवसानयोर्विसर्जनीय** इति रस्य विसर्गादेशे च ॥ अह ॥ अहन् औ इत्यत्र **नपुंसकाच्चे**त्यौकारस्य शीकारे शस्येत्संज्ञाया लोपे **विभाषा ङिश्यो**रित्यनेन ह्कारोत्तरवर्त्यकारस्य लोपे सयोगे च कृते ॥ अह्नी ॥ विभाषाग्रहणादकारलोपाभावे ॥ अहनी ॥ अहन् जस् तत्र **जश्शसोः शिरिति** जस शौ शे सर्वनामस्थानत्वे शस्येत्संज्ञाया लोपे **सर्वनामस्थाने चासंबुद्धौ** इति नान्तोपधादीर्घत्वे ॥ अहानि ॥ अहन् भ्यामित्यत्र **अहन्** इत्यनेन नस्य रुत्वे **हशि चे**ति रोरुत्वे **आद्गुण** इति गुणे च कृते ॥ अहोभ्याम् ॥ दण्डिन् सु इत्यत्र **स्वमोर्नपुंसका**दिति सुलोपे **नलोपः प्रातिपदिकान्तस्ये**ति नकारस्य लोपे ॥ दण्डि ॥ दण्डिन् औ इत्यत्र **नपुंसकाच्चे**ति औकारस्य शीकारे शस्येत्संज्ञाया लोपे सयोगे च ॥ दण्डिनी ॥ दण्डिन् जस् इत्यत्र **जश्शसोः शि**रिति जस शौ शे सर्वनामस्थानत्वे शस्येत्संज्ञाया लोपे **सर्वनामस्थाने चासंबुद्धौ** इति नान्तोपधादीर्घत्वे ॥ दण्डीनि॥ दण्डिन् भ्यामित्यत्र **नलोपः प्रतिपदिकान्तस्ये**ति नलोपे ॥ दण्डिभ्याम् ॥ सुपथिन् सु इत्यत्र **स्वमोर्नपुंसकात्** इति सुलोपे **नलोपः प्रातिपदिकान्तस्ये**ति नलोपे ॥ सुपथि ॥ सुपथिन् औ इत्यत्र **नपुंसकाच्चे**ति शीकारे शस्येत्संज्ञाया लोपे **भस्य टेर्लोप** इति टिलोपे सयोगे च ॥ सुपथी ॥ सुपथिन् जस् इत्यत्र **जश्शसोः शिरिति** जस शौ शे सर्वनामस्थानत्वे शस्येत्संज्ञाया लोपे **इतोऽत्सर्वनामस्थाने** इति थन्त पातिन इकारस्याकारे **थोन्थ** इति थस्य न्थादेशे सुपन्थन् इ इति जात तत्र **सर्वनामस्थाने चासंबुद्धौ**

गवाग्भ्याम् । शकृत् शकृती शकृन्ति । ददत् ॥ **वा नपुंसकस्य** ।७।१।७९। अभ्यस्तात्परो यः शता तदन्तस्य क्लीबस्य वा नुम् सर्वनामस्थाने । ददन्ति ददति । तुदत् ॥ **आच्छीनद्योर्नुम्** ।७।१।८०। अवर्णान्तादङ्गात्परो यः शतुरवयवस्तदन्तस्य

---

इति नान्तोपधाया दीर्घत्वे ॥ सुपन्थानि ॥ ऊर्ज् सु इत्यत्र **स्वमोर्नपुंसकादि**ति सुलोपे **चोः कु**रिति जस्य गत्वे **वावसाने** इति गस्य कत्वे ॥ ऊर्क् । ऊर्ग् ॥ ऊर्ज् औ इत्यत्र **नपुंसकाच्चे**ति औकारस्य शीकारे शकारस्येत्संज्ञायां लोपे संयोगे च ॥ ऊर्जी ॥ ऊर्ज् जसित्यत्र **जश्शसोः शि**रिति शौ शेः सर्वनामस्थानत्वे **नपुंसकस्य झलच** इति नुमि उमो लोपे शस्येत्संज्ञायां लोपे **स्तोः श्चुना श्चु**रिति नकारस्य ञकारे संयोगे च कृते ॥ ऊर्ञ्जि ॥ तत् सु इत्यत्र **स्वमोरि**ति सुलोपे॥ तत् ॥ तत् औ इत्यत्र **नपुंसकाच्चे**ति औकारस्य शीकारे शस्येत्संज्ञायाम् लोपे **त्यदादीनाम** इति अकारे **अतो गुणे** इति पररूपत्वे **आद्गुण** इति गुणे ॥ ते ॥ तत् जसित्यत्र **जश्शसोः शि**रिति जसः शौ शेः सर्वनामस्थानत्वे **त्यदादीनाम** इति दस्य अत्वे **अतो गुणे** इति पररूपत्वे **नपुंसकस्य झलच** इति नुमि उमो लोपे शस्येत्संज्ञायां लोपे च **सर्वनामस्थाने चासंबुद्धौ** इति नान्तस्योपधाया दीर्घत्वे ॥ तानि ॥ एवमेव ॥ यत् ॥ ये ॥ यानि ॥ एतत् ॥ एते ॥ एतानि ॥ ज्ञेयानि ॥ गो-अन्च् इत्यत्र **ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां चे**ति क्विनि **लशक्वतद्धिते** इति कस्येत्संज्ञायां **तस्य लोप** इति लोपे **हलन्त्यमि**ति नस्येत्संज्ञायां **तस्य लोप** इति लोपे **उपदेशेऽजनुनासिक इदि**ति वकारोत्तरवर्तिन इकारस्येत्संज्ञायां **तस्य लोप** इति लोपे **वेरपृक्तस्ये**ति वलोपे च क्विन्प्रत्ययस्य न किञ्चिदवशिष्टम् परं क्विन्प्रत्ययस्य कृदन्तःपातित्वात्**कृत्तद्धितसमासाश्चे**ति सूत्रे गो अन्च् शब्दस्य प्रातिपदिकसंज्ञायां प्रथमैकवचने सौ समागते गो अन्च् सु इति जातं तत्र **अनिदितां हल उपधायाः क्ङिति** इति नलोपे गो अच् सु इति जातं तत्र **अवङ् स्फोटायनस्ये**ति अवङि ङकारस्येत्संज्ञायां लोपे च गव अच् सु इति जाते **अकः सवर्णे दीर्घ** इति दीर्घत्वे **चोः कु**रिति कुत्वे च गवाक् सु इति जातं तत्र **स्वमोर्नपुंसका**दिति सुलोपे ॥ गवाक् ॥ गो-अन्च्-औ इत्यत्र **अनिदितां हल उपधायाः क्ङिती**ति नलोपे **अच** इति सूत्रेणाकारलोपे गोच् औ इति जातं तत्र **नपुंसकाच्चे**त्यौकारस्य शीकारे शकारस्येत्संज्ञायां लोपे संयोगे च ॥ गोची ॥ गो-अन्च् जस् इत्यत्र **अवङ् स्फोटायनस्ये**त्यवङि ङस्येत्संज्ञायां लोपे च गव अन्च् जस् इति जातं तत्र **अनिदितां हल उपधायाः क्ङिति** इति नलोपे **अच** इत्यकारलोपे **चौ** इति पूर्वाणो दीर्घत्वे गवाच् जस् इति जाते **जश्शसोः शि**रिति जसः शौ **शि सर्वनामस्थान**मिति शेः सर्वनामस्थानत्वे शस्येत्संज्ञायां लोपे च गवाच् इ इति जातम् तत्र **नपुंसकस्य झलच** इति नुमि उमो लोपे **स्तोः श्चुना श्चु**रिति श्चुत्वे संयोगे च कृते ॥ गवाञ्चि ॥ गो-अन्च् ट इत्यत्र **चुटू** इति टस्येत्संज्ञायां **तस्य लोप** इति लोपे **अनिदितां हल उपधायाः**

नुम् वा शीनद्योः । पचन्ती पचन्ति । दीव्यत् दीव्यती दीव्यन्ति । धनुः धनुषी । सान्तेति दीर्घः । नुम्विसर्जनीयेति षः । धनूंषि धनुषा धनुर्भ्याम् । एवं चक्षुर्हविरादयः ।

---

**क्विति** इति नलोपे **अच** इत्यकारलोपे सयोगे च ॥ गोचा ॥ एव सर्वत्र ज्ञेयम् । शकृत् सु इत्यत्र **स्वमोर्नपुंसकात्** इति सुलोपे ॥ शकृत् ॥ शकृत् औ इत्यत्र **नपुंसकाच्चे**त्यौकारस्य शीकारे शलोपे सयोगे च ॥ शकृती ॥ शकृत् जस् इत्यत्र **जश्शसोः शि**रिति शौ **शि सर्वनामस्थान**मिति शे सर्वनामस्थानत्वात् **नपुंसकस्य झलच** इति नुमि उमो लोपे शस्येत्संज्ञाया लोपे सयोगे च ॥ शकृन्ति ॥ एव ददत् ॥ ददती ॥ ददत् जस् इत्यत्र **जश्शसोः शि**रिति जस शौ **शि सर्वनामस्थान**मिति शे सर्वनामस्थानत्वे या **नपुंसकस्ये**ति नुमि उमो लोपे शकारलोपे सयोगे च ॥ ददन्ति ॥ सूत्रे वाग्रहणान्नुमभावे ॥ ददति ॥ एवम् ॥ तुदत् ॥ तुदत् औ इत्यत्र **नपुंसकाच्चे**त्यौकारस्य शीकारे शलोपे **आच्छीनद्योर्नु**मिति नुमि उमो लोपे शकारलोपे सयोगे ॥ तुदन्ती ॥ नुमभावे ॥ तुदती ॥ तुदत् जस् इत्यत्र **जश्शसोः शि**रिति शौ शे सर्वनामस्थानत्वे **नपुंसकस्य झलच** इति नुमि ॥ तुदन्ति ॥ एवम् ॥ पचत् ॥ पचत् औ इत्यत्र **नपुंसकाच्चे**ति शीकारे शकारलोपे **शप्श्यनोर्नित्य**मिति नुमि उमो लोपे ॥ पचन्ती ॥ पचत् जसित्यत्र **जश्शसोः शि**रिति शौ **नपुंसकस्य झलच** इति नुमि ॥ पचन्ति ॥ एवम् ॥ दीव्यत् ॥ दीव्यन्ती ॥ दिव्यन्ति ॥ धनुष् सु इत्यत्र **स्वमोर्नपुंसका**दिति सुलोपे षत्वस्यासिद्धत्वात् **ससजुषो रु**रिति सस्य रुत्वे **खरवसानयो**रिति रस्य विसर्गत्वे च ॥ धनु ॥ धनुष् औ इत्यत्र **नपुंसकाच्चे**ति शीकारे शलोपे सयोगे च ॥ धनुषी ॥ धनुष् जस् इत्यत्र **जश्शसोः शि**रिति शौ शे सर्वनामस्थानत्वे **नपुंसकस्य झलच** इति नुमि उमो लोपे धनु न् ष्-इ इति जाते **सान्तमहतः संयोगस्ये**ति नान्तोपधाया दीर्घत्वे **नश्चापदान्तस्य झली**ति नस्यानुस्वारे ॥ धनूंषि ॥ पयस् सु इत्यत्र सुलोपे सस्य रुत्वे रस्य विसर्गत्वे च ॥ पय ॥ पयस् औ इत्यत्र **नपुंसकाच्चे**त्यौकारस्य शीकारे ॥ पयसी ॥ पयस् जस् इत्यत्र **जश्शसोः शि**रिति जस शौ शे. सर्वनामस्थानत्वे **नपुंसकस्य झलच** इति नुमि उमो लोपे **सान्तमहतः संयोगस्ये**ति नान्तोपधादीर्घत्वे ॥ पयांसि ॥ सुपुस् सु इत्यत्र **स्वमोर्नपुंसकात्** इति सुलोपे **संयोगान्तस्ये**ति सलोपे च ॥ सुपुम् ॥ सुपुस् औ इत्यत्र **नपुंसकाच्चे**ति औकारस्य शीकारे शस्येत्संज्ञाया लोपे सयोगे च ॥ सुपुसी ॥ सुपुस् जस् इत्यत्र **जश्शसोः शि**रिति शौ **शि सर्वनामस्थान**मिति सर्वनामस्थानत्वे शस्येत्संज्ञाया लोपे च सुपुस् इ इति जाते तत्र **पुंसोऽसुङ्** इति असुङि ङस्येत्संज्ञाया लोपे सकारोच्चारणार्थेन उकारस्येत्संज्ञायां लोपे च सुपुमस् इ इति जाते तत्र **नपुंसकस्य झलच** इति नुमि उमो लोपे **सान्तमहतः संयोगस्ये**ति नान्तोपधादीर्घत्वे सयोगे च ॥ सुपुमांसि ॥ अदस् औ सु इत्यत्र स्व-

पयः पयसी पयांसि । पयसा पयोभ्याम् । सुपुम् सुपुंसी सुपुमांसि । अदः । विभक्तिकार्यम् । उत्वमत्वे । अमू अमूनि । शेषं पुंवत् ॥ इति हलन्ता नपुंसकलिङ्गाः ॥

## ॥ अथाव्ययप्रकरणम् ॥

**स्वरादिनिपातमव्ययम्** ।१।१।३७। स्वरादयो निपाताश्चाव्ययसंज्ञाः स्युः । स्वर् अन्तर् प्रातर् पुनर् सनुतर् उच्चैस् नीचैस् शनैस् ऋधक् ऋते युगपत् आरात् पृथक् ह्यस् श्वस् दिवा रात्रौ सायं चिरम् मनाक् ईषत् जोषम् तूष्णीम् बहिस् अवस् समया निकषा स्वयम् वृथा नक्तम् नञ् हेतौ इद्धा अद्धा सामि वत् ब्राह्मणवत् क्षत्रियवत् सना उपधा सनत् सनात् तिरस् अन्तरा अन्तरेण ज्योक् कम् शम् सहसा विना नाना स्वस्ति स्वधा अलम् वषट् औषट् वौषट् अन्यत् अस्ति उपांशु क्षमा विहायसा दोषा मृषा मिथ्या मुधा पुरा मिथो मिथस् प्रायस् मुहुस् प्रवाहुकम् प्रवाहिका आर्यहलम् अभीक्ष्णम् साकं सार्धम् नमस् हिरुक् धिक् अथ अम् आम् प्रताम् प्रशान् मा

---

**मोर्नपुंसकात्**दिति सुलोपे **ससजुषोरु**रिति सस्य रुत्वे **खरवसानयोर्विसर्जनीय** इति रस्य विसर्गत्वे ॥ अदः ॥ अदस् औ इत्यत्र **त्यदादीनाम** इत्यत्वे **अतो गुणे** इति पररूपे **वृद्धिरेचि**ति वृद्धौ अदौ इति जातं तत्र **अदसोसेर्दादुदोम** इति दस्य मत्वे औकारस्य च ऊकारे ॥ अमू ॥ अदस् जस् इत्यत्र **जश्शसोः शि**रिति शौ शेः सर्वनामस्थानत्वे शस्येत्संज्ञायां लोपे अदस् इ इति जातं तत्र त्यदाद्यत्वे पररूपत्वे **नपुंसकस्य झलच** इति नुमि उमो लोपे **सर्वनामस्थाने चासंबुद्धावि**ति नान्तोपधादीर्घत्वे संयोगे च अदानीति जातं तत्र **अदसोसेर्दादुदोम** इति दस्य मत्वे आकारस्य ऊकारे च कृते ॥ अमूनि ॥ इति हलन्ता नपुंसकलिङ्गाः ॥

स्वरिति स्वर्गे परलोके च । अन्तरिति मध्ये । प्रातरिति प्रत्यूषे । पुनरिति अप्रथमे विशेषे च । सनुतर् अन्तर्धाने । उच्चैस् महति । नीचैस् अल्पे । शनैस् क्रियामान्द्ये । ऋधक् सत्ये । ऋते वर्जने । युगपत् एककाले । आराद्दूरसमीपयोः । पृथक् भिन्ने । ह्यस् अतीतेऽह्नि । श्वस् अनागतेऽह्नि । दिवा दिवसे । रात्रौ निशि । सायं निशामुखे । चिरं बहुकाले । मनाक् ईषत् प्राबल्ये । जोषं सुखे मौने च । तूष्णीं मौने । बहिस् अवस् इमौ बाह्ये । समया समीपे । निकषा अन्तिके । स्वयम् आत्मनि । वृथा व्यर्थे । नक्तम् रात्रौ । नञ् निषेधे । हेतौ निमित्ते । इद्धा प्राकाश्ये । अद्धा स्फुटावधारणयोः । सामि अर्द्धजुगुप्सितयोः । वत् तेनतुल्यमित्यादिभिर्विहितो वतिप्रत्ययः । तेन तदन्तस्यैवाव्ययत्वम् । ब्राह्मणवत् । क्षत्रियवत् । सना सनत् सनात् इत्येते नित्ये । उपधा भेदे । तिरस् अन्तर्धौ । अन्तरा मध्ये । अन्तरेण वर्जने । ज्योक् काले भूयस्त्वे प्रश्ने शीघ्रार्थे च । कम् वारिमूर्द्धनिन्दासुखेषु । शम् सुखे । सहसा आकस्मिकाविमर्षयोः । विना वर्जने । नाना अनेकविनार्थयोः । स्वस्ति मङ्गले । स्वधा पितृदाने । अलम् भूषणपर्याप्तिशक्तिवारणनिषेधेषु । वषट् वौषट् औषट् एते हविर्दाने । अन्यदित्यन्यार्थे । अस्ति सत्तायाम् । उपांशु अप्रकाशोच्चारणरहस्ययोः । क्षमा क्षान्तौ । विहायसा वियदर्थे । दोषा रात्रौ । मृषा मिथ्या एतौ वितथे । मुधा व्यर्थे । पुरा अविरते ।

माङ् । आकृतिगणोऽयम् । च वा ह अह एव एवम् नूनम् शश्वत् युगपत् भूयस् कूपत् सूपत् कुवित् नेत् चेत् चण् यत्र कच्चित् नह हन्त माकि माकिम् नकि नकिम् नकिर् माङ् नञ् यावत् तावत् त्वै न्वै द्वै रै श्रौषट् वौषट् स्वाहा स्वधा वषट् तुम् तथाहि खलु किल अथ सुष्ठु स्म आदह । उपसर्गविभक्तिस्वरप्रतिरूपकाश्च । अवदत्तम् अहंयुः अस्तिक्षीरा अ आ इ ई उ ऊ ए ऐ ओ औ पशु शुकम् यथा कथा च पाट् प्याट् अङ्ग है हे भोः अये द्य विषु एकपदे युत् आतः । चादिरप्याकृतिगणः तसिलादयः प्राक्पाशपः शस्प्रभृतयः प्राक्समासान्तेभ्यः । अम् आम् कृत्वोऽर्थाः तसिवती नानाञौ एतदन्तमप्यव्ययम् अत इत्यादि ॥ **कृन्मेजन्तः** ।१।१।३९। कृद्यो मान्त एजन्तश्च तदन्तमव्ययं स्यात् । स्मारंस्मारम् जीवसे पिबध्यै ॥ **क्त्वातोसुन्कसुनः** ।१।१।४०। एतदन्तमव्ययम् । कृत्वा उदेतोः विसृपः ॥ **अव्ययीभावश्च** ।१।१।४१। अधिहरि ॥ **अव्ययादाप्सुपः** ।२।४।८२। अव्ययाद्विहितस्यापः सुपश्च लुक् । तत्र शालायाम् । अथ । सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु । वचनेषु च सर्वेषु यन्न व्येति तदव्ययम् ॥ १ ॥ वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः ॥ आपं चैव हलन्तानां यथा वाचा निशा दिशा ॥ २ ॥ अवगाहः वगाहः । अपिधानं पिधानम् ॥ इत्यव्ययानि ॥

---

मिथो मिथस् एतौ रहस्सहार्थयोः । प्रायस् बाहुल्ये । मुहुस् पुनरर्थे । प्रवाहुकम् समानकाले । आर्यहलम् बलात्कारे । अभीक्ष्णम् पौनःपुन्ये । साकम् सार्धम् एतौ सहार्थौ । नमस् नतौ । हिरुक् वर्जने । धिक् निन्दाभर्त्सनयोः । अम् शैघ्र्ये । आम् अङ्गीकारे । प्रताम् ग्लानौ । प्रशान् समानार्थे । प्रतान् विस्तारे । मा माङ् एतौ शङ्कानिषेधयोः । आकृतिगणोऽयम् । च पुनरर्थे । वा समुच्चयादिषु । ह प्रसिद्धौ । अह पूजायाम् । एव अवधारणे । एवम् उक्तपरामर्शे । नूनम् निश्चये तर्के च । शश्वत् नित्ये । युगपत् ऐककाल्ये । भूयस् पुनरर्थे । कूपत् प्रश्ने । कुवित् भूयर्थे । नेत् शङ्कायाम् । चेत् यद्यर्थे । चण् यद्यर्थे । यत्र अनवक्लृप्त्यमर्षगर्हाश्चर्येषु । कच्चिद् इष्टप्रश्ने । नह प्रत्यारम्भे । हन्त हर्षे विषादे च । माकि माकिम् नकि नकिम् एते वर्जने । यावत् तावत् एतौ साकल्यावधिमानावधारणेषु । त्वै विरोधवितर्कयोः । द्वै वितर्के । रै दाने अनादरे च । श्रौषट् वौषट् हविर्दाने । स्वाहा देवताभ्यो दाने । स्वधेति पितृभ्यः । वषट् हविर्दाने । तुम् तुङ्कारे । तथाहि निदर्शने । खलु निश्चये । किल वार्तायाम् । अथ मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्याधिकारप्रतिज्ञासमुच्चयेषु । स्म अतीते पादपूरणे च । अदह उपक्रमहिंसाकुत्सनेषु । अव्ययानामर्थप्रदर्शनं दिङ्मात्रं बोध्यम् । अन्येऽप्यर्था ज्ञेयाः ।

श्रीकेशवकृपाकल्पलताऽस्तु निरता मयि, प्रणष्टजाड्यसंतापो यद्घनच्छायया जनः ॥
नयविनयमयात्मा श्रीरघाजिः क्षितीशो, हरिहरपतिभक्ता मोघिवा तस्य पत्नी ।
परशिवपदभाजौ तावुभौ सर्वदास्तामखिलदखिलमेतच्चिदेशाज्जनोऽयम् ॥ १ ॥

---

१ कृन्मेजन्तः । मेजभ्यां कृतोविशेषणात्वेन विधिस्तदन्तस्येति सूत्रेण तदन्तलाभे सिद्धेऽन्तग्रहणमौपदेशिकेजन्तप्रतिपत्त्यर्थं तेन चिकीर्षवे आधये कुंभकारेभ्य इत्यादौ नाव्ययत्वम् । यदि च लक्षणप्रतिपदोक्तपरिभाषाभ्यां सिद्धिः क्रियते नेत्तदा तयोरनित्यत्वज्ञापनार्थमिदमन्तग्रहणम् ।

## ॥ अथ तिङन्ते भ्वादिगणप्रकरणम् ॥

लट् लिट् लुट् लृट् लेट् लोट् लङ् लिङ् लुङ् लृङ् । एषु पञ्चमो लकारश्छन्दोमात्रगोचरः ॥ **लः कर्मणि च भावे चाकर्मकेभ्यः** ।३।४।६९। लकाराः सकर्मकेभ्यः कर्मणि कर्तरि च स्युरकर्मकेभ्यो भावे कर्तरि च ॥ **वर्तमाने लट्** ।३।२।१२३। वर्तमानक्रियावृत्तेर्धातोर्लट् स्यात् । अटावितौ । उच्चारणसामर्थ्याल्लस्य नेत्वम् । भू सत्तायाम् । कर्तृविवक्षायाम् भू ल इति स्थिते ॥ **तिप्तस्झिसिप्थस्थमिब्वस्मस्ताना-**

---

सर्वविघ्नेश्वरं वन्दे कलाकरधरं हरम् । विद्यासंपदवाप्त्यर्थं श्रीराजराजेश्वराभिधम् ॥ १ ॥ नानंनामं सरस्वत्याः पादपद्मद्वयं मुदा ॥ यथामति लिखाम्येतद्विद्वद्वर्गवशंवदः ॥२॥ श्रीकेशवाह्वयदयामयदैशिकेशपादाः प्रसादसुमुखा मयि सन्तु नित्यम् ॥ रम्या तदङ्घ्रिनखचन्द्रमुचन्द्रिका मे जाड्यान्धकारमपहन्तु मनोनिरूढम् ॥ ३ ॥ श्रीवागीशादवाप्ताऽग्रिमुधावृष्टिरहर्निशम् । हन्तु मे स्वान्तसंतापं पुष्णातु शेमुषीलताम् ॥ ४ ॥ विद्यां विद्यां कथं ह्यद्यां विना विद्येश्वराश्रयम् । तद्विद्येश्वर विद्यार्थे शम्भो त्वामाश्रितोस्म्यहम् ॥५॥ महामाहेश्वरान् माहेश्वराभिख्यान् दयोदधीन् ॥ तातपादान् प्रणम्यैतल्लिख्यतेत्र यथामति ॥६॥ क्षन्तुमर्हन्ति विद्वांसस्त्वद्बालचापलं तु मे ॥ सर्वसहास्वभावा यन्महीयांसो महीतले ॥

भू (सत्तायाम्) धातुर्वर्तते तत्र कस्य सूत्रस्य प्राप्तिः संजाघटीति **लः कर्मणि च भावे चाकर्मकेभ्यः** अत्र भूधातुः सकर्मकोऽस्त्यकर्मको वा । अस्त्ययमकर्मकस्ततः कर्तरि खलकपोतन्यायेन नवापि लकाराः प्राप्तास्तेषां मध्यात्केनात्र भाव्यम् **वर्तमाने लट्** इत्यनेनात्र भूधातोर्वर्तमानक्रियावृत्तित्वाल्लटि जाते भू-लट्-इति जातम् । तत्र **हलन्त्यमि**त्यनेन टकारस्य **उपदेशेऽजनुनासिक इत्** इति लकारोत्तरवर्तिनोऽकारस्य चेत्संज्ञायां कृतायां **तस्य लोप** इति लोपे च कृते भू—ल् इति जातं तत्र **लः परस्मैपद**मित्यनेनाष्टादशानामपि तेषां परस्मैपदसंज्ञा जाता तत्र **तङानावात्मनेपद**मित्यनेन तङ्प्रत्याहारान्तःपातिनां नवानामात्मनेपदसंज्ञा जाता एवं तिबादयःपरस्मैपदसंज्ञास्तादयश्चात्मनेपदसंज्ञास्तेषां मध्यादत्र परस्मैपदसंज्ञिनः प्रत्ययाः स्युः किमुतात्मनेपदसंज्ञिनः स्युरित्याशङ्कायाम् **शेषात्कर्तरि परस्मैपद**मित्यनेनास्य भूधातोरात्मनेपदनिमित्तहीनत्वात्कर्तरि परस्मैपदं प्राप्तं परस्मैपदसंज्ञिनां च नवानां मध्यादत्र केन भाव्यमित्याशङ्कायां **तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमाः** इत्यनेन क्रमात्त्र्याणां त्रिकाणां प्रथममध्यमोत्तमसंज्ञासु जातासु जातासु च लब्धप्रथमादिसंज्ञानां तिङस्त्रयाणां त्रयाणां वचनानां प्रत्येकमेकवचनद्विवचनबहुवचनसंज्ञासु तत्र प्रथमेन भाव्यं मध्यमेन भाव्यमुत्तमेन भाव्यं वेति शङ्कायां **शेषे प्रथम** इत्यनेन प्रथमः पुरुषो भवितुमर्हस्तस्यापि त्रीणि वचनानि

---

१ लः कर्मणि च भावे चाकर्मकेभ्यः । फलव्यधिकरणव्यापारवाचकत्वं सकर्मकत्वम् । फलसमानाधिकरणव्यापारवाचकत्वमकर्मकत्वम् । २ वर्तमाने लट् । आरब्धापरिसमाप्तत्वे सति प्रयोगोच्चारणाधिकरणत्वं वर्तमानत्वम् । यद्वा भूतभविष्यद्भिन्नत्वम् । विनष्टावयवप्रागभावकत्वे सत्यनुत्पन्नध्वंसान्त्यावयवकत्वमित्यर्थः ।

**झथासाथान्ध्वमिड्वहिमहिङ्** ।३।४।७८। एतेऽष्टादश लादेशाः स्युः ॥ **लः परस्मैपदम्** ।१।४।९९। लादेशाः परस्मैपदसंज्ञाः स्युः ॥ **तङानावात्मनेपदम्** ।१।४।१००। तङ् प्रत्याहारः शानच्कानचौ चैतत्संज्ञाः स्युः । पूर्वसंज्ञाऽपवादः ॥ **अनुदात्तङित आत्मनेपदम्** ।१।३।१२। अनुदात्तेतो ङितश्च धातोरात्मनेपदं स्यात्कर्तृगामिनि क्रियाफले ॥ **शेषात्कर्तरि परस्मैपदम्** ।१।३।७८। आत्मनेपदनिमित्तहीनाद्धातोः कर्तरि परस्मैपदं स्यात् ॥ **स्वरितञितः कर्त्रभिप्राये क्रियाफले** ।१।३।७२। **तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमाः** ।१।४।१०१। तिङ उभयोः पदयोस्त्रयस्त्रिकाः क्रमादेतत्संज्ञाः स्युः ॥ **तान्येकवचनद्विवचनबहुवचनान्येकशः** ।१।४।१०२। लब्धप्रथमादिसंज्ञानि तिङस्त्रीणि त्रीणि प्रत्येकमेकवचनादिसंज्ञानि

---

तेषां मध्यात्केन भाव्यमित्याशङ्कायां **द्व्येकयोर्द्विवचनैकवचने** इत्यनेनात्रैकवचनस्य विवक्षितत्वादेकवचने तिपि जाते पकारस्य **हलन्त्यमिति** इत्संज्ञायां **तस्य लोप** इति लोपे च कृते भू-ति इति जातं तत्र **तिङ्शित्सार्वधातुक**मित्यनेन तिङां सार्वधातुकसंज्ञायां कृतायां **कर्तरि शबि**त्यनेन शपि जाते भू शप् ति इति जाते पकारस्य **हलन्त्यमि**त्यनेन शकारस्य **लशक्वतद्धिते** इत्यनेनेत्संज्ञायां कृतायां कृते च **तस्य लोप** इति लोपे भू अ ति-इति जातं तत्र शपःशित्वात्सार्वधातुकत्वे **सार्वधातुकार्धधातुकयो**रिति सूत्रेणेगन्ताङ्गस्य गुणे कृते भो-अ-ति इति जातं तत्र**ैचोयवायाव** इत्यनेन ओकारस्य अवादेशे कृते कृते च संयोगे ॥ भवति ॥ भूधातुर्वर्ततेऽग्रे लट्लकारस्य प्रथमपुरुषद्विवचने तसि समागते भू-तस्-इति जातं तत्र **तिङ्शित्सार्वधातुक**मिति तसः सार्वधातुकत्वे कृते **कर्तरि शबि**ति शपि कृते शकारपकारयोरित्संज्ञायां लोपे च कृते भू-अ-तस्-इति जातं तत्र **सार्वधातुकार्धधातुकयो**रित्यनेनेगन्ताङ्गस्य गुणे कृते भो-अ-तस्-इति जातं तत्र **एचोयवायाव** इति अवादेशे संयोगे च कृते भवतस् इति जातं तत्र **ससजुषो** रुरिति सस्य रुत्वे **खरवसानयोर्विसर्जनीय** इत्यनेन विसर्जनीयत्वे च कृते ॥ भवतः ॥ इति सिद्धम् । भू-अग्रे प्रथमपुरुषबहुवचने झौ समागते **झोऽन्त** इत्यनेन झस्य अन्तादेशे कृते **कर्तरि शपि**ति शपि कृते शकारपकारयोरित्संज्ञाया लोपे च कृते भू-अ-अन्ति इति जाते **सार्वधातुकार्धधातुकयो**रिति गुणे **एचोयवायाव** इति अवादेशे **अतो-**

---

१ लः परस्मैपदम् । अत्रोच्यते अनेन सूत्रेण लस्थाने विहितस्य तिपोऽपि परस्मैपदत्वं स्यात्तथा च ऐधिष्ट इत्यत्र सिच् न स्यात् । नन्व तत्र लशब्दोऽर्थविहितत्वादेव नेति वाच्यम् । लः शतृशानचावित्यादावपि तुल्यत्वात् । तदा तु सिच् परस्मैपदेष्वेव भविष्यति नात्मनेपदेष्विति सिचिवृद्धिः परस्मैपदेष्वित्यत्र परस्मैपदग्रहणं व्यर्थं तत्सामर्थ्यात्सिचः परस्मैपदत्वं नेति कल्प्यते । यद्वा तत्सामर्थ्याल्लकारप्राग्वृत्तिवर्णाघटितपदप्रयोज्या या लकारनिष्ठा स्थानिता तादृशस्थानितानिरूपितादेशताश्रयाः परस्मैपदसंज्ञाः स्युरित्यर्थेनादोषाच्चेत्यलं पल्लवितेन ॥

स्युः ॥ **युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः** ।१।४।१०५।
तिङ्वाच्यकारकवाचिनि युष्मद्यप्रयुज्यमाने प्रयुज्यमाने च मध्यमः ॥ **अस्मद्युत्तमः**
१।४।१०७। तथाभूतेऽस्मद्युत्तमः ॥ **शेषे प्रथमः** ।१।४।१०८। मध्यमो-
त्तमयोरविषये प्रथमः स्यात् । भू ति इति जाते ॥ **तिङ्शित्सार्वधातुकम्** ।३।४।
११३। तिङः शितश्च धात्वधिकारोक्ता एतत्संज्ञाः स्युः ॥ **कर्तरि शप्**[1] ।३।१।६८।
कर्त्रर्थे सार्वधातुके परे धातोः शप् ॥ **सार्वधातुकार्धधातुकयोः** ।७।३।८४। अ-
नयोः परयोरिगन्ताङ्गस्य गुणः । अवादेशः । भवति भवतः ॥ **झोऽन्तः** ।७।१।३।
प्रत्ययावयवस्य झस्यान्तादेशः । अतो गुणे । भवन्ति । भवसि भवथः भवथ ॥ **अतो**
**दीर्घो यञि** ।७।३।१०१। अतोऽङ्गस्य दीर्घो यञादौ सार्वधातुके । भवामि भवावः
भवामः । स भवति तौ भवतः ते भवन्ति । त्वं भवसि युवां भवथः यूयं भवथ । अहं

---

**गुणे** इति पररूपे च कृते ॥ भवन्ति ॥ इति सिद्धम् । भूधातुर्वर्ततेऽग्रे **युष्मद्युपपदे**
**समानाधिकरणे स्थानिन्यपि मध्यम** इति मध्यमपुरुषस्यैकवचने सिपि समागते
पकारलोपे कृते **कर्तरि शपि**ति शपि कृते **सार्वधातुकार्धधातुकयो**रिति गुणे कृते
**एचोयवायाव** इति अवादेशे च कृते ॥ भवसि ॥ इति सिद्धम् । भूधातुर्वर्ततेऽग्रे मध्यमपुरुष-
द्विवचने थसि समागते भू—थस्—इति जाते **कर्तरि शपि**ति शपि **सार्वधातुकार्ध-**
**धातुकयो**रिति गुणे अवादेशे **ससजुषोरु**रिति सत्वे **खरवसानयोर्विसर्जनीय** इति
विसर्जनीयत्वे ॥ भवथः ॥ इति सिद्धम् । भूधातुर्वर्ततेऽग्रे मध्यमपुरुषबहुवचने थ आगते **कर्तरि**
**शपि**ति शपि **सार्वधातुकार्धधातुकयो**रिति गुणे अवादेशे च कृते ॥ भवथ ॥ इति
सिद्धम् ॥ भूधातुर्वर्ततेऽग्रे **अस्मद्युत्तमः तथाभूतेस्मद्युत्तम** इत्यनेन उत्तमैकवचने
मिपि समागते **कर्तरि शपि**ति शपि **सार्वधातुकार्धधातुकयो**रिति गुणे अवादेशे च
कृते भवमि इति जातं तत्र **अतो दिर्घोयञी**त्यनेन दीर्घादेशे च कृते ॥ भवामि ॥ इति सि-
द्धम् । भूधातुर्वर्ततेऽग्रे उत्तमपुरुषद्विवचने वस्यागते **कर्तरि शपि**ति शपि । **सार्वधातुका-**
**र्धधातुकयो** रिति गुणे अवादेशे **अतो दीर्घो यञी**ति दीर्घादेशे च कृते **ससजु-**
**षोरु**रिति सस्य रुत्वे **खरवसानयोर्विसर्जनीय** इति विसर्जनीयत्वे च कृते ॥ भवावः ॥
भूधातुर्वर्ततेऽग्रे उत्तमपुरुषबहुवचने मसि समागते भू—मस् इति जातं तत्र **कर्तरि शपि**ति
शपि **सार्वधातुकार्धधातुकयो**रिति गुणे **एचोयवायाव** इत्यवादेशे **अतोदिर्घो-**
**यञी**ति दीर्घादेशे **ससजुषोरु**रिति सस्य रुत्वे **खरवसानयोर्विसर्जनीय** इति रस्य

---

१ कर्तरि शप् । अत्र सूत्रे कर्तरिग्रहणं किमर्थम् । ननु भावकर्मणोः शप् प्रत्ययो माभूदित्येतदर्थमि-
तिवाच्यम् । तत्र यका बाधात् । उच्यते । कर्तरिग्रहणाभावे येननाप्राप्तिन्यायेन यका शप् एव बाध्येत
नतु श्यनादयस्तथाचश्यनादयो भावकर्मणोर्भविष्यन्ति तन्निवृत्त्यर्थं कर्तरिग्रहणमावश्यकम् । स्फुटतरंतु
मत्कृतवैयाकरणतरङ्गतोऽवसेयम् ।

भवामि आवां भवावः वयं भवामः ॥ **[1]परोक्षे लिट्** ।३।२।११५। भूतानद्यतनपरोक्षार्थवृत्तेर्धातोर्लिट् स्यात् । लस्य तिबादयः ॥ **परस्मैपदानां णलतुसुस्थलथुसणल्वमाः** ।३।४।८२। लिटस्तिबादीनां नवानां णलादयो नव स्युः । भू अ इति स्थिते ॥ **भुवो वुग्लुङ्लिटोः** ।६।४।८८। भुवो वुगागमः स्यात् लुङ्लिटोरचि ॥ **लिटि धातोरनभ्यासस्य** ।६।१।८। लिटि परेऽनभ्यासधात्ववयवस्यैकाचः प्रथमस्य द्वे स्त आदिभूतादचः परस्य तु द्वितीयस्य । भूव् भूव् अ इति स्थिते ॥ **पूर्वोऽभ्यासः** ।६।१।४। अत्र ये द्वे विहिते तयोः पूर्वोऽभ्याससंज्ञः स्यात् ॥ **[2]हलादिः शेषः** ।७।४।६०। अभ्यासस्यादिर्हल् शिष्यते अन्ये हलो लुप्यन्ते ॥ इति वलोपः । **ह्रस्वः** ।७।४।५९। अभ्यासस्याचो ह्रस्वः स्यात् ॥ **भवतेरः** ।७।४।७३। भवतेरभ्यासस्योकारस्य अः स्याल्लिटि ॥ **अभ्यासे चर्च** ।८।४।५४। अभ्यासे झलां चरः स्युर्जशश्च । झलां

---

विसर्जनीयत्वे ॥ भवामः ॥ इति सिद्धम् । भूधातुर्वर्तते तत्र **परोक्षे लिट्** इत्यनेन लिटि समागते लिटो लस्य तिबादिषु प्राप्तेषु अत्रैकवचनस्य विवक्षितत्वात्तिप्यागते भू-ति-इति जाते तत्र **लिट् च** इत्यनेन लिट्सम्बन्धिनां तिङामार्धधातुकसंज्ञायां कृतायां निषिद्धायां च सार्वधातुकसंज्ञायाम् न शबादीनां प्रवृत्तिः किं तर्हि **परस्मैपदानां णलतुसुस्थलथुसणल्वमा** इत्यनेन तिकारस्य स्थाने णलि जाते णकारलकारयोश्चूटू हलन्त्यमिति सूत्राभ्यामित्संज्ञायां **तस्य लोप** इति लोपे च कृते भू-अ-इति जातं तत्र **भुवो वुग्लुङ्लिटो**रित्यनेन कित्वादन्ते वुकि जाते भूवुक्-अ-इति जाते ककारोकारयोरित्संज्ञायां लोपे च कृते, भूव्-अ-इति जातं तत्र **लिटि धातोरनभ्यासस्ये**त्यनेनैकाचो द्वित्वे प्राप्ते परन्तु वृक्षप्रचलनन्यायेन समुदायस्यैव द्वित्वे कृते भूव्-भूव्-अ इति जातं तत्र **पूर्वोभ्यास** इत्यनेन अभ्याससंज्ञायां **हलादिःशेष** इत्यनेन वकारलोपे कृते भू-भूव्-अ इति जाते **ह्रस्वः** इति सूत्रेण अभ्यासाङ्भूतस्य भकारोत्तरवर्तिन ऊकारस्य ह्रस्वत्वे कृते भु-भूव्-अ इति जातं तत्र **भवतेर** इति सूत्रेण उकारस्याकारादेशे कृते भ-भूव्-अ इति जातं तत्र **अभ्यासे चर्च** इत्यनेन झल्रूपस्य भकारस्य जश्रूपे बकारे जाते ॥ बभूव ॥

---

१ परोक्षे लिट् । अक्ष्णः परमिति विग्रहे ( अव्ययीभावे शरत्प्रभृतिभ्यः ) इति शरदादिगणे ( प्रतिपरसमनुभ्योऽक्ष्णः ) इति गणवार्तिकेन समासान्ताच् प्रत्ययविधानसामर्थ्यादव्ययीभाव । सूत्रे निपातनात् परस्यौकारादेशः परोक्षं तस्मिन् । भूत इति अनद्यतने लङिति च सूत्राभ्यां तत्तत्पदानुवृत्तिः । कालस्तावदद्यतनानद्यतनभेदेन द्विविधः । द्विविधोऽपि भूतभविष्यद्रूपः । तत्रानद्यतने भूते परोक्षे लिडित्यर्थः । परोक्षत्वं च साक्षात्करोमीत्येतादृशविषयताशालिज्ञानाविषयत्वम् ।

२ हलादि. शेष । नचानेन सूत्रेण आनर्चेत्यादौ हस्येलोपो न लभ्यतेऽहल्यादित्वाभावादिति वाच्यम् । हलो हलादिः शेष इति संहितापाठे अकारप्रश्लेषेणाभ्यासस्यादिर्हल् अहल् च शिष्यते अन्ये हलो लुप्यन्त इत्यर्थनादोषात् ।

धातोः स्यतासी एतौ प्रत्ययौ स्तो लृलुटोः परतः । शबाद्यपवादः । लृ इति लृङ्लृटोर्ग्रहणम् ॥ **आर्धधातुकं शेषः** ।३।४।११४। तिङ्शिद्भ्योऽन्यो धातोरिति विहितः प्रत्यय एतत्संज्ञः स्यात् । इट् ॥ **लुटः प्रथमस्य डारौरसः** ।२।४।८५। डित्वसामर्थ्यादभस्यापि टेर्लोपः । भविता ॥ **तासस्त्योर्लोपः** ।७।४।५०। तासेरस्तेश्च लोपः स्या

---

**हलादिःशेष** इति वलोपे **ह्रस्व** इति अभ्यासाचो ह्रस्वत्वे **भवतेर** इत्युकारस्याकारादेशे **अभ्यासे चर्च** इति भस्य बत्वे सस्य रुत्वे रेफस्य विसर्गत्वे च कृते ॥ बभूवथुः ॥ इति सिद्धम् । एवं भू अग्रे लिटो मध्यमपुरुषबहुवचने थे आगते **लिट् च** इति थस्यार्धधातुकसंज्ञाया **परस्मैपदानां णलतुसुस्थलथुसणल्वमा** इत्यकारादेशे च कृते भू-अ- इति जाते **भुवो वुग्लुङ्लिटोरि**ति वुकि उक्भागलोपे **लिटि धातोरनभ्यासस्ये**ति द्वित्वे **पूर्वोऽभ्यास** इति अभ्यासत्वे **हलादिःशेष** इति वलोपे **ह्रस्व** इति अभ्यासाचो ह्रस्वत्वे **भवतेर** इत्युकारस्याकारादेशे **अभ्यासे चर्च** इति भस्य बत्वे ॥ बभूव ॥ एवमेव भू अग्रे लिट उत्तमैकवचने मिपि मिपो **लिट्चे**ति आर्धधातुकत्वे **परस्मैपदानामि**ति णलि **भुवोवुग्लुङ्लिटोः । लिटि धातोरनभ्यासस्य । पूर्वोऽभ्यासः । हलादिःशेषः । ह्रस्वः । भवतेरः । अभ्यासे चर्च** । इति सूत्रैः ॥ बभूव ॥ इति सिद्धम् । भू अग्रे लिट उत्तमद्विवचने वसागते **लिट् च । परस्मैपदानां । आर्धधातुकस्येड्वलादेः । भुवो वुग्लुङ्लिटोः । लिटि धातोरनभ्यासस्य । पूर्वोऽभ्यासः । हलादिःशेषः । ह्रस्वः । भवतेरः । अभ्यासेचर्च** इत्येभिः सूत्रैः ॥ बभूविव ॥ भू अग्रे लिट उत्तमबहुवचने मसि समागते । **लिट् च । परस्मैपदानाम् । आर्धधातुकस्येड्वलादेः । भुवो वुग्लुङ्लिटोः । लिटि धातोरनभ्यासस्य । पूर्वोऽभ्यासः । हलादिःशेषः । ह्रस्वः । भवतेरः अभ्यासे चर्च** । इत्येभिः सूत्रैः ॥ बभूविम ॥ इति सिद्धम् । भू धातुर्वर्ततेऽग्रे । **अनद्यतने लुट्** इत्यनेन लुटि समागते **स्यतासी लृलुटो**रित्यनेन तासौ कृते भू-तास्-लुट् इति जाते **आर्द्धधातुकं शेष** इत्यनेन तासेरार्द्धधातुकत्वे कृते **सार्वधातुकार्द्धधातुकयो**रित्यनेन गुणे कृते ऽवादेशे च कृते भ्-अव्-तास्-लुट् इति जाते **आर्द्धधातुकस्येड्वलादे**रिति इटि कृते भवितास्-लुट् इति जाते तत्र **लुटः प्रथमस्य डारौरस** इति तिप् तिकारस्य डादेशे कृते **लुट्** इति डकारस्येत्संज्ञाया लोपे च कृते डित्वसामर्थ्यादभस्यापि टेर्लोपे कृते ॥ भविता ॥ भूधातुर्वर्ततेऽग्रे लुट् प्रथमद्विवचने तसि समागते **स्यतासी लृलुटो**रिति तासौ इकारस्येत्संज्ञाया लोपे च कृते भू-तास्-तस् इति जाते **आर्द्धधातुकं शेष** इति तासेरार्द्धधातुकसंज्ञायां कृतायामार्द्धधातुकस्येड्वलादेरिति इटि **सार्वधातुकार्द्धधातुकयो**रिति गुणे अवादेशे संयोगे च कृते भवितास्-तस् इति जाते तत्र **लुटः प्रथमस्य डारौरस** इति तसोरौकारे कृते

स्यादौ प्रत्यये परे ॥ **रि[1] च** ।७।४।५१। रादौ प्रत्यये तथा । भवितारौ भवितारः ।
भवितासि भवितास्थः भवितास्थ । भवितास्मि भवितास्वः भवितास्मः ॥ **लृट्[2] शेषे**
**च** ।३।३।१३। भविष्यदर्थाद्धातोर्लृट् स्यात्क्रियार्थायां क्रियायां सत्यामसत्यां वा । इट् ।
भविष्यति भविष्यतः भविष्यन्ति । भविष्यसि भविष्यथः भविष्यथ । भविष्यामि भवि-
ष्यावः भविष्यामः ॥ **लोट् च** ।३।३।१६२। विध्याद्यर्थेषु धातोर्लोट् ॥ **आशिषि लि-**
**ङ्लोटौ** ।३।३।१७३। **एरुः** ।३।४।८६। लोट इकारस्य उः । भवतु ॥ **तुह्योस्ता-**
**तङ्ङाशिष्यन्यतरस्याम्** ।७।१।३५। आशिषि तुह्योस्तातङ् वा । परत्वात्सर्वादेशः ।

---

कृते च **रिच** रादौ प्रत्यये तथा इत्यनेन सकारलोपे ॥ भवितारौ ॥ भू अग्रे लुटः प्रथमपुरुषबहुवचने
झौ **स्यतासी लृलुटोरि**ति तासौ **आर्द्धधातुक**मिति आर्द्धधातुकत्वे **आर्द्ध-**
**धातुकस्येड्वलादे**रिति इटि **सार्वधातुकार्द्धधातुकयो**रिति गुणेऽवादेशे **लुटः**
**प्रथमस्य डारौरसः** इति रसि सस्य रुत्वे रोर्विसर्गत्वे **रिचे**त्यनेन सलोपे च ॥ भवितारः ॥
भू अग्रे लुटो मध्यमपुरुषैकवचने सिपि समागते **स्यतासी लृलुटोः** इति तासौ **आर्द्ध-**
**धातुकं शेष** इति आर्द्धधातुके **आर्द्धधातुकस्येड्वलादे**रिति इटि **सार्वधातुकार्द्ध-**
**धातुकयो**रिति गुणे अवादेशे **तासस्त्योर्लोपः** इति सलोपे च कृते ॥ भवितासि ॥ इति
सिद्धम् । एवं सर्वत्र ज्ञेयम् । भूधातुर्वर्ततेऽग्रे **लृट् शेषे च** इत्यनेन लृटि लृटश्च प्रथमपुरुषैकवचने
तिपि समागते **स्यतासी लृलुटो**रिति स्ये **आर्द्धधातुकं शेष** इति स्यस्य आर्द्धधातुकत्वे
**आर्द्धधातुकस्येड्वलादेः** इति इटि **सार्वधातुकार्द्धधातुकयो**रिति गुणे अवादेशे
सस्य मूर्द्धन्यादेशे च कृते॥ भविष्यति । एवं भविष्यतः । भविष्यन्ति । भविष्यसि । भविष्यथः ।
भविष्यथ । भविष्यामि । भविष्यावः । भविष्यामः । इति रूपाणि ज्ञेयानि ॥ भू अग्रे **लोट्**
**च** इत्यनेन लोटि समागते लोटश्च तिपि **कर्तरि शप्** इति शपि **तिङ्शित्सा-**
**र्वधातुक**मिति सार्वधातुकत्वे **सार्वधातुकार्द्धधातुकयो**रिति गुणे अवादेशे **एरु-**
रित्यनेन तकारोत्तरवर्तिन इकारस्य उकारादेशे कृते ॥ भवतु ॥ **तुह्योस्तातङ्ङाशिष्य-**

---

१ रिच । अत्रोच्यते लुटः प्रथमस्य डारौरस इत्यस्य स्वादिष्वसर्वनामस्थाने इत्यनन्तरं पठितत्वात् डारौ-
रस्सु परेषु पदसंज्ञां विधाय पदत्वाद्रुत्वे यत्वे लोपे च भवितारौ भवितार इति सेत्स्यतस्तथा च रिचेति
सूत्रं न कर्त्तव्यम् । सत्यम् । ननु भविता इत्यत्र जश्त्वापत्तिरिति वाच्यम् । योगविभागेन आकारे स-
संज्ञात्वेन पदत्वस्य बाधात् । व्याङ्पूर्वक अस्धातोर्लिटि कृते तस्य स्थाने बहुवचने झप्रत्यये कृते लिट्त्वात्-
योरेशिरेजित्यनेन इरेचि कृते । छन्दसि । इरयोरे । ६ । ४ । ७६ । इति सूत्रेण रे आदेशे कृते व्यासि अस्
रे इति जातं तत्र छन्दसि बहुलमित्यनेन अस्धातोर्लिटि सार्वधातुकत्वे क्ङिते धातोर्द्वित्वाभावे च श्नसोरल्लोप इत्य-
नेनाकारलोपे रिचेत्यनेन सकारलोपे व्यासिरे इति सिद्धम् । रिचेति सूत्राभावे तत्र सलोपो न स्यात्तदर्थं तत्रा-
मत्कृतवैयाकरणतरङ्गतोऽवसेयः ।
वश्यकत्वात् । विस्तरस्तु
२ लृट् शेषे च । अयं लकारो भविष्यति सामान्ये भवति । भविष्यत्त्वं च वर्त्तमानप्रागभावप्रतियोगित्वम-
योत्पत्तिमत्त्वम् ।

भवताम् ॥ **लोटो लङ्वत्** ।३।४।८५। लोटस्तामादयः सलोपश्च ॥ **तस्थस्थमिपां तांतंतामः** ।३।४।१०१। ङितश्चतुर्णां तामादयः क्रमात्स्युः । भवताम् भवन्तु ॥ **सेर्ह्यपिच्च** ।३।४।८७। लोटः सेर्हिः सोऽपिच्च ॥ **अतो हेः** ।६।४।१०५। अतः परस्य हेर्लुक् । भव भवतात् भवतम् भवत ॥ **मेर्निः** ।३।४।८९। लोटो मेर्निः स्यात् ॥ **आडुत्तमस्य पिच्च** ।३।४।९२। लोडुत्तमस्याट् पिच्च । हिन्यो रुत्वं न । इत्वोच्चारणसा-

---

**न्यतरस्या**मिति तुकारस्य तातङि कृते ङकारस्य तकारोत्तरवर्तिनोऽकारस्य इत्संज्ञायां लोपे च कृते ॥ भवतात् ॥ भू अग्रे लोटः प्रथमपुरुषद्विवचने तसि समागते **लोटो लङ्वत्** इति लङ्वत्त्वे **तस्थस्थमिपां तांतंताम** इति तसस्तामि **कर्तरि शप्**इति शपि **तिङ्शित्सार्वधातुक**मिति सार्वधातुकत्वे **सार्वधातुकार्धधातुकयो**रिति गुणे अवादेशे च कृते ॥ भवताम् ॥ भू अग्रे लोटः प्रथमपुरुषबहुवचने झौ **कर्तरि शप्**इति शपि **तिङ्शित्सार्वधातुक**मिति सार्वधातुकत्वे **सार्वधातुकार्धधातुकयो**रिति गुणे अवादेशे **झोऽन्तः** इति अन्तादेशे च कृते कृते च **एरुः** इति इकारस्य उत्वे ॥ भवन्तु ॥ भू अग्रे लोटो मध्यमैकवचने सिप्यागते पकारस्येत्संज्ञाया लोपे **कर्तरि शप्**इति शपि शपोरित्संज्ञायां लोपे च कृते **तिङ्शित्सार्वधातुक**मिति सार्वधातुकत्वे । **सार्वधातुकार्धधातुकयो**रिति गुणे अवादेशे **सेर्ह्यपिच्चे**त्यनेन सेर्हित्वे कृते कृते च **अतो हे**रित्यनेन हेर्लोपे ॥ भव ॥ इति सिद्धम् । आशिषि **तुह्योस्तातङ्ङाशिष्यन्यतरस्या**मित्यनेन हेस्तातङि कृते ङकारस्य तकारान्तःपात्यकारस्य चेत्संज्ञायां लोपे च कृते ॥ भवतात् ॥ भू अग्रे लोटोमध्यमपुरुषद्विवचने थस्यागते **कर्तरि शप्** इति शपि शपः सार्वधातुकत्वे गुणे अवि **तस्थस्थमिपां तांतंताम** इति तमि च कृते ॥ भवतम् ॥ भू अग्रे लोटोमध्यमपुरुषबहुवचने थे आगते शपि सार्वधातुकत्वे गुणे अवि **तस्थस्थमिपां तांतंताम** इति तादेशे कृते ॥ भवत ॥ भू अग्रे लोट उत्तमपुरुषैकवचने मिपि आगते शपि सार्वधातुकत्वे गुणे अवि **मेर्नि**रित्यनेन मिकारस्य निकारे **आडुत्तमस्य पिच्च** इत्यनेन आटि दीर्घादेशे च कृते ॥ भवानि ॥ भू अग्रे लोट उत्तमपुरुषद्विवचने वसि समागते शपि सार्वधातुकत्वे गुणे अवादेशे **लोटो लङ्वदि**ति लङ्वत्त्वे तेन ङित्वात् **नित्यं ङितः** इति लोपे प्राप्ते **अलोऽन्त्यस्ये**त्यनेनान्त्यसकारलोपे च कृते ॥ भवाव । एवम् । भवाम ॥ भू अग्रे **अनद्यतने लङ्** इति लङि **लुङ्लङ्लृङ्क्ष्वडुदात्त** इति अटि लङस्तिपि शपि सार्वधातुकत्वे गुणे अवादेशे **इतश्च** इति तकारोत्तरवर्तिन इकारस्य लोपे च कृते ॥ अभवत् ॥ भू अग्रे

---

१ लोटो लङ्वत् । अत्र लङस्तुल्यं लङ्वदिति विग्रहः कर्तव्यो ननु लङि तुल्यमिति । तेन ङकारान्तातिदिष्टमेव कार्यं भवति ननु लकारमात्रान्तातिदिष्टं । तथाच तामादिसलोपरूपं कार्यं जातं न तु लुङ्लङ्लृङ्क्ष्वडुदात्त इति अडागमरूपम् ।

मध्यात्। भवानि ॥ **ते प्राग्धातोः** ।१।४।८०। ते गत्युपसर्गसंज्ञा धातोः प्रागेव प्रयोक्तव्याः ॥ **आनि लोट्** ।८।४।१६। उपसर्गस्थान्निमित्तात्परस्य लोडादेशस्यानीत्यस्य नस्य णः स्यात्। प्रभवाणि। (दुरः षत्वणत्वयोरुपसर्गत्वप्रतिषेधो वक्तव्यः) दुःस्थितिः दुर्भवानि। (अन्तःशब्दस्याङ्किविधिणत्वेषूपसर्गत्वं वाच्यम्) अन्तर्भवाणि ॥ **नित्यं ङितः** ।३।४।९९। सकारान्तस्य ङिदुत्तमस्य नित्यं लोपः। अलोऽन्त्यस्येति सलोपः। भवाव भवाम ॥ **अनद्यतने लङ्** ।३।२।१११। अनद्यतनभूतार्थवृत्तेर्धातोर्लङ् स्यात् ॥ **लुङ्लङ्लृङ्क्ष्वडुदात्तः** ।६।४।७१। एष्वङ्गस्याट् ॥ **इतश्च** ।३।४।१००। ङितो लस्य परस्मैपदमिकारान्तं यत्तदन्तस्य लोपः। अभवत् अभवताम् अभवन्। अभवः अभवतम् अभवत। अभवम् अभवाव अभवाम ॥ **विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ्** ।३।३।१६१। एष्वर्थेषु धातोर्लिङ् ॥ **यासुट् परस्मैपदेषूदात्तो ङिच्च** ।३।४।१०३। लिङः परस्मैपदानां यासुडागमो ङिच्च ॥ **लिङः स-**

---

लङः प्रथमपुरुषद्विवचने तसि आगते **लुङ्लङ्लृङ्क्ष्वडुदात्त** इति अटि अभू–तस् इति जातं तत्र शपि सार्वधातुकत्वे गुणे अवादेशे कृते कृते च **तस्थस्थमिपां तांतंताम** इति तामि ॥ अभवताम् ॥ भू अग्रे लङि समागते लङश्च प्रथमपुरुषबहुवचने झावागते **झोऽन्त** इति अन्तादेशे कृते **लुङ्लङ्लृङ्क्ष्वडुदात्त** इति अटि शपि सार्वधातुकत्वे गुणे अवादेशे **इतश्चे**ति इकारस्य लोपे कृते तकारस्य च **संयोगान्तस्य लोप** इति लोपे कृते ॥ अभवन् ॥ भूधातुर्वर्तते अग्रे लङ्लकारमध्यमपुरुषबहुवचने सिप्यागते **लुङ्लङ्लृङ्क्ष्वडुदात्त** इति अटि शपि सार्वधातुकत्वे गुणे अवादेशे **इतश्चे**ति इकारलोपे सस्य रुत्वे रोर्विसर्जनीयत्वे च कृते ॥ अभवः ॥ भू अग्रे लङो मध्यमपुरुषद्विवचने थस्यागते अटि शपि सार्वधातुकत्वे गुणे अवादेशे **तस्थस्थमिपां तांतंताम** इति तमि च कृते ॥ अभवतम् ॥ भू अग्रे लङो मध्यमपुरुषबहुवचने थे आगते अटि शपि सार्वधातुकत्वे गुणे अवादेशे **तस्थस्थमिपां तांतंताम** इति ते च कृते ॥ अभवत ॥ भू अग्रे उत्तमपुरुषैकवचने मिप्यागते अटि शपि सार्वधातुकत्वे गुणे अवि **तस्थस्थमिपां तांतंताम** इति अमि **अमि पूर्व** इति पूर्वरूपे च कृते ॥ अभवम् ॥ भू अग्रे लङ् उत्तमद्विवचने वसि बहुवचने मसि चागते अटि शपि सार्वधातुकत्वे गुणे अवादेशे **अतो दीर्घो यञी**ति दीर्घादेशे **नित्यं ङित** इति सलोपे च कृते ॥ अभवाव ॥ अभवाम ॥ भू धातुर्वर्ततेऽग्रे **विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ्** इत्यनेन लिङि समागते लिङश्च तिपि जाते शपि आर्द्धधातुकत्वे गुणे अवादेशे च कृते **यासुट्परस्मैपदेषूदात्तो**

---

१ आनि लोट्। अत्र लिलोडित्येवोच्यतां यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते इत्यनया परिभाषया आड्विशिष्टस्यापि ग्रहणं भविष्यति आकारोच्चारणमागमशास्त्रस्यानित्यत्वे लिङ्गं तेन सागरं तर्तुकाम इत्यादि सिद्धम्। अन्यथा तृधातोः सेट्कत्वादिट्श्रवणं स्यात् ॥

**लोपोऽनन्त्यस्य** ।७।२।७९। सार्वधातुकलिङोऽनन्त्यस्य सस्य लोपः। इति प्राप्ते, **अतो येयः** ।७।२।८०। अतः परस्य सार्वधातुकावयवस्य यास् इत्यस्य इय्। गुणः **लोपो व्योर्वलि** ।६।१।६६। भवेत् भवेताम् ॥ **झेर्जुस्** ।३।४।१०८। लिङो झेर्जुस् स्यात्। भवेयुः। भवेः भवेतम् भवेत। भवेयम् भवेव भवेम ॥ **लिङाशिषि** ।३।४।११६। आशिषि लिङस्तिङार्धधातुकसंज्ञः स्यात् ॥ **किदाशिषि** ।३।४।१०४। आशिषि लिङो यासुट् कित्। स्कोः संयोगाद्योरिति सलोपः ॥ **क्ङिति च** ।१।१।५।

---

ङिच्च इत्यनेन यासुटि जाते भव–यासुट्–ति इति जाते उट्भागस्य लोपे **इतश्च** इत्यनेन तकारोत्तरवर्तिन इकारस्य लोपे च कृते भव–यास्–त् इति जातं तत्र **लिङः सलोपोऽनन्त्यस्य** इत्यनेन सलोपे प्राप्ते **अतोयेयः** इत्यनेन यास् इत्यस्य इयादेशे कृते गुणे च कृते च **लोपो व्योर्वलि** इत्यनेन यलोपे ॥ भवेत् ॥ भू अग्रे लिङः प्रथमपुरुषद्विवचने तसि शपि सार्वधातुकत्वे गुणे अवादेशे यासुटि उट्लोपे इयादेशे गुणे यलोपे **तस्थस्थमिपां तांतंतामः** इति तसस्तामि च कृते ॥ भवेताम् ॥ भू अग्रे लिङः प्रथमपुरुषबहुवचने झौ समागते शपि सार्वधातुकत्वे गुणे अवादेशे यासुटि इयादेशे **झेर्जुस्** इति जुसि जकारस्येत्संज्ञायां लोपे च कृते संयोगे सस्य लोपे रेफस्य विसर्जनीयत्वे च कृते ॥ भवेयुः ॥ भू अग्रे लिङो मध्यमपुरुषैकवचने सिप्यागते शपि सार्वधातुकत्वे गुणे अवादेशे यासुटि उट्लोपे इयादेशे गुणे **लोपो व्योर्वली**ति यलोपे **इतश्चे**ति सकारोत्तरवर्तिन इकारस्य लोपे सस्य रुत्वे रेफस्य विसर्जनीयत्वे च कृते ॥ भवेः ॥ भू अग्रे लिङो मध्यमद्विवचने थस्यागते शपि सार्वधातुकत्वे गुणे अवादेशे यासुटि उट्लोपे इयादेशे गुणे यलोपे **तस्थस्थमिपा**मिति तमि च कृते ॥ भवेतम् ॥ भू अग्रे लिङो मध्यमपुरुषबहुवचने थे समागते शपि सार्वधातुकत्वे गुणे अवादेशे, टि इयादेशे गणे यलोपे **तस्थस्थमिपां तांतंताम** इति तादेशे च कृते ॥ भवेत ॥

गित्कित्ङिन्निमित्ते इग्लक्षणे गुणवृद्धी न स्तः । भूयात् भूयास्ताम् भूयासुः । भूयाः भूयास्तम् भूयास्त । भूयासम् भूयास्व भूयास्म ॥ **लुङ्** ।३।२।११०। भूतार्थे धातोर्लुङ् स्यात् ॥ **माङि लुङ्** ।३।३।१७५। सर्वलकारापवादः ॥ **स्मोत्तरे लङ् च** ।३।३।१७६। स्मोत्तरे लङ् स्याच्चाल्लुङ् ॥ **च्लि लुङि** ।३।१।४३। शबाद्यपवादः॥ **च्लेः सिच्** ।३।१।४४। इचावितौ ॥ **गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु** ।२।४।७७। एभ्यः सिचो लुक् स्यात् । गापाविहेणादेशपिबती गृह्येते ॥ **भूसुवोस्तिङि** ।७।३।८८। भू सू एतयोः सार्वधातुके तिङि परे गुणो न । अभूत् अभूताम् अभूवन् । अभूः अभूतम् अभूत । अभूवम् अभूव अभूम ॥ **न माङ्योगे** ।६।४।७४। अडाटौ न स्तः । मा भवान्भूत् मा स्म भवत् मा स्म भूत् ॥ **लिङ्निमित्ते लृङ् क्रियातिपत्तौ** ।३।३।१३९। हेतुहेतुमद्भावादि

---

मति॥भूयास्म॥भू अग्रे **लुङ्** इत्यनेन लुङि अडागमे लस्य तिपि **च्लि लुङि** इत्यनेन च्लौ जाते **च्लेः सिच्** इत्यनेन सिचि सिचावित्संज्ञकौ विधाय तयोर्लोपे सकारस्य च **गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु** इत्यनेन लोपे कृते **इतश्चेति** तकारोत्तरवर्तिन इकारस्य लोपे कृते **भूसुवोस्तिङि** इति गुणाभावे च कृते ॥ अभूत् ॥ अभूताम् ॥ भू अग्रे लुङः प्रथमपुरुषबहुवचने झावागते **लुङ्लङ्लृङ्क्ष्वडुदात्त** इत्यनेन अटि अभू–झीति जातं तत्र **च्लि लुङि** इति च्लौ च्लेः सिचि इकारचकारयोरित्संज्ञायां लोपे **गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु** इति सलोपे **भूसुवोस्तिङि** इति गुणाभावे **झोन्त** इत्यनेन अन्तादेशे कृते अभू–अन्तीति जातं तत्र **भुवो वुक् लुङ्लिटोः**रिति वुकि कृते उक्भागस्य लोपे कृते अभूवन्तीति जातम्, तत्र **इतश्चेति** इकारलोपे **संयोगान्तस्येति** तकारलोपे च कृते ॥अभूवन्॥एवमग्रेपि बोध्यम् । माभवान्भूदित्यत्र **न माङ्योगे** इत्यनेन अडभावः । एवं मास्म भूत् भवद्वेत्यत्रापि बोध्यम् । भू अग्रे **लिङ्निमित्ते लृङ् क्रियातिपत्ता**वित्यनेन लृङि **लुङ्लङ्लृङ्क्ष्व**ति अटि लङ्लृकारस्य तिपि **स्यतासी लृलुटो**रिति स्यागमे च कृते अभू–स्यतीति जातं तत्र **आर्द्धधातुकं शेष** इति स्यस्य आर्द्धधातुकत्वे **आर्द्धधातुकस्येड्वलादे**रिति इटि अभू-इ–स्य–तीति जातं तत्र **सार्वधातुकार्द्धधातुकयो**रिति गुणे अवादेशे सस्य मूर्द्धन्यादेशे **इतश्चे**ति इकारलोपे च कृते ॥ अभविष्यत् ॥ एवं तसादिष्वप्यूह्यम् । अत् धातोर्लटस्तिपि **कर्तरि शप्** इति शपि ॥ अतति ॥ अत् अग्रे प्र.द्वि. तसि शपि सस्य रुत्वे रोर्विसर्गे च कृते ॥ अततः ॥ अत अग्रे प्र. व. झौ शपि **झोन्त** इत्यन्तादेशे ॥ अतन्ति ॥ अत् अग्रे मध्य. ए. सिपि शपि ॥ अतसि ॥ अत् अग्रे म. द्वि. थसि शपि सस्य विसर्गत्वे॥ अतथः ॥ अत् अग्रे म. व. थे शपि ॥ अतथ ॥ अत् अग्रे उ. ए. मिपि शपि **अतो दीर्घो यञि** इति दीर्घे ॥ अतामि ॥ अत् अग्रे उ. द्वि. वसि शपि दीर्घत्वे सस्य रुत्वे रोर्विसर्गत्वे ॥ अतावः ॥ तथैव मसि ॥ अतामः ॥ अत्धातुर्वर्ततेऽग्रे लिटि समागते लिटस्तिपि तिपो णलि **लिटि**

असेधिष्यत् । एवं चिती संज्ञाने ४। शुच शोके ५। गद व्यक्तायां वाचि ६ गदति ॥ **नेर्गदनदपतपदघुमास्यतिहन्तियातिवातिद्रातिप्सातिवपतिवहतिशाम्यतिचिनोतिदेग्धिषु च ।८।४।१७।** उपसर्गस्थान्निमित्तात्परस्य नेर्णः गदादिषु परेषु । प्रणिगदति ॥ **कुहोश्चुः ।७।४।६२।** अभ्यासकवर्गहकारयोश्चवर्गादेशः ॥ **अत उपधायाः ।७।२।११६।** उपधाया अतो वृद्धिः स्यात् ञिति णिति च प्रत्यये परे । जगाद जगदतुः जगदुः । जगदिथ जगदथुः जगद ॥ **णलुत्तमो वा ।७।१।९१।** उत्तमो णल्वा णित्स्यात् । जगाद जगद जगदिव जगदिम । गदिता गदिष्यति

---

स्तिपि **लुङ्लङ्लृङ्क्ष्वडुदात्तः** इति अटि शपि गुणे पस्य सत्वे **इतश्चे**ति इकारलोपे च ॥ असेधत् ॥ सिध् अग्रे लिङस्तिपि **यासुट्परस्मैपदेषूदात्तो ङिच्चे**ति यासुटि उट्भागलोपे शपि **अतो येयः** इति यास इयादेशे गुणे **लोपो व्योर्वली**ति यलोपे **इतश्चे**ति इकारलोपे पस्य सत्वे च ॥ सेधेत् ॥ षिध् अग्रे आशीर्लिङस्तिपि **यासुट्परस्मैपदेषूदात्तो ङिच्चे**ति यासुटि उट्भागलोपे **किदाशिषि** इति कित्वे **इतश्चे**ति इकारलोपे **स्कोः संयोगाद्योरन्ते चे**ति सलोपे **धात्वादेः षः सः** इति सत्वे ॥ सिध्यात् ॥ षिध् अग्रे लुङस्तिपि **च्लि लुङि** इति च्लौ **च्लेः सिच्** इति सिचि इकारचकारयोरित्संज्ञायां लोपे च **आर्द्धधातुकं शेषः** इति सिचः सकारस्यार्द्धधातुकत्वे **आर्द्धधातुकस्येड्वलादे**रिति इटि **लुङ्लङ्लृङ्क्ष्वडुदात्तः** इति अटि **इतश्चे**ति तिप इकारलोपे **अस्तिसिचोऽपृक्ते** इति ईटि **इटईटी**ति सलोपे दीर्घत्वे **पुगन्तलघूपधस्य चे**ति गुणे च कृते ॥ असेधीत् ॥ षिध् अग्रे लृङस्तिपि **लुङ्लङ्लृङ्क्ष्वडुदात्तः** इति अटि **स्यतासी लृलुटो**रिति से स्यस **आर्द्धधातुकं शेषः** इत्यार्धधातुकत्वे **आर्द्धधातुकस्येड्वलादे**रिति इटि **इतश्चे**ति तिप इकारलोपे **आदेशप्रत्यययो**रिति मूर्द्धन्यादेशे **धात्वादेः षः सः** इति षात्वादेः षस्य सत्वे **पुगन्तलघूपधस्ये**ति गुणे च कृते ॥ असेधिष्यत् । एवं चिती संज्ञाने ॥ शुच् शोके इत्येतयोर्धात्वो रूपाणि ज्ञेयानि ॥ गद् धातुर्वर्ततेऽग्रे लटस्तिपि शपि शस्य पस्य चेत्संज्ञायां लोपे च कृते ॥ गदति ॥ प्रनिपूर्वकगद्धातोर्लटस्तिपि शपि **नेर्गदनदपतपदघुमास्यतिहन्तियातिवातिद्रातिप्सातिवपतिवहतिशाम्यतिचिनोतिदेग्धिषु चे**त्यनेन नेर्णत्वे ॥ प्रणिगदति ॥ गद्धातोर्लिटस्तिपि तिपो णलि **लिटि धातोरनभ्यासस्ये**त्यनेन द्वित्वे **पूर्वोऽभ्यासः** इति अभ्यासत्वे **हलादिः शेषः** इति दलोपे गगद्–अ इति जाते **कुहोश्चु**रिति गस्य जत्वे **अत उपधायाः** इति वृद्धौ ॥ जगाद ॥ गद्धातोर्लिट उत्तमैकवचने णलि समागते द्वित्वे अभ्यासत्वे हल्लोपे गस्य जत्वे च कृते **णलुत्तमो वा** इति सूत्रेण वैकल्पिके णत्वे **अत उपधायाः** इति वृद्धौ कृतायाम् ॥ जगाद ॥ णित्वाभावपक्षे वृद्ध्यभावात् ॥ जगद ॥ गदधातोर्लुटस्तिपि **स्यतासी लृलुटो**रिति तासि **आर्द्धधातुकं शेषः** इत्यार्द्धधातुकत्वे

गदतु अगदत् गदेत् गद्यात् ॥ **अतो हलादेर्लघोः[1]** ।७।२।७। हलादेर्लघोरतो वृद्धि-र्वेडादौ परस्मैपदे सिचि । अगादीत् अगदीत् । अगदिष्यत् । णद अव्यक्ते शब्दे ७ ॥ **णो नः** ।६।१।६५। धात्वादेर्णस्य नः । णोपदेशास्त्वनर्दनाटिनाथ्नाध्नन्द्नक्कनॄनृतः ॥ **उपसर्गादसमासेऽपि णोपदेशस्य** ।८।४।१४। उपसर्गस्थान्निमित्तात्परस्य णोप-

**आर्द्धधातुकस्येड्वलादे**रिति इटि **लुटः प्रथमस्य डारौरसः** इति तिपो डात्वे ञ्झस्येत्संज्ञायां लोपे डित्वसामर्थ्यादभस्यापि टेर्लोपे ॥ गदिता ॥ एवं लृटस्तिपि स्ये कृते सस्य मूर्ध-न्यत्वे च कृते ॥ गदिष्यति ॥ गद्धातोर्लोटस्तिपि शपि **एरुः** इति तकारोत्तरवर्तिन इकारस्य उत्वे च कृते ॥ गदतु ॥ गद्धातोर्लङस्तिपि शपि । **लुङ्लङ्लृङ्क्ष्वडुदात्त** इति अटि **इतश्चे**ति तिप इकारलोपे च कृते ॥ अगदत् ॥ गद्धातोर्लिङस्तिपि शपि **यासुट्परस्मैपदे-ष्वदात्तो ङिच्चे**ति यासुटि उट्भागलोपे **अतो येयः** इति यास इयादेशे गुणे **लोपो व्योर्वली**ति यलोपे **इतश्चे**ति तिप इकारलोपे च कृते ॥ गदेत् ॥ गद्धातोराशीर्लिङस्तिपि **लिङाशिषि** इत्यनेन तिङ आर्द्धधातुकत्वे शबाद्यभावे च विहिते यासुटि उट्भागलोपे **इतश्चे**ति तिप इकारलोपे **स्कोः संयोगाद्योरन्ते चे**ति सलोपे च निर्मिते ॥ गद्यात् ॥ गद्धातोर्लुङस्तिपि **लुङ्लङ्लृङ्क्ष्वडुदात्तः** इति अटि **च्लि लुङी**ति च्लौ **च्लेः सिच्** इति सिचि इच्भागलोपे च कृते गद् स् ति इति जातं तत्र **आर्द्धधातुकं शेष** इति आर्द्धधातुकत्वे **आर्द्धधातुकस्येड्वलादे**रिति इटि **इतश्चे**ति तिप इकारलोपे **अस्तिसिचोऽपृक्ते** इति ईटि **इट ईटि** इति सलोपे दीर्घत्वे **अतो हलादेर्लघो-**रिति वृद्धौ च विरचितायाम् ॥ अगादीत् ॥ पक्षे ॥ अगदीत् ॥ गदधातोर्लृङस्तिपि **स्यतासी लृलुटो**रिति स्ये कृते **आर्द्धधातुकं शेष** इति आर्द्धधातुकत्वे **आर्द्धधातुकस्येड्व-लादे**रिति इटि **लुङ्लङ्लृङ्क्ष्वडुदात्तः** इति अटि सस्य षत्वे **इतश्चे**ति तिप इकार-लोपे च रचिते ॥ अगदिष्यत् ॥ णद अव्यक्ते शब्दे वर्तते तत्र लटस्तिपि समागते **णो नः** इत्यनेन नादेशे शपि शस्य पस्य चेत्संज्ञायां लोपे च कृते ॥ नदति ॥ प्रपूर्वकणदधातोस्तु **उपसर्गादसमासेऽपि णोपदेशस्ये**त्यनेन नस्य णत्वे प्राप्ते के णोपदेशा इत्याशङ्कायां **णोपदेशास्त्वनर्दनाटिनाथ्नाध्नन्द्नक्कनॄनृतः** इति सूत्रोक्तेष्वणोपदेशेषु धातुषु णदधातोरनन्तःपातित्वादतएव णोपदेशत्वान्नस्य णत्वे कृते ॥ प्रणदति ॥ प्रणिनदतीत्यत्र **नेर्गद्न-दे**ति णत्वम् ॥ णद्धातोर्लिटस्तिपि **णो नः** इति णस्य नत्वे **परस्मैपदानां णलतुसुस्थल-थुसणल्वमाः** इति णलि **लिटि धातोरनभ्यासस्ये**ति द्वित्वे **पूर्वोऽभ्यासः** इत्यभ्या-सत्वे **हलादिः शेषः** इति दलोपे **अत उपधायाः** इत्युपधादीर्घत्वे च विहिते ॥ ननाद ॥ णद्धातोर्लिटस्तसि तसश्चातुसि जाते **णो नः** इति णस्य नत्वे द्वित्वे अभ्यासत्वे दलोपे च

---

१ अतो हलादेर्लघोः । अत्र सूत्रे तपरकरणादेव ह्रस्वग्रहणं भविष्यति लघुग्रहणं किमर्थमिति प्रश्नः । उच्यते । लघुग्रहणाभावे अनर्दीदित्यत्र संयोगे परे गुरुत्वात्तत्रापि वृद्धिः स्यात् ॥

देशस्य धातोर्नस्य णः । प्रणदति प्रणिनदति ननाद ॥ **अत एकहल्मध्येऽनादेशादेर्लिटि ।६।४।१२०।** लिण्निमित्तादेशादिकं न भवति यदङ्गं तदवयवस्यासंयुक्तहल्मध्यस्थस्यात एत्वमभ्यासलोपश्च किति लिटि । नेदतुः नेदुः ॥ **थलि च सेटि ।६।४।१२१।** प्रागुक्तं स्यात् । नेदिथ नेदथुः नेद । ननाद ननद नेदिव नेदिम । नदिता नदिष्यति नदतु अनदत् नदेत् नद्यात् अनादीत् अनदीत् अनदिष्यत् । टुनदि समृद्धौ ८ ॥ **आदिर्ञिटुडवः ।१।३।५।** उपदेशे धातोराद्या एते इतः स्युः ॥ **इदितो**

कृते **अत एकहल्मध्येऽनादेशादेर्लिटी**ति सूत्रेण अकारस्य एत्वे अभ्यासलोपे च कृते ॥ नेदतुः ॥ एवं नेदुः ॥ **थलि च सेटी**त्यनेन एत्वेऽभ्यासलोपे च कृते ॥ नेदिथ ॥ नेदथुः ॥ नेद ॥ उत्तमैकवचने **णलुत्तमो वे**ति णलो णित्वे विकल्पे कृते **अत उपधाया** इति वृद्धौ ॥ ननाद ॥ पक्षे वृद्ध्यभावे ॥ ननद ॥ णद्धातोर्लुटस्तिपि **स्यतासी ऌलुटो**रिति तासि **आर्द्धधातुकं शेष** इति तास आर्धधातुकत्वे **आर्द्धधातुकस्येड्वलादे**रिति इटि **लुटः प्रथमस्य डारौरसः** इति तिपो डाकारे डस्येत्संज्ञायां लोपे **डित्वसामर्थ्यादभस्यापि टेर्लोपः** इत्यास्भागस्य लोपे संयोगे च जाते ॥ नदिता ॥ एवम् ॥ नदिष्यति ॥ णद्धातोर्लोटस्तिपि **णो नः** इति णस्य नत्वे शपि **एरुः** इति तिप इकारस्योकारे च कृते ॥ नदतु ॥ णद्धातोर्लङस्तिपि शपि अटि **इतश्चे**ति तिप इकारलोपे ॥ अनदत् ॥ णद्धातोर्लिङस्तिपि णस्य नत्वे शपि यासुटि उट्भागलोपे **अतो येयः** इति इयादेशे गुणे **लोपो व्योर्वली**ति यलोपे तिप इकारलोपे च कृते ॥ नदेत् ॥ णद्धातोराशीर्लिङस्तिपि णस्य नत्वे **यासुट् परस्मैपदेषूदात्तो ङिच्च** इति यासुटि उट्भागलोपे **इतश्चे**ति तिप इकारलोपे **स्कोः संयोगाद्योरन्ते चे**ति सलोपे च कृते ॥ नद्यात् ॥ णद्धातोर्लुङस्तिपि **णो नः** इति णस्य नत्वे **लुङ्लङ्लृङ्क्ष्वडुदात्तः** इति अटि **च्लि लुङी**ति च्ली **च्लेः सिच्** इति सिचि इभागलोपे **आर्द्धधातुकं शेष** इत्यार्द्धधातुकत्वे **आर्द्धधातुकस्येड्वलादे**रिति इटि **इतश्चे**ति तिप इकारलोपे **अस्तिसिचोऽपृक्ते** इति ईटि **इट ईटी**ति सलोपे दीर्घत्वे **अतो हलादेर्लघोः** रिति वृद्धौ ॥ अनादीत् ॥ वाग्रहणात् वृद्ध्यभावे ॥ अनदीत् ॥ णद्धातोर्लृङस्तिपि **णो नः** इति णस्य नत्वे **स्यतासी ऌलुटो**रिति स्ये **आर्द्धधातुकं शेष** इति स्यस्यार्द्धधातुकत्वे **आर्द्धधातुकस्येड्वलादे**रिति इटि **लुङ्लङ्लृङ्क्ष्वडुदात्तः** इति अटि **आदेशप्रत्यययो**रिति सस्य षत्वे **इतश्चेति** तिप इकारलोपे ॥ अनदिष्यत् ॥ टुनदि समृद्धौ धातुर्वर्तते तत्र टुटि समागते लटस्तिपि **आदिर्ञिटुडवः** इत्यनेन टोरित्संज्ञायां लोपे च कृते दकारोत्तरवर्तिनि इका-

१ इदितो नुम् धातोः । अत्र सूत्रे धातोर्ग्रहणं किमर्थम् । नच अमित्सीत् अचिल्लीत् इत्यादिषु मिच दहिलं मत्ता नुम् स्यादिति वाच्यम् । तत्र नर्थान्तरोच्चारणेनैवेष्टसिद्धेः ॥ एव इशिलिडादिष्वपि बोध्यम् । धातुग्रहणमुपदेशावस्थायां नुम् भवतिरित्येतदर्थम् । तेन कुटि दाहे इति धातोः सकारादुपदेशावस्थायां नुमि कृते संयोगान्तयोगे परे गुरुत्वात् गुरोश्च हल इति सूत्रेण अप्रत्यये कृते कुण्डा कुण्ठा इत्यादीनां सिद्धिः ।

**नुम् धातोः** ।७।१।५८। नन्दति ननन्द नन्दिता नन्दिष्यति नन्दतु अनन्दत् नन्देत् नन्द्यात् अनन्दीत् अनन्दिष्यत् । अर्च पूजायाम् ९ अर्चति ॥ **तस्मान्नुड् द्विहलः** ।७।४।७१। द्विहलो धातोर्दीर्घीभूतात्परस्य नुट् स्यात् । आनर्च आनर्चतुः अ-

---

रस्य **उपदेशेऽजनुनासिक इत्** इतीत्संज्ञायां लोपे च कृते **इदितो नुम् धातो**रिति नुमि उम्भागलोपे शपि च कृते ॥ नन्दति ॥ लिटस्तिपि तिपो णलि **आदिर्ञिटुडव** इति टोरित्संज्ञायां लोपे च दकारोत्तरवर्तिन इकारस्येत्संज्ञायां लोपे च **लिटि धातोरनभ्यासस्ये**ति धातोर्द्वित्वे **हलादिः शेष** इति हलोलोपे **इदितो नुम् धातो**रिति नुमि उम्भागलोपे संयोगे च कृते ॥ ननन्द ॥ टुनदिधातोर्लुटस्तिपि **आदिर्ञिटुडव** इति टोरित्संज्ञायां तस्य लोपे दकारोत्तरवर्तिन इकारस्यापीत्संज्ञायां लोपे च कृते **स्यतासी लृलुटो**रिति तासौ उकारस्येत्संज्ञायां लोपे **आर्द्धधातुकं शेष** इत्यार्द्धधातुके **आर्द्धधातुकस्येड्वलादे**रिति इटि **इदितो नुम् धातो**रिति नुमि **लुटः प्रथमस्य डारौरस** इति तिपो डात्वे डकारस्येत्संज्ञायां लोपे च **डित्वसामर्थ्यादभस्यापि टेर्लोप** इति आस्भागलोपे संयोगे च कृते ॥ नन्दिता ॥ एवमेव स्ये कृते नुमि इटि सस्य षत्वे च कृते ॥ नन्दिष्यति ॥ टुनदिधातोरग्रे लोटस्तिपि शपि नुमि तिपस्तिकारस्योत्वे च कृते ॥ नन्दतु ॥ टुनदि धातोर्लङस्तिपि **आदिर्ञिटुडव** इति टुलोपे दकारोत्तरवर्तिन इकारस्येत्संज्ञायां लोपे **लुङ्लङ्लृङ्क्ष्वडुदात्त** इति अटि **इदितो नुम् धातो**रिति नुमि शपि **इतश्चे**ति तिप इकारलोपे च कृते ॥ अनन्दत् ॥ टुनदिधातोर्लिङस्तिपि **आदिर्ञिटुडव** इति टुलोपे इकारलोपे **यासुट् परस्मैपदेषूदात्तो ङिच्चे**ति यासुटि **अतोयेय** इति यास इयादेशे यलोपे तिपि गुणे **इदितो नुम्धातो**रिति नुमि **इतश्चे**ति तिप इकार-लोपे च कृते ॥ नन्देत् ॥ आशीर्लिङि लिङस्तिपि **लिङाशिषि** इत्यार्द्धधातुकत्वे तिपः यासुटि उट्भागलोपे नुमि **इतश्चे**तीकारलोपे च ॥ नन्द्यात् ॥ लुङस्तिपि अटि च्लौ च्लेः सिचि इज्भागलोपे आर्द्धधातुकत्वे इटि **इतश्चे**तीकारलोपे **अस्तिसिचोऽपृक्ते** इति ईटि **इटईटि** इति सलोपे दीर्घत्वे च कृते ॥ अनन्दीत् ॥ एवं लृङस्तिपि अटि स्ये कृते आर्द्धधातुकत्वे इटि नुमि इकारलोपे षत्वे च कृते ॥ अनन्दिष्यत् ॥ अर्च् धातुर्वर्तते अग्रे लटस्तिपि शपि ॥ अर्चति ॥ अर्च्धातोर्लिटस्तिपि तिपो णलि **लिटि धातोरनभ्यासस्ये**ति द्वित्वे **पूर्वोऽभ्यास** इत्य-भ्यासत्वे **हलादिः शेष** इति अभ्यासहलोलोपे अ अर्च् इति जातं तत्र **अकः सवर्णे दीर्घ** इति दीर्घः प्राप्तस्तं बाधित्वा **अतो गुणे** इत्यनेन पररूपं प्राप्तं तद्बाधित्वा **अत आदे**रित्यभ्या-साकारदीर्घत्वे आ अर्चेति जातं तत्र **तस्मान्नुड्द्विहल** इति नुटि उट्भागलोपे संयोगे च कृते ॥ आनर्च ॥ अर्च् अग्रे लुटस्तिपि **स्यतासी लृलुटो**रिति तासौ **आर्द्धधातुकं शेष**इत्यार्द्धधातुकत्वे **आर्द्धधातुकस्येड्वलादे**रिति इटि **लुटः प्रथमस्य डारौरस** इति तिपो डात्वे **डित्वसामर्थ्यादभस्यापि टेर्लोप** इत्याकारलोपे संयोगे च कृते ॥

र्चिता अर्चिष्यति अर्चतु आर्चत् अर्चेत् अर्च्यात् आर्चीत् आर्चिष्यत् । व्रज गतौ १० व्रजति वव्राज व्रजिता व्रजिष्यति व्रजतु अव्रजत् व्रजेत् व्रज्यात् ॥ **वदव्रजहलन्तस्याचः।७।२।३।** एषामचो वृद्धिः सिचि परस्मैपदेषु । अव्राजीत् अव्रजिष्यत् । कटे

---

अर्चिता ॥ अर्च् अग्रे लृडस्तिपि **स्यतासी लृलुटोरि**ति स्ये कृते **आर्द्धधातुकं शेष** इत्यार्द्धधातुकत्वे **आर्द्धधातुकस्येड्वलादे**रिति इटि सकारस्य मूर्द्धन्यादेशे च कृते ॥ अर्चिष्यति ॥ अर्च् अग्रे लोटस्तिपि शपि एरुरित्यनेनेकारस्योत्वे ॥ अर्चतु ॥ अर्च् अग्रे लङस्तिपि **लुङ्लङ्लृङ्क्ष्वडुदात्त** इत्यनुवृत्तौ सत्याम् **आडजादीनामि**त्यनेन आडागमे कृते शपि **इतश्चे**ति इकारलोपे च कृते ॥ आर्चत् ॥ अर्च् अग्रे लिङस्तिपि **यासुट्परस्मैपदेषूदात्तो ङिच्च** इत्यनेन यासुटि **अतो येय** इति इयादेशे **कर्त्तरि शबि**ति शपि गुणे **लोपो व्योर्वली**ति यलोपे **इतश्चे**ति इकारलोपे च कृते ॥ अर्चेत् ॥ अर्च् अग्रे आशीर्लिङस्तिपि यासुटि उट्भागलोपे **लिङाशिषी**ति यासुट आर्द्धधातुकत्वे आर्द्धधातुकत्वाच्च इयादेशाभावे **इतश्चे**तीकारलोपे च कृते ॥ अर्च्यात् ॥ अर्च् अग्रे लुङस्तिपि **आडजादीनामि**ति आडागमे **च्लि लुङी**ति च्लौ **च्लेः सिच्** इति सिचि इज्भागलोपे **आर्द्धधातुकं शेष** इति आर्द्धधातुकत्वे **आर्द्धधातुकस्येड्वलादे**रिति इटि **अस्तिसिचोऽपृक्ते** इत्यनेन ईडागमे **इट ईटि** इत्यनेन सिचः सकारलोपे दीर्घत्वे **इतश्चे**ति इकारलोपे च कृते ॥ आर्चीत् ॥ अर्च् अग्रे लृङस्तिपि **आडजादीनामि**ति आटि **स्यतासी लृलुटोरि**ति स्ये कृते सकारस्य मूर्द्धन्यादेशे च कृते **आर्द्धधातुकं शेष** इत्यार्द्धधातुकत्वे **आर्द्धधातुकस्येड्वलादे**रिति इटि **इतश्चे**ति इकारलोपे च कृते ॥ आर्चिष्यत् ॥ व्रज गतौ धातुर्वर्तते तदग्रे लटस्तिपि शपि च कृते ॥ व्रजति ॥ व्रज् अग्रे लिटि तिटस्तिपि तिपो णलि **लिटि धातोरनभ्यासस्ये**ति द्वित्वे **हलादिः शेष** इति रकारजकारयोर्लोपे **अत उपधाया** इत्यकारस्य वृद्धौ च कृतायाम् ॥ वव्राज ॥ व्रज् अग्रे लुटस्तिपि **स्यतासी लृलुटोरि**ति तासौ इकारलोपे आर्द्धधातुकत्वे इटि **लुटः प्रथमस्य डारौरस** इति तिपो डात्वे डित्सामर्थ्यादभस्यापि टेर्लोपे च कृते ॥ व्रजिता ॥ व्रज् अग्रे लृटस्तिपि **स्यतासी लृलुटोरि**ति स्ये कृते आर्द्धधातुकत्वे इटि सकारस्य मूर्द्धन्यत्वे च कृते ॥ व्रजिष्यति ॥ व्रज् अग्रे लोटस्तिपि शपि **एरुः** इति तिप इकारस्योत्वे ॥ व्रजतु ॥ व्रज् अग्रे लङस्तिपि **लुङ्लङ्लृङ्क्ष्वडुदात्त** इति अटि टकारलोपे शपि **इतश्चे**ति तिप इकारलोपे च कृते ॥ अव्रजत् ॥ व्रज् अग्रे लिङस्तिपि **यासुट्परस्मैपदेषूदात्तो ङिच्चे**ति यासुटि उट्भागलोपे **अतो येय** इति यास इयादेशे शपि गुणे **लोपो व्योर्वली**ति यलोपे **इतश्चे**ति तिप इकारलोपे च विहिते ॥ व्रजेत् ॥ व्रज् अग्रे आशीर्लिङस्तिपि यासुटि उट्भागस्य लोपे **लिङाशिषी**त्यनेन तिप आर्द्धधातुकत्वे आर्द्धधातुकत्वाच्च इयादेशाभावे **स्कोः संयोगाद्योरन्ते चे**ति सलोपे **इतश्चे**ति तिप इकारलोपे च कृते ॥ व्रज्यात् ॥ व्र-

वर्णावरणयोः ११ कटति चकाट कटिता कटिष्यति कटतु अकटत् कटेत् कट्यात् ॥ [1]**ह्यन्तक्षणश्वसजागृणिश्व्येदिताम्** ।७।२।५। हमयान्तस्य क्षणादेर्ण्यन्तस्य श्वयतेरेदितश्च वृद्धिर्नेडादौ सिचि । अकटीत् अकटिष्यत् । गुपू रक्षणे १२ ॥ गुपूधूप-

---

अग्रे लुङस्तिपि **लुङ्लङ्लृङ्क्ष्वडुदात्तः** इति अडागमे **च्लि लुङि** इति च्लौ **च्लेः सिच्** इति सिचि इच्भागलोपे आर्द्धधातुकत्वे इटि **इतश्च** इति तिप इकारलोपे **अस्तिसिचोऽपृक्ते** इति ईटि **इट ईटि** इत्यनेन सकारलोपे दीर्घत्वे **वदव्रजहलन्तस्याचः** इत्यनेनाकारस्य वृद्धौ कृतायाम् ॥ अव्राजीत् ॥ व्रजेर्लृङस्तिपि अटि **स्यतासी लृलुटोः** इति स्ये कृते आर्द्धधातुकत्वे इटि मूर्द्धन्यादेशे **इतश्च** इति तिप इकारलोपे च कृते ॥ अव्रजिष्यत् ॥ कटे वर्षावरणयोरर्थे धातुर्वर्तते कटेरेकारस्य **उपदेशेऽजनुनासिक इत्** इति इत्संज्ञापूर्वं लोपे लटस्तिपि शपि संयोगे च कृते ॥ कटति ॥ कट् अग्रे लिटस्तिपि तिपो णलि **लिटि धातोरनभ्यासस्य** इति द्वित्वे **पूर्वोऽभ्यासः** इत्यभ्यासत्वे **हलादिः शेषः** इति शेषहलोर्लोपे **कुहोश्चुः** इति कस्य चत्वे **अत उपधायाः** इत्यनेनोपधासंबन्धिनोऽकारस्य वृद्धौ च कृतायाम् ॥ चकाट ॥ कट् अग्रे लुटस्तिपि **स्यतासी लृलुटोः** इत्यनेन तासौ कृतायां सकारोच्चारणार्थं इकारस्य लोपे कृते **आर्द्धधातुकं शेषः** इति तासेरार्द्धधातुकत्वे **आर्द्धधातुकस्येड्वलादेः** इति इटि **लुटः प्रथमस्य डारौरसः** इति तिपो डात्वे डित्त्वसामर्थ्यादभस्यापि टेर्लोपे संयोगे च कृते ॥ कटिता ॥ कट् अग्रे लृटस्तिपि **स्यतासी लृलुटोः** इति स्ये कृते आर्द्धधातुकत्वे इटि मूर्द्धन्यादेशे च कृते ॥ कटिष्यति ॥ कट् अग्रे लोटस्तिपि शपि **एरुः** इति तिप इकारस्योत्वे च कृते ॥ कटतु ॥ कट् अग्रे लङस्तिपि **लुङ्लङ्लृङ्क्ष्वडुदात्तः** इति अटि शपि **इतश्च** इति तिप इकारलोपे च कृते ॥ अकटत् ॥ कट् अग्रे लिङस्तिपि **यासुट्परस्मैपदेषूदात्तो ङिच्च** इति यासुटि **अतो येयः** इति इयादेशे शपि गुणे तिप इकारलोपे **लोपो व्योर्वलि** इति यलोपे च कृते ॥ कटेत् ॥ कट् आशीर्लिङस्तिपि यासुटि उट्भागलोपे **इतश्च** इति तिपइकारलोपे **स्कोः संयोगाद्योरन्ते च** इति सलोपे च कृते ॥ कट्यात् ॥ कट् अग्रे लुङस्तिपि अटि **च्लि लुङि** इति च्लौ **च्लेः सिच्** इति सिचि इच्भागलोपे तस्यार्द्धधातुकत्वे इटि **इतश्च** इति तिप इकारलोपे **अस्तिसिचोऽपृक्ते** इति ईटि **इट ईटि** इति सलोपे दीर्घत्वे **ह्यन्तक्षणश्वसजागृणिश्व्येदिताम्** इत्यनेन वृद्ध्यभावे च कृते ॥ अकटीत् ॥ कट् अग्रे लृङस्तिपि अटि स्ये कृते आर्द्धधातुकत्वे इटि सस्य मूर्द्धन्यादेशे **इतश्च** इतीकारलोपे च कृते ॥ अकटिष्यत् ॥ गुप्

---

१ ह्यन्तक्षणश्वसजागृणिश्व्येदिताम् । ण्यन्तस्योदाहरणं लोके नास्ति लोके तु ण्यन्तात् ऊनयत् प्रत्ययेन सिच् परस्याभावात् वृद्धिः । अस्योदाहरणं वैदिकप्रकरणे नोनयतिध्वनयत्येलयत्यर्दयतिभ्यः इति सूत्रव्याख्यावसरे कौमुदीकारेण निरूपितम् । तत एवावधार्यम् ।

क्षुध्बुध्बन्ध्युध्रुध्राध्व्यध्शुध्साध्सिध्या एकादश । नान्तेषु मन्यहनौ द्वौ । पान्तेषु आप्क्षुप्क्षिप्तप्तिप्तृप्दृप्लिप्लुप्वप्शप्सृप्स्वपस्त्रयोदश । भान्तेषु यभ्रभ्लभस्त्रयः । मान्तेषु गम्नम्यम्रमश्चत्वारः । शान्तेषु क्रुश्दंश्दिश्दृश्मृश्रिश्रुश्लिश्विश्स्पृशो दश । षान्तेषु कृष्त्विष्तुष्द्विष्दुष्पुष्यपिष्विष्शिष्शुष्श्लिष एकादश । सान्तेषु घस्वसती द्वौ । हान्तेषु दह्दिह्दुह्नह्मिह्रुह्लिह्वहोऽष्टौ । अनुदात्ता हलन्तेषु धातवस्त्र्यधिकं शतम् ॥ गोपायाञ्चकर्थ गोपायाञ्चक्रथुः गोपायाञ्चक्र । गोपायाञ्चकार गोपायाञ्चकर गोपायाञ्चकृव गोपायाम्बभूव गोपायामास । जुगोप जुगुपतुः जुगुपुः ॥ स्वरतिसूतिसूयतिधूञूदितो वा ।७।२।४४। स्वरत्यादेरूदितश्च परस्य वलादेरार्धधातुकस्येड्वा स्यात् । जुगोपिथ जुगोप्थ गोपायिता गोपिता गोप्ता गोपायिष्यति गोप्स-

---

आयादय आर्धधातुके वा इत्यनेन सूत्रेणायभावे लिटि णलि द्वित्वे हलादिः शेषः इति पलोपे कुहोश्चुरिति चुत्वे पुगन्तलघूपधस्येति गुणे च कृते ॥ जुगोप ॥ एवं गुप् धातो अतुसि लिटि धातोरनभ्यासस्येति द्वित्वे हलादिः शेष इति पलोपे कुहोश्चुरिति चुत्वे सस्य रुत्वे रस्य निसर्जनीयत्वे च कृते ॥ जुगुपतु ॥ एवमुसि परे ॥ जुगुपु ॥ थलि परे लिटि धातोरनभ्यासस्येति द्वित्वे हलादिः शेष इति पलोपे कुहोश्चुरिति गस्य जत्वे लिट्चेत्यनेन थल आर्द्धधातुकत्वे आर्द्धधातुकस्येड्वलादेरित्यनेन इटि पुगन्तलघूपधस्य चेति गुणे च कृते ॥ जुगोपिथ ॥ स्वरतिसूतिसूयतिधूञूदितो वा इत्यनेन गुप्धातोरूदित्त्वादिडभावे ॥ जुगोप्थ ॥ गुप्धातोरग्रे गुपूधूपविच्छिपणिपनिभ्य आय इत्याय् कृते । सनाद्यन्ता धातव इति धातुत्वे धातुत्वात् अनद्यतने लुट् इति लुटि लुटस्तिपि स्यतासी लृलुटोरिति तासी आर्द्धधातुकं शेष इति तासेरार्द्धधातुकत्वे आर्द्धधातुकस्येड्वलादेरिति इटि पुगन्तलघूपधस्य चेति गुणे लुटः प्रथमस्य डारौरसः इति तिपो डात्वे डित्वसामर्थ्यादभस्यापि टेर्लोपे सयोगे च कृते ॥ गोपायिता ॥ आयादय आर्द्धधातुके वा इत्यनेनायभावे ॥ गोपिता ॥ स्वरतिसूतिसूयतिधूञूदितो वा इति ऊदित्त्वात् इडभावे च ॥ गोप्ता ॥ गुप्धातोरग्रे आयादेशे सनाद्यन्ता धातव इति धातुत्वे धातुत्वाल्लृटि लृटस्तिपि स्यतासी लृलुटोरिति स्ये आर्द्धधातुकं शेष इति स्यस्यार्द्धधातुकत्वे आर्द्धधातुकस्येड्वलादेरिति इटि आदेशप्रत्ययोरिति सस्य षत्वे च कृते ॥ गोपायिष्यति ॥ आयादय आर्द्धधातुके वा इत्यनेनायभावे ॥ गोपिष्यति ॥ स्वरतिसूतिसूयतिधूञूदितो वा इत्यनेन

---

१ स्वरतिसूतिसूयतिधूञूदितोवा ॥ ननु स्वरतिसूधूञूदितोवेत्येव सूत्रमस्तु किमनेन सूतिसूयत्यो प्रथगुच्चारणेनेति चेन्न । निरनुबन्धकग्रहणे न सानुबन्धकस्येत्यनया परिभाषया षू प्रेरणे इति तौदादिकस्यैव ग्रहणं स्यात् अदादिदिवादिकयोरुभयोरित्येतदर्थं तस्योपादानत्वात् ॥

ति गोपायतु अगोपायत् गोपायेन ॥ **नेटि** ।७।२।४। इडादौ सिचि हलन्तस्य वृद्धिर्न । अगोपायीत् अगोपीत् अगौप्सीत् ॥ **झलो झलि** ।८।२।२६। झलः परस्य सस्य लोपो झलि । अगौप्ताम् अगौप्सुः । अगौप्सीः अगौप्तम् अगौप्त । अगौप्सम् अगौप्स्व अ-

---

गुप्धातोरूदित्वात् इडभावे ॥ गोप्स्यति ॥ गुप्धातोरग्रे **गुपूधूपविच्छिपणिपनिभ्य**
**आय** इत्याय् कृते **सनाद्यन्ता धातव** इति धातुत्वे धातुत्वाल्लोटि लोटस्तिपि शपि **एरुः**
इत्यनेन तिप इकारस्योत्वे कृते ॥ गोपायतु ॥ गुप् अग्रे आय् कृते धातुत्वे धातुत्वाल्लङि लङ-
स्तिपि शपि **लुङ्लङ्लृङ्क्ष्वडुदात्त** इत्यनेन अटि **इतश्चे**ति तिप इकारलोपे च कृते ॥
अगोपायत् ॥ गुप्धातोरग्रे **गुपूधूपविच्छिपणिपनिभ्य आय** इत्याय् कृते **पुगन्त-**
**लघूपधस्य चे**ति गुणे **सनाद्यन्ता धातवः** इति धातुत्वे धातुत्वाल्लिङि लिङस्तिपि
**यासुट्परस्मैपदेषूदात्तो ङिच्चे**ति यासुटि उट्भागलोपे **अतो येय** इति यास
इयादेशे गुणे **लोपो व्योर्वलि** इति यलोपे **इतश्चे**त्यनेन तिप इकारलोपे च कृते ॥
गोपायेत् ॥ गुप्धातोरग्रे आय् कृते गुणे धातुत्वे धातुत्वादाशीर्लिङि लिङस्तिपि यासुटि उट्-
भागलोपे **लिङः सलोपोऽनन्त्यस्ये**ति सलोपे **इतश्चे**ति तिप इकारलोपे गोपाय यात्
इति जातं तत्र **अतो लोप** इति प्रथमयकारान्तःपातिनोऽकारस्य लोपे संयोगे च कृते ॥
गोपाय्यात् ॥ **आयादय आर्द्धधातुके वा** इत्यायभावे **क्किदाशिषि** इत्य-
नेनाशीर्लिङ्संबन्धिनो यासुटः कित्त्वात् । **क्ङिति च** इत्यनेन गुणाभावे च ॥ गुप्यात् ॥
गुप्धातोरग्रे **गुपूधूपे**ति आय् कृते **पुगन्तलघूपधस्य चे**ति गुणे **सनाद्यन्ता धा-**
**तव** इति धातुत्वे धातुत्वाल्लुङि लुङस्तिपि **च्लि लुङि** इति च्लौ **च्लेः सिच्** इत्यनेन
सिचि इञ्भागलोपे । **लुङ्लङ्लृङ्क्ष्वडुदात्त** इति अटि । **आर्द्धधातुकं शेष**
इति आर्द्धधातुकत्वे **आर्द्धधातुकस्येड्वलादे**रिति इटि **इतश्चे**ति तिप इकारलोपे
अगोपाय इ स् त् इति जातं तत्र **अस्तिसिचोऽपृक्ते** इत्यनेन ईटि टलोपे **इट ईटि**
इति सलोपे **अतो लोप** इत्यनेन यकारोत्तरवर्तिनोऽकारस्य लोपे **अकः सवर्णे दीर्घ**
इति दीर्घत्वे च कृते ॥ अगोपायीत् ॥ **आयादय आर्द्धधातुके वा** इत्यनेनाय-
भावे **वदव्रजहलन्तस्याच** इत्यनेन गकारोत्तरवर्तिओकारस्य वृद्धौ प्राप्तायां **नेटि** इत्यनेन
इडादिसिच्परत्वात् वृद्ध्यभावे ॥ अगोपीत् ॥ आयभावे **स्वरतिसूतिसूयतिधूञूदि-**
**तो वा** इत्यनेन इडभावे इडादिसिच्परत्वाभावात् **वदव्रजहलन्तस्याच** इत्यनेन वृद्धौ
च जातायाम् ॥ अगौप्सीत् ॥ लुङः प्रथमस्य द्विवचने तसि तसस्ताम् **च्लि लुङी**ति
च्लौ **च्लेः सिच्** इति सिचि इञ्भागलोपे अटि **झलो झलि** इति सलोपे **वद-**
**व्रजहलन्तस्याच** इति वृद्धौ च कृतायाम् ॥ अगौप्ताम् ॥ एवं झौ **सिजभ्यस्तविदि-**
**भ्यश्चे**ति झेर्जुसि इडभावे च ॥ अगौप्सुः ॥ तमि । अगौप्तम् ॥ ते परे । अगौप्त ॥ थमि ॥

गोप्स्म । अगोपायिष्यत् अगोपिष्यत् अगोप्स्यत् । क्षि क्षये १३ क्षयति चिक्षाय चिक्षियतुः चिक्षियुः । एकाच इति निषेधे प्राप्ते ॥ **कृसृभृवृस्तुद्रुस्रुश्रुवो लिटि** ।७।२।१३। क्रादिभ्य एव लिट इण्न स्यादन्यस्मादनिटोऽपि स्यात् ॥ **अचस्तास्वत्थल्यनिटो नित्यम्** ।७।२।६१। उपदेशेऽजन्तो यो धातुस्तास्नौ नित्यानिट् ततस्थल इण् न ॥ **उपदेशेऽत्वतः** ।७।२।६२। उपदेशेऽकारवतस्तास्नौ यो नित्यानिट् ततः परस्य

---

अगोप्स्व ॥ वे परे ॥ अगोप्स्व ॥ उत्तमबहुवचने मे ॥ अगोप्स्म ॥ गुपधातोरग्रे **गुपूधूपविच्छिपणिपनिभ्य आय** इत्यनेन आय् कृते **पुगन्तलघूपधस्य** चेति गुणे ॥ गोपायेति जातं तत्र **सनाद्यन्ता धातव** इति धातुत्वे धातुत्वाच्च लृङि लङ्स्तिपि **लुङ्लङ्लृङ्क्ष्वडुदात्त** इति अटि **स्यतासी लृलुटोरि**ति स्ये कृते। **आर्द्धधातुकं शेष** इत्यार्द्धधातुकत्वे **आर्द्धधातुकस्येड्वलादे**रिति इटि **अतो लोप** इति यकारान्तःपातिकारलोपे **इतश्चे**ति तिप इकारलोपे च कृते ॥ अगोपायिष्यत् ॥ **आयादय आर्द्धधातुके वे**ति आयभावे ॥ अगोपिष्यत् ॥ आयभावे इडभावे च ॥ अगोप्स्यत् ॥ क्षि क्षये धातुर्वर्ततेऽग्रे लड्यागते लटस्तिपि **कर्तरि शप्** इत्यनेन शपि **सार्वधातुकार्धधातुकयो**रित्यनेन गुणे **एचोऽयवायाव** इत्यनेन अयादेशे च कृते ॥ क्षयति ॥ क्षिधातोरग्रे लिटस्तिपि तिपो णलि चागते **लिटि धातोरनभ्यासस्ये**त्यनेन द्वित्वे **पूर्वोऽभ्यास** इत्यभ्यासत्वे **हलादिः शेष** इति षकारलोपे कृते क्षि क्षि अ इति जाते तत्र **कुहोश्चु**रिति चुत्वे चिक्षि अ इति जातमनन्तरं **अचो ञ्णिति** इति वृद्धौ कृतायां चि क्षै अ इति जाते **एचोऽयवायाव** इति आयादेशे च कृते ॥ चिक्षाय ॥

थल इण् न स्यात् ॥ **ऋतो भारद्वाजस्य** ।७।२।६३। तासौ नित्यानिट ऋदन्तादेव थलो नेड् भारद्वाजस्य मतेन । तेन अन्यस्य स्यादेव । अथमत्र संग्रहः ॥ अजन्तोऽकारवान्वा यस्तास्यनिट् थलि वेडयम् ॥ ऋदन्त ईदृङ् नित्यानिट् क्राद्यन्यो लिटि सेड्भवेत् ॥ १ ॥ चिक्षयिथ चिक्षेथ चिक्षियथुः चिक्षिय । चिक्षाय चिक्षय चिक्षियिव चिक्षियिम । क्षेता क्षेष्यति क्षयतु अक्षयत् क्षयेत् ॥ **अकृत्सार्वधातुकयोर्दीर्घः**[1] ।७।४।२५। अजन्ताङ्गस्य दीर्घो यादौ प्रत्यये न तु कृत्सार्वधातुकयोः । क्षीयात् ॥ **सिचि वृद्धिः परस्मैपदेषु** ।७।२।१। इगन्तस्याङ्गस्य वृद्धिः स्यात्परस्मैपदे

नित्यानिटः परस्य थल इट् निवार्यते ॥ **ऋतो भारद्वाजस्ये**त्यनेन ऋदन्तादेव तासौ नित्यानिटो धातोः परस्य थल इट् निवार्यते । अतः संगृह्योक्तम् ॥ अजन्तोऽकारवान् वा यस्तास्यनिट् थलि वेडयम् । ऋदन्त ईदृङ् नित्यानिट् क्राद्यन्यो लिटि सेड्भवेत् ॥ आचार्यमते अचस्तास्वदित्यनेनेट्निषेधे प्राप्ते भारद्वाजमते ऋदन्तादन्यस्माद्धातोर्विकल्पेन थल इडिति विकल्पेन इटि जाते **सार्वधातुकार्द्धधातुकयो**रिति गुणे **एचोयवायाव** इति अयादेशे च कृते ॥ चिक्षयिथ ॥ यस्मिन् पक्षे इट् न जातस्तस्मिन् पक्षे गुणे कृते ॥ चिक्षेथ ॥ यमयोः क्रादिनियमान्नित्यमिटि कृते ॥ चिक्षयिव ॥ चिक्षयिम ॥ क्षि अग्रे लुटस्तिपि **स्यतासी ललुटो**रिति तासौ **लुटः प्रथमस्य डारौरस** इति तिपो डात्वे डित्वसामर्थ्यादभस्यापि टेर्लोपे **एकाच उपदेशेऽनुदात्ता**दित्यनेन इडभावे **सार्वधातुकार्द्धधातुकयो**रिति गुणे च कृते ॥ क्षेता ॥ क्षि अग्रे लृटस्तिपि **स्यतासी ललुटो**रिति स्ये **आदेशप्रत्यययो**रिति सस्य मूर्द्धन्यत्वे **सार्वधातुकार्द्धधातुकयो**रिति गुणे च कृते ॥ क्षेष्यति ॥ क्षि अग्रे लोटस्तिपि शपि गुणे अयादेशे **एरु**रित्यनेन तिप इकारस्योत्वे कृते ॥ क्षयतु ॥ क्षि अग्रे लङस्तिपि शपि अटि गुणे अयादेशे **इतश्चे**ति तिप इकारलोपे च कृते ॥अक्षयत्॥ क्षि अग्रे लिङस्तिपि **यासुट् परस्मैपदेषूदात्तो ङिच्चे**ति यासुटि **अतोयेय** इति इयादेशे **सार्वधाकार्धधातुकयो**रिति गुणे **एचोयवायाव** इति अयादेशे **आद्गुण** इति गुणे **लोपो व्योर्वली**ति यलोपे **इतश्चे**ति तिप इकारलोपे च कृते ॥ क्षयेत् ॥ क्षि अग्रे आशीर्लिङस्तिपि यासुटि **इतश्चे**ति तिप इकारलोपे **स्कोः संयोगाद्योरन्ते चे**ति सलोपे **अकृत्सार्वधातुकयोर्दीर्घ** इति दीर्घादेशे ॥ क्षीयात् ॥ क्षि अग्रे लुङस्तिपि अटि **च्लि लुङी**ति च्लौ **च्लेः सिच्**इति सिचि इजागलोपे इडभावे **इतश्चे**ति तिप इकारलोपे **अस्तिसिचोऽपृक्ते** इति ईटि कृते अक्षिस् ईत् इति जातं तत्र **सिचि वृद्धिः परस्मैपदेषु**

[1] अकृत्सार्वधातुकयोर्दीर्घः ॥ अयङ् यि क्ङितीति सूत्राद्यिपदस्यानुवृत्तिस्तस्यादाक्षिप्तप्रत्ययेन सह विशेषणे यस्मिन् विधिस्तदादावल्ग्रहणे इत्यनया परिभाषया तदाद्युपस्थितिस्तथा च वृत्तौ यादौ प्रत्यये इत्युक्तं अत्र सूत्रे कृत्सार्वधातुकयोर्निषेधाभावे प्रकृत्य प्रहत्येत्यादौ ह्रस्वस्य पिति कृति तुगिति तुकं ... दीर्घः स्यात् । तुग्विधिस्तु सोमसुत् अग्निचिदित्यादौ सावकाशः ॥ सर्वधातुकयकारे तु ...

सिचि ॥ अक्षैपीत् अक्षेप्यत् । तप सन्तापे १४ तपति तताप तेपतुः तेपुः । तेपिथ ततप्थ तप्ता तप्स्यति तपतु अतपत् तपेत् तप्यात् अताप्सीत् अताप्ताम् । अतप्स्यत् । क्रमु पादविक्षेपे १५ ॥ **वा भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलषः । ३ । १ ।**

---

इत्यनेन वृद्धौ कृतायाम् ॥ अक्षैपीत् ॥ क्षि- अग्रे लृङस्तिपि **लुङ्लङ्लृङ्क्ष्वडुदात्तः** इति अटि **स्यतासी लृलुटोरि**ति स्ये सस्य मूर्द्धन्यत्वे **सार्वधातुकार्द्धधातुकयो**रिति गुणे **इतश्चे**ति तिप इकारलोपे च कृते ॥ अक्षेप्यत् ॥ तप सन्तापे धातुरस्ति तत्र पकारोत्तरवर्त्यकारस्य **उपदेशेऽजनुनासिक इ**दित्यनेनेत्सञ्ज्ञायां कृतायां लटस्तिपि शपि संयोगे तपति ॥ तप् अग्रे लिटस्तिपि तिपो णलि **लिटि धातोरनभ्यासस्ये**ति द्वित्वे **पूर्वोऽभ्यास** इत्यभ्यासत्वे । **हलादिः शेष** इति पलोपे **अत उपधाया** इत्यनेन दीर्घत्वे विहिते ॥ तताप ॥ तप् अग्रे लिटः प्रथमस्य द्विवचने तसि तसश्च अतुसि द्वित्वे अभ्यासत्वे **हलादिः शेष** इति पलोपे **अत एकहल्मध्येनादेशादेर्लिटि** इति सूत्रेण अकारस्य एत्वे कृते अभ्यासलोपे च कृते ॥ तेपतुः ॥ एवम् उसि ॥ तेपुः ॥ तप् अग्रे लिटो मध्यमैकवचने सिपि थलि द्वित्वे अभ्यासत्वे **हलादिः शेष** इति पलोपे **आर्द्धधातुकस्येड्वलादे**रिति इटि कृते **थलि च सेटि** इत्यनेन अकारस्यैत्वेऽभ्यासलोपे च कृते भारद्वाजमते इडागमे कृते ॥ तेपिथ ॥ आचार्यमते **उपदेशेऽत्वत** इत्यनेनेड् निषेधे ॥ ततप्थ ॥ तप् अग्रे लुटस्तिपि **स्यतासी लृलुटोरि**ति तासौ **लुटः प्रथमस्य डारौरसः** इति तिपो डात्वे डित्वसामर्थ्यादभस्यापि टेर्लोपे **एकाच उपदेशेऽनुदात्तात्** इति इडभावे च ॥ तप्ता ॥ तप् अग्रे लृटि कृते तस्य तिपि **स्यतासी लृलुटोरि**ति स्यागमे **एकाच उपदेशेऽनुदात्तात्** इति इडभावे ॥ तप्स्यति ॥ तप् अग्रे लोटस्तिपि शपि **एरु**रिति तिप इकारस्योत्वे ॥ तपतु ॥ तप् अग्रे लङस्तिपि शपि **लुङ्लङ्लृङ्क्ष्वडुदात्त** इति अटि **इतश्चे**ति तिप इकारलोपे च कृते ॥ अतपत् ॥ तप् अग्रे लिङस्तिपि **यासुट् परस्मैपदेषूदात्तो ङिच्चे**ति यासुटि । **अतो येय** इति यासुट इयादेशे गुणे **इतश्चे**ति तिप इकारलोपे च कृते ॥ तपेत् ॥ तप् अग्रे आशीर्लिङस्तिपि यासुटि सुटि च कृते **स्कोः संयोगाद्योरन्ते चे**ति सकारलोपे **इतश्चे**ति तिप इकारलोपे च कृते ॥ तप्यात् ॥ तप् अग्रे लुङस्तिपि **च्लि लुङी**ति च्लौ **च्लेः सिच्** इति सिचि इजभागलोपे **लुङ्लङ्लृङ्क्ष्वडुदात्त** इति अटि **इतश्चे**ति तिप इकारलोपे **अस्तिसिचोऽपृक्ते** इति ईटि **वदव्रजहलन्तस्याच** इत्यनेन वृद्धौ ॥ अताप्सीत् ॥ तामि समागते अताप् स् ताम् इति जातं तत्र **झलो झलि** इत्यनेन सलोपे ॥ अताप्ताम् ॥ तप् अग्रे लृङस्तिपि **स्यतासी लृलुटोरि**ति स्ये अटि **इतश्चे**ति तिप इकारलोपे च कृते ॥ अतप्स्यत् ॥ क्रमु पादविक्षेपे धातुर्वर्त्तते तदग्रे **वा भ्राशभ्लाशभ्रमुक्रमुक्लमु-**

७०। एभ्यः श्यन्वा कर्त्रर्थे सार्वधातुके परे । पक्षे शप् ॥ **क्रमः परस्मैपदेषु** ।७।३।
७६। क्रमो दीर्घः परस्मैपदे शिति परे । क्राम्यति क्रामति चक्राम क्रमिता क्रमिष्यति
क्राम्यतु क्रामतु अक्राम्यत् अक्रामत् क्राम्येत् क्रामेत् क्रम्यात् अक्रमीत् अक्रमिष्यत् । पा
पाने १६ ॥ **पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधम-
तिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः**।७।३।७८। पादीनां पिबादयः स्युरित्सं-
ज्ञकशादौ प्रत्यये परे । पिबादेशोऽदन्तस्तेन न गुणः । पिबति ॥ **आत औ णलः** ।

---

**भ्रासिभ्रुदिलष** इत्यनेन श्यनि जाते क्रम् श्यन् ति इति जाते शकारस्य **लशक्वतद्धिते** इत्यनेन नकारे **हलन्त्यमि**त्यनेन चेत्संज्ञायां कृतायां कृते च **तस्य लोप** इत्यनेन शकार-
नकारयोर्लोपे **क्रमः परस्मै**पदेषु इत्यनेन दीर्घत्वे च कृते ॥ क्राम्यति ॥ पक्षे शपि ॥
क्रामति ॥ क्रम् अग्रे लिटस्तिपि तिपो णलि **लिटि धातोरनभ्यासस्ये**ति द्वित्वे
**पूर्वोभ्यास** इत्यभ्यासत्वे **हलादिः शेष** इति शेषहल्लोपे **कुहोश्चुरि**ति चुत्वे
**अत उपधाया** इति वृद्धौ ॥ चक्राम ॥ क्रम् अग्रे लुटस्तिपि **स्यतासी लृलुटो**रिति
तासौ **लुटः प्रथमस्य डारौरस** इति तिपो डात्वे डित्वसामर्थ्यादभस्यापि टेर्लोपे **आ-
र्द्धधातुकस्येड्वलादे**रिति इटि ॥ क्रमिता ॥ क्रम् अग्रे लृटस्तिपि स्ये इटि सस्य मूर्द्धन्या-
देशे च कृते ॥ क्रमिष्यति ॥ क्रम् अग्रे लोटस्तिपि ॥ **वा भ्राशभ्लाशभ्रमुक्रमुक्लमु-
त्रसित्रुटिलषः** इति श्यनि **एरु**रिति इकारस्योत्वे कृते कृते च **क्रमः परस्मैपदेषु**
इत्यनेन दीर्घत्वे ॥ क्राम्यतु ॥ पक्षे शपि ॥ क्रामतु ॥ क्रम् अग्रे लङस्तिपि श्यनि अटि **इत-
श्चे**ति तिप इकारलोपे **क्रमः परस्मैपदेषु** इति दीर्घत्वे च कृते ॥ अक्राम्यत् । पक्षे शपि ॥
अक्रामत् ॥ क्रम् अग्रे लिङस्तिपि श्यनि यासुटि इयादेशे गुणे **क्रमः परस्मैपदेष्वि**ति
दीर्घत्वे **लोपो व्योर्वली**ति यलोपे **इतश्चे**ति तिप इकारलोपे च कृते ॥ क्राम्येत् ॥ पक्षे
शपि ॥ क्रामेत् ॥ क्रम् अग्रे आशीर्लिङस्तिपि यासुटि **इतश्चे**ति तिप इकारलोपे सकारलोपे
क्रम्यात् ॥ क्रम् अग्रे लुङस्तिपि अटि **च्लि लुङी**ति च्लौ **च्लेः सिच्** इति सिचि इड्-
भागलोपे इडागमे **इतश्चे**ति तिप इकारलोपे **अस्तिसिचोऽपृक्ते** इतीटि ॥ अक्रमीत् ॥
क्रम् अग्रे लृङस्तिपि **स्यतासी लृलुटो**रिति स्ये कृते इटि मूर्द्धन्यादेशे **इतश्चे**ति तिप इ-
कारलोपे च कृते ॥ अक्रमिष्यत ॥ पा पाने इत्यस्माद्धातोर्लटस्तिपि शपि **पाघ्राध्मास्थाम्ने**-
त्यनेन पिबादेशे पिबादेशस्यादन्तत्वाद्गुणाभावे पररूपे च । पिबति ॥ पा अग्रे लिटस्तिपि
तिपो णलि **लिटि धातोरनभ्यासस्ये**ति द्वित्वे **पूर्वोभ्यास** इति अभ्यासत्वे ।
**ह्रस्व** इत्यनेनाभ्यासाचो ह्रस्वत्वे **आत औ णल** इत्यनेन णल औत्वे वृद्धौ च

---

१ आत औ णलः ॥ अद्दस्येत्यनुवर्त्तते धातोरितिफलितार्थकथनमादन्तादह्रादित्यर्थः ॥

७।१।३४। आदन्ताद्धातोर्णल औकारादेशः स्यात् । पपौ ॥ **आतो लोप इटि च** । ६।४।६४। अजाद्योरार्धधातुकयोः क्ङिदिटोः परयोरातो लोपः । पपतुः पपुः । पपिथ प-
[1] पाथ पपथुः पप । पपौ पपिव पपिम । पाता पास्यति । पिबतु अपिबत् पिबेत् ॥ **एर्लिङि** ।६।४।६७। घुसंज्ञकानां मास्थादीनां च एत्वं स्यादार्धधातुके किति लिङि । पेयात् । गातिस्थेति सिचो लुक् । अपात् अपाताम् ॥ **आतः** ।३।४।११०। सिज्लुकि
[2] आदन्तादेव झेर्जुस् ॥ **उस्यपदान्तात्** ।६।१।९६। अपदान्तादकारादुसि पररूपमेकादेशः । अपुः अपास्यत् । ग्लै हर्षक्षये १७ ग्लायति ॥ **आदेच उपदेशेऽशिति** ६।१।४५। उपदेशे एजन्तस्य धातोरात्वं न तु शिति । जग्लौ ग्लाता ग्लास्यति ग्लायतु

कृतायाम् ॥ पपौ ॥ पा अग्रे अतुसि द्वित्वे अभ्यासत्वे ह्रस्वत्वे च **आतो लोप इटि** चेत्यनेनाकारलोपे कृते ॥ पपतुः ॥ एवमुसि पपुः । थलि ॥ पपिथ ॥ इडभावे च ॥ पपाथ ॥ अथुसि । पपथुः ॥ पप ॥ णलि । पपौ । वे क्रादिनियमादिटि पपिव । मे इटि च ॥ पपिम ॥ पा अग्रे लुटस्तिपि तासि तिपो डात्वे डित्वसामर्थ्यादभस्यापि टेर्लोपे ॥ पाता ॥ पा अग्रे लृटस्तिपि **स्यतासी लृलुटो**रिति स्ये कृते ॥ पास्यति ॥ पा अग्रे लोटस्तिपि शपि **पाघ्राध्मेति** पिबादेशे गुणाभावे पररूपे **एरु**रिति तिप उत्वे च ॥ पिबतु ॥ पा अग्रे लङस्तिपि शपि पिबादेशे अटि तिप इकारलोपे च कृते ॥ अपिबत् ॥ पा अग्रे लिङस्तिपि शपि पिबादेशे यासुटि यास इयादेशे गुणे यलोपे तिप इकारलोपे च कृते ॥ पिबेत् ॥ पा अग्रे । आशीर्लिङस्तिपि यासुटि सकारलोपे तिपइकारलोपे । **एर्लिङी**ति पकारान्तःपास्यकारस्यैत्वे कृते ॥ पेयात् ॥ पा अग्रे लुङस्तिपि च्लौ च्लेः सिचि **गातिस्थे**ति सिचो लोपे तिप इकारलोपे च कृते ॥ अपात् ॥ तामि । अपाताम् । पा अग्रे लुङः प्रथमस्य बहुवचने झागमते अटि च्लौ सिचि । **गातिस्थे**ति सिज्लोपे । **आत** इत्यनेन झेर्जुसि **उस्यपदान्तात्** इत्यनेन पररूपे च कृते ॥ अपुः ॥ पा अग्रे लृङस्तिपि अटि स्ये तिप इकारलोपे च कृते ॥ अपास्यत् ॥ ग्लै हर्षक्षये धातुर्वर्तते तत्र लटस्तिपि शपि **एचोऽयवायाव** इत्यायादेशे ॥ ग्लायति ॥ ग्लै अग्रे लिटस्तिपि णलि **आदेच उपदेशेऽशिति** इत्यनेन आत्वे द्वित्वे च कृते ग्ला ग्ला अ इति जाते **ह्रस्व** इत्यभ्यासह्रस्वत्वे ग्ल ग्ला अ इति जाते **हलादिशेषः** इति शेषहलोलोपे **कुहोश्चु**रिति चुत्वे **आत औ णलः** इत्यनेन औत्वे वृद्धौ च ॥ जग्लौ ॥ ग्लै अग्रे लुटस्तिपि **स्यतासी लृलुटो**रिति तासि. **लुटः प्रथमस्य डारौरसः** इति तिपो डात्वे **आदेच उपदेशेऽशिति** इति धातोरात्वे

१ आतो लोप इटि च ॥ आर्धधातुक इत्यनुवर्तते दीडोयुडचि क्ङितीत्यतोऽचि क्ङितीति च तदेतत्फलितमाह अजाद्योरार्धधातुकयोरिति । अजाद्योः किं ग्लायते । यङ् । जाग्लायते । यङ् ।

२ आतः ॥ सिजभ्यस्तविदिभ्यश्चेत्यनेनैव जुसादेशे सिद्धे आत इति सूत्रं सिद्धे सत्यारभ्यमाणो विधिर्नियमाय भवतीति नियमार्थं सिज्लुक्यादन्तादेव झेर्जुस् ॥

अग्लायत् ग्लायेत् ॥ **वान्यस्य संयोगादेः** ।६।४।६८। घुमास्थादेरन्यस्य संयोगा-
देर्धातोरातं एत्वं वार्धधातुके किति लिङि । ग्लेयात् ग्लायात् ॥ **यमरमनमातां**
**सक् च** ।७।२।७३। एषां सक् स्यादेभ्यः सिच इट् स्यात्परस्मैपदेषु । अग्लासीत् अ-
ग्लास्यत् । हृ कौटिल्ये १८ हरति ॥ **ऋतश्च संयोगादेर्गुणः** ।७।४।१०। ऋद-
न्तस्य संयोगादेरङ्गस्य गुणो लिटि । उपधाया वृद्धिः । जहार जहरतुः जहरुः । जहर्थ

---

ङित्त्वसामर्थ्याद्भस्यापि टेर्लोपे च कृते ॥ ग्लाता ॥ ग्लै अग्रे लृटस्तिपि **स्यतासी लृलुटो**रिति
स्ये **आदेच उपदेशेऽशिति** इति आत्वे च कृते ॥ ग्लास्यति ॥ ग्लै अग्रे लोटस्तिपि शपि
**एचोऽयवायाव** इति आयादेशे **एरु**रिति तिप उकारस्योत्वे च कृते ॥ ग्लायतु ॥ ग्लै अग्रे
लङस्तिपि शपि **लुङ्लङ्लृङ्क्ष्वडुदात्त** इति अटि **एचोऽयवायाव** इति आयादेशे
**इतश्चे**ति तिप इकारलोपे च कृते ॥ अग्लायत् ॥ ग्लै अग्रे लिङस्तिपि शपि **यासुट्पर-**
**स्मैपदेषूदात्तो ङिच्चे**ति यासुटि **अतो येय** इति यास इयादेशे **एचोऽयवायावः**
इत्यायादेशे गुणे **इतश्चे**ति तिप इकारलोपे च कृते ॥ ग्लायेत् ॥ ग्लै अग्रे आशीर्लिङस्तिपि
यासुटि **आदेच उपदेशेऽशिति** इत्यात्वे ग्लायास् ति इति जातं तत्र **स्कोः संयो-**
**गाद्योरन्ते चे**ति सलोपे **इतश्चे**ति तिप इकारलोपे च कृते ग्लायात् इति जातं तत्र
**वान्यस्य संयोगादे**रित्यनेनाकारस्य एत्वे च विहिते ॥ ग्लेयात् ॥ वाग्रहणात् एत्वाभाव-
पक्षे च ॥ ग्लायात् ॥ ग्लै अग्रे लुङस्तिपि **च्लि लुङी**ति च्लौ **च्लेः सिच्** इति सिचि
इञ्भागलोपे **लुङ्लङ्लृङ्क्ष्वडुदात्त** इति अटि अग्लैस् ति इति जातं तत्र
**आदेच उपदेशेऽशिति** इति आत्वे अग्लास् ति इति जाते **यमरमनमातां**
**सक्चे**ति सकि इटि च कृते अग्लास् इस् ति इति जाते **इतश्चे**ति तिप इकारलोपे
**अस्तिसिचोऽपृक्ते** इति ईटि **इट ईटि** इति सलोपे संयोगे च कृते ॥ अग्लासीत् ॥
ग्लै अग्रे लृङस्तिपि **स्यतासी लृलुटो**रिति स्ये **लुङ्लङ्लृङ्क्ष्वडुदात्त** इति अटि
**आदेच उपदेशेऽशिति** इत्यात्वे **इतश्चे**ति तिप इकारलोपे च कृते ॥ अग्लास्यत् ॥ हृ
कौटिल्ये धातुर्वर्तते तत्र लटस्तिपि **कर्तरि शप्** इति शपि **सार्वधातुकार्धधातुकयो-**
रिति गुणे ॥ हरति ॥ हृ अग्रे लिटस्तिपि तिपो णलि **लिटि धातोरनभ्यासस्ये**ति
द्वित्वे **पूर्वोऽभ्यास** इति अभ्यासत्वे **उर**दित्यनेनाभ्यासऋवर्णस्य अर् कृते हर् हृ अ इति
जातं तत्र **हलादिः शेष** इति शेषहल्लोपे कृते **ऋतश्च संयोगादेर्गुण** इति गुणे कृते
ह हर अ इति जातं तत्र **कुहोश्चु**रिति हस्य झकारे कृते **अभ्यासे चर्च** इत्यनेन झस्य
जकारे कृते **अत उपधाया** इत्यकारवृद्धौ च कृतायाम् ॥ जहार ॥ अतुसि ॥ जहरतुः ॥ उसि ॥

---

१ ऋतश्च संयोगादेर्गुणः ॥ संयोगादेः किं चक्रतुः चक्रुः । जहारेत्यादौ परत्वाद्गुणे कृते पश्चादत उपधाया
इत्यनेनोपधावृद्धिः ।

जहर्थुः जहर । जहार जहर जह्रिव जह्रिम । हर्ता ॥ ऋद्धनोः स्ये ।७।२।७०। ऋतो हन्तेश्च स्यस्येट् । हरिष्यति । हरतु अहरत् हरेत् ॥ गुणोऽर्तिसंयोगाद्योः[१] ।७।४।२९। अर्तेः संयोगादेर्ऋदन्तस्य च गुणः स्यात् यकि यादावार्धधातुके लिङि च । हर्यात् अहार्षीत् अहरिष्यत् । श्रु श्रवणे १९ ॥ श्रुवः शृ च ।३।१।७४। श्रुवः शृ इत्यादेशः स्यात् श्नुप्रत्ययश्च । शृणोति ॥ सार्वधातुकमपित् ।१।२।४। अपित्सार्वधातुकं ङिद्वत् । शृणुतः ॥ हुश्नुवोः सार्वधातुके ।६।४।८७। हुश्नुवोरनेकाचो-

जह्रुः ॥ थलि । जहर्थ ॥ अथुसि । जह्रथुः ॥ उत्तमैकवचने णलि ॥ जहार ॥ णलुत्तमो वेति णित्वविकल्पे ॥ जहर ॥ उत्तमद्विवचने वे बहुवचने मे च अस्य धातोरनिट्त्वेऽपि क्रादिनियमात् आर्द्धधातुकस्येड्वलादेरिति इटि ॥ जह्रिव ॥ जह्रिम ॥ हृ अग्रे लुटस्तिपि स्यतासी लृलुटोरिति तासि कृते सार्वधातुकार्द्धधातुकयोरिति गुणे एकाच उपदेशेऽनुदात्तादिति इडभावे लुटः प्रथमस्य डारौरसः इति तिपो डात्वे डित्वसामर्थ्यादभस्यापि टेर्लोपे च कृते ॥ हर्ता ॥ हृ अग्रे लृटस्तिपि स्यतासी लृलुटोरिति स्ये हृ स्य ति इति जातं तत्र ऋद्धनोः स्ये इति इटि गुणे सस्य मूर्द्धन्यत्वे च कृते ॥ हरिष्यति ॥ हृ अग्रे लोटस्तिपि शपि गुणे एरुरिति तिप इकारस्योकारे च कृते ॥ हरतु ॥ हृ अग्रे लङस्तिपि शपि लुङ्लङ्लृङ्क्ष्वडुदात्तः इति अटि गुणे इतश्चेति तिप इकारलोपे च कृते ॥ अहरत् ॥ हृ अग्रे लिङस्तिपि शपि यासुट्परस्मैपदेषूदात्तो ङिच्चेति यासुटि उट्भागलोपे अतो येय इति इयादेशे गुणे लोपो व्योर्वलीति यलोपे इतश्चेति तिप इकारलोपे च कृते ॥ हरेत् ॥ हृ अग्रे आशीर्लिङस्तिपि यासुटि उट्भागलोपे तत्र यासुटो ङित्वात् क्ङिति चेत्यनेन बाधिते गुणे गुणोऽर्तिसंयोगाद्योरिति गुणे स्कोः संयोगाद्योरिति सलोपे इतश्चेति तिप इकारलोपे अचो रहाभ्यां द्वे इति यद्वित्वे च ॥ हर्यात् ॥ हृ अग्रे लुङस्तिपि च्लि लुङीति च्लौ च्लेः सिच् इति सिचि इत्लोपे लुङ्लङ्लृङ्क्ष्वडुदात्तः इति अटि गुणे इतश्चेति तिप इकारलोपे अस्तिसिचोऽपृक्ते इति ईटि सस्य मूर्द्धन्यादेशे सिचि वृद्धिः परस्मैपदेष्विति वृद्धौ ॥ अहार्षीत् ॥ हृ अग्रे लृङस्तिपि स्यतासी लृलुटोरिति स्ये अटि ऋद्धनोः स्ये इति इटि सस्य मूर्द्धन्यादेशे इतश्चेति तिप इकारलोपे ॥ अहरिष्यत् ॥ श्रु श्रवणे धातुर्वर्ततेऽग्रे लटस्तिपि श्रुवः शृ च इत्यनेन श्रुवः शृआदेशे श्नुप्रत्यये च कृते शृश्नु ति इति जातं तत्र लशक्वतद्धिते इत्यनेन शस्येत्संज्ञायां तस्य लोपः इत्यनेन लोपे ऋवर्णान्नस्य णत्वं वाच्यमित्यनेन नस्य णत्वे सार्वधातुकार्द्धधातुकयोरिति गुणे च कृते ॥ शृणोति ॥ तसि सार्वधातुकमपित् इत्यनेन तसो ङिद्वत्वे क्ङिति चेत्यनेन गुण-

१ गुणोऽर्तिसंयोगाद्योः ॥ अर्तीति श्त्रादिर्गृह्यते । लुका निर्देशस्तु सौत्रः । अर्तिसंयोगाद्योर् इति वक्तव्ये गुणग्रहणं चिन्त्यप्रयोजनम् ।

ऽसंयोगपूर्वस्योवर्णस्य यण् स्यादचि सार्वधातुके । शृण्वन्ति । शृणोषि शृणुथः शृणुथ । शृणोमि ॥ **लोपश्चास्यान्यतरस्यां म्वोः** ।६।४।१०७। असंयोगपूर्वस्य प्रत्ययोकारस्य लोपो वा म्वोः परयोः । शृण्वः शृणुवः शृण्मः शृणुमः । शुश्राव शुश्रुवतुः शुश्रुवुः । शुश्रोथ शुश्रुवथुः शुश्रुव । शुश्राव शुश्रव शुश्रुव शुश्रुम । श्रोता श्रोष्यति शृणोतु शृणुतात् शृणुताम् शृण्वन्तु ॥ **उतश्च प्रत्ययादसंयोगपूर्वात्** ।६।४।१०६। असंयोगपूर्वात्प्रत्ययादुतो हेर्लुक् । शृणु शृणुतात् शृणुतम् शृणुत । गुणावादेशौ । शृणवानि

निषेधे च कृते ॥ शृणुतः ॥ झौ झस्यान्तादेशे च कृते **तत्राचिश्नुधात्विति** सूत्रेणेयङि प्राप्ते **हुश्नुवोः सार्वधातुके** इत्यनेन यणि कृते ॥ शृण्वन्ति ॥ सिपि श्रु श्नु सि इति जाते सिपः सस्य मूर्द्धन्यत्वे **ऋवर्णान्नस्य णत्वं वाच्यम्**इति नस्य णत्वे गुणे च कृते ॥ शृणोषि । थसि अपित्त्वात् ङित्त्वे ङित्त्वाच **क्ङिति** चेत्यनेन गुणाभावे ॥ शृणुथः । एवं थे परे । शृणुथ ॥ मिपि पित्त्वाद्गुणे कृते ॥ शृणोमि ॥ वसि परे **लोपश्चास्यान्यतरस्यां म्वोः** इत्यनेनोकारलोपे ॥ शृण्वः । पक्षे उकारलोपाभावे । शृणुवः ॥ एवमेव मसि ॥ शृण्मः । शृणुमः ॥ श्रु अग्रे लिटस्तिपि तिपोणलि **लिटि धातोरनभ्यासस्येति** द्वित्वे **पूर्वोऽभ्यास** इति अभ्यासत्वे **हलादिः शेष** इति शेषहल्लोपे शु श्रु अ इति जातं तत्र वृद्धिं बाधित्वा गुणे अवादेशे पश्चा**दत उपधाया** इति वृद्धौ ॥ शुश्राव ॥ अतुसि **अचि श्नुधातुभ्रुवांय्वोरियङुवङौ** इत्यनेन उवङि कृते ॥ शुश्रुवतुः ॥ उसि उवङि कृते ॥ शुश्रुवुः ॥ थलि पित्त्वान्न ङित्त्वं ङित्त्वाभावाच्च न गुणनिषेधस्ततो गुणे कृते ॥ शुश्रोथ ॥ अथुसि अपित्त्वात् **अपित्सार्वधातुके** इति ङित्त्वाद्वे **क्ङिति** चेति गुणाभावे उवङि च कृते ॥ शुश्रुवथुः ॥ मध्यमबहुवचने अे परे गुणाभावे उवङि च कृते ॥ शुश्रुव ॥ उत्तमबहुवचने णलि द्वित्वे अभ्यासत्वे शेषहल्लोपे गुणे अवादेशे वृद्धौ । शुश्राव । णिदभावपक्षे । शुश्रव ॥ वे ॥ शुश्रुव ॥ मे ॥ शुश्रुम ॥ श्रु अग्रे लुटस्तिपि **स्यतासी लृलुटोरि**ति तासि गुणे **लुटः प्रथमस्य डारौरस** इति तिपो डात्वे डित्वसामर्थ्यात् टेर्लोपे ॥ श्रोता ॥ श्रु अग्रे लृटि स्ये सस्य मूर्द्धन्यत्वे गुणे च कृते ॥ श्रोष्यति ॥ श्रुधातोरग्रे लोटस्तिपि **श्रुवः शृ चे**त्यनेन आदेशे श्नौ च कृते शलोपे नस्य णत्वे गुणे **एरुरि**ति तिप उकारे च कृते ॥ शृणोतु ॥ तातङि ङित्त्वात् गुणाभावे ॥ शृणुतात् ॥ तामि ॥ **श्रुवः शृ चे**त्यनेन आदेशे श्नौ शलोपे नस्य णत्वे ॥ शृणुताम् ॥ झौ झस्यान्तादेशे **श्रुवः शृ चे**त्यनेन आदेशे श्नौ शलोपे **हुश्नुवोः सार्वधातुके** इति यणि **एरुरि**ति तिप उकारे च कृते ॥ शृण्वन्तु ॥ श्रु अग्रे लोटो मध्यमपुरुषैकवचने सिपि **सेर्ह्यपिच्चे**त्यनेन सेर्हित्वे **श्रुवः शृ चे**त्यनेन आदेशे श्नौ च कृते शलोपे नस्य णत्वे ॥ **उतश्च प्रत्ययादसंयोगपूर्वात्** इति हेर्लोपे च कृते ॥ शृणु ॥ तातङि । शृणुतात् ॥ तमि ॥ शृणुतम् ॥ ते । शृणुत ॥ लोटः उत्तमपुरुषैकवचने मिपि ॥ **मेर्निः** इति मेर्नित्वे कृते **श्रुवः शृ चे**ति आदेशे श्नौ च कृते शलोपे नस्य णत्वे **आडुत्तमस्य**

शृणवाव शृणवाम । अशृणोत् अशृणुताम् अशृण्वन् । अशृणोः अशृणुतम् अशृणुत अशृणवम् अशृण्व अशृणुव अशृण्म अशृणुम । शृणुयात् शृणुयाताम् शृणुयुः । शृणुयाः शृणुयातम् शृणुयात । शृणुयाम् शृणुयाव शृणुयाम । श्रूयात् अश्रौषीत् अश्रोष्यत् । गम्लृ गतौ २० ॥ **इषुगमियमां छः** ।७।३।७७। एषां छः स्यात् शिति । गच्छति जगाम ॥ **गमहनजनखनघसां लोपः क्ङित्यनङि** ।६।४।९८। एषामुपधाया लो-

---

पिच्चेति आटि गुणे **एचोऽयवायावः** इति अवि च कृते ॥ शृणवानि ॥ वे **आडुत्तमस्य पिच्च** इति आटि **श्रुवः शृ च** इति श्रादेशे श्नौ च शलोपे नस्य णत्वे गुणे अवि च कृते ॥ शृणवाव ॥ एवमेव मे ॥ शृणवाम ॥ श्रु अग्रे लङस्तिपि **श्रुवः शृ च** इति श्रादेशे श्नौ शलोपे नस्य णत्वे अटि गुणे तिप इकारलोपे च कृते ॥ अशृणोत् ॥ तामि । अशृणुताम् ॥ झी इत्यन्तादेशे श्रुनः श्रादेशे श्नौ च कृते शलोपे नस्य णत्वे अटि **हुश्नुवोः सार्वधातुके** इति यणि **इतश्च** इति इकारलोपे तकारस्य च **संयोगान्तस्य लोपः** इति लोपे ॥ अशृण्वन् ॥ सिपि । अशृणोः ॥ तसि । अशृणुतम् ॥ ते । अशृणुत ॥ अमि । अशृणवम् ॥ वे । अशृणुव ॥ मे । अशृणुम ॥ **लोपश्चास्यान्यतरस्यां म्वोः** इति उकारलोपपक्षे ॥ अशृण्व ॥ अशृण्म ॥ श्रु अग्रे लिङस्तिपि **श्रुवः शृ च** इति श्रादेशे श्नप्रत्यये च कृते शलोपे नस्य णत्वे **यासुट् परस्मैपदेषूदात्तो ङिच्च** इति यासुटि उट्भागलोपे **लिङः सलोपोऽनन्त्यस्य** इति सलोपे च कृते ॥ शृणुयात् ॥ तामि । शृणुयाताम् ॥ उसि श्रादेशे श्नुप्रत्यये शलोपे नस्य णत्वे यासुटि उट्भागलोपे **लिङः सलोपोऽनन्त्यस्य** इति सलोपे **उस्यपदान्तात्** इति पररूपे कृते ॥ शृणुयुः ॥ सिपि श्रादेशे श्नौ शलोपे नस्य णत्वे यासुटि उट्भागलोपे सलोपे **इतश्च** इति सकारान्तःपातीकारलोपे सस्य रुत्वे रस्य विसर्जनीयत्वे च कृते ॥ शृणुयाः ॥ तसि । शृणुयातम् ॥ ते । शृणुयात ॥ अमि । शृणुयाम् ॥ वे । शृणुयाव ॥ मे ॥ शृणुयाम ॥ श्रु अग्रे आशीर्लिङस्तिपि यासुटि उट्भागलोपे **इतश्च** इति तिप इकारलोपे **स्कोः संयोगाद्योरन्ते च** इति सलोपे **अकृत्सार्वधातुकयोर्दीर्घः** इति दीर्घे ॥ श्रूयात् ॥ श्रु अग्रे लुङस्तिपि **च्लि लुङि** इति च्लौ **च्लेः सिच्** इति सिचि इञ्भागलोपे अटि **इतश्च** इति तिप इकारलोपे **अस्तिसिचोऽपृक्ते** इति ईटि सस्य मूर्द्धन्यादेशे **सिचि वृद्धिः परस्मैपदेषु** इति वृद्धौ कृतायाम् ॥ अश्रौषीत् ॥ श्रु अग्रे लृङस्तिपि अटि **स्यतासी लृलुटोः** इति स्ये मूर्द्धन्यादेशे **इतश्च** इति तिप इकारलोपे **सार्वधातुकार्द्धधातुकयोः** इति गुणे च कृते ॥ अश्रोष्यत् ॥ गम्लृ गतौ धातुर्वर्तते तत्र **उपदेशेऽजनुनासिक इत्** इति लृकारस्येत्संज्ञायां **तस्य लोपः** इत्यनेन लृकारलोपे जाते गम् इत्यवशिष्टं ततो लिटस्तिपि शपि **इषुगमियमां छः** इत्यनेन सर्वस्य गम्भागस्य छत्वे प्राप्ते **अलोऽन्त्यस्य** इत्यनेन मस्य छत्वे पररूपे च कृते गछति इति जाते तत्र **छे च** इति तुकि उक्भागलोपे **स्तोः श्चुना श्चुः** इति तस्य चत्वे ॥ गच्छति ॥ गम् अग्रे लिटस्तिपि तिपो णलि **लिटि धातो**

पोऽजादौ किति न त्वङि । जग्मतुः जग्मुः । जगमिथ जगन्थ जग्मथुः जग्म । जगाम
जगम जग्मिव जग्मिम । गन्ता ॥ **गमेरिट् परस्मैपदेषु** ।७।२।५८। गमेः परस्य
सादेरार्धधातुकस्येट् स्यात् परस्मैपदेषु । गमिष्यति गच्छतु अगच्छत् गच्छेत् गम्यात् ॥
**पुषादिद्युताद्य्लृदितः परस्मैपदेषु** ।३।१।५५। श्यन्विकरणपुषादेर्द्युतादेर्लृदितश्च
परस्य च्लेरङ् परस्मैपदेषु । अगमत् अगमिष्यत् । इति परस्मैपदिनः । एध वृद्धौ ॥

---

द्वित्वे अभ्यासत्वे शेषहल्लोपे **कुहोश्चुरिति** गस्य जत्वे **अत उपधाया रनभ्यासस्येति**
इत्यनेन उपधाकारदीर्घत्वे ॥ जगाम ॥ अतुसि द्वित्वे अभ्यासत्वे शेषहल्लोपे चुत्वे **गमहनजन-**
**खनघसां लोपः क्ङित्यनङि** इत्यनेनोपधालोपे ॥ जग्मतुः ॥ उसि । जग्मुः ॥ क्रादि-
नियमात् थलि वेट् द्वित्वेऽभ्यासत्वे शेषहल्लोपे चुत्वे च कृते ॥ जगमिथ ॥ इडभावे मस्यानुस्वारे
**अनुस्वारस्य ययि परसवर्ण** इति परसवर्णत्वे कृते ॥ जगन्थ ॥ अथुसि उपधालोपे । ज-
ग्मथुः ॥ अे उपधालोपे । जग्म ॥ णलि । जगाम ॥ पूर्ववत् । पक्षे **णलुत्तमो वेति** णित्वा-
भावे ॥ जगम ॥ वे इटि उपधालोपे च । जग्मिव ॥ मे इटि उपधालोपे च । जग्मिम ॥ गम्—लुट-
स्तिपि **स्यतासी लृलुटोरिति** तासि कृते **लुटः प्रथमस्य डारौरस** इति तिपो डात्वे डि-
त्वाट्टिलोपे मस्यानुस्वारेऽनुस्वारस्य परसवर्णत्वे च ॥ गन्ता ॥ गम् अग्रे लृटस्तिपि स्ये **गमेरिट्**
**परस्मैपदेषु** इत्यनेन इटि सस्य मूर्धन्यादेशे च कृते ॥ गमिष्यति ॥ गम् अग्रे लोटस्तिपि
शपि **इषुगमियमां छ** इति छादेशे **छे च** इति तुकि उक्भागलोपे तस्य चुत्वे **एरु-**
**रिति** इकारस्योकारे कृते ॥ गच्छतु ॥ गम् अग्रे लङस्तिपि शपि अटि **इषुगमियमां छ** इति
छे तुकि चुत्वे **इतश्चेति** तिप इकारलोपे च ॥ अगच्छत् ॥ गम् अग्रे लिङस्तिपि शपि **इषुग-**
**मियमां छ** इति छे तुकि चुत्वे यासुटि उट्भागलोपे **अतोयेय** इति इयादेशे
गुणे **लोपो व्योर्वलीति** वलोपे **इतश्चे**तीकारलोपे च ॥ गच्छेत् ॥ गम् अग्रे आशीर्लि-
ङस्तिपि यासुटि उट्लोपे **स्कोः संयोगाद्योरिति** सलोपे **इतश्चेति** तिप इकारलोपे ॥
गम्यात् ॥ गम् अग्रे लुङस्तिपि अटि **च्लि लुङीति** च्लौ **पुषादिद्युताद्य्लृदितः**
**परस्मैपदेषु** इत्यनेन च्लेरङादेशे ङलोपे **इतश्चेति** तिप इकारलोपे अगमत् ॥ गम् अग्रे
लृङस्तिपि स्ये **गमेरिट्परस्मैपदेषु** इति इटि अटि **इतश्चेति** तिप इकारलोपे सका-
रस्य मूर्धन्यादेशे च कृते ॥ अगमिष्यत् ॥ एध् वृद्धौ धातुर्वर्तते तत्र कस्य सूत्रस्य प्राप्तिः ।
**लः कर्मणि च भावे चाकर्मकेभ्यः** अत्रैध् धातुः सकर्मकोऽस्त्यकर्मको वा अ-
स्त्ययमकर्मकस्ततः कर्तरि नवापि लकाराः प्राप्ताः तत्र **वर्तमाने लट्** इत्यनेनात्रैध्धातोर्व-
र्तमानक्रियावृत्तित्वाल्लट्जातो जाते च लटि टकारस्य **हलन्त्यमि**त्यनेन लकारोत्तरवर्त्यकारस्य
**चोपदेशेऽजनुनासिक इदि**त्यनेनेत्संज्ञायां कृतायां कृते च **तस्य लोप** इत्यनेन तयो-
र्लोपे एध् ल् इति जातं तत्र **तिप्तस्झी**त्यनेन खलकपोतन्यायेनाष्टादशापि लादेशाः
प्राप्तास्तत्र **लः परस्मैपद**मित्यनेन सर्वेषां लादेशानां परस्मैपदत्वे प्राप्ते **तङानावात्मने-**

शृणवाव शृणवाम । अशृणोत् अशृणुताम् अशृण्वन् । अशृणोः अशृणुतम् अशृणुत अशृणवम् अशृण्व अशृणुव अशृण्म अशृणुम । शृणुयात् शृणुयाताम् शृणुयुः । शृणुयाः शृणुयातम् शृणुयात । शृणुयाम् शृणुयाव शृणुयाम । श्रूयात् अश्रौषीत् अश्रोष्यत् । गम्लृ गतौ २० ॥ **इषुगमियमां छः** ।७।३।७७। एषां छः स्यात् शिति । गच्छति जगाम ॥ **गमहनजनखनघसां लोपः क्ङित्यनङि** ।६।४।९८। एषामुपधाया लो-

---

**पिच्चेति** आटि गुणे **एचोऽयवायावः** इति अवि च कृते ॥ शृणवानि ॥ वे **आडुत्तमस्य पिच्चेति** आटि **श्रुवः शृ च** इति आदेशे श्नौ च शलोपे नस्य णत्वे गुणे अवि च कृते ॥ शृणवाव ॥ एवमेव मे ॥ शृणवाम ॥ श्रु अग्रे लङस्तिपि **श्रुवः शृ च** इति आदेशे श्नौ शलोपे नस्य णत्वे अटि गुणे तिप इकारलोपे च कृते ॥ अशृणोत् ॥ तामि । अशृणुताम् ॥ झौ झस्यान्तादेशे श्रुवः आदेशे श्नौ च कृते शलोपे नस्य णत्वे अटि **हुश्नुवोः सार्वधातुके** इति यणि **इतश्च** इति इकारलोपे तकारस्य च **संयोगान्तस्य लोपः** इति लोपे ॥ अशृण्वन् ॥ सिपि । अशृणोः ॥ तसि । अशृणुतम् ॥ थे । अशृणुत ॥ अमि । अशृणवम् ॥ वे । अशृणुव ॥ मे । अशृणुम ॥ **लोपश्चास्यान्यतरस्यां म्वोः** इति उकारलोपपक्षे ॥ अशृण्व ॥ अशृण्म ॥ श्रु अग्रे लिङस्तिपि **श्रुवः शृ च** इति आदेशे श्नुप्रत्यये च कृते शलोपे नस्य णत्वे **यासुट् परस्मैपदेषूदात्तो ङिच्च** इति यासुटि उद्भागलोपे **लिङः सलोपोऽनन्त्यस्य** इति सलोपे च कृते ॥ शृणुयात् ॥ तामि । शृणुयाताम् ॥ झसि आदेशे श्नुप्रत्यये शलोपे नस्य णत्वे यासुटि उद्भागलोपे **लिङः सलोपोऽनन्त्यस्य** इति सलोपे **उस्यपदान्तात्** इति पररूपे कृते ॥ शृणुयुः ॥ सिपि आदेशे श्नौ शलोपे नस्य णत्वे यासुटि उद्भागलोपे सलोपे **इतश्च** इति सकारान्तःपातीकारलोपे सस्य रुत्वे रस्य विसर्जनीयत्वे च कृते ॥ शृणुयाः ॥ तसि । शृणुयातम् ॥ थे । शृणुयात ॥ अमि । शृणुयाम् ॥ वे । शृणुयाव ॥ मे ॥ शृणुयाम ॥ श्रु अग्रे आशीर्लिङस्तिपि यासुटि उद्भागलोपे **इतश्च** इति तिप इकारलोपे **स्कोः संयोगाद्योरन्ते च** इति सलोपे **अकृत्सार्वधातुकयोर्दीर्घः** इति दीर्घे ॥ श्रूयात् ॥ श्रु अग्रे लुङस्तिपि **च्लि लुङि** इति च्लौ **च्लेः सिच्** इति सिचि इज्भागलोपे अटि **इतश्च** इति तिप इकारलोपे **अस्तिसिचोऽपृक्ते** इति ईटि सस्य मूर्द्धन्यादेशे **सिचि वृद्धिः परस्मैपदेषु** इति वृद्धौ कृतायाम् ॥ अश्रौषीत् ॥ श्रु अग्रे लृङस्तिपि अटि **स्यतासी लृलुटोः** इति स्ये मूर्द्धन्यादेशे **इतश्च** इति तिप इकारलोपे **सार्वधातुकार्द्धधातुकयोः** इति गुणे च कृते ॥ अश्रोष्यत् ॥ गम्लृ गतौ धातुर्वर्तते तत्र **उपदेशेऽजनुनासिक इत्** इति लृकारस्येत्संज्ञायां **तस्य लोपः** इत्यनेन लृकारलोपे जाते गम् इत्यवशिष्टं ततो लिटस्तिपि शपि **इषुगमियमां छः** इत्यनेन सर्वस्य गम्भागस्य छत्वे प्राप्ते **अलोऽन्त्यस्य** इत्यनेन मस्य छत्वे पररूपे च कृते गछति इति जातं तत्र **छे च** तुक् इति तुकि उक्भागलोपे **स्तोः श्चुना श्चुः** इति तस्य चत्वे ॥ गच्छति ॥ गम् अग्रे लिटस्तिपो णलि **लिटि धातो**

पोऽजादौ किति न लङि । जग्मतुः जग्मुः । जगमिथ जगन्थ जग्मथुः जग्म । जगाम
जगम जग्मिव जग्मिम । गन्ता ॥ **गमेरिट् परस्मैपदेषु** ।७।२।५८। गमेः परस्य
सादेरार्धधातुकस्येट् स्यात् परस्मैपदेषु । गमिष्यति गच्छतु अगच्छत् गच्छेत् गम्यात् ॥
**पुषादिद्युताद्य्लृदितः परस्मैपदेषु** ।३।१।५५। श्यन्विकरणपुषादेर्द्युतादेर्लृदितश्च
परस्य च्लेरङ् परस्मैपदेषु । अगमत् अगमिष्यत् । इति परस्मैपदिनः । एध वृद्धौ ॥

---

**रनभ्यासस्येति** द्वित्वे अभ्यासत्वे शेषहल्लोपे **कुहोश्चुरिति** गस्य जत्वे **अत उपधाया**
इत्यनेन उपधाकारदीर्घत्वे ॥ जगाम ॥ अतुसि द्वित्वे अभ्यासत्वे शेषहल्लोपे चुत्वे **गमहनजन-
खनघसां लोपः क्ङित्यनङि** इत्यनेनोपधालोपे ॥ जग्मतुः ॥ उसि । जग्मुः ॥ क्रादि-
नियमात् थलि चेट् द्वित्वेऽभ्यासत्वे शेषहल्लोपे चुत्वे च कृते ॥ जगमिथ ॥ इडभावे मस्यानुस्वारे
**अनुस्वारस्य ययि परसवर्णः** इति परसवर्णत्वे कृते ॥ जगन्थ ॥ अथुसि उपधालोपे । ज-
ग्मथुः ॥ अे उपधालोपे । जग्म ॥ णलि । जगाम ॥ पूर्ववत् । पक्षे **णलुत्तमो वेति** णित्त्वा-
भावे ॥ जगम ॥ वे इटि उपधालोपे च । जग्मिव ॥ मे इटि उपधालोपे च । जग्मिम ॥ गम्–लुट-
स्तिपि **स्यतासी ल्लृलुटोरि**ति तासि कृते **लुटः प्रथमस्य डारौरसः** इति तिपो डात्वे डि-
त्वाट्टिलोपे मस्यानुस्वारेऽनुस्वारस्य परसवर्णत्वे च ॥ गन्ता ॥ गम् अग्रे ल्लृटस्तिपि स्ये **गमेरिट्
परस्मैपदेषु** इत्यनेन इटि सस्य मूर्द्धन्यादेशे च कृते ॥ गमिष्यति ॥ गम् अग्रे लोटस्तिपि
शपि **इषुगमियमां छः** इति छादेशे **छे च** इति तुकि उक्भागलोपे तस्य चुत्वे **एरु-
रि**ति इकारस्योकारे कृते ॥ गच्छतु ॥ गम् अग्रे लङस्तिपि शपि अटि **इषुगमियमां छः** इति
छे तुकि चुत्वे **इतश्चेति** तिप इकारलोपे च ॥ अगच्छत् ॥ गम् अग्रे लिङस्तिपि शपि **इषुग-
मियमां छः** इति छे तुकि चुत्वे यासुटि उट्भागलोपे **अतोयेयः** इति इयादेशे
गुणे **लोपो व्योर्वली**ति यलोपे **इतश्चे**तीकारलोपे च ॥ गच्छेत् ॥ गम् अग्रे आशीर्लि-
ङस्तिपि यासुटि उट्लोपे **स्कोः संयोगाद्योरि**ति सलोपे **इतश्चे**ति तिप इकारलोपे ॥
गम्यात् ॥ गम् अग्रे लुङस्तिपि अटि **च्लि लुङी**ति च्लौ **पुषादिद्युताद्य्लृदितः
परस्मैपदेषु** इत्यनेन च्लेरङादेशे ङलोपे **इतश्चेति** तिप इकारलोपे अगमत् ॥ गम् अग्रे
लृङस्तिपि स्ये **गमेरिट्परस्मैपदेषु** इति इटि अटि **इतश्चे**ति तिप इकारलोपे सका-
रस्य मूर्धन्यादेशे च कृते ॥ अगमिष्यत् ॥ एध् वृद्धौ धातुर्वर्तते तत्र कस्य सूत्रस्य प्राप्तिः ।
**लः कर्मणि च भावे चाकर्मकेभ्यः** अत्रेव् धातुः सकर्मकोऽस्त्यकर्मको वा अ-
स्त्ययमकर्मकस्ततः कर्तरि नवापि लकाराः प्राप्ताः तत्र **वर्तमाने लट्** इत्यनेनात्रैध्धातोर्व-
र्तमानक्रियावृत्तित्वाल्लड्जातो जाते च लटि टकारस्य **हलन्त्यमि**त्यनेन लकारोत्तरवर्त्यकारस्य
**चोपदेशेऽजनुनासिक इदि**त्यनेनेत्संज्ञायां कृतायां कृते च **तस्य लोप** इत्यनेन तयो-
र्लोपे एध् ल् इति जातं तत्र **तिप्तसझी**त्यनेन खलकपोतन्यायेनाष्टादशापि ळादेशाः
प्राप्तास्तत्र **लः परस्मैपद**मित्यनेन सर्वेषां ळादेशानां परस्मैपदत्वे प्राप्ते **तङानावात्मने-**

**टित आत्मनेपदानां टेरे** ।३।४।७९। टितो लस्यात्मनेपदानां टेरेत्वम् । एधते ॥
**आतो ङितः** ।७।२।८१। आतः परस्य ङितामाकारस्य इय् स्यात् । एधेते एधन्ते ॥
**थासः से** ।३।४।८०। टितो लस्य थासः से स्यात् । एधसे एधेथे एधध्वे । अतो गुणे।

---

**पद**मित्यनेन तङ्प्रत्याहारान्तःपातिनां नवानां त्वात्मनेपदसंज्ञा जाता एवं तिबादयो नव परस्मैपदसंज्ञिनस्तादयश्च नवात्मनेपदिनस्तेषां मध्यादत्र परस्मैपदिनः प्रत्ययाः स्युः किमुतात्मनेपदिनः स्युरित्याशङ्कायाम**नुदात्तङित आत्मनेपद**मित्यनेनात्र एध् धातोरनुदात्तेत्त्वादात्मनेपदसंज्ञिनस्तादयः प्रत्ययाः प्राप्तुमर्हाः परं तादीनामपि नवानां मध्यादत्र केन भाव्यमित्याशङ्कायां **तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमाः** इत्यनेन क्रमात्त्रयाणां त्रिकाणां प्रथममध्यमोत्तमसंज्ञासु जातासु जातासु च **तान्येकवचनद्विवचनबहुवचनान्येकशः** इत्यनेन लब्धप्रथमादिसंज्ञानां तिङत्रयाणां त्रयाणां वचनानां प्रत्येकमेकवचनद्विवचनबहुवचनसंज्ञासु अत्र प्रथमपुरुषेण भाव्यं मध्यमेन भाव्यं उत्तमेन वा भाव्यमित्याशङ्कायां **शेषे प्रथम** इत्यनेन प्रथमः पुरुषो भवितुमर्हस्तस्यापि त्रीणि वचनानि सन्ति तेषां मध्यात्केन भाव्यमित्याशङ्कायां **द्व्येकयोर्द्विवचनैकवचने** इत्यनेनात्रैकवचनस्य विवक्षास्तीत्येकवचने त इत्यागते एध् त इति जातं तत्र **तिङ्शित्सार्वधातुक**मित्यनेन तकारस्य सार्वधातुकसंज्ञायां कृतायां **कर्तरि शप्** इत्यनेन शपि कृते पस्य **हलन्त्य**मित्यनेन शस्य च **लशक्वतद्धिते** इत्यनेनेत्संज्ञायां कृतायां कृते च **तस्य लोपः** इत्यनेन शकारपकारयोर्लोपे एध् अ त इति जाते कृते च संयोगे एधत इति जातं तत्र **टित आत्मनेपदानां टेरे** इत्यनेन टिरूपस्य तकारोत्तरवर्त्यकारस्य एकारे कृते ॥ एधते ॥ इति सिद्धम् ॥ एध् अग्रे लटः प्रथमपुरुषद्विवचने आतामि समागते एध् आताम् इति जातं तत्र **तिङ्शित्सार्वधातुक**मित्यनेन आतामः सार्वधातुकत्वे **कर्तरि शप्** इति शपि शकारपकारयोरित्संज्ञायां लोपे च कृते एध् अ आताम् इति जातं तत्र **सार्वधातुकमपिद्**इत्यनेन सार्वधातुकीभूतस्य आतामो ङिद्वत्त्वे कृते **आतो ङितः** इत्यनेनाकारस्य इयादेशे कृते एध् अ इय् ताम् इति जातं तत्र यकारस्य **हलन्त्य**मित्यनेनेत्संज्ञाकरणपूर्वं लोपे कृते अकारेकारयोश्च गुणे कृते धस्य एकारेण सह संयोगे कृते कृते च **टित आत्मनेपदानां टेरे** इत्यनेन टिरूपस्य तकारोत्तरवर्तिन आम् भागस्य एत्वे च कृते ॥ एधेते ॥ इति सिद्धम् ॥ एध् अग्रे प्रथमपुरुषबहुवचने झे समागते सार्वधातुकत्वे **कर्तरि शप्** इति शपि **झोऽन्तः** इति अन्तादेशे **टित आत्मनेपदानां टेरे** इति टेरेत्वे च कृते ॥ एधन्ते ॥ इति सिद्धम् ॥ एध् अग्रे मध्यमपुरुषैकवचने थासि समागते **तिङ्शित्सार्वधातुक**मिति थासः सार्वधातुकत्वे **कर्तरि शप्** इति शपि **थासः से** इति थासः सेत्वे च कृते ॥ एधसे ॥ एवं मध्यमद्विवचने आथामि आथामः सार्वधातुकत्वे **कर्तरि शप्** इति शपि **सार्वधातुकमपित्** इति आथामो ङिद्वत्त्वे

एधे एधावहे एधामहे ॥ **इजादेश्च गुरुमतोऽनृच्छः** ।३।१।३६। इजादिर्यो धातुर्गुरुमानृच्छत्यन्यस्तत आम् स्याल्लिटि ॥ **आम्प्रत्ययवत्कृञोऽनुप्रयोगस्य** ।१।३।६३। आम्प्रत्ययो यस्मादित्यतद्गुणसंविज्ञानो बहुव्रीहिः । आम्प्रकृत्या तुल्यमनुप्रयुज्यमानात् कृञोऽप्यात्मनेपदम् ॥ **लिटस्तझयोरेशिरेच्** ।३।४।८१। लिडादेशयोस्तझयोरेशिरेचौ स्तः । एधाञ्चक्रे एधाञ्चक्राते एधाञ्चक्रिरे । एधाञ्चकृषे एधाञ्चक्राथे ॥ इथाः

---

**आतो ङित** इति आथाम आकारस्य इयादेशे यलोपे गुणे टेरेत्वे च कृते ॥ एधेथे ॥ एध् अप्रे मध्यमबहुवचने ध्वमि सार्वधातुकत्वे शपि टेरेत्वे च कृते ॥ एधध्वे ॥ एध् अप्रे उत्तमैकवचने इटि सार्वधातुकत्वे शपि टेरेत्वे **अतो गुणे** इति पररूपे च कृते ॥ एधे ॥ एध् अप्रे लट उत्तमद्विवचने वहि च समागते सार्वधातुकत्वे शपि **अतो दीर्घो यञि**ति अकारदीर्घत्वे टेरेत्वे च कृते ॥ एधावहे ॥ एवं लट उत्तमबहुवचने महिङि सार्वधातुकत्वे शपि **अतो दीर्घो यञी**ति दीर्घत्वे टेरेत्वे च कृते ॥ एधामहे ॥ एध् अप्रे **परोक्षे लिट्** इति लिटि प्राप्ते एध् लिट् इति जातं तत्र **इजादेश्च गुरुमतोऽनृच्छः** इत्यनेन आमि कृते कृते च **आम** इति सूत्रेण लिट्लोपे एध् आम् इति जातं तत्र **कृञ्चानुप्रयुज्यते लिटि** इत्यनेन लिट्परे कृञि प्रयुक्ते एधां कृ लिट् इति जातं तत्र लिटस्तादेशे कृते **लिटस्तझयोरेशिरेच्** इत्यनेन एशि कृते शलोपे च कृते एध् आम् कृ ए इति जातं तत्र द्विर्वचनविधायकसूत्रात् यणविधायकसूत्रस्य परत्वात्प्राप्तं यणं **द्विर्वचनेऽचि** इत्यनेन सूत्रेण बाधित्वा **लिटि धातोरनभ्यासस्ये**ति सूत्रेण द्वित्वे कृते एधाम् कृ कृ ए इति जातं तत्र **उरत्** इत्यनेन रपरे अदादेशे कृते एधांकर् कृ ए इति जातं तत्र **हलादिः शेष** इति शेषहलो लोपे एधां क कृ ए इति जातं तत्र **कुहोश्चुरि**ति कस्य चत्वे **इको यणची**ति यणि च कृते ॥ एधाञ्चक्रे ॥ इति सिद्धम् ॥ एध् अप्रे **परोक्षे लिट्** इति लिटि **इजादेश्च गुरुमतोऽनृच्छ** इत्यनेन आमि **आम** इति सूत्रेण लिट् लोपे **कृञ्चानुप्रयुज्यते लिटि** इत्यनेन लिट्परे कृञि विहिते लिटो तस्य च प्रथमपुरुषद्विवचने आतामि कृते **लिटि धातोरनभ्यासस्ये**ति कृञो द्वित्वे **उरत्** इत्यनेन रपरे अदादेशे **हलादिः शेष** इति रलोपे **कुहोश्चुरि**ति ककारस्य चकारे **इको यणची**ति यणि **टित आत्मनेपदानां टेरे** इति टेरेत्वे च कृते ॥ एधाञ्चक्राते ॥ एध् अप्रे **परोक्षे लिट्** इति लिटि **इजादेश्च गुरुमतो नृच्छ** इति आमि **आम** इति लिटो लोपे **कृञ् चानुप्रयुज्यते लिटि** इति लिट्परे कृञि विहिते लिट्लकारस्य च प्रथमपुरुषबहुवचने झे आगते **लिटस्त-**

---

१ आम्प्रत्ययवत् कृञोऽनुप्रयोगस्य ॥ आम् प्रत्ययो यस्मादिति बहुव्रीहिः । स च द्विविधः । तद्गुणसंविज्ञानोऽतद्गुणसंविज्ञानश्च ॥ अन्यपदार्थस्य समभिव्याहृतपदार्थे येन संबन्धेनान्वयस्तेनैव यत्र कार्येऽन्वयस्तत्र तद्गुणसंविज्ञानोऽन्यत्रान्यः ॥ लंबकर्णः । चित्रगुः । इत्युदाहरणे । प्रकृते न तद्गुणसंविज्ञानः स्वीक्रियते चेत्तदा आमन्तस्य धातुत्वाभावेन सूत्रमेतद् व्यर्थं स्यात् । तस्मादत्रातद्गुणसंविज्ञानो बहुव्रीहिः । सनाद्यन्ता धातव इत्यनेनापि न धातुत्वम् । हेतु आम् इत्यस्य पाठाभावात् ।

**षीध्वंलुङ्लिटां धोऽङ्गात्** ।८।३।७८। इण्णन्तादङ्गात्परेषां षीध्वंलुङ्लिटां धस्य ढः स्यात्। एधाञ्चकृढ्वे एधाञ्चक्रे एधाञ्चकृवहे एधाञ्चकृमहे। एधाम्बभूव एधामास। ए-

---

**झयोरेशिरेच्** इत्यनेन इरेचि कृते चकारस्य लोपे कृते एधांकृ इरे इति जातं तत्र **लिटि धातोरनभ्यासस्ये**ति कृञो द्वित्वे **उरत्** इति रपरे अदादेशे **हलादिः शेष** इति रलोपे **कुहोश्चु**रिति ककारस्य चकारे **इकोयणची**ति यणि च कृते एधांचक्रिरे ॥ एधृ अग्रे **परोक्षे लिट्** इति लिटि **इजादेश्च गुरुमतोऽनृच्छ** इति आमि **आम** इति लिटो लोपे **कृञ्चानुप्रयुज्यते लिटी**ति लिट्परे कृञि प्रयुक्ते लिटो लकारस्य च मध्यमैकवचने थासि कृते **थासः** से इति थासः सेकारे कृते एधां कृ से इति जातं तत्र **लिटि धातोरनभ्यासस्ये**ति कृद्वित्वे **उरत्** इति रपरे अदादेशे **हलादिः शेष** इति रलोपे **कुहोश्चुरि**ति ककारस्य चकारे सकारस्य मूर्द्धन्यादेशे च कृते **टित आत्मनेपदानां टेरे** इति टेरेत्वे ॥ एधांचकृषे ॥ एधृ अग्रे लिटि आमि लिटोलोपे लिट्परे कृञि लिटो लस्य आथामि कृञ् द्वित्वे अदादेशे रलोपे कस्य चत्वे यणि टेरेत्वे च कृते ॥ एधांचक्राथे ॥ एधृ अग्रे लिटि इ-जादेश्च गुरुमतोऽनृच्छ इति आमि **आम** इति लिटो लोपे **कृञ्चानुप्रयुज्यते लिटि** इति लिट्परे कृञि विहिते लिटो लस्य च मध्यमबहुवचने ध्वमि कृते एधांकृध्वम् इति जातं तत्र **लिटि धातोरनभ्यासस्ये**ति कृञो द्वित्वे **उरत्** इति अदादेशे **हलादिः शेष** इति रलोपे **कुहोश्चु**रिति श्चुत्वे **इणः षीध्वंलुङ्लिटां धोऽङ्गात्** इत्यनेन धस्य ढत्वे **टित आत्मनेपदानां टेरे** इति टेरेत्वे च कृते ॥ एधांचकृढ्वे ॥ एधृ अग्रे लिटि आमि लिटोलोपे लिट्परे कृञि लिटो लस्य चोत्तमपुरुषैकवचने इटि कृञो द्वित्वे अदादेशे रलोपे ककारस्य चकारे टेरेत्वे यणि च कृते ॥ एधांचक्रे ॥ एवं वहौ ॥ एधांचकृवहे ॥ महिङि च ॥ एधांचकृमहे ॥ एवं एधृ अग्रे **परोक्षे लिट्** इति लिटि **इजादेश्च गुरुमतोऽनृच्छ** इति आमि **आम** इति लिटो लोपे **कृञ्चानुप्रयुज्यते लिटी**ति लिट्परे भुवि जाते एधां भू लिट् इति जातं तत्र लिटो लकारस्य णलि कृते एधांभू अ इति जातं तत्र **भुवो वुग्लुङ्लिटो-**रिति वुकि कृते उक्भागस्य लोपे कृते **लिटि धातोरनभ्यासस्ये**ति भुवो द्वित्वे एधांभूव् भूव् अ इति जाते **हलादिः शेष** इति वलोपे एधांभूभूव् अ इति जातं तत्र **ह्रस्व** इति सूत्रेणाभ्यासाचो भकारोत्तरवर्तिन ऊकारस्य ह्रस्वत्वे कृते कृते च **भवतेर** इत्युकारस्याकारे **अभ्यासेचर्च** इत्यनेन भस्य बत्वे च कृते ॥ एधांबभूव ॥ एवं एधधातोर्लिट्परे असि विहिते विहिते च लिटो लस्य **परस्मैपदानां णलतुसुस्थलथुसणल्वमा** इत्यनेन णलि एधां

---

१ इणः षीध्वंलुङ्लिटां धोऽङ्गात् ॥ इण्कोरित्यधिकारादेव इण्लाभे पुनरिण्ग्रहणं कोरिति निवृत्त्यर्थं तेनेह न पक्षीध्वम् ॥ अङ्गग्रहणाभावे परिपूर्वकविष् धातोर्यङ्लुकि विधिलिङि परिवेविषीध्वमित्यत्रापि ढत्व-प्रसक्तिः स्यात् ॥ यदि चार्थवत्परिभाषया षीध्वमोऽर्थवत्त्वग्रहणे इषीढ्वमित्यत्रैव स्यात् तत्र सदातत्प्रग्रहणमर्थवत्परिभाषाया अनित्यत्वे मानम्।

ऐधेताम् ऐधन्त । ऐधथाः ऐधेथाम् ऐधध्वम् । ऐधे ऐधावहि ऐधामहि ॥ **सीयुट्** ।३।४।१०२। सलोपः । एधेत एधेयाताम् ॥ **झस्य रन्** ।३।४।१०५। लिङो झस्य रन् स्यात् । एधेरन् । एधेथाः एधेयाथाम् एधेध्वम् ॥ **इटोऽत्** ।३।४।१०६। लिङादेशस्य इटोऽत्स्यात् । एधेय एधेवहि एधेमहि ॥ **सुट्तिथोः** ।३।४।१०७। लिङस्तथोः सुट् । यलोपः । आर्धधातुकत्वात्सलोपो न । एधिषीष्ट एधिषीयास्ताम् एधिषीरन् । एधिषीष्ठाः एधिषीयास्थाम् एधिषीध्वम् । एधिषीय एधिषीवहि एधिषीमहि । ऐधिष्ट ऐधिषाताम् ॥ **आत्मनेपदेष्वनतः** ।७।१।५। ... आत्मनेपदेषु झस्य अत् इत्यादेशः स्यात् । ऐधिषत ऐधिष्ठाः ऐधिषाथाम् ऐधिढ्वम् । ऐधिषि ऐधिष्वहि ऐधिष्महि । ऐधिष्यत ऐधिष्येताम् ऐधिष्यन्त । ऐधिष्यथाः ऐधिष्येथाम् ऐ-

---

समागते लिङो लस्य तादेशे शपि **लिङः सीयुट्** इति सीयुटि जाते एध सीयुट् त इति जातं तत्र टकारस्य **हलन्त्यमिल्यनेन** यकारान्तःपात्युकारस्य **उपदेशोऽजनुनासिक इत्** इत्यनेन तयोरित्संज्ञां विधाय **लिङः सलोपोऽनन्त्यस्ये**ति सलोपे **लोपो व्योर्वली**ति यलोपे **आद्गुण** इति गुणे च कृते ॥ एधेत ॥ एध् अग्रे आशीर्लिङः प्रथमपुरुषैकवचने ते आगते सीयुटि टकारोकारयोः इत्संज्ञाकरणपूर्वं लोपे जाते एध् सी ॥ इति जातं तत्र **आर्धधातुकस्येड्वलादे**रिति इटि कृते एधिसी त इति जाते **सुट्तिथो**रिति सुटि उट्भागस्य लोपे एधिसी स् त इति जाते उभयोः सकारयोर्मूर्द्धन्यादेशे कृते **ष्टुना ष्टु**रिति ष्टुत्वे च कृते ॥ एधिषीष्ट ॥ एध् अग्रे लुङः प्रथमपुरुषैकवचने ते आगते **च्लि लुङी**ति च्लौ **च्लेः सिच्** इति सिचि इञ्भागस्य लोपे **आर्धधातुकस्येड्वलादे**रिति इटि **आडजादीना**मिति आटि **आटश्चे**ति वृद्धौ सस्य मूर्द्धन्यादेशे ष्टुत्वे च कृते ॥ ऐधिष्ट ॥ एध् अग्रे लुङः प्रथमपुरुषबहुवचने झे आगते **च्लि लुङी**ति च्लौ **च्लेः सिच्** इति सिचि इञ्भागलोपे इटि **आडजादीना**मिति आटि **आटश्चे**ति वृद्धौ **आत्मनेपदेष्वनत** इति अत् आदेशे कृते ॥ ऐधिषत ॥ एध् अग्रे लुङ्मध्यमपुरुषबहुवचने ध्वमि **च्लि लुङि** इति च्लौ **च्लेः सिच्** इति सिचि इञ्भागलोपे **आडजादीना**मिति आटि इटि वृद्धौ **धि चे**ति सलोपे **इणः षीध्वंलुङ्लिटां धोऽङ्गात्** इति धस्य ढत्वे ॥ ऐधिढ्वम् ॥ पक्षे ॥ ऐधिध्वम् ॥ एध् अग्रे लृङ्लकारस्य प्रथमपुरुषैकवचने ते आगते **स्यतासी लृलुटो**रिति स्यादेशे **आर्धधातुकस्येड्वलादे**रिति इटि **आडजादीना**मिति आटि वृद्धौ सकारस्य मूर्द्धन्यादेशे च कृते ॥ ऐधिष्यत ॥ कमु कान्तौ धातुरस्ति तत्र **कमेर्णिङ्** इत्यनेन णिङि णिङो ङित्वात्**अनुदात्तङित आत्मनेपद**मिति आत्मनेपदित्वं जातमात्मनेपदित्वात्प्रथमपुरुषैक-वचने ते समागते णकारस्य **चुटू** इत्यनेन ङकारस्य **हलन्त्यमिल्यनेन** चेत्संज्ञां विधाय **तस्य लोप** इति लोपे कृते कम् इ त इति जाते तत्र **कर्तरि शप्**इति शपि कम् इ अ त इति जाते

षिष्यध्वम् । मेथिष्ये मेथिष्यावहि मेथिष्यामहि । कमु कान्तौ २ ॥ **कमेर्णिङ्** ।३।१।३०। स्वार्थे । ङित्वात्तङ् । कामयते ॥ **अयामन्ताल्वाय्येत्न्विष्णुषु** ।६।४।५५। आम् अन्त आलु आय्य इत्नु इष्णु एषु णेरयादेशः स्यात् । कामयाञ्चक्रे । आय-

त्र **अत उपधायाः** इत्यनेन ककारोत्तरवर्त्यकारस्य वृद्धौ कृतायां **सार्वधातुकार्धधातुकयोरि**त्यनेन इकारस्य गुणे कृते **एचोऽयवायावः** इति अयादेशे **टित आत्मनेपदानां टेरे** इति टेरेत्वे च कृते ॥ कामयते ॥ कम् अस्य **कमेर्णिङ्** इति णिङि लिडात्मनेपदित्वे लिटि चागते णकारङकारयोरित्संज्ञाकरणपूर्वं लोपे कृते कम् इ लिट् इति जातं तत्र **अत उपधायाः** इति वृद्धौ कृतायां काम् इ लिट् इति जातं तत्र **कास्यनेकाच आम् वक्तव्य** इति आमि कृते **अयामन्ताल्वाय्येत्न्विष्णुषु** इत्यनेन णिङ इकारस्य अयादेशे कृते काम् अय् आम् लिट् इति जातं तत्र **आमः** इति लिटो लोपे **कृञ् चानुप्रयुज्यते लिटि** इति लिट्परे कृञि प्रयुक्ते काम् अय् आम् कृ लिट् इति जातं तत्र प्रथमपुरुषैकवचने ते आदेशे कृते काम् अय् आम् कृ त इति जातं तत्र **लिटस्तझयोरेशिरेच्** इत्यनेन तस्य एशि कृते काम् अय् आम् कृ ए इति जातं तत्र **लिटि धातोरनभ्यासस्य** इति कृञो द्वित्वे **उरत्** इति रपरे अदादेशे च कृते काम् अय् आम् कर् कृ ए इति जातं तत्र **हलादिः शेषः** इति रलोपे **कुहोश्चुरि**ति कस्य चत्वे **इको यणचीति** यणि संयोगे न कृते ॥ कामयाञ्चक्रे ॥ कम् अस्य **कमेर्णिङ्** इति णिङि लिटि चागते कम् इ लिट् इति जातं तत्र **अत उपधायाः** इति ककारोत्तरवर्त्यकारवृद्धौ **कास्यनेकाच आम् वक्तव्य** इति आमि **अयामन्ताल्वाय्येत्न्विष्णुषु** इत्यनेन णिङ इकारस्य अयादेशे कृते काम् अय् आम् लिट् इति जाते **आमः** इति लिट्लोपे **कृञ् चानुप्रयुज्यते लिटि** इत्यनेन लिट्परे कृञि प्रयुक्ते काम् अय् आम् कृ लिट् इति जातं तत्र लिट्प्रथमपुरुषद्विवचने आतामि समागते काम् अय् आम् कृ आताम् इति जाते **लिटि धातोरनभ्यासस्ये**ति द्वित्वे कृते कामयां कृ कृ आताम् इति जातं तत्र **उरत्** इति अदादेशे कामयांकर् कृ आतामिति जातं तत्र **हलादिः शेषः** इति रलोपे **कुहोश्चुरि**ति कस्य चकारे **इको यणचीति** यणि **टित आत्मनेपदानां टेरे** इति टेरेत्वे च कृते ॥ कामयांचक्राते ॥ कम् अस्य **कमेर्णिङ्** इति णिङि लिटि **अत उपधायाः** इति उपधावृद्धौ **कास्यनेकाच आम् वक्तव्य** इति आमि **अयामन्ताल्वाय्येत्न्विष्णुषु** इति अयि **आमः** इति सूत्रेण लिट्लोपे **कृञ् चानुप्रयुज्यते लिटि** इति

१ अयामन्ताल्वाय्येत्न्विष्णुषु ॥ आम् कारयामास । अन्त गण्डयन्तः । अन्तौ लगन्तः । कृभ्वृर्षि [illegible] सिङ्कि [illegible] जिनन्दिभ्यश्चेत्यौणादिको झच् । ... । स्पृहिगृहिपतिदयि ... । स्पृहयालुः । ... । स्पृहयाय्यः । स्तनिहृषिपुषि ... औणादिक एव इत्नुच् । स्तनयित्नुः । ... । पारयिष्णवः ।

दय इति णिङ् वा । चकमे चकमाते चकमिरे । चकमिषे चकमाथे चकमिढ्वे । चकमे चकमिवहे चकमिमहे । कामयिता कामयितासे कमिता कामयिष्यते कमिष्यते । कामयताम् अकामयत कामयेत कामयिषीष्ट कमिषीष्ट ॥ **णिश्रिद्रुस्रुभ्यः कर्तरि**

---

लिट्परे कृञ्प्रयुक्ते लिटश्च प्रथमबहुवचने [illegible] आगते कामयांक्र झ इति जातम् तत्र **लिटि धातोरनभ्यासस्ये**ति द्वित्वे **उरत्** इति रपरे अदादेशे **हलादिः शेष** इति रलोपे **कुहोश्चु**रिति कस्य चत्वे **लिटस्तझयोरेशिरेच्** इत्यनेन झस्य इरेचि **इको यणची**ति यणि च कृते ॥ कामयांचक्रिरे ॥ **आयादय आर्द्धधातुके वा** इति सूत्रे णिङ्विकल्पे उ कम् धातोर्लिटः प्रथमपुरुषैकवचने तकारे समागते **लिटि धातोरनभ्यासस्ये**ति द्वित्वे, **हलादिः शेष** इति मलोपे **कुहोश्चु**रिति कस्य चत्वे **लिटस्तझयोरेशिरेच्** इति तकारस्य एशि शकारलोपे संयोगे च कृते ॥ चकमे ॥ एवं शेषाण्यपि लिटो रूपाण्यूह्यानि ॥ कम् अग्रे **कमेर्णिङ्** इति णिङि **अनद्यतने लुट्** इति लुटि लुटश्च प्रथमपुरुषैकवचने तकारे समागते **अत उपधाया** इति उपधावृद्धौ **स्यतासी लृलुटो**रिति त **आर्द्धधातुकस्येड्वलादे**रिति इटि गुणे अयादेशे कामयितास् त इति **जातं** तत्र **लुटः प्रथमस्य डारौरस** इति तकारस्य डात्वे डित्त्वसामर्थ्यादभस्यापि टेर्लोपे संयोगे च कृते ॥ कामयिता ॥ **आयादय आर्द्धधातुके वा** इत्यनेन णिङोऽध्यायाद्यन्तरनात् णिङभावे ॥ कमिता ॥ कम् अग्रे णिङि उपधावृद्धौ लटः प्रथमैकवचने ते गुणे अयादेशे **स्यतासी लृलुटो**रिति स्ये इटि सस्य मूर्द्धन्यादेशे **टित आत्मनेपदानां टेरे** इति टेरेत्वे च कृते ॥ कामयिष्यते ॥ **आयादय आर्द्धधातुके वा** इति णिङभावे ॥ कमिष्यते । कम् अग्रे णिङि उपधादीर्घत्वे लोटः प्रथमैकवचने ते शपि **टित आत्मनेपदानां टेरे** इति टेरेत्वे कृते गुणे अयादेशे कामयते इति जातं तत्र **आमेत** इत्यनेन तकारोत्तरवर्त्त्यैकारस्य आमि च कृते ॥ कामयताम् ॥ कम् अग्रे **कमेर्णिङ्** इति णिङि **अनद्यतने लङ्** इति लङि लङः प्रथमपुरुषैकवचने तकारे आगते **अत उपधाया** इत्युपधावृद्धौ शपि गुणे अयादेशे **लुङ्लङ्लृङ्क्ष्वडुदात्तः** इति अटि च कृते ॥ अकामयत ॥ कम् अग्रे **कमेर्णिङ्** इति णिङि लिङो लकारस्य प्रथमपुरुषैकवचने तकारे **अत उपधाया** इति वृद्धौ शपि गुणे अयि **लिङः सीयुट्** इति सीयुटि उट्भागलोपे **लिङः सलोपोऽनन्त्यस्ये**ति सलोपे **लोपो व्योर्वली**ति यलोपे **आद्गुण** इति गुणे च कृते ॥ कामयेत ॥ कम् अग्रे णिङि आशीर्लिङः प्रथमपुरुषैकवचने [illegible] उपधावृद्धौ सीयुटि उट्भागलोपे **आर्द्धधातुकस्येड्वलादे**रिति इटि गुणे अयादेशे सीयुटि **लोपो व्योर्वली**ति यलोपे **सुट्तिथो**रिति सुटि च कृते कामयि सी स् त इति जाते **आदेशप्रत्यययो**रिति सस्य मूर्द्धन्यादेशे कृते कृते च **ष्टुना ष्टु**रिति ष्टुत्वे ॥ कामयिषीष्ट ॥ **आयादय आर्द्धधातुके वे**ति णिङभावे ॥ कमिषीष्ट ॥ कम् अग्रे **कमेर्णिङ्** इति णिङि लुङः प्रथमपुरुषैकवचने

**चङ्** ।३।१।४८। ण्यन्तात् श्र्यादिभ्यश्च च्लेश्चङ् स्यात्कर्त्रर्थे लुङि परे । कामि अ त इति स्थिते ॥ **णेरनिटि** ।६।४।५१। अनिडादावार्धधातुके परे णेर्लोपः स्यात् ॥ **णौ चङ्युपधाया ह्रस्वः** ।७।४।१। चङ्परे णौ यदङ्गं तस्योपधाया ह्रस्वः स्यात् ॥ **चङि** ।६।१।११। चङि परे अनभ्यासस्य धात्ववयवस्यैकाचः प्रथमस्य द्वे स्तोऽजादेर्द्वितीयस्य ॥ **सन्वल्लघुनि चङ्परेऽनग्लोपे**[1] ।७।४।९३। चङ्परे णौ यदङ्गं तस्य योऽभ्यासो लघुपरस्तस्य सनीव कार्यं स्याण्णावग्लोपे सति ॥ **सन्यतः** ।७।४।७९। अभ्यासस्यात इत्स्यात्सनि ॥ **दीर्घो लघोः** ।७।४।९४। लघोरभ्यासस्य दीर्घः स्यात् सन्वद्भावविषये । अचीकमद । णिङभावपक्षे ( कमेश्च्लेश्चङ् वाच्यः ) अचकमत अकामयिष्यत अकमिष्यत । अय गतौ ३ अयते ॥ **उपसर्गस्यायतौ** ।८।२।१९। अय-

ते आगते कृतायामुपधावृद्धौ समागते च **च्लि लुङीति** च्लौ काम् इ च्लि त इति जातं तत्र **णिश्रिद्रुस्रुभ्यः कर्तरि चङ्** इति च्लेश्चङि कृते चकारस्य **चुटू** इत्यनेन ङकारस्य च **हलन्त्य**मित्यनेनेत्संज्ञां विधाय लोपे कृते काम् इ अ त इति जातम् तत्र **णेरनिटि** इत्यनेन णेर्लोपे कृते काम् अ त इति जातम् तत्र **णौ चङ्युपधाया ह्रस्व** इत्यनेन णेश्चङ्परत्वादुपधाह्रस्वत्वे कृते कम् अ त इति जाते **चङि** इत्यनेन ककारस्य अनभ्याससत्वात् धात्ववयवत्वात् एकाच्त्वात्प्रथमत्वाच्च द्वित्वे जाते **हलादिः शेष** इत्यनेन मकारलोपे ककम् अ त इति जातं तत्र **कुहोश्चु**रिति कस्य चत्वे चकम् अ त इति जाते **सन्वल्लघुनि चङ्परेऽनग्लोपे** इत्यनेन सन्वत्त्वे कृते **सन्यत** इत्यनेनाभ्यासीभूतचकारान्तःपात्यकारस्य इकारे कृते चिकम् अत इति जातं तत्र **दीर्घो लघो**रिति सूत्रेणाभ्यासदीर्घत्वे चीकम् अ त इति जातं तत्र **लुङ्लङ्लृङ्क्ष्वडुदात्त** इति अटि च कृते कृते च संयोगे ॥ अचीकमत ॥ णिङभावपक्षे तु **कमेश्च्लेश्चङ्वाच्य** इत्यनेन चङि कृते **चङि** इत्यनेन द्वित्वे लोपे **कुहोश्चु**रिति कस्य चत्वे अटि च कृते ॥ अचकमत ॥ कम् अग्रे **कमेर्णिङ्** इति णिङि लृङः प्रथमपुरुषैकवचने तकारे उपधादीर्घत्वे **स्यतासी लृलुटो**रिति स्ये तस्येडागमे गुणे सस्य मूर्द्धन्यत्वे अटि च कृते ॥ अकामयिष्यत ॥ णिङभावपक्षे च । अकमिष्यत॥ अय गतौ धातुर्वर्ततेऽग्रे लटः प्रथमपुरुषैकवचने ते समागते शपि **टित आत्मनेपदानां टेरे** इति टेरेत्वे कृते ॥ अयते ॥ प्रपूर्वक अय्धातोरग्रे लटस्ते शपि टेरेत्वे च कृते

१ सन्वल्लघुनि चङ्परेऽनग्लोपे । चङ्परो यस्मादिति बहुव्रीहिसमासाश्रयणादेव णेर्लाभः । यद्यपि श्रिद्रुस्रूणामस्ति संभवः परन्तु तेषु परेष्वलघुत्वासंभवात् । परग्रहणाभावे चङीत्युच्यमानेऽपि सर्वस्येव अचीकमतेत्यत्र सन्वद्भावः श्रिद्रुस्रुषु धातुषु संयोगे परे गुरुत्वादभ्यासे लघुत्वाभावादेव न सन्वद्भावस्तथापि णिङभावपक्षे ( कमेश्च्लेश्चङ्वक्तव्यः ) इति वार्त्तिकेन चङि अचकमत । अत्र णेरभावान्न दीर्घसन्वद्भावौ । सूत्रे चङीत्युच्यमाने तौ स्यातामतः परग्रहणमावश्यकम् । विशिष्टस्यावृत्तिः कर्त्तव्या । एकस्य चङ्पर इत्यस्यैव व्याख्यानं भावितेति ॥ स्फुटतरं तु मत्कृतवैयाकरणतरङ्गतोऽवसेयम् ।

तिपरस्योपसर्गस्य यो रेफस्तस्य लत्वं स्यात् । प्लायते पलायते ॥ **दयायासश्च** ।३।१। ३७। दय् अय् आस् एभ्य आम् स्याल्लिटि । अयाञ्चक्रे अयिता अयिष्यते अयताम् आयत अयेत अयिषीष्ट ॥ **विभाषेटः** ।८।३।७९। इणः परो य इट् ततः परेषां षीध्वंलुङ्लिटां धस्य वा ढः । अयिषीध्वम् अयिषीढ्वम् । आयिष्ट आयिध्वम् आयिढ्वम् आ

---

**उपसर्गस्यायतौ** इत्यनेन रेफस्य लत्वे ॥ प्लायते ॥ एवं परापूर्वस्य अय्धातो ॥ पलायते अय्धातोरग्रे लिड्यागते अय् लिट् इति जाते तत्र **दयायासश्च** इत्यनेन आमि कृते अयाम् लिट् इति जातम् तत्र **आम** इति लिट्लोपे **कृञ्चानुप्रयुज्यते लिटि** इति लिट्परे कृञि प्रयुक्ते लिटश्च प्रथमपुरुषैकवचने ते आगते अयाम् कृ त इति जाते तत्र **लिटि धातो रनभ्यासस्येति** द्वित्वे **उरत्** इति रपरे अदादेशे **हलादिः शेष** इति रलोपे **कुहो-श्चुरि**ति कस्य चत्वे **लिटस्तझयोरेशिरेच्** इति तकारस्य एशि कृते शलोपे **इको-यणचीति** यणि च कृते ॥ अयाञ्चक्रे ॥ अय् अग्रे लुटस्ते **स्यतासी ऌलुटो**रिति तासि इकारलोपे इटि **लुटः प्रथमस्य डारौरस** इति तस्य डाले डित्त्वसामर्थ्याद्भस्य टेर्लोपे कृते ॥ अयिता ॥ अय् अग्रे लृटस्ते **स्यतासी ऌलुटो**रिति स्ये **आर्द्धधातुकस्ये-ड्वलादे**रिति इटि सस्य मूर्द्धन्यत्वे टेरेत्वे च कृते ॥ अयिष्यते ॥ अय् अग्रे लोटस्ते शपि **टित आत्मनेपदानां टेरे** इति टेरेत्वे **आमेत** इत्यनेन तकारोत्तरवर्त्त्येकारस्य आमि च कृते ॥ अयताम् ॥ अय् अग्रे लङस्ते समागते शपि **आडजादीना**मिति आटि च कृते ॥ आयत ॥ अय् अग्रे लिङस्ते शपि सीयुटि उट्भागलोपे **लोपो व्योर्वली**ति यलोपे गुणे च कृते ॥ अयेत ॥ अय् आशीर्लिङस्ते समागते **लिङः सीयुट्** इति सीयुटि उट्भागलोपे यलोपे **आर्द्धधातुकस्येड्वलादे**रिति इटि **सुट्तिथो**रिति सुटि उट्भागलोपे उभयो सकारयोर्मूर्द्धन्यत्वे **ष्टुना ष्टु**रिति ष्टुत्वे च कृते ॥ अयिषीष्ट ॥ अय अग्रे आशीर्लिङो मध्यमपुरुषबहुवचने ध्वमि सीयुटि उट्भागलोपे यलोपे इटि सकारस्य मूर्द्धन्यत्वे च कृते अयिषीध्वमितिजाते तत्र **विभाषेट** इत्यनेन धस्य ढत्वे कृते ॥ अयिषीढ्वम् ॥ पक्षे ॥ अयिषीध्वम् ॥ अय् अग्रे लुङ प्रथमपुरुषैकवचने ते समागते **च्लि लुङी**ति च्लौ **च्लेः सिच्** इति सिचि इज्भागलोपे इटि **आडजादीना**मिति आटि सस्य मूर्द्धन्यत्वे ष्टुत्वे च कृते ॥ आयिष्ट ॥ अय् अग्रे लुङो मध्यमपुरुषबहुवचने ध्वमि **च्लि लुङी**ति च्लौ **च्लेः सिच्** इति सिचि इज्भागलोपे **आर्द्धधातुकस्येड्वलादे**रिति इटि आटि आयिस् ध्वमिति जाते तत्र **धिचेति** सूत्रेण सलोपे **विभाषेट** इत्यनेन धस्य ढत्वे च कृते ॥ आयिढ्वम् ॥ पक्षे ॥ आयिध्वम् ॥ अय् अग्रे लृङ प्रथमपुरुषैकवचने ते **स्यतासी ऌलुटो**रिति स्ये इटि **आडजादीना**मिति आटि सस्य मूर्द्धन्यादेशे च कृते ॥ आयिष्यत ॥ द्युत दीप्तौ धातुर्वर्तते अग्रे लटस्ते शपि **पुगन्तलघूपधस्य चे**ति गुणे कृते ॥ द्योतते ॥

यिष्यत । द्युत दीप्तौ ४ द्योतते ॥ **द्युद्भ्यो लुङि ।१।३।९१।** द्युतादिभ्यो लुङः परस्मैपदं वा स्याल्लुङि । पुषादीत्यङ् । अद्युतत् अद्योतिष्ट अद्योतिष्यत । एवं श्विता वर्णे ५। ञिमिदा स्नेहने ६। ञिष्विदा स्नेहनमोचनयोः ७। मोहनयोरित्येके । ञिक्ष्विदा चेत्येके । रुच दीप्तावभिप्रीतौ च ८। घुट परिवर्तने ९। शुभ दीप्तौ १०। क्षुभ संचलने ११। णभ तुभ हिंसायाम् १२।१३। स्रंसु भ्रंसु ध्वंसु अवस्रंसने १६। ध्वंसु गतौ १७ । स्रंभु वि-

द्युत दीप्तौ धातुर्वर्तते ग्रे लिटस्ते द्युत् त इति जातम् तत्र **लिटि धातोरनभ्यासस्ये**ति द्वित्वे द्युत् द्युत् त इति जातम् तत्र **द्युतिस्वाप्योः संप्रसारण**मित्यनेन यकारस्य संप्रसारणे इकारे जाते दि उत् द्युत् त इत्यवस्थायां **संप्रसारणाच्चे**त्यनेन पूर्वरूपे कृते **हलादिः शेष** इत्यनेन तलोपे **लिटस्तझयोरेशिरेच्** इत्यनेन तकारस्य एशि कृते शलोपे संयोगे च कृते ॥ दिद्युते ॥ एवं आताम् । दिद्युताते ॥ द्युत्धातोरग्रे लुङि समागते **द्युद्भ्यो लुङि** इति सूत्रेण परस्मैपदे तिप्यागते द्युत् ति इतिजातम् तत्र **च्लिलुङी**ति च्लौ । **पुषादिद्युताद्यलृदितः परस्मैपदेष्वि**ति सूत्रेण च्लेरङादेशे कृते ङकारस्येत्संज्ञायां लोपे च कृते **लुङ्लङ्लृङ्क्ष्वडुदात्त** इति अटि **इतश्चे**ति तिप इकारलोपे च कृते ॥ अद्युतत् ॥ यस्मिन् पक्षे परस्मैपदं न जातं तस्मिन् पक्षे आत्मनेपदप्रत्यये ते आगते द्युत् त इति जातं तत्र **लुङ्लङ्लृङ्क्ष्वडुदात्त** इति अटि **च्लिलुङी**ति च्लौ **च्लेः सिच्** इति सिचि इच्भागलोपे **आर्धधातुकस्येड्वलादे**रिति इटि अद्युतिस् त इति जातम् तत्र **पुगन्तलघूपधस्ये**ति गुणे **आदेशप्रत्यययो**रिति सस्य मूर्द्धन्यादेशे ष्टुत्वे च कृते ॥ अद्योतिष्ट ॥ द्युत् अग्रे लृङस्ते समागते **स्यतासी लृलुटो**रिति स्ये **आर्द्धधातुकस्येड्वलादे**रिति इटि **लुङ्लङ्लृङ्क्ष्वि**ति अटि **पुगन्तलघूपधस्ये**ति गुणे सस्य मूर्द्धन्यादेशे च कृते ॥ अद्योतिष्यत ॥ एवं श्विता वर्णे इत्यस्य लटि ॥ श्वेतते ॥ लिटि ॥ शिश्विते ॥ ञिमिदा स्नेहने इत्यस्य लटि ॥ मेदते ॥ लिटि ॥ मिमिदे । ञिष्विदा स्नेहने इत्यस्य लटि ॥ स्वेदते ॥ लिटि । सिष्विदे ॥ ञिक्ष्विदा स्नेहने इत्यस्य लटि । क्ष्वेदते । लिटि । चिक्ष्विदे । रुच दीप्तौ लटि । रोचते ॥ लिटि । रुरुचे ॥ शुभ दीप्तौ लटि । शोभते ॥ लिटि ॥ शुशुभे ॥ क्षुभ संचलने लटि । क्षोभते ॥ लिटि । चुक्षुभे । णभ हिंसायाम् । णभते । तुभ हिंसायां । तोभते । लिटि । तुतुभे ॥ स्रंसते, सस्रंसे ॥ भ्रंसते, बभ्रंसे ॥ ध्वंसते ॥ स्रंभते ॥ सस्रंभे ॥ इत्यादीनि रूपाणि ज्ञेयानि । वृतु वर्तने धातुर्वर्तते लटि लटः प्रथमपुरुषैकवचने ते शपि **पुगन्तलघूपधस्ये**ति गुणे **टित आत्मनेपदानां टेरे** इति टेरेत्वे ॥ वर्तते ॥ वृत् अग्रे लिटस्ते **लिटि धातोरनभ्यासस्ये**ति द्वित्वे वृत् वृत् त इति जातं तत्र **हलादिः**

१ द्युद्भ्योलुङि ॥ बहुवचननिर्देशात् सप्तमीशौण्डैरित्यत्रेव तदादिग्रहणम् । अत एव वृत्तौ द्युतादिभ्य इति । ङः सिचुङित्यत्रेव लुङीति सप्तमी पञ्चम्यर्थे तदाह लुङः परस्मैपदमिति ॥

श्वासे १८। वृतु वर्तने १९ वर्तते ववृते वर्तिता ॥ **वृद्भ्यः स्यसनोः** ।१।३।९२।
वृतादिभ्यः पञ्चभ्यो वा परस्मैपदं स्यात्स्ये सनि च ॥ **नं वृद्भ्यश्चतुर्भ्यः** ।७।२।५९।
वृतुवृधुशृधुस्यन्दूभ्यः सकारादेरार्धधातुकस्येण्न स्यात्तङानयोरभावे । वर्त्स्यति वर्तिष्यते ।
वर्तताम् अवर्तत वर्तेत वर्तिषीष्ट अवृतत् अवर्तिष्ट अवर्त्स्यत् अवर्तिष्यत । दद दाने २०

---

**शेष** इति तलोपे ववृत् त इति जातम् तत्र **उरत्** इत्यनेन अभ्यासऋवर्णस्य रपरे अदादेशे कृते वर् वृत् त इति जातम् तत्र **हलादिः शेष** इति रलोपे **लिटस्तझयोरेशिरेच्** इत्यनेन तकारस्य एशि कृते ॥ ववृते ॥ वृत् अग्रे लुटस्ते **स्यतासी लृलुटो**रित्यनेन तासि आर्द्धधातुकत्वे **आर्द्धधातुकस्येड्वलादे**रिति इटि **पुगन्तलघूपधस्य चे**ति गुणे **लुटः प्रथमस्य डारौरस** इति तकारस्य डात्वे डस्य **चुटू** इति इत्संज्ञाकरणपूर्वं लोपे डित्त्वसामर्थ्यादभस्यापि टेर्लोपे कृते ॥ वर्तिता ॥ वृत् अग्रे लृटि समागते **वृद्भ्यः स्यसनो**रित्यनेन परस्मैपदे तिपि समागते **स्यतासी लृलुटो**रिति स्ये **आर्द्धधातुकस्येड्वलादे**रिति इटि प्राप्ते **न वृद्भ्यश्चतुर्भ्यं** इत्यनेन इडभावे गुणे संयोगे च कृते ॥ वर्त्स्यति ॥ पक्षे लृटः प्रथमपुरुषैकवचने ते समागते **स्यतासी लृलुटो**रिति स्ये इटि गुणे मूर्द्धन्यादेशे **टित आत्मनेपदानां टेरे** इति टेरेत्वे च कृते ॥ वर्तिष्यते ॥ वृत् अग्रे लोटः प्रथमपुरुषैकवचने ते शपि **पुगन्तलघूपधस्य चे**ति गुणे **टित आत्मनेपदानां टेरे** इति एत्वे **आमेत** इत्यनेन च तकारोत्तरवर्त्तिएकारस्यामि कृते ॥ वर्तताम् ॥ वृत् अग्रे लङस्ते शपि अटि गुणे च कृते ॥ अवर्तत ॥ वृत् अग्रे लिङस्ते शपि सीयुटि उट्भागलोपे यलोपे **लिङः सलोपोऽनन्त्यस्ये**ति सलोपे गुणे च कृते ॥ वर्तेत ॥ वृत् अग्रे आशीर्लिङस्ते सीयुटि उट्भागलोपे यलोपे इटि गुणे **सुट्तिथो**रिति सुटि उट्भागलोपे उभयोः सकारयोर्मूर्द्धन्यादेशे **ष्टुनेति** ष्टुत्वे च कृते ॥ वर्तिषीष्ट ॥ वृत् अग्रे लुङस्ते **च्लि लुङी**ति च्लौ **च्लेः सिच्** इति सिचि इज्भागलोपे इटि गुणे अटि मूर्धन्यादेशे ष्टुत्वे च कृते ॥ अवर्तिष्ट ॥ वृत् अग्रे लृङः प्रथमपुरुषैकवचने **वृद्भ्यः स्यसनो**रिति तिपि **स्यतासी लृलुटो**रिति स्ये **न वृद्भ्यश्चतुर्भ्यं** इति इडभावे अटि गुणे **इतश्चे**ति तिप इकारलोपे च कृते ॥ अवर्त्स्यत् ॥ पक्षे लृङस्ते स्ये इटि गुणे सस्य मूर्द्धन्यादेशे अटि च कृते ॥ अवर्तिष्यत ॥ दद दाने धातुरस्ति तत्र लटस्ते शपि **टित आत्मनेपदानां टेरे** इति टेरेत्वे च कृते ॥ ददते ॥ दद् अग्रे लिटस्ते **लिटि धातोरनभ्यासस्ये**ति द्वित्वे **हलादिःशेष** इति शेषहल्लोपे ददद् त इति जातं तत्र **न शसददवादिगुणानामि**त्यनेन एत्वाभावे अभ्यासलोपाभावे च जाते **लिटस्तझयोरेशिरेच्** इत्यनेन तकारस्य एशि कृते कृते च संयोगे ॥ ददते ॥ दद् अग्रे लिटः प्रथमपुरुषद्विवचने आतामि

१ न वृद्भ्यश्चतुर्भ्यः । सेऽसिचीतिसूत्रात्सेऽइत्यनुवर्त्तने तदाह सकारादेरिति । स्यन्देर्स्दित्वाद्विकल्पे प्राप्ते इतरेषां नित्यमिति प्राप्ते निषेधोऽयम् ॥

ददते ॥ **न शसददवादिगुणानाम्** ।६।४।१२६। शसेर्ददेर्वकारादीनां गुणशब्देन विहितो योऽकारस्तस्यैत्वाभ्यासलोपौ न । ददद्रे ददद्राते ददद्रिरे । ददिता ददिष्यते ददताम् अददत ददेत ददिषीष्ट अददिष्ट अददिष्यत । त्रपूष् लज्जायाम् २१ त्रपते ॥ **तॄफलभजत्रपश्च** ।६।४।१२२। एषामत एत्वमभ्यासलोपश्च स्यात्किति लिटि सेटि थलि च । त्रेपे त्रपिता त्रप्ता त्रपिष्यते त्रप्स्यते त्रपताम् अत्रपत त्रपेत त्रपिषीष्ट त्र-

---

द्वित्वे शेषहलोलोपे **नशसददवादिगुणाना**मित्यनेन **अत एकहल्मध्येनादेशादेर्लिटि** इति सूत्रेण प्राप्तस्याकारस्यैत्वेऽभ्यासलोपे च प्रतिषिद्धे ददद्राताम् इति जाते **टित आत्मनेपदानां टेरे** इति टेरेत्वे च रचिते ॥ दददाते॥एवं **लिटस्तझयोरेशिरेच्** इत्यनेन झस्य इरेचि कृते ॥ दददिरे ॥ दद् अग्रे लुटस्ते **स्यतासी लृलुटो**रिति तासी **आर्धधातुकस्येड्वलादे**रिति इटि **लुटः प्रथमस्य डारौरस** इति तकारस्य डाले डित्त्वसामर्थ्यादभस्यापि टेर्लोपे च कृते ॥ ददिता ॥ दद् अग्रे लृटस्ते **स्यतासी लृलुटो**रिति स्ये इटि सस्य मूर्द्धन्यादेशे टेरेत्वे च कृते ॥ ददिष्यते ॥ दद् अग्रे लोटस्ते शपि **टित आत्मनेपदानां टेरे** इति टेरेत्वे दद ते इति जाते **आमेत** इत्यनेन एकारस्य आमि कृते ॥ ददताम् ॥ दद् अग्रे लङस्ते शपि अटि च कृते ॥ अददत ॥ दद् अग्रे लिङस्ते शपि सीयुटि उट्भागलोपे यलोपे **लिङः सलोपोऽनन्त्यस्ये**ति सलोपे गुणे च कृते ॥ ददेत ॥ दद् अग्रे आशीर्लिङस्ते **लिङः सीयुट्** इति सीयुटि उट्भागलोपे यलोपे **आर्द्धधातुकस्येड्वलादे**रिति इटि **सुट्तिथो**रिति सुटि उट्भागलोपे उभयोः सकारयोर्मूर्द्धन्यादेशे च कृते कृते च ष्टुत्वे ॥ ददिषीष्ट ॥ दद् अग्रे लुङस्ते **च्लि लुङी**ति च्लौ **च्लेः सिच्** इति सिचि इज्भागलोपे इटि अटि सस्य मूर्द्धन्यादेशे ष्टुत्वे च कृते॥ अददिष्ट ॥ दद् अग्रे लृङस्ते स्ये इटि अटि सस्य मूर्द्धन्यादेशे च कृते ॥ अददिष्यत ॥ त्रपूष्लज्जायां धातुर्वर्तते अग्रे लटस्ते शपि **टित आत्मनेपदानां टेरे** इति टेरेत्वे च कृते ॥ त्रपते । त्रप् अग्रे लिटस्ते **लिटि धातोरनभ्यासस्ये**ति द्वित्वे **हलादिः शेष** इति शेषहलो लोपे त त्रप् त इति जातं तत्र **तॄफलभजत्रपश्चे**त्यनेन अकारस्यैत्वेऽभ्यासलोपे च कृते त्रेप् त इति जातं तत्र **लिटस्तझयोरेशिरेच्** इति तकारस्य एशि कृते कृते च संयोगे ॥ त्रेपे ॥ त्रप् अग्रे लुटस्ते **स्यतासी लृलुटो**रिति तासौ **लुटः प्रथमस्य डारौरस** इति तकारस्य डाले डित्त्वसामर्थ्यादभस्यापि टेर्लोपे कृते॥ त्रपिता ॥ **स्वरतिसूतिसूयतिधूञूदितो** वेति इटोऽभावे ॥ त्रप्ता ॥ त्रप् अग्रे लृटस्ते **स्यतासी लृलुटो**रिति स्ये इटि सकारस्य षकारे **टित आत्मनेपदानां टेरे** इति टेरेत्वे च कृते ॥ त्रपिष्यते ॥ ऊदित्वात्पक्षे इडभावे ॥ त्रप्स्यते ॥ त्रप् अग्रे लोटस्ते शपि टेरेत्वे **आमेत** इत्यामि च कृते ॥ त्रपताम् ॥ त्रप् लङस्ते अटि च कृते ॥ अत्रपत ॥ त्रप् अग्रे लिङस्ते शपि सीयुटि उट्भागलोपे यलोपे **लिङः**

श्वासे १८। वृतु वर्तने १९ वर्तते ववृते वर्तिता ॥ **वृद्भ्यः स्यसनोः** ।१।३।९२। वृतादिभ्यः पञ्चभ्यो वा परस्मैपदं स्यात्स्ये सनि च ॥ **न वृद्भ्यश्चतुर्भ्यः** ।७।२।५९। वृतुवृधुशृधुस्यन्दूभ्यः सकारादेरार्धधातुकस्येण्न स्यात्तङानयोरभावे । वर्त्स्यति वर्तिष्यते । वर्तताम् अवर्तत वर्तेत वर्तिषीष्ट अवृतत् अवर्तिष्ट अवर्त्स्यत् अवर्तिष्यत । दद दाने २०

---

**शेष** इति तलोपे ववृत् त इति जातम् तत्र **उरत्** इत्यनेन अभ्यासऋवर्णस्य रपरे अदादेशे कृते वर् वृत् त इति जातम् तत्र **हलादिः शेष** इति रलोपे **लिटस्तझयोरेशिरेच्** इत्यनेन तकारस्य एशि कृते ॥ ववृते ॥ वृत् अस्मे लुटस्थे **स्यतासी लृलुटोरि**त्यनेन तासि आर्द्धधातुकत्वे **आर्द्धधातुकस्येड्वलादे**रिति इटि **पुगन्तलघूपधस्य चे**ति गुणे **लुटः प्रथमस्य डारौरस** इति तकारस्य डात्वे डस्य **चुटू** इति इत्संज्ञाकरणपूर्वे लोपे डित्वसामर्थ्यादभस्यापि टेर्लोपे कृते ॥ वर्तिता ॥ वृत् अस्मे लृटि समागते **वृद्भ्यः स्यसनो**रित्यनेन परस्मैपदे तिपि समागते **स्यतासी लृलुटो**रिति स्ये **आर्द्धधातुकस्येड्वलादे**रिति इटि प्राप्ते **न वृद्भ्यश्चतुर्भ्य** इत्यनेन इडभावे गुणे सयोगे च कृते ॥ वर्त्स्यति ॥ पक्षे लृट प्रथमपुरुषैकवचने ते समागते **स्यतासी लृलुटो**रिति स्ये इटि गुणे मूर्द्धन्यादेशे **टित आत्मनेपदानां टेरे** इति टेरेत्वे च कृते ॥ वर्तिष्यते ॥ वृत् अस्मे लोट प्रथमपुरुषैकवचने ते शपि **पुगन्तलघूपधस्य चे**ति गुणे **टित आत्मनेपदानां टेरे** इति एत्वे **आमेत** इत्यनेन च तकारोत्तरवर्त्येकारस्यामि कृते ॥ वर्तताम् ॥ वृत् अस्मे लङस्थे शपि अटि गुणे च कृते ॥ अवर्तत ॥ वृत् अस्मे लिङस्थे शपि सीयुटि उट्भागलोपे यलोपे **लिङः सलोपोऽनन्त्यस्ये**ति सलोपे गुणे च कृते ॥ वर्तेत ॥ वृत् अस्मे आशीर्लिङस्थे सीयुटि उट्भागलोपे यलोपे इटि गुणे **सुट्तिथो**रिति सुटि उट्भागलोपे उभयो सकारयोर्मूर्द्धन्यादेशे **ष्टुनेति** ष्टुत्वे च कृते ॥ वर्तिषीष्ट ॥ वृत् अस्मे लुङस्थे **च्लिलुङी**ति च्लौ **च्लेः सिच्** इति सिचि इजुभागलोपे इटि गुणे अटि मूर्धन्यादेशे ष्टुत्वे च कृते ॥ अवर्तिष्ट ॥ वृत् अस्मे लृङ प्रथमपुरुषैकवचने **वृद्भ्यः स्यसनो**रिति तिपि **स्यतासी लृलुटो**रिति स्ये **न वृद्भ्यश्चतुर्भ्य** इति इडभावे अटि गुणे **इतश्चे**ति तिप इकारलोपे च कृते ॥ अवर्त्स्यत् ॥ पक्षे लृङस्थे स्ये इटि गुणे सस्य मूर्द्धन्यादेशे अटि च कृते ॥ अवर्तिष्यत ॥ दद दाने धातुरस्ति तत्र लटस्थे शपि **टित आत्मनेपदानां टेरे** इति टेरेत्वे च कृते ॥ ददते ॥ दद् अस्मे लिटस्थे **लिटि धातोरनभ्यासस्ये**ति द्वित्वे **हलादिःशेष** इति शेषहल्लोपे ददद् त इति जात तत्र **न शसददवादिगुणाना**मित्यनेन एत्वाभावे अभ्यासलोपाभावे च जाते **लिटस्तझयोरेशिरेच्** इत्यनेन तकारस्य एशि कृते कृते च सयोगे ॥ ददते ॥ दद् अस्मे लिट प्रथमपुरुषद्विवचने आतामि

---

१ न वृद्भ्यश्चतुर्भ्य । सेसिचीतिसूत्रा गदस्यनुवर्तन तदाह सकारादेरिति । स्यन्दस्तिचाद्विकरण प्राप्त इतरेषां नित्यमिति प्राप्ते निषेधोऽयम् ॥

ददते ॥ **न शसददवादिगुणानाम्** ।६।४।१२६। शसेर्ददेर्वकारादीनां गुणशब्देन विहितो योऽकारस्तस्यैत्वाभ्यासलोपौ न । ददते ददाते ददिरे । ददिता ददिष्यते ददताम् अददत ददेत ददिषीष्ट अददिष्ट अददिष्यत । त्रपूष् लज्जायाम् २१ त्रपते ॥ **तॄफलभजत्रपश्च** ।६।४।१२२। एषामत एत्वमभ्यासलोपश्च स्यात्किति लिटि सेटि थलि च ॥ त्रेपे त्रपिता त्रप्ता त्रपिष्यते त्रप्स्यते त्रपताम् अत्रपत त्रपेत त्रपिषीष्ट त्र-

---

द्वित्वे शेषहलोलोपे **नशसददवादिगुणाना**मित्यनेन **अत एकहल्मध्येनादेशादेर्लिटि** इति सूत्रेण प्राप्तस्याकारस्यैत्वेऽभ्यासलोपे च प्रतिषिद्धे दददाताम् इति जाते **टित आत्मनेपदानां टेरे** इति टेरेत्वे च रचिते ॥ ददाते ॥ एवं **लिटस्तझयोरेशिरेच्** इत्यनेन झस्य इरेचि कृते ॥ ददिरे ॥ दद् अग्रे लुटस्ते **स्यतासी लृलुटो**रिति तासौ **आर्धधातुकस्येड्वलादे**रिति इटि **लुटः प्रथमस्य डारौरस** इति तकारस्य डात्वे डित्त्वसामर्थ्यादभस्यापि टेर्लोपे च कृते ॥ ददिता ॥ दद् अग्रे लृटस्ते **स्यतासी लृलुटो**रिति स्ये इटि सस्य मूर्द्धन्यादेशे टेरेत्वे च कृते ॥ ददिष्यते ॥ दद् अग्रे लोटस्ते शपि **टित आत्मनेपदानां टेरे** इति टेरेत्वे दद ते इति जाते **आमेत** इत्यनेन एकारस्य आमि कृते ॥ ददताम् ॥ दद् अग्रे लङ्स्ते शपि अटि च कृते ॥ अददत ॥ दद् अग्रे लिङ्स्ते शपि सीयुटि उट्भागलोपे यलोपे **लिङः सलोपोऽनन्त्यस्ये**ति सलोपे गुणे च कृते ॥ ददेत ॥ दद् अग्रे आशीर्लिङ्स्ते **लिङः सीयुट्** इति सीयुटि उट्भागलोपे यलोपे **आर्द्धधातुकस्येड्वलादे**रिति इटि **सुट्तिथो**रिति सुटि उट्भागलोपे उभयोः सकारयोर्मूर्द्धन्यादेशे च कृते कृते च ष्टुत्वे ॥ ददिषीष्ट ॥ दद् अग्रे लुङ्स्ते **च्लि लुङी**ति च्लौ **च्लेः सिच्** इति सिचि इञ्भागलोपे इटि अटि सस्य मूर्द्धन्यादेशे ष्टुत्वे च कृते ॥ अददिष्ट ॥ दद् अग्रे लृङ्स्ते स्ये इटि अटि सस्य मूर्द्धन्यादेशे च कृते ॥ अददिष्यत ॥ त्रपूष्लज्जायां धातुर्वर्तते अग्रे लटस्ते शपि **टित आत्मनेपदानां टेरे** इति टेरेत्वे च कृते ॥ त्रपते । त्रप् अग्रे लिटस्ते **लिटि धातोरनभ्यासस्ये**ति द्वित्वे **हलादिः शेष** इति शेषहलो लोपे त त्रप् त इति जातं तत्र **तॄफलभजत्रपश्चे**त्यनेन अकारस्यैत्वेऽभ्यासलोपे च कृते त्रेप् त इति जातं तत्र **लिटस्तझयोरेशिरेच्** इति तकारस्य एशि कृते कृते च संयोगे ॥ त्रेपे ॥ त्रप् अग्रे लुटस्ते **स्यतासी लृलुटो**रिति तासौ **लुटः प्रथमस्य डारौरस** इति तकारस्य डात्वे डित्त्वसामर्थ्यादभस्यापि टेर्लोपे कृते ॥ त्रपिता ॥ **स्वरतिसूतिसूयतिधूञूदितो वे**ति इटोऽभावे ॥ त्रप्ता ॥ त्रप् अग्रे लृटस्ते **स्यतासी लृलुटो**रिति स्ये इटि सकारस्य षकारे **टित आत्मनेपदानां टेरे** इति टेरेत्वे च कृते ॥ त्रपिष्यते ॥ ऊदित्त्वात्पक्षे इडभावे ॥ त्रप्स्यते ॥ त्रप् अग्रे लोटस्ते शपि टेरेत्वे **आमेत** इत्यामि च कृते ॥ त्रपताम् ॥ त्रप् लङ्स्ते अटि च कृते ॥ अत्रपत ॥ त्रप् अग्रे लिङ्स्ते शपि सीयुटि उट्भागलोपे यलोपे **लिङः**

प्सीष्ट अत्रपिष्ट अत्रप्त अत्रपिष्यत अत्रप्स्यत । इत्यात्मनेपदिनः ॥ श्रिञ् सेवायाम् १ श्रयति श्रयते शिश्राय शिश्रिये श्रयिता श्रयिष्यति श्रयिष्यते श्रयतु श्रयताम् अश्रयत् अश्रयत श्रयेत् श्रयेत श्रीयात् श्रयिषीष्ट । चङ् । अशिश्रियत् अशिश्रियत अश्रयिष्यत्

---

**सलोपोऽनन्त्यस्येति** सलोपे गुणे च कृते ॥ त्रपेत ॥ त्रप् अग्रे आशीर्लिङस्ते **लिङः सीयुट्** इति सीयुटि उट्भागलोपे यलोपे **आर्द्धधातुकस्येड्वलादे**रिति इटि **सुट्तिथो**रिति सुटि उट्भागलोपे उभयोः सकारयोः षकारत्वे ष्टुत्वे च कृते ॥ त्रपिषीष्ट ॥ इडभावपक्षे ॥ त्रप्सीष्ट ॥ त्रप् अग्रे लुङस्ते च्लौ च्लेः सिचि इङ्भागलोपे इटि अटि सस्य षकारत्वे ष्टुत्वे च कृते ॥ अत्रपिष्ट ॥ इडभावे **झरो झरी**ति सलोपे ॥ अत्रप्त ॥ त्रप् अग्रे लृङस्ते **स्यतासी लृलुटो**रिति स्ये इटि अटि सस्य षत्वे ॥ अत्रपिष्यत ॥ इडभावे ॥ अत्रप्स्यत ॥ इत्यात्मनेपदिनः ॥ अथोभयपदिनः ॥ श्रिञ् सेवायां धातुर्वर्तते अग्रे लटस्तिपि शपि **पुगन्तलघूपधस्य चे**ति गुणे **एचोऽयवायाव** इति अयि च कृते ॥ श्रयति ॥ लटस्ते च शपि गुणे अयि टेरेत्वे च ॥ श्रयते ॥ श्रिञ् अग्रे लिटस्तिपि तिपो णलि **लिटि धातोरनभ्यासस्ये**ति द्वित्वे **हलादिः शेष** इति हलोपे शिश्रि अ इति जाते **अचो ञ्णिती**ति वृद्धौ **एचोऽयवायाव** इति आयि च कृते ॥ शिश्राय ॥ लिटस्ते च द्वित्वे ॥ शेषहलोपे **लिटस्तझयोरेशिरेच्** इति तकारस्य एशि **अचि श्नुधातुभ्रुवां य्वोरियङुवङौ** इतीयङि च कृते ॥ शिश्रिये ॥ श्रिञ् अग्रे लुटस्तिपि तासौ इटि गुणे अयि तिपो डावे डित्सामर्थ्यादभस्यापि टेर्लोपे च ॥ श्रयिता ॥ श्रिञ् अग्रे लृटस्तिपि स्ये इटि गुणे अयि सस्य षत्वे च ॥ श्रयिष्यति ॥ लृटस्ते च टेरेत्वे ॥ श्रयिष्यते ॥ श्रिञ् अग्रे लोटस्तिपि शपि गुणे अयि **एरुः** इति तिप इकारस्य उत्वे ॥ श्रयतु ॥ लोटस्ते टेरेत्वे **आमेत** इति एकारस्यामि ॥ श्रयताम् ॥ श्रिञ् अग्रे लङस्तिपि शपि गुणे अयि अटि **इतश्चे**ति तिप इकारलोपे ॥ अश्रयत् ॥ लङस्ते ॥ अश्रयत ॥ श्रिञ् अग्रे लिङस्तिपि शपि यासुटि उट्भागलोपे **अतो येय** इति इयादेशे **लोपो व्योर्वली**ति यलोपे **पुगन्तलघूपधस्य चे**ति गुणे अयि **आद्गुण** इति गुणे **इतश्चे**ति तिप इकारलोपे च ॥ श्रयेत् ॥ लिङस्ते च शपि सीयुटि उट्भागलोपे **लिङः सलोपोऽनन्त्यस्ये**ति सलोपे यलोपे **पुगन्तलघूपधस्य चे**ति गुणे अयि **आद्गुण** इति पुनर्गुणे च ॥ श्रयेत ॥ श्रिञ् अग्रे आशीर्लिङस्तिपि यासुटि उट्भागलोपे **इतश्चे**ति तिप इकारलोपे **स्कोः संयोगाद्योरन्ते चे**ति सलोपे **अकृत्सार्वधातुकयोर्दीर्घ** इति दीर्घे च कृते ॥ श्रीयात् ॥ आशीर्लिङस्ते च सीयुटि उट्भागलोपे इटि गुणे अयि **सुट्तिथो**रिति सुटि उट्भागलोपे उभयोः सकारयोः षकारत्वे ॥ श्रयिषीष्ट ॥ श्रिञ् अग्रे लुङस्तिपि **च्लि लुङी**ति च्लौ **णिश्रिद्रुस्रुभ्यः कर्तरि चङ्** इति च्लेः श्रि चङ् ति इति जाते तत्र **चङि** इति सूत्रेण द्वित्वे कृते श्रिश्रि चङ् ति इति जाते **हलादिः शेष** इति हलोपे शिश्रि चङ् ति इति जाते चकारस्याऽलो-

अश्रयिष्यत । भृञ् भरणे २ भरति भरते बभार बभ्रे बभ्रतुः बभ्रुः । बभर्थ बभृव बभृम बभ्रे बभृषे भर्तासि भर्तासे भरिष्यति भरिष्यते भरतु भरताम् अभरत् अभरत भरेत् भरेत ॥ **रिङ् शयग्लिङ्क्षु** ।७।४।२८। शे यकि यादावार्धधातुके लिङि च ऋतो रिङादेशः स्यात् । रीङि प्रकृते रिङ्विधानसामर्थ्याद्दीर्घो न । भ्रियात् ॥ उश्च[1] ।१।२।१२। ऋवर्णात्परौ लिङ्सिचौ कितौ स्तस्तङि । भृषीष्ट भृषीयास्ताम् अभार्षीत् ॥ हृस्वा-

---

दित्संज्ञायां लोपे च श्रिश्रि अ ति इति जाते **लुङ्लङ्लृङ्क्ष्वडुदात्तः** इति अटि अशिश्रि अ ति इति जातं तत्र **अचि श्नुधातुभ्रुवां य्वोरियङुवङौ** इति इयङि **इतश्चे**ति तिप इकारलोपे च कृते ॥ अशिश्रियत् ॥ लुङन्ते च ॥ अशिश्रियत ॥ श्रिञ् अग्रे लृङस्तिपि स्ये इटि अटि गुणे अयि सस्य षत्वे तिप इकारलोपे च ॥ अश्रयिष्यत् ॥ लृङन्ते च । अश्रयिष्यत ॥ भृञ् भरणे धातुर्वर्तते तत्र लटस्तिपि शपि गुणे च ॥ भरति ॥ लटन्ते ॥ भरते ॥ भृञ् भरणे धातुरस्त्यग्रे लिटस्तिपि तिपो णलि द्वित्वे **उरत्** इति रपरे अदादेशे **हलादिः शेष** इति रलोपे **अभ्यासे चर्चे**त्यनेन भस्य बत्वे कृते बभृ अ इति जातं तत्र **अचो ञ्णिति** इत्यनेन वृद्धौ कृतायां संयोगे च कृते ॥ बभार ॥ लिटन्ते **लिटस्तझयोरेशिरेच्** इति तकारस्य एशि कृते कृते च यणि ॥ बभ्रे । एवं । बभ्रतुः । बभ्रुः । बभर्थ । बभृव । बभृम । बभृषे । इत्यादि रूपाणि ज्ञेयानि ॥ भृञ् अग्रे लुटो मध्यमपुरुषैकवचने सिपि तासौ **पुगन्ते**ति गुणे **एकाच उपदेशेऽनुदात्तात्** इति इण्निषेधे **तासस्त्योर्लोप** इति सलोपे ॥ भर्तासि ॥ थासि च थास से कृते ॥ भर्तासे ॥ लृटस्तिपि स्ये **ऋद्धनोः स्ये** इति इटि गुणे सस्य षत्वे च । भरिष्यति । ते च टेरेत्वे ॥ भरिष्यते ॥ लोटस्तिपि शपि गुणे **एरु**रिति तिप इकारस्योत्वे च ॥ भरतु ॥ ते च टेरेत्वे **आमेत** इत्येकारस्य आमि ॥ भरताम् ॥ लङस्तिपि शपि अटि गुणे तिप इकारलोपे च । अभरत् ॥ तेच ॥ अभरत ॥ लिङस्तिपि शपि यासुटि इयादेशे यलोपे **पुगन्ते**ति गुणे **आद्गुण** इति पुनर्गुणे तिप इकारलोपे च ॥ भरेत् ॥ ते च सीयुटि उट्भागलोपे यलोपे सलोपे गुणे पुनर्गुणे च ॥ भरेत ॥ भृञ् अग्रे आशीर्लिङस्तिपि समागते यासुटि उट्भागलोपे च कृते ॥ भृ यास् ति इति जातं तत्र **रिङ्शयग्लिङ्क्षु** ॥ इत्यनेन भकारान्तःपातिन ऋकारस्य रिङि कृते ङलोपे तिप इकारलोपे तकारलोपे च कृते ॥ भ्रियात् ॥ यद्यत्र **अकृत्सार्वधातुकयोर्दीर्घ** इत्यनेन दीर्घः स्याच्चेत्तदा **रीङृतः** इत्यतो रीङित्यनुवृत्त्यैव सिद्धे रिङ्ग्रहणसामर्थ्याद्दीर्घो नेति ज्ञाप्यते ॥ भृञ् अग्रे लिङन्ते सीयुटि उट्भागलोपे यलोपे **सुट्तिथो**रिति सुटि उट्भागलोपे भृसीस् त इति जातं तत्र **उश्चे**ति सूत्रेण लिङः कित्त्वे कित्त्वात् **क्ङिति चे**ति गुणाभावे उभयोः सकारयोः षकारत्वे ष्टुत्वे च ॥ भृषीष्ट ॥ भृञ् अग्रे लिङो द्विवचने आतामि सीयुटि उट्भागलोपे उश्चेति लिङः कित्त्वे कित्त्वाद्गुणाभावे **सुट्तिथो**रिति सुटि उट्भागलोपे सकारस्य षकारत्वे च ॥ भृषीयास्ताम् ॥ भृञ् अग्रे लुङस्तिपि च्लौ

---

१ उश्च । इको झलित्यतो झल्ग्रहणं लिङ्सिचाविति पूर्वसूत्रं चानुवर्त्तते तदाह ऋवर्णादित्यादि ।

दङ्गात् ।८।२।२७। सिचो लोपो झलि । अभृत अभृषाताम् अभरिष्यत् अभरिष्यत । हृञ् हरणे ३ हरति हरते जहार जह्रे जहर्थ जह्रिव जह्रिम जह्रिषे हर्ता हरिष्यति हरिष्यते हरतु हरताम् अहरत् अहरत हरेत् हरेत ह्रियात् हृषीष्ट हृषीयास्ताम् अहार्षीत् अहृत अहरिष्यत् अहरिष्यत । धृञ् धारणे ४ धरति धरते । णीञ् प्रापणे ५ नयति

---

च्लेः सिचि इञ्भागलोपे अटि तिप इकारलोपे **अस्तिसिचोऽपृक्ते** इति ईटि सस्य षकारत्वे **सिचि वृद्धिः परस्मैपदेष्विति** वृद्धौ कृतायाम् ॥ अभार्षीत् ॥ लुङस्ते **ह्रस्वादङ्गात्** इति सिचो लोपे अटि च कृते ॥ अभृत ॥ आतामि सकारस्य षकारे अटि च ॥ अभृषाताम् ॥ लृङस्तिपि स्ये इटि अटि सकारस्य षकारे तिप इकारलोपे च ॥ अभरिष्यत् ॥ ते च ॥ अभरिष्यत ॥ हृञ् हरणे धातुरस्ति अग्रे लटस्तिपि शपि गुणे च ॥ हरति ॥ ते च ॥ हरते ॥ लिटस्तिपि तिपो णलि द्वित्वे **उरत्** इति रपरे अदादेशे शेषहल्लोपे च कृते ह ह अ इति जातं तत्र **कुहोश्चुरिति** सूत्रेण प्रयत्नसादृश्यात् हस्य झत्वे **अभ्यासे चर्चेति** झस्य जत्वे **अचो ञ्णितीति** इति वृद्धौ च कृतायाम् ॥ जहार ॥ लिटस्ते च **लिटस्तझयोरेशिरेच्** इति तकारस्य एशि **इको यणचि** इत्यनेन यणि च कृते ॥ जह्रे ॥ लुटस्तिपि तासौ गुणे **एकाच उपदेशेऽनुदात्तात्** इत्यनेन इडभावे तिपो डाने डित्त्वसामर्थ्यादभस्यापि टेर्लोपे च ॥ हर्ता ॥ लृटस्तिपि स्ये हृ स्य ति इति जातं तत्र **ऋद्धनोः स्ये** इत्यनेन इटि कृते गुणे सस्य षत्वे च ॥ हरिष्यति ॥ ते च टेरेत्वे ॥ हरिष्यते ॥ लोटस्तिपि शपि गुणे **एरुः** इति तिप इकारस्योत्वे ॥ हरतु ॥ ते च टेरेत्वे **आमेतः** इति एकारस्यामि च कृते ॥ हरताम् ॥ लङस्तिपि शपि गुणे अटि **इतश्चेति** तिप इकारलोपे च ॥ अहरत् ॥ ते च ॥ अहरत ॥ विधिलिङस्तिपि शपि यासुटि उट्भागलोपे इयादेशे गुणे हर इय् ति इति जाते तत्र यलोपे **आद्गुणः** इति गुणे तिप इकारलोपे च ॥ हरेत् ॥ ते च शपि सीयुटि उट्भागलोपे यलोपे **लिङः सलोपोऽनन्त्यस्येति** सलोपे **पुगन्तेति** गुणे **आद्गुणः** इति पुनर्गुणे च ॥ हरेत ॥ आशीर्लिङस्तिपि यासुटि उट्भागलोपे हृ यास् ति इति जातं तत्र **रिङ् शयग्लिङ्क्षु** इत्यनेन ऋकारस्य रिङि उलोपे **इतश्चेति** तिप इकारलोपे **स्कोः संयोगाद्योरन्ते चेति** सलोपे ॥ ह्रियात् ॥ आशीर्लिङस्ते च सीयुटि उट्भागलोपे यलोपे **सुट्तिथोरिति** सुटि उट्लोपे उभयोः सकारयोः षत्वे **ष्टुना ष्टुरिति** ष्टुत्वे च हृषीष्ट ॥ आतामि ॥ हृषीयास्ताम् ॥ लुङस्तिपि **च्लि लुङि** इति च्लौ **च्लेः सिच्** इति सिचि इञ्भागलोपे **वदव्रजहलन्तस्याचः** इति अटि **इतश्चेति** तिप इकारलोपे च अहृ ईत् इति जातं तत्र **सिचि वृद्धिः परस्मैपदेष्विति** वृद्धौ सस्य षत्वे च कृते ॥ अहार्षीत् ॥ लुङस्ते च्लौ सिचि इञ्भागलोपे अटि **ह्रस्वादङ्गात्** इत्यनेन सिचो लोपे च ॥ अहृत ॥ लृङस्तिपि **स्यतासी लृलुटोरिति**

---

१ हृञ् हरणे ॥ [illegible] । भारं हरति [illegible] । शोभां हरति [illegible] । [illegible] हरति [illegible] । पापं हरति [illegible] ॥

नयते । डुपचष् पाके ६ पचति पचते पपाच पेचिथ पपक्थ पेचे पक्ता । भज सेवायाम् ७ भजति भजते बभाज भेजे भक्ता भक्ष्यति भक्ष्यते अभाक्षीत् अभक्त अभक्षाताम् । यज

---

स्ये ऋद्धनोः स्ये इति इटि अटि सस्य षत्वे इतश्चेति तिप इकारलोपे च अहरिष्यत् ॥ सेच ॥ अहरिष्यत ॥ धृञ् धारणे धातोः । धरति, धरते, इत्यादि रूपाणि । णीञ् प्रापणे धातोर्लट्स्तिपि शपि गुणे ॥ नयति ॥ लिटस्ते च ॥ नयते ॥ डुपचष् पाके धातुरस्ति अग्रे लटस्तिपि शपि च ॥ पचति ॥ ते च ॥ **आदिर्ञिटुडव** इति डकारस्येत्संज्ञायां लोपे षकारलोपे शपि च ॥ पचति ॥ ते च ॥ पचते ॥ पच् अग्रे लिटस्तिपि तिपो णलि द्वित्वे शेषहलो लोपे **अत उपधाया** इति वृद्धौ पपाच ॥ लिटस्ते द्वित्वे शेषहलोलोपे **असंयोगाल्लिट्कित्** इति तकारस्य अशिम्याकित्त्वे कृते **अतएकहल्मध्येनादेशादेर्लिटि** इत्यनेन पकारान्तःपात्यकारस्यैत्वे कृते शलोपे संयोगे अभ्यासपकारस्य लोपे **लिटस्तझयोरेशिरेच्** इति तकारस्य एशि कृते शलोपे संयोगे च कृते ॥ पेचे ॥ पच् अग्रे लिटो मध्यमपुरुषैकवचने थलि द्वित्वे शेषहल्लोपे इटि **थलि च सेटि** इति अकारस्य एत्वे अभ्यासलोपे च ॥ पेचिथ ॥ अजन्तोऽकारवान् वा यस्तास्यनिट् थलि वेडयम् । इति इडभावे **चोः कु**रिति चकारस्य ककारे कृते ॥ पपक्थ ॥ पच् अग्रे लुटस्तिपि **स्यतासी**ति तासौ इडभावे तिपो डात्वे डित्त्वसामर्थ्यादभस्यापि टेर्लोपे **चोः कु**रिति चस्य कत्वे ॥ पक्ता ॥ भज सेवायां धातुर्वर्तते अग्रे लटस्तिपि शपि ॥ भजति ॥ ते च टेरेत्वे ॥ भजते ॥ भज् अग्रे लिटस्तिपि तिपो णलि द्वित्वे अभ्यासहलो लोपे **अभ्यासे चर्चे**ति भस्य बत्वे **अत उपधाया** इति वृद्धौ च कृतायाम् ॥ बभाज ॥ भज् अग्रे लिटस्ते द्वित्वे अभ्यासशेषहलो लोपे **तॄफलभजत्रपश्चे**ति भान्तःपात्यकारस्य एत्वे अभ्यासलोपे च **लिटस्तझयोरेशिरेच्** इति तकारस्य एशि ॥ भेजे ॥ भज् अग्रे लुटस्तिपि तासौ तिपो डात्वे डित्त्वसामर्थ्यादभस्यापि टेर्लोपे **चोः कु**रिति जस्य गत्वे **खरि चे**ति गस्य कत्वे ॥ भक्ता ॥ लटस्तिपि स्ये **चोः कु**रिति जस्य गत्वे **खरि चे**ति गस्य कत्वे सस्य षत्वे कषोः संयोगे क्ष च जाते ॥ भक्ष्यति ॥ भक्ष्यते ॥ लोटस्तिपि शपि **एरु**रिति तिप इकारस्योत्वे ॥ भजतु ॥ लोटस्ते टेरेत्वे **आमेतः** इत्येकारस्यामि ॥ भजताम् ॥ लङस्तिपि शपि अटि तिप इकारलोपे च ॥ अभजत् ॥ ते च ॥ अभजत ॥ लिङस्तिपि शपि यासुटि उटो लोपे यास इयादेशे यलोपे गुणे तिप इकारलोपे च ॥ भजेत् ॥ लिङस्ते च भजेत ॥ भज् अग्रे आशीर्लिङस्तिपि यासुटि तिप इकारलोपे **स्कोः संयोगाद्यो**रिति सलोपे च ॥ भज्यात् ॥ लिङस्ते सीयुटि उटो लोपे यलोपे **सुट्तिथो**रिति सुटि उटो लोपे जस्य **चोः कु**रिति गत्वे गस्य **खरि चे**ति कत्वे सकारयोः षत्वे ष्टुत्वे च ॥ भक्षीष्ट ॥ भज् अग्रे लुङस्तिपि च्लौ च्लेः सिचि इड्भागलोपे तिप इकारलोपे **अस्तिसिचोऽपृक्ते** इति ईटि अटि जस्य गत्वे गस्य कत्वे सस्य षत्वे च अभक् ष ईत् इति जातं तत्र **वदव्रजहलन्तस्याचः** इति वृद्धौ कृतायाम्

देवपूजासङ्गतिकरणदानेषु ८ यजति यजते ॥ **लिट्यभ्यासस्योभयेषाम्** ।६।१।१७। वच्यादीनां ग्रह्यादीनां चाभ्यासस्य सम्प्रसारणं लिटि । इयाज ॥ **वचिस्वपियजादीनां किति** ।६।१।१५। वचिस्वप्योर्यजादीनां च सम्प्रसारणं स्यात्किति । ईजतु[1] ईजुः इय-जिथ इयष्ठ ईजे यष्टा । **षढोः कः सि** । यक्ष्यति यक्ष्यते इज्यात् यक्षीष्ट अयाक्षीत् अयष्ट ।

---

॥ अभाक्षीत् ॥ भज् अग्रे लुङस्ते च्लौ च्ले सिचि इचो लोपे अटि **झलो झलि** इति सूत्रेण सस्य लोपे जस्य गत्वे गस्य कत्वे च ॥ अभक्त ॥ यज देवपूजासङ्गतिकरणदानेषु धातुरस्ति तत्र लडस्तिपि शपि ॥ यजति ॥ लडस्ते शपि टेरेत्वे च ॥ यजते ॥ यज् अग्रे लिडस्तिपि तिपो णलि **लिटि धातोरनभ्यासस्येति** धातोर्द्वित्वे **पूर्वोऽभ्यास** इत्यभ्यासत्वे **हलादिः शेष** इति जकारलोपे ययज् अ इति जाते **लिट्यभ्यासस्यो-भयेषामिति** सूत्रेणाभ्यासरूपस्य यकारस्य सम्प्रसारणे इकारे कृते **संप्रसारणाच्चेत्य**कारस्य पूर्वरूपादेशे **अत उपधाया** इति उपधावृद्धौ ॥ इयाज ॥ अतुसि सम्प्रसारणं तदाश्रयं च कार्यं बलवदिति वचनात् **वचिस्वपियजादीनां किति** इत्यनेन सम्प्रसारणे कृते इ अज् अतुस् इति जाते **संप्रसारणाच्चेति** अकारस्य पूर्वरूपत्वे **लिटि धातोरनभ्यास-स्येति** द्वित्वे **पूर्वोऽभ्यास** इत्यभ्यासत्वे **हलादिः शेष** इति जलोपे इ इज् अतुस् इति जाते तत्र **अकः सवर्णे दीर्घ** इति दीर्घत्वे च कृते ॥ ईजतुः ॥ एवमुसि परे ॥ ईजुः ॥ थलि परे थलोऽकित्वात् **वचिस्वपियजादीनां किति** इति सूत्रस्याप्राप्तौ धातोर्द्वित्वे अभ्यासत्वे जलोपे नादिनियमादिटि **लिट्यभ्यासस्योभयेषा**मिति सम्प्रसारणे पूर्वरूपादेशे च ॥ इयजिथ ॥ लिट प्रथमपुरुषस्यैकवचने ते समागते **वचिस्वपियजादीनां किति** इति सम्प्रसारणे इ अज् त इति जाते तत्र **संप्रसारणाच्चेति** अकारस्य पूर्वरूपत्वे इज् त इति जाते द्वित्वे **हलादिः शेष** इति जलोपे **अकः सवर्णे दीर्घ** इति दीर्घत्वे **लिटस्त-झयोरेशिरेच्** इति तकारस्य एशि कृते कृते च संयोगे ॥ ईजे ॥ आताम् ॥ ईजाते ॥ यज् अग्रे लुटस्तिपि **स्यतासी लृलुटो**रिति तासौ तिपो डात्वे डित्वसामर्थ्यादभस्यापि टेर्लोपे **व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः** इत्यनेन जकारस्य षत्वे ष्टुत्वे च कृते ॥ यष्टा ॥ यज् अग्रे लृटस्तिपि **स्यतासी लृलुटो**रिति स्ये व्रश्चभ्रस्जेति जकारस्य षत्वे **षढोः कः सि** इत्यनेन षकारस्य कत्वे सस्य षत्वे संयोगे च कृते ॥ यक्ष्यति ॥ लृटस्ते टेरेत्वे । यक्ष्यते ॥ यज् अग्रे आशीर्लिङस्तिपि **यासुट् परस्मैपदेषूदात्तो ङिच्चेति** यासुटि **किदाशिषि** इति यासुटः कित्त्वे **वचिस्वपियजादीनां किति** इति सम्प्रसारणे **संप्रसारणाच्चेति** अकारस्य पूर्वरूपत्वे **इतश्चेति** तिप इकारलोपे **स्कोः संयोगाद्योरन्ते चेति** सलोपे च ॥ इ-ज्यात् ॥ लिङस्ते च सीयुटि टलो लोपे यलोपे **सुट्तिथोरि**ति सुटि सलो लोपे **व्रश्चभ्र-**

---

[1] वचिस्वपियजादीनां किति ॥ अपवादा यजादयः । यजिर्वपिर्वहिश्चैव वसिर्वेञ्व्येञ् एव च ह्वयतिः । वेञ्श्री भवति प्रवादा स्मृता नव ॥ १ ॥

अवोढाम् अवाक्षुः। अवाक्षीः अवोढम् अवोढ । अवाक्षम् अवाक्ष्व अवाक्ष्म । अवोढ

**सि** इति ढस्य कत्वे सस्य षत्वे सयोगे च ॥ वक्ष्यति ॥ लृटस्ते च टेरेत्वे ॥ वक्ष्यते ॥ वह् अग्रे लुङस्तिपि **च्लि लुङि** इति च्लौ **च्लेः सिच्** इति सिचि इञ्भागलोपे अटि अवह् स् ति इति जाते **इतश्चे**ति तिप इकारलोपे **अस्तिसिचोऽपृक्ते** इति ईटि च अवह् स् ईत् इति जाते **हो ढ** इति हस्य ढत्वे **षढोः कः सि** इति ढस्य कत्वे सस्य षत्वे **वदव्रजहलन्तस्याच** इत्युपधादीर्घत्वे ॥ अवाक्षीत् ॥ वह् अग्रे लुङस्तसि च्लौ च्ले सिचि इञ्भागलोपे **तस्थस्थमिपां तांतंताम** इति तसस्तामि अटि अवह् स् ताम् इति जाते तत्र **झलो झली**ति सलोपे अवह् ताम् इति जाते तत्र **हो ढ** इति हस्य ढत्वे **झषस्तथोर्धोऽध** इति तकारस्य धकारे **ष्टुना ष्टुरि**ति ष्टुत्वेन धस्य ढत्वे अवढ् ढाम् इति जाते तत्र **ढो ढे लोप** इति ढलोपे **सहिवहोरोदवर्णस्ये**ति वकारोत्तरवर्त्यकारस्योकारे च कृते ॥ अवोढाम् ॥ वह् अग्रे लुङो झौ च्लौ च्ले. सिचि इचो लोपे **सिजभ्यस्तविदिभ्यश्चे**ति झेर्जुसि जकारस्येत्संज्ञाया लोपे च **लुङ्लङ्लृङ्क्ष्वि**ति अटि अवह् स् उस् इति जाते तत्र **हो ढ** इति हस्य ढत्वे **षढोः कः सि** इति ढस्य कत्वे सस्य षत्वे **वदव्रजहलन्तस्याच** इति वृद्धौ ॥ अवाक्षुः ॥ वह् अग्रे लुङो मध्यमपुरुषैकवचने सिपि च्लौ च्ले सिचि इचो लोपे अटि **इतश्चे**ति सिप इकारलोपे **अस्तिसिचोऽपृक्ते** इति ईटि च कृते अवह् स् ई स् इति जाते तत्र **हो ढ** इति हस्य ढत्वे **षढोः कः सि** इति ढस्य कत्वे षत्वे **वदव्रजहलन्तस्याच** इति वृद्धौ अवाक्षीस् इति जाते सस्य रुत्वे रेफस्य विसर्गत्वे च ॥ अवाक्षीः ॥ वह् अग्रे लुङो मध्यमद्विवचने थसि थसस्थ **तस्थस्थमिपां तांतंताम** इति तमि अटि च्लौ च्ले सिचि इचो लोपे अवह्स् तम् इति जाते तत्र **झलो झलि सवर्णे** इति सस्य लोपे **हो ढ** इति हस्य ढत्वे **झषस्तथोर्धोऽध** इति तकारस्य धत्वे धकारस्य ष्टुत्वेन ढत्वे **ढो ढे लोप** इति ढलोपे **सहिवहोरोदवर्णस्ये**ति वकारान्त पाल्यकारस्योकारे च कृते ॥ अवोढम् ॥ एवं मध्यमपुरुषबहुवचने थे परे ॥ अवोढ ॥ वह् अग्रे लुङ उत्तमपुरुषैकवचने मिपि मिपश्च **तस्थस्थमिपां तांतंताम** इति अमि च्लौ च्ले सिचि इचो लोपे अटि च कृते अवह स् अम् इति जाते तत्र हस्य ढत्वे ढस्य **षढोः कः सी**ति कत्वे सस्य षत्वे **वदव्रजहलन्तस्याच** इति उपधावृद्धौ ॥ अवाक्षम् ॥ वह् अग्रे लुङ उत्तमपुरुषद्विवचने वसि सकारस्य **नित्यं ङित** इत्यनेन लोपे च्लौ च्ले सिचि इचो लोपे अटि **हो ढ** इति हस्य ढत्वे **षढोः कः सी**ति ढस्य कत्वे सस्य षत्वे **वदव्रजहलन्तस्याच** इति वृद्धौ सयोगे च कृते ॥ अवाक्ष्व ॥ मसि च ॥ अवाक्ष्म ॥ लुङस्ते च्लौ च्ले सिचि इचो लोपे अटि हस्य ढत्वे **झलो झली**ति सलोपे **झषस्तथोर्धोऽध** इति धत्वे ढत्वे **ढो ढे लोप** इति ढलोपे **सहिवहोरोदवर्णस्ये**ति वकारोत्तरवर्त्यकारस्योकारे च कृते ॥ अवोढ ॥ आतामि परे च्लौ च्ले. सिचि इचो लोपे अटि हस्य ढत्वे ढस्य **षढोः कः सी**ति कत्वे सस्य

अवक्षाताम् अवक्षत । अवोढाः अवक्षाथाम् अवोढ्वम् । अवक्षि अवक्ष्वहि अवक्ष्महि ॥ इति भ्वादयः ॥

## ॥ अथ तिङन्ते अदादिगणप्रकरणम् ॥

अद भक्षणे ॥ **अदिप्रभृतिभ्यः शपः ।२।४।७२।** लुक् स्यात् । अत्ति अत्तः अदन्ति । अत्सि अत्थः अत्थ । अद्मि अद्वः अद्मः ॥ **लिट्यन्यतरस्याम् ।२।४।४०।** अदो घस्लृ वा स्याल्लिटि । जघास । उपधालोपः । घस्य चर्त्वम् ॥ **शासिवसिघसीनां च ।८।३।६०।** इण्कुभ्यां परस्यैषां सस्य षः स्यात् । जक्षतुः जक्षुः । जघसिथ जक्षथुः

---

षत्वे संयोगे च ॥ अवक्षाताम् ॥ झे परे **आत्मनेपदेष्वनतः** इति झस्य अत् आदेशे च्लौ सिचि इचो लोपे अटि हस्य ढत्वे ढस्य कत्वे सस्य षत्वे च ॥ अवक्षत ॥ लुङो मध्यमपुरुषैकवचने थासि च्लौ च्लेः सिचि इचो लोपे अटि हस्य ढत्वे **झलो झलीति** सलोपे **झषस्तथोर्धोऽध** इति थस्य धत्वे कृते अवढ् धा स् इति जाते तत्र ष्टुत्वेन धस्य ढत्वे ढलोपे **सहिवहोरोदवर्णस्येति** वकाराकारस्यौकारे सस्य रुत्वे रस्य विसर्गत्वे च ॥ अवोढाः ॥ आथामि च्लौ च्लेः सिचि इचो लोपे अटि हस्य ढत्वे ढस्य कत्वे सस्य षत्वे च कृते ॥ अवक्षाथाम् ॥ ध्वमि च्लौ च्लेः सिचि इचो लोपे अटि **झलो झलीति** सलोपे हस्य ढत्वे धस्य ष्टुत्वेन ढत्वे **ढो ढे लोप** इति ढलोपे वकाराकारस्यौकारत्वे च कृते ॥ अवोढ्वम् ॥ इटि च्लौ च्लेः सिचि इचो लोपे अटि हस्य ढत्वे ढस्य कत्वे सस्य षत्वे च कृते ॥ अवक्षि ॥ वहि च्लौ च्लेः सिचि इचो लोपे अटि हस्य ढत्वे ढस्य कत्वे सस्य षत्वे संयोगे च कृते ॥ अवक्ष्वहि ॥ महिङि च च्लौ च्लेः सिचि इचो लोपे अटि हस्य ढत्वे ढस्य कत्वे सस्य षत्वे संयोगे च कृते ॥ अवक्ष्महि ॥ लृङस्तिपि स्ये अटि हस्य ढत्वे ढस्य कत्वे सस्य षत्वे **इतश्चेति** तिप इकारलोपे च कृते ॥ अवक्ष्यत् ॥ ते परे च । अवक्ष्यत ॥ इति भ्वादयः

दयार्द्रदेशिकदयापीयूषलहरीहि मे ॥ जरीहरीतु भरितं आत्मपङ्कं मनोगतम् ॥ १ ॥

अद भक्षणे धातुर्वर्तते अग्रे लटस्तिपि शपि **अदिप्रभृतिभ्यः शप** इति शपो लोपे **खरि चेति** दकारस्य तकारे कृते ॥ अत्ति ॥ अद् अग्रे लिटस्तिपि तिपो णलि **लिट्यन्यतरस्यामिति** घस्लादेशे **लिटि धातोरनभ्यासस्येति** द्वित्वे **हलादिः शेष** इति सकारलोपे घ घस् अ इति जाते **कुहोश्चुरिति** घस्य झकारे **अभ्यासे चर्चेति** झस्य जत्वे **अत उपधाया** इत्युपधावृद्धौ च ॥ जघास ॥ अतुसि **लिट्यन्यतरस्यामिति** घस्लादेशे द्वित्वे सकारलोपे घस्य झत्वे झस्य जत्वे **गमहनजनखनघसां लोपः क्ङित्यनङि** इत्युपधालोपे जघ्स् अतुस् इति जाते **खरि चेति** घस्य कत्वे **शासिवसिघसीनां** चेति सस्य षत्वे संयोगे सस्य रुत्वे रोर्विसर्गत्वे च ॥ जक्षतुः ॥ उसि ॥ जक्षुः ॥

जक्ष । जघास जघस जक्षिव जक्षिम । आद आदतुः आदुः ॥ **इडत्त्यर्तिव्ययतीनाम्** ।७।२।६६। अद् ऋ व्येञ् एभ्यस्थलो नित्यमिट् स्यात् । आदिथ अत्ता अत्स्यति अत्तु अत्तात् अत्ताम् अदन्तु ॥ **हुझल्भ्यो हेर्धिः**[1] ।६।४।१०१। होर्झलन्तेभ्यश्च हेर्धिः स्यात् । अद्धि अत्तात् अत्तम् अत्त । अदानि अदाव अदाम ॥ **अदः सर्वेषाम्**[2] ।७।३।१००। अदः परस्यापृक्तसार्वधातुकस्य अट् स्यात्सर्वमतेन । आदत् आत्ताम् आदन् । आदः आत्तम् आत्त । आदम् आद्व आद्म । अद्यात् अद्याताम् अद्युः । अद्यात् अद्यास्ताम्

थलि । जघसिथ ॥ अथुसि । जक्षथुः ॥ ए । जक्ष ॥ णलि । जघास ॥ **णलुत्तमो वे**ति पक्षे ॥ जघस । वे, जक्षिव ॥ मे, जक्षिम ॥ **लिट्यन्यतरस्या**मिति सूत्रस्याप्राप्तौ अदो द्वित्वे हलो लोपे **अत आदे**रित्यभ्यासदीर्घत्वे सवर्णदीर्घे च ॥ आद ॥ अतुसि ॥ आदतुः ॥ उसि ॥ आदुः ॥ अद् अग्रे लिटः सिपि सिपस्थलि **लिटि धातोरनभ्यासस्ये**ति द्वित्वे **हलादिः शेष** इति दलोपे अ अद् थ इति जातं तत्र **इडत्त्यर्तिव्ययतीनां चे**ति इटि दीर्घादिपूर्ववत् ॥ आदिथ ॥ अथुसि । आदथुः ॥ एपरे । आद ॥ णलि । आद ॥ वे । आद्व ॥ मे । आद्म ॥ अद् अग्रे लुटस्तिपि तासौ **लुटः प्रथमस्य डारौरस** इति तिपो डात्वे डित्वसामर्थ्यादभस्यापि टेर्लोपे **खरि चे**ति दस्य तकारे कृते ॥ अत्ता ॥ अद्, अग्रे लृटस्तिपि स्ये **खरि चे**ति चर्त्वे ॥ अत्स्यति ॥ अद् अग्रे लोटस्तिपि शपि **अदिप्रभृतिभ्यः शप** इति शपो लोपे **खरि चे**ति चर्त्वे एरुरिति तिप इकारस्योकारे च कृते ॥ अत्तु ॥ अत्तात् ॥ अत्ताम् ॥ अदन्तु ॥ अद् अग्रे लोटो मध्यमपुरुषैकवचने सिपि **सेर्ह्यपिच्चे**ति सेर्हित्वे अद् हि इति जातं तत्र **हुझल्भ्यो हेर्धिः** इति हेर्धित्वे **खरि चे**ति चर्त्वे च ॥ अद्धि ॥ अत्तात् ॥ अत्तम् ॥ अत्त ॥ अदानि ॥ अदाव ॥ अदाम ॥ अद् अग्रे लङस्तिपि **आडजादीना**मित्यनेन आटि **इतश्चे**ति तिप इकारलोपे आद् त् इति जातं तत्र **अदः सर्वेषा**मिति अटि आद् अद् त् इति जातं तत्र दकारलोपे संयोगे च कृते ॥ आदत् ॥ तामि ॥ आत्ताम् ॥ झौ ॥ आदन् ॥ सिपि **अदः सर्वेषा**मिति अटि कृते ॥ आदः । तमि । आत्तं ॥ ते, आत्त । अमि, आदम् ॥ वसि, आद्व ॥ **नित्यं ङित** इति सलोपे ॥ मसि । आद्म ॥ अद् अग्रे लिङस्तिपि यासुटि उटो लोपे **इतश्चे**ति तिप इकारलोपे **लिङः सलोपोनन्त्यस्ये**ति सलोपे ॥ अद्यात् ॥ तामि, अद्याताम् ॥ झेर्जुसि अद्युः ॥ अद् अग्रे आशीर्लिङस्तिपि यासुटि उटो लोपे **इतश्चे**ति तिप इकारलोपे **स्कोः संयोगाद्योरन्ते** चेति सलोपे ॥ अद्यात् ॥ तामि । अद्यास्ताम् ॥ झेर्जुसि । अद्यासुः ॥

१ हुझल्भ्यो हेर्धि। घसि भसोर्हलीत्यतो हलीत्यनुवर्तते तथाच हलादिर्यो हिस्तस्य धिर्भवतीति व्याख्यानेन रुदिहि स्वपिहि इत्यादौ इडागमविशिष्टस्य हेर्नेधित्वम् । अत्तादिश्चात्र तु धित्वाद् परत्वात्तातङि कृते स्थानिवद्भावेन पुनर्धित्वं तु सकृद्गताविति न्यायान्नेत्याहुः ॥ २ अदः सर्वेषाम् । अड् गार्ग्यगालवयोरित्यतोऽडित्यनुवर्तते । गार्ग्यगालवयोरित्यस्य निवृत्त्यर्थं सर्वेषां ग्रहणम् ।

अघासुः ॥ **लुङ्सनोर्घस्लृ** ।२।४।३७। अदो घस्लृ स्याल्लुङि सनि च । लृदित्त्वादङ् । अघसत् आत्स्यत् । हन हिंसागत्योः २ । हन्ति ॥ **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** ।६।४।३७। अनुनासिकान्तानामेषां वनतेश्च लोपः स्याज्झलादौ किति ङिति परे । यमिरमिनमिगमिहनिमन्यतयोऽनुदात्तोपदेशाः । तनुक्षणुक्षिणुऋणुतृणुघृणुवनुमनुतनोत्यादयः । हतः घ्नन्ति । हंसि हथः हथ । हन्मि हन्वः हन्मः । जघान जघ्नतुः जघ्नुः ॥ **अभ्यासाच्च** ।७।३।५५। अभ्यासात्प-

---

अद् अग्रे लुङस्तिपि **लुङ्सनोर्घस्लृ** इत्यनेन घस्लृ कृते लृलोपे घस्ति इति जातं तत्र **च्लि लुङी**ति च्लौ **पुषादिद्युताद्यॢदितः परस्मैपदेषु** इत्यनेन अङि घस् अ ति इति जातं तत्र **लुङ्लङ्लृङ्क्ष्वडुदात्त** इति अटि **इतश्चे**ति तिप इकारलोपे ॥ अघसत् ॥ अद् अग्रे लृङस्तिपि **स्यतासी लृलुटो**रिति स्ये **आडजादीना**मिति आटि **इतश्चे**ति तिप इकारलोपे **खरि चे**ति दस्य चर्त्वे च कृते ॥ आत्स्यत् ॥ हन हिंसागत्योर्धातुर्वर्तते अग्रे लटस्तिपि शपि **अदिप्रभृतिभ्यः शप** इति शपो लोपे ॥ हन्ति ॥ हन् अग्रे लटः प्रथमपुरुषद्विवचने तसि हन् तस् इति जातं तत्र **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** इत्यनेन अन्त्यस्य नकारस्य लोपे सस्य रुत्वे रोर्विसर्गत्वे च कृते ॥ हतः ॥ हन् अग्रे लटः प्रथमपुरुषबहुवचने झौ **झोन्त** इति झस्यान्तादेशे हन् अन्ति इति जातं तत्र **गमहनजनखनघसां लोपः क्ङित्यनङि** इत्यनेनोपधारूपस्यहकारान्तःपात्यकारस्य लोपे कृते ह्न् अन्ति इति जातं तत्र **हो हन्तेर्ञ्णिन्नेषु** इत्यनेन संवारनादघोषप्रयत्नवतो महाप्राणस्य हस्य तादृशो एव घकारे कृते ॥ घ्नन्ति ॥ सिपि ॥ हंसि ॥ थसि **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** इति नलोपे ॥ हथः ॥ थे, हथ ॥ मिपि ॥ हन्मि । वसि ॥ हन्वः । मसि ॥ हन्मः ॥ हन् अग्रे लिटस्तिपि तिपो णलि द्वित्वे अभ्यासत्वे **हलादिः शेष** इति नलोपे च कृते ह हन् अ इति जातं तत्र **हो हन्तेर्ञ्णिन्नेषु** इति हस्य घत्वे हघन् अ इति जाते **कुहोश्चु**रिति सूत्रेण प्रयत्नसाम्यात् हस्य झत्वे **अभ्यासे चर्च** इत्यनेन झस्य जत्वे **अत उपधायाः** इति उपधावृद्धौ संयोगे च कृते ॥ जघान ॥ हन् अग्रे अतुसि द्वित्वे अभ्यासत्वे नलोपे **गमहनजनखनघसां लोप** इत्युपधारूपहकारान्तर्वर्त्यकारलोपे **हो हन्तेर्ञ्णिन्नेष्वि**ति हस्य घत्वे ह घ्न् अतुः इति जातं तत्र **कुहोश्चु**रित्यनेन अभ्यासहस्य झत्वे **अभ्यासे चर्चे**ति झस्य जत्वे च कृते ॥ जघ्नतुः ॥ उसि ॥ जघ्नुः ॥ हन् अग्रे थलि **लिटि धातोरनभ्यासस्ये**ति द्वित्वे **पूर्वोऽभ्यास** इति अभ्या-

---

१ अनुदात्तोपदेशवनतीत्यादि । अत्रानुनासिक इति लुप्तषष्ठीकं वनतीतरेषां विशेषणं वनतेरव्यभिचारात् । तदाह । अनुनासिकान्तानामिति । अन्यथा मन् नम् नह् इत्यादीनामनन्तस्यापि लोपे मतः नतः नद्ध इत्यादीनि न सिद्ध्येरन् ॥

रस्य हन्तेर्हस्य कुत्वं स्यात्। जघनिथ जघन्थ जघ्नथुः जघ्न। जघान जघन जघ्निव जघ्निम। हन्ता हनिष्यति हन्तु हतात् हताम् घ्नन्तु ॥ **हन्तेर्जः** ।६।४।३६। हौ परे ॥ **असिद्धवदत्राभात्**[1] ।६।४।२२। इत ऊर्ध्वमापादसमाप्तेराभीयं समानाश्रये तस्मिन्कर्तव्ये तदसिद्धम्। इति जस्यासिद्धत्वान्न हेर्लुक्। जहि हतात् हतम् हत। हनानि हनाव हनाम। अहन् अहताम् अघ्नन् अहन् अहतम् अहत। अहनम् अहन्व अहन्म। हन्यात्॥ **आर्धधातुके** ।२।४।३५। इत्यधिकृत्य ॥ **हनो वध लिङि** ।२।४।४२। लुङि च

---

सत्वे **हलादिःशेष** इति नलोपे च ह हन् थ इति जाते तत्र **अभ्यासाचे**ति हस्य घत्वे कृते **कुहोश्चु**रिति अभ्यासहस्य झत्वे **अभ्यासे चर्चे**ति झस्य जत्वे **आर्धधातुकस्येड्वलादे**रिति इटि च कृते ॥ जघनिथ ॥ इडभावे च ॥ जघन्थ ॥ अथुसि **गमहनजनखनघसां लोप** इत्युपधालोपे च कृते ॥ जघ्नथुः ॥ ए, जघ्न ॥ णलि। जघान ॥ **णलुत्तमो वे**ति पक्षे ॥ जघन ॥ वे। जघ्निव ॥ मे। जघ्निम ॥ हन् अग्रे लुटस्तिपि **स्यतासी लृलुटो**रिति तासौ **लुटः प्रथमस्य डारौरस** इति तिपो डात्वे डित्त्वसामर्थ्यादभस्यापि टेर्लोपे च कृते ॥ हन्ता ॥ हन् अग्रे लृटस्तिपि **स्यतासी लृलुटो**रिति स्ये **ऋद्धनोःस्ये** इति इटि सस्य षत्वे ॥ हनिष्यति ॥ हन् अग्रे लोटस्तिपि शपि शपो लोपे **एरु**रिति तिप इकारस्योत्वे च कृते ॥ हन्तु ॥ तातङि नलोपे च ॥ कृते ॥ हतात् ॥ तामि नलोपे ॥ हताम् ॥ झौ परे ॥ घ्नन्तु ॥ हन् अग्रे लोटः सिपि **सेर्ह्यपिच्चे**ति सेर्हौ कृते हन् हि इति जाते तत्र **हन्तेर्जः** इति हन्भागस्य जत्वे कृते ॥ जहि इति जाते तत्र **अतो हेः** इत्यनेन हिलोपे प्राप्ते ॥ **असिद्धवदत्राभात्** इत्यनेन जस्यासिद्धत्वात् हिलोपाभावे ॥ जहि ॥ तातङि ॥ हतात् ॥ तमि ॥ हतं ॥ ते ॥ हत ॥ मिपि **मेर्निः** इति मेर्नित्वे **आडुत्तमस्य पिच्चे**ति आटि च कृते ॥ हनानि ॥ वे, हनाव ॥ मे। हनाम ॥ हन् अग्रे लङस्तिपि शपि शपो लोपे अटि **इतश्चे**ति तिप इकारलोपे **संयोगान्तस्य लोप** इति तलोपे च कृते ॥ अहन् ॥ हन् अग्रे लङस्तसि तसस्तामि शपि शपो लोपे अटि नलोपे च कृते ॥ अहताम् ॥ झौ झस्य अन्तादेशे उपधालोपे हस्य घत्वे अटि तिप इकारलोपे तकारस्य च **संयोगान्तस्य लोप** इति लोपे कृते ॥ अघ्नन् ॥ सिपि अटि **इतश्चे**ति सिप इकारलोपे **हल्ङ्याब्भ्य** इति सलोपे ॥ अहन् ॥ हन् अग्रे थसि थसस्तमि अटि नलोपे च कृते ॥ अहतम् ॥ थे थस्य च ते ॥ अहत ॥ हन् अग्रे मिपि मिपश्चामि अटि च कृते ॥ अहनम् ॥ वे ॥ अहन्व ॥ मे अहन्म ॥ हन् अग्रे विधिलिङस्तिपि शपि शपो लोपे यासुटि उटो लोपे **इतश्चे**ति तिप इकारलोपे **स्कोः संयोगाद्योरन्ते चे**ति सलोपे च कृते ॥ हन्यात् ॥ हन् अग्रे आशीर्लिङस्तिपि **आर्द्धधातुके** इत्यधिकृत्य **हनो वध लिङि** इत्यनेन वधादेशे यासुटि उटो

---

[1] असिद्धवदत्राभात्। अत्रेतदुपन्यसनं व्यर्थमिति केचित् सन्निपातपरिभाषयैव जहीत्यत्र न लुगिति। तन्मन्दम्। अतोहेरित्यारम्भसामर्थ्यादेव तस्या अनुपस्थितेः॥

।२।४।४३। वधादेशोऽदन्तः। आर्धधातुके इति विषयसप्तमी। तेनार्धधातुकोपदेशे अकारान्त-
त्वादतो लोपः। वध्यात् वध्यास्ताम् अवधीत् अहनिष्यत्। यु मिश्रणामिश्रणयोः २ ॥ **उतो
वृद्धिर्लुकि हलि**।७।३।८९। लुग्विषये उतो वृद्धिः पिति हलादौ सार्वधातुके न त्वभ्यस्तस्य

---

लोपे **इतश्चे**ति तिप इकारलोपे कृते सलोपे च कृते ॥ वध्यात् ॥ तामि ॥ वध्यास्ताम् । हन्
अग्रे लुङस्तिपि **लुङि चे**ति वधादेशे च्लौ च्लेः सिचि इचो लोपे अटि इटि **इतश्चे**ति तिप
इकारलोपे **अस्तिसिचोऽपृक्ते** इति इटि **इट ईटि** इति सलोपे च कृते ॥ अवधीत् ॥
हन् अग्रे लृङस्तिपि **स्यतासी लृलुटो**रिति स्ये अटि इटि सस्य षत्वे **इतश्चे**ति तिप
इकारलोपे च कृते ॥ अहनिष्यत् ॥ यु मिश्रणामिश्रणयोः धातुर्वर्ततेऽग्रे लटस्तिपि शपि **अ-
दिप्रभृतिभ्यः शप** इति शपो लोपे **उतो वृद्धिर्लुकि हलि** इत्यनेन वृद्धौ कृतायाम् ॥
यौति ॥ तसि पित्त्वाभावाद्वृद्ध्यभावे ॥ युतः ॥ झौ **झोन्त** इति अन्तादेशे **अचि श्नुधातु-
भ्रुवां य्वोरियङुवङौ** इत्यनेन उवङि कृते ॥ युवन्ति ॥ सिपि **उतो वृद्धिर्लुकि
हली**ति वृद्धौ ॥ यौषि ॥ थसि पित्त्वाभावाद्वृद्ध्यभावे ॥ युथः ॥ थे परेपि तथैव वृद्ध्यभावे ॥
युथ ॥ मिपि **उतो वृद्धिर्लुकि हली**ति वृद्धौ ॥ यौमि ॥ वसि । युवः ॥ मसि । युमः ॥
यु अग्रे लिटि लिटस्तिपि तिपो णलि **लिटि धातोरनभ्यासस्ये**ति द्वित्वे **अचोञ्णि-
ती**ति वृद्धौ **एचोऽयवायाव** इति आवि च कृते ॥ युयाव ॥ अतुसि धातोर्द्वित्वे **अचि
श्नुधातुभ्रुवां य्वोरियङुवङा**विति उवङि कृते ॥ युयुवतुः ॥ यु अग्रे लुटस्तिपि **स्य-
तासी लृलुटो**रिति तासौ इटि **सार्वधातुकार्धधातुकयो**रिति गुणे अवि **लुटः प्रथ-
मस्य डारौरस** इति तिपो डात्वे डित्त्वसामर्थ्यादभस्यापि टेर्लोपे ॥ यविता ॥ लृटस्तिपि
स्ये इटि गुणे अवि सस्य षत्वे च कृते ॥ यविष्यति ॥ लोटस्तिपि शपि शपो लोपे **उतो
वृद्धिर्लुकि हली**ति वृद्धौ **एरु**रिति तिप इकारस्योत्वे च कृते ॥ यौतु ॥ लङस्तिपि शपि
शपो लोपे अटि **उतो वृद्धिर्लुकि हलि** इति वृद्धौ **इतश्चे**ति तिप इकारलोपे ॥ अयौत् ॥
लिङस्तिपि यासुटि उटो लोपे **लिङः सलोपोऽनन्त्यस्ये**ति सलोपे **यासुट् परस्मै-
पदेषूदात्तो ङिच्चे**ति यासुटो ङित्त्वात् भाष्ये पिच्च ङिन्न ङिच्च पिन्नेति व्याख्यानात्
पित्वाभावाद्वृद्ध्यभावे तिप इकारस्य च **इतश्चे**ति सूत्रेण लोपे कृते ॥ युयात् ॥ आशी-
र्लिङ्यपि ॥ युयात् ॥ सुटि उटो लोपे **इतश्चे**ति तिप इकारलोपे **स्कोः संयोगाद्योरन्ते
चे**ति सलोपे **अकृत्सार्वधातुकयो**रित्यनेनाङ्गस्य दीर्घत्वे ॥ यूयात् ॥ लुङस्तिपि च्लौ
च्लेः सिचि इचो लोपे इटि अटि **इतश्चे**ति तिप इकारलोपे **अस्तिसिचोऽपृक्ते** इति

---

१ उतो वृद्धिर्लुकि हलि । नाभ्यस्तस्याचि पिति सार्वधातुके ॥ इति सूत्रमनुवर्तते । उतःकिम्–एति–
लुकीतिकिम्–सुनोति–जुहोति–हलिकिम्–यवानि–पितिकिम्–युतः–नाभ्यस्तस्यकिम्–योयोति–रोरोति–चु-
याद्यिन्न वृद्धिर्माभूदित्येतदर्थं पिच्च ङिन्नेत्यादिभाष्यमाश्रितम् । तन्नाश्रयणीयम् । उतोवृद्धिरित्यत्र–
उत औदित्येव वक्तव्ये वृद्धिग्रहणं संज्ञापूर्वकविधिरनित्य इत्यत्र ज्ञापकं तेनात्र वृद्धिर्नेति सांप्रदायिकाः ॥

यौति युतः युवन्ति । यौषि युथः युथ । यौमि युवः युमः । युयाव यविता यविष्यति यौतु युतात् अयौत् अयुताम् अयुवन् युयात् । इह उतो वृद्धिर्न । भाष्ये पिच्च ङिन्न ङिच्च पिन्नेति व्याख्यानात् । युयाताम् युयुः । यूयात् यूयास्ताम् यूयासुः । अयावीत् अयविष्यत् । या प्रापणे ४ याति यातः यान्ति । ययौ याता यास्यति यातु अयात् अयाताम् ॥ **लङः शाकटायनस्यैव ।३।४।१११।** आदन्तात्परस्य लङो झेर्जुस् वा स्यात् । अयुः अयान् । यायात् यायाताम् यायुः । यायात् यायास्ताम् यायासुः । अयासीत् अयास्यत् । वा गतिगन्धनयोः ५। भा दीप्तौ ६। ष्णा शौचे ७। श्रा पाके ८। द्रा कुत्सायां गतौ ९। प्सा

---

ईटि **इट ईटि** इति सलोपे **सिचि वृद्धिः परस्मैपदेषु** इति वृद्धौ **एचोयवायावः** इति आवि च कृते ॥ अयावीत् ॥ लृङस्तिपि स्ये इटि अटि गुणे अवादेशे सस्य षत्वे **इतश्चेति** तिप इकारलोपे च ॥ अयविष्यत् ॥ या प्रापणे धातुसंज्ञायां लटस्तिपि शपि **अदिप्रभृतिभ्यः शपः** इति शपो लोपे ॥ तसि । यातः ॥ झौ । यान्ति ॥ या अस्मै लिट-स्तिपि तिपो णलि **लिटि धातोरनभ्यासस्येति** धातोर्द्वित्वे यया णल् इति जातं तत्र **ह्रस्वः** अभ्यासस्याचो ह्रस्वः इत्यभ्यासाचो ह्रस्वत्वे यया णल् इति जातं तत्र **आत औ णलः** इति णल औ वृद्धौ च कृतायां ॥ ययौ ॥ या अस्मै लुटस्तिपि **स्यतासी लृलुटोरिति** तासौ **लुटः प्रथमस्य डारौरसः** इति तिपो डाले डित्त्वसामर्थ्यादभस्यापि टेर्लोपे ॥ याता ॥ लृटस्तिपि **स्यतासी लृलुटोरिति** स्ये ॥ यास्यति ॥ लोटस्तिपि शपि शपो लोपे **एरुः** रिति तिप इकारस्योत्वे ॥ यातु ॥ लङस्तिपि शपि शपो लोपे **लुङ्लङ्लृङ्क्ष्वडुदात्तः** इति अटि **इतश्चेति** तिप इकारलोपे ॥ अयात् ॥ लङस्तसि तसश्च **तस्थस्थमिपां तांतंतामः** इति तसस्तामि अटि च कृते ॥ अयाताम् ॥ लङो झौ अटि **लङः शाक-टायनस्यैवेति** झेर्जुसि जकारस्य **चुटू** इतीत्संज्ञायाम् । **उस्यपदान्तात्** इत्यनेन पर-रूपत्वे ॥ अयुः ॥ पक्षे झेर्जुसोऽभावे झस्यान्तादेशे च कृते अया न्ति इति जातं । तत्र **इतश्चेति** तिप इकारलोपे तकारस्य च **संयोगान्तस्य लोपः** इति लोपे ॥ अयान् ॥ विधिलिङस्तिपि **यासुट्परस्मैपदेषूदात्तो ङिच्चेति** यासुटि उटो लोपे **लिङः सलो-पोनन्त्यस्येति** सलोपे **इतश्चेति** तिप इकारलोपे च ॥ यायात् ॥ एवमाशीर्लिङस्तिपि यासुटि उटो लोपे सकारस्य **स्कोः संयोगाद्योरन्ते चेति** सलोपे **इतश्चेति** तिप इकारलोपे च ॥ यायात् ॥ आशीर्लिङस्तसि तसस्तामि च ॥ यायास्ताम् ॥ झौ झेर्जुसि च ॥ यायासुः ॥ लुङस्तिपि अटि च्लौ च्लेः सिचि इचो लोपे **इतश्चेति** तिप इकारलोपे **अस्तिसिचोऽपृक्ते** इति ईटि च कृते ॥ अयासीत् ॥ लृङस्तिपि **स्यतासी लृलु-टोरिति** स्ये अटि **इतश्चेति** तिप इकारलोपे च कृते ॥ अयास्यत् ॥ एवं ॥ वा गतिगन्ध-नयोः ५ भा दीप्तौ ६ ष्णा शौचे ७ श्रा पाके ८ द्रा कुत्सायां गतौ ९ प्सा भक्षणे १० दा दाने

आम् गुणाभावो लोटो लुक् लोडन्तकरोत्यनुप्रयोगश्च वा निपात्यते । पुरुषवचने न विवक्षिते । विदाङ्करोतु वेत्तु ॥ **तनादिकृञ्भ्य उः** ।३।१।७९। तनादेः कृञश्च उः प्रत्ययः स्यात् । शपोऽपवादः ॥ **अत उत्सार्वधातुके** ।६।४।११०। उप्रत्ययान्तस्य कृञोऽत उत्सार्वधातुके क्ङिति । विदाङ्कुरुतात् विदाङ्कुरुताम् विदाङ्कुर्वन्तु विदाङ्कुरु विदाङ्करवाणि । अवेत् अविताम् अविदुः ॥ **दश्च** ।८।२।७५। धातोर्दस्य पदान्तस्य सिपि परे रुर्वा । अवेः अवेत् विद्यात् विद्यास्ताम् अवेदीत् अवेदिष्यत् । अस् भुवि १६ अस्ति॥

---

इकारस्योकारे च ॥ विदाकरोतु ॥ **तुह्योस्तातङ्** वेति तातङि अङ्भागलोपे च विद कृ तात् इति जाते **तनादिकृञ्भ्य** उरिति उकारे **सार्वधातुकार्द्धधातुकयो**रिति गुणे विदांकुरुतात् इति जाते तत्र **अत उत्सार्वधातुके** इति कृञोऽकारस्योकारे कृते ॥ विदाकुरुतात् ॥ तामि ॥ विदाकुरुताम् ॥ झौ ॥ विदाकुर्वन्तु ॥ लोट सिपि विदाकृ सि इति जाते **सेर्ह्यपिच्च**ेति सेर्हौ कृते **तनादिकृञ्भ्य उः** इति उकारे **सार्वधातुकार्द्धधातुकयो**रिति गुणे विदाकुरु हि इति जाते **अत उत्सार्वधातुके** इत्यकारस्योकारे **उतश्च प्रत्ययादसंयोगपूर्वात्** इति हिलोपे च कृते ॥ विदाकुरु ॥ लोटो मिपि **मेर्नि**रिति मेर्निस्थे **आडुत्तमस्य पिच्च**ेति आटि विदाकृ आ नि इति जाते तत्र **तनादिकृञ्भ्य** उरिति उकारे **सार्वधातुकार्द्धधातुकयो**रिति गुणे विदाकुरु आनि इति जाते पुनश्च **सार्वधातुकार्द्धधातुकयो**रिति गुणे अयादेशे नस्य णत्वे च कृते । विदाकरवाणि ॥ पक्षे ॥ वेत्तु ॥ लङस्तिपि अटि **इतश्च**ेति तिप इकारलोपे **हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्** इति तल्लोपे **पुगन्तलघूपधस्य च**ेति गुणे **वावसाने** इति दकारस्य तकारे ॥ अवेत् ॥ तामि । अविता ॥ झौ । अविदु ॥ सिपि अटि **इतश्च**ेति सिप इकारलोपे **दश्च**ेति दस्य रुत्वे रकारोत्तरवर्त्युकारस्येत्संज्ञाया लोपे च सस्य **हल्ङ्याब्भ्य** इति लोपे रकारस्य च **खरवसानयोर्विसर्जनीय** इति विसर्जनीयत्वे ॥ अवे ॥ पक्षे ॥ अवेत् ॥ विद् अग्रे विधिलिङस्तिपि यासुटि चटो लोपे **लिङः सलोपोऽनन्त्यस्य**ेति सलोपे तिप इकारलोपे च ॥ विद्यात् ॥ आशीर्लिङि च ॥विद्यात्॥ विद् अग्रे लुङस्तिपि च्लौ च्लेः सिचि इचो लोपे **आर्द्धधातुकस्येड्वलादे**रिति इटि अटि **इतश्च**ेति तिप इकारलोपे **अस्तिसिचोऽपृक्ते** इति ईटि **इट ईटि** इति सलोपे दीर्घत्वे **पुगन्तलघूपधस्य**ेति गुणे च ॥ अवेदीत् ॥ विद् अग्रे लृङस्तिपि अटि स्ये इटि तिप इकारलोपे गुणे सस्य षत्वे च ॥ अवेदिष्यत् ॥ अस् भुवि धातुर्वर्त्ततेऽग्रे लटस्तिपि शपि

---

१ अत उत्सार्वधातुके ॥ क्ङितीति किं करोषि । तपरकरणं गुणप्रतिषेधार्थम् ॥ २ दश्च ॥ अत्र सिपिधातो रुर्वेति सूत्रमनुवर्त्तते । पदस्येति झलां जशोऽन्ते इत्यस्मादन्त इति चेति सर्वं मनसि निधायाह धातोर्दस्येत्यादि ।

**श्नसोरल्लोपः** ।६।४।१११। श्नस्यास्तेश्चातो लोपः सार्वधातुके क्ङिति । स्तः सन्ति । असि स्थः स्थ । अस्मि स्वः स्मः ॥ **उपसर्गप्रादुर्भ्यामस्तिर्यच्परः** ।८।३।८७। उपसर्गेणः प्रादुसश्चास्तेः सस्य षो यकारेऽचि च परे ॥ निष्यात् प्रनिषन्ति प्रादुःषन्ति । यच्परः किम् । अभिस्तः ॥ **अस्तेर्भूः** ।२।४।५२। आर्धधातुके । बभूव भविता भविष्यति अस्तु स्तात् स्ताम् सन्तु ॥ **घ्वसोरेद्धावभ्यासलोपश्च** ।६।४।११९। घोरस्तेश्च एत्वं स्यात् हौ परे अभ्यासलोपश्च । एत्वस्यासिद्धत्वाद्धेर्धिः । श्नसोरित्यल्लोपः । तातङ्पक्षे एत्वं न परेण तातङा बाधात् । एधि स्तात् स्तम् स्त । असानि असाव अ-

---

शपो लोपे च ॥ अस्ति ॥ तसि **श्नसोरल्लोप** इत्यनेनास्तेरकारस्य लोपे कृते ॥ स्तः ॥ झौ झेरन्तादेशे **श्नसोरल्लोप** इत्यकारलोपे ॥ सन्ति ॥ सिपि **तासस्त्योर्लोप** इत्यनेन सकारलोपे ॥ असि ॥ थसि **श्नसो**रित्यल्लोपे ॥ स्थः ॥ थे च तथा ॥ स्थ ॥ मिपि ॥ अस्मि ॥ वसि ॥ स्वः ॥ मसि ॥ स्मः ॥ **उपसर्गप्रादुर्भ्यामस्तिर्यच्पर** इति सस्य षत्वे ॥ निष्यात् ॥ प्रनिषन्ति ॥ प्रादुःषन्ति ॥ यच्पर इत्युक्तं तस्य किं प्रयोजनम् ॥ अभिस्त इत्यत्रोपसर्गेणः परोऽस्तेः सकारो वर्तते तथापि स सकारो न यपरोऽस्ति नाप्यच्परोऽस्तीति न तस्य षकारो जातः ॥ यदि यच्पर इति नापठिष्यद्भगवान् पाणिनिस्तर्हि अभिस्त इत्यत्र सस्य षत्वमभविष्यदितस्येतन्निवारणाय यच्पर इति सूत्रे पठितम् ॥ लिटि **अस्तेर्भूः** आर्द्धधातुके इत्यनेन अस्तेर्भूत्वे कृते ॥ बभूव ॥ लुटि ॥ भविता ॥ लृटि ॥ भविष्यति ॥ इत्यादि रूपाणि ज्ञेयानि । लोटि तिपि शपि शपो लोपे **एरुरि**ति तिप इकारस्योत्वे च ॥ अस्तु ॥ तातङि **श्नसोरल्लोप** इति अकारलोपे । स्तात् ॥ एवं तामि । स्ताम् ॥ झौ । सन्तु ॥ अस् अग्रे लोटः सिपि **सेर्ह्यपिच्चे**ति सेर्हित्वे अस् हि इति जातं तत्र **घ्वसोरेद्धावभ्यासलोपश्च** इत्यनेन अस्धातोरेत्वे कृते कृते च **हुझल्भ्यो हेर्धिः** इत्यनेन एत्वस्यासिद्धत्वमाश्रित्य हेर्धित्वे ॥ एधि ॥ तातङि **श्नसो**रित्यल्लोपे । स्तात् ॥ परेण तातङा बाधादत्र एत्वं न ॥ तमि । स्तम् ॥ थे । स्त ॥ मिपि **श्नसो**रित्यल्लोपे **मेर्निः** इति मेर्नित्वे **आडुत्तमस्य पिच्चे**ति आटि ॥ असानि ॥ वसि **नित्यं ङितः** इति सलोपे **आडुत्तमस्य पिच्चे**ति आटि आटः पित्त्वात् **श्नसोरल्लोप** इत्यल्लोपाभावे ॥ असाव ॥ मसि च । असाम ॥ अस् अग्रे लङस्तिपि **आडजादीना**मित्याटि **इतश्चे**ति तिप इकारलोपे **अस्तिसिचोऽपृक्ते** इति ईटि च कृते ॥ आसीत् ॥ तामि । आस्ताम् ॥ झौ । आसन् ॥ अस् अग्रे विधिलिङस्तिपि यासुटि उटो लोपे **श्नसोरल्लोप** इत्यल्लोपे **लिङः सलोपोऽनन्त्यस्ये**ति सलोपे च ॥ स्यात् ॥ तामि ॥ स्याताम् ॥ झौ ॥ स्युः ॥ आशीर्लिङि लुङि लृङि च **अस्तेर्भूः**

---

१ श्नसोरल्लोपः । श्नश्च अश्चेति द्वन्द्वः शकन्ध्वादित्वात्पररूपं तयोः । श्नस्योदाहरणं रुन्धन्तीत्यादौ । क्ङिति किं रुणद्धि ॥

साम । आसीत् आस्ताम् आसन् । स्यात् स्याताम् स्युः । भूयात् अभूत् अभविष्यत् ।
इण् गतौ १७ एति इतः ॥ **इणो यण्** ।६।४।८१। अजादौ प्रत्यये परे । यन्ति ॥
**अभ्यासस्यासवर्णे** ।६।४।७८। इवर्णोवर्णयोरियङुवङौ स्तोऽसवर्णेऽचि । इयाय ॥
**दीर्घ इणः किति** ।७।४।६९। इणोऽभ्यासस्य दीर्घः स्यात् किति लिटि । ईयतुः
ईयुः इययिथ इयेथ एष्यति एतु ऐत् ऐताम् । आयन् । इयात् ॥ **एतेर्लिङि** ।७।४।२४।

---

आर्द्धधातुके इत्यनेन भूवद्रूपाणि ज्ञेयानि ॥ इण् गतौ इति धातोरग्रे लटस्तिपि शपि शपो लोपे **सार्वधातुकार्द्धधातुकयो**रिति गुणे ॥ एति ॥ तसि । इतः ॥ झौ परे झस्यान्तादेशे कृते **इणो यण्** इति यणि ॥ यन्ति ॥ इण् अग्रे लिटस्तिपि तिपो णलि **लिटि धातोरनभ्यासस्ये**ति द्वित्वे कृते इ इ अ इति जातं तत्र **अचोञ्णिति** इति वृद्धौ इऐ अ इति जाते **एचोऽयवायाव** इति आयि कृते इ आय् इति जातं तत्र **अभ्यासस्यासवर्णे** इत्यनेन इयङादेशे कृते ॥ इयाय ॥ अतुसि धातुद्वित्वे इ इ अतुः इति जातं तत्र **इणो यण्** अजादौ प्रत्यये इति यणि **दीर्घ इणः किति** इति दीर्घत्वे ॥ ईयतुः ॥ उसि । ईयुः ॥ थलि द्वित्वे इ इ थ इति जाते क्रादिनियमादिटि च कृते इ इ इ थ इति जातं तत्र **सार्वधातुकार्द्धधातुकयो**रिति गुणे अयादेशे च कृते इ अयिथ इति जातं तत्र **अभ्यासस्यासवर्णे** इति इयङि कृते कृते च यकारस्यापारेण संयोगे ॥ इययिथ ॥ **अजन्तोऽकारवान् वा यस्तास्यनिट् थलि वेडय**मिति इटोऽभावे गुणे **अभ्यासस्यासवर्णे** इति इयङि च कृते ॥ इयेथ ॥ लुटस्तिपि तासौ तिपो डावे डित्वसामर्थ्यादभस्यापि टेर्लोपे गुणे च ॥ एता ॥ लृटस्तिपि स्ये गुणे सस्य षत्वे च ॥ एष्यति ॥ लोटस्तिपि शपि शपो लोपे गुणे **एरु**रिति तिप इकारस्योत्वे च ॥ एतु ॥ लङस्तिपि शपि शपो लोपे **आडजादीना**मिति आटि **इतश्चे**ति तिप इकारलोपे **आटश्चे**ति वृद्धौ च कृतायाम् ॥ ऐत् ॥ तामि । ऐताम् ॥ झौ झेरन्तादेशे आटि **आटश्चे**ति वृद्धौ कृतायां ऐअन्तीति जातं तत्र **एचोऽयवायाव** इति आयि आयन्तीति जातं तत्र **इतश्चे**ति तिप इकारलोपे **संयोगान्तस्य लोप** इति तकारलोपे च ॥ आयन् विधिलिङस्तिपि यासुटि सुटो लोपे च **लिङः सलोपोऽनन्त्यस्ये**ति सलोपे **इतश्चे**ति तिप इकारलोपे च ॥ इयात् ॥ एतेर्लिङि इत्यनेन निर् ईयादित्यस्य निरियात् अभि ईयादित्यस्य अभीयात् ॥ इति रूपे भवतः । अणः किं प्रयोजनं सम् आ ईयात् गुणे कृते इण्-

---

१ एतेर्लिङि ॥ अत्र आर्धधातुक इति स्वरूपकथनार्थं प्रक्षिप्तं किदिति लिटीत्येतावतैवेष्टसिद्धेः । उभयत आश्रयणे नान्तादिवत् । अयं भावः । अभीयादित्यत्र पूर्वान्तत्वमाश्रित्योपसर्गत्वं परादिवद्भावेनेण्धातुत्वमाश्रित्य एतेर्लिङीत्यनेन ह्रस्वत्वं प्राप्तं तदनेन वार्यते । इदं प्राचामनुरोधेन नव्यास्तु अभि ईयादित्यत्राकः सवर्णे दीर्घ इत्यनेन दीर्घोऽपि प्राप्तः एतेर्लिङीत्यनेन ह्रस्वत्वमपि प्राप्तं वार्णादाङ्गं बलीय इति पूर्वं ह्रस्वे पश्चाद्दीर्घे लक्ष्ये लक्षणन्यायेन पुनर्न ह्रस्व इति वचनं न कर्तव्यमिति ॥

उपसर्गात्परस्य इणोऽणो ह्रस्व आर्धधातुके किति लिङि। निरियात् । उभयत आश्रयणे नान्तादिवत् । अभीयात् । अणः किम् । समेयात् ॥ **इणो गा लुङि** ।२।४।४५। गातिस्थेति सिचो लुक् । अगात् ऐष्यत् । शीङ् स्वप्ने १८ ॥ **शीङः सार्वधातुके गुणः** ।७

---

संबन्ध्यणोऽभावे एतेर्लिङीति ह्रस्वत्वाभावे ॥ समेयात् ॥ आशीर्लिङस्तिपि यासुटि उट्भागलोपे **इतश्चे**ति तिप इकारलोपे **स्कोः संयोगाद्योरन्ते** चेति सकारलोपे **अकृत्सार्वधातुकयोर्दीर्घ** इति दीर्घत्वे च ॥ ईयात् ॥ लुङस्तिपि **च्लि लुङी**ति च्लौ **च्लेः सिच्** इति सिचि इचो लोपे **इणो गा लुङी**ति इणो गात्वे **लुङ्लङ्लृङ्क्ष्वडुदात्त** इति अटि **गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेष्वि**ति सिचो लोपे **इतश्चे**ति तिप इकारलोपे ॥ अगात् ॥ लृङस्तिपि स्ये **आडजादीनामिति** आटि **आटश्चे**ति वृद्धौ सस्य षत्वे **इतश्चे**ति तिप इकारलोपे च ॥ ऐष्यत् ॥ शीङ् स्वप्ने धातुर्वर्तते ततो ङित्त्वाल्लट आत्मनेपदप्रत्यये ते आगते **शीङः सार्वधातुके गुण** इति गुणे ॥ शेते ॥ आतामि **शीङः सार्वधातुके गुण** इति गुणे अयादेशे च ॥ शयाते ॥ झे **शीङः सार्वधातुके गुण** इति गुणे शे झ इति जातं तत्र **आत्मनेपदेष्वनत** इत्यनेन झस्य अदादेशे कृते शे अत इति जातं तत्र **शीङो रुट्** इत्यनेन झादेशस्यातो रुटि कृते शेरुट् अत इति जाते उटो लोपे **टित आत्मनेपदानां टेरे** इति टेरेत्वे च कृते ॥ शेरते ॥ लटो मध्यमपुरुषैकवचने थासि **थासः से** इति थासः से कृते **शीङः सार्वधातुके गुण** इति गुणे सस्य षत्वे च ॥ शेषे ॥ आथामि गुणे अयि **टित आत्मनेपदानां टेरे** इति टेरेत्वे च ॥ शयाथे ॥ ध्वमि गुणे ॥ शेध्वे ॥ लट उत्तमैकवचने इटि गुणे अयादेशे टेरेत्वे च कृते ॥ शये ॥ वहौ गुणे टेरेत्वे ॥ शेवहे ॥ महिङि गुणे टेरेत्वे च ॥ शेमहे ॥ शीङ् अग्रे लिटस्ते **लिटि धातोरनभ्यासस्ये**ति द्वित्वे शी शी त इति जातं तत्र **ह्रस्व** इत्यभ्यासाचो ह्रस्वत्वे **लिटस्तझयोरेशिरेच्** इति एशि कृते कृते च यणि ॥ शिश्ये ॥ आतामि शीङो द्वित्वे अभ्यासाचो ह्रस्वत्वे **इको यणची**ति यणि टेरेत्वे च ॥ शिश्याते ॥ झे शीङो द्वित्वे अभ्यासाचो ह्रस्वत्वे **लिटस्तझयोरेशिरेच्** इति झस्य इरेचि कृते शी शी इरेच् इति जातं तत्र **इको यणची**ति यणि टेरेत्वे ह्रस्वे च ॥ शिश्यिरे ॥ लुटस्ते परे **स्यतासी लृलुटो**रिति तासौ गुणे **आर्द्धधातुकस्येड्वलादे**रिति इटि अयादेशे **लुटः प्रथमस्य डारौरस** इति तस्य डात्वे डित्त्वसामर्थ्याद्भस्यापि टेर्लोपे ॥ शयिता ॥ लृटस्ते **स्यतासी लृलुटो**रिति स्ये इटि गुणे अयि सस्य षत्वे ॥ शयिष्यति । शीङ् अग्रे लोटस्ते **शीङः सार्वधातुके गुण** इति गुणे **टित आत्मनेपदानां टेरे** इति टेरेत्वे शेते इति जातं तत्र **आमेत** इत्यनेन लोट एकारस्य आमि कृते ॥ शेताम् ॥ आतामि गुणे अयादेशे च ॥ शयाताम् ॥ झे परे **आत्मनेपदेष्वनत** इति झस्य अदादेशे **शीङः सार्वधातुके गुण** इति गुणे शे

।४।२१। क्ङिति चेत्यस्यापवादः । शेते शयाते ॥ **शीङो रुट्** ।७।१।६। शीङः परस्य झादेशस्यातो रुडागमः स्यात् । शेरते । शेषे शयाथे शेध्वे । शये शेवहे शेमहे । शिश्ये शिश्याते शिश्यिरे । शयिता शयिष्यते शेताम् शयाताम् अशेत अशयाताम् अशेरत । शयीत शयीयाताम् शयीरन् । शयिषीष्ट अशयिष्ट अशयिष्यत । इङ् अध्ययने १९ । इङिकावध्युपसर्गतो न व्यभिचरतः । अधीते अधीयाते अधीयते ॥ **गाङ् लिटि** ।

---

अत इति जाते **शीङो रुट्** इति रुटि उटो लोपे टेरेत्वे शेरते इति जातं तत्र **आमेतः** इति लोट एकारस्य आमि कृते ॥ शेरताम् ॥ लङस्ते **शीङः सार्वधातुके गुण** इति गुणे अटि च ॥ अशेत ॥ आतामि गुणे अयि अटि च ॥ अशयातां ॥ झे गुणे अटि झस्य अत् आदेशे **शीङो रुट्** इति रुटि उटो लोपे च कृते ॥ अशेरत ॥ शीङ् अग्रे विधिलिङस्ते लिङः **सीयुट्** इति सीयुटि उटो लोपे **लिङः सलोपोऽनन्त्यस्ये**ति सलोपे **लोपो व्योर्वली**ति यलोपे **शीङः सार्वधातुके गुण** इति गुणे अयादेशे च कृते शयीत ॥ आतामि सीयुटि उटो लोपे **शीङः सार्वधातुके गुण** इति गुणे **लिङः सलोपोनन्त्यस्ये**ति सलोपे अयादेशे संयोगे च ॥ शयीयाताम् ॥ झे सीयुटि उटो लोपे गुणे सलोपे **झस्य रन्** इति झस्य रनि कृते **लोपो व्योर्वली**ति यलोपे अयादेशे च ॥ शयीरन् ॥ शीङ् अग्रे आशीर्लिङस्ते लिङः **सीयुट्** इति सीयुटि उटो लोपे **सार्वधातुकार्धधातुकयो**रिति गुणे **आर्धधातुकस्येड्वलादे**रिति इटि अयि **लोपो व्योर्वली**ति यलोपे **सुट्तिथो**रिति सुटि उटो लोपे सकारयोः षत्वे च ॥ शयिषीष्ट ॥ लुङस्ते अटि च्लौ च्लेः सिचि इचो लोपे इटि **सार्वधातुकार्धधातुकयो**रिति गुणे अयादेशे सस्य षत्वे ष्टुत्वे च ॥ अशयिष्ट ॥ लृङस्ते **स्यतासी लृलुटो**रिति स्ये अटि इटि गुणे **एचोऽयवायाव** इति अयादेशे सस्य षत्वे च कृते ॥ अशयिष्यत ॥ अध्युपसर्गपूर्व इङ् अध्ययने धातुर्वर्ततेऽग्रे लटस्ते समागते अधि इ त इति जातं तत्र **टित आत्मनेपदानां टेरे** इति टेरेत्वे **अकः सवर्णे दीर्घ** इति दीर्घत्वे च ॥ अधीते ॥ आतामि, अधि इ आताम् इति जातं तत्र **अचि श्नुधातुभ्रुवां य्वोरियङुवङौ** इति इयङि कृते **अकः सवर्णे दीर्घ** इति दीर्घत्वे **टित आत्मनेपदानां टेरे** इति टेरेत्वे ॥ अधीयाते ॥ लटो झे **आत्मनेपदेष्वनतः** इति झस्य अति कृते अधि इ अत इति जातं तत्र **अचि-श्नुधातुभ्रुवां य्वोरियङुवङौ** इति इयङि टेरेत्वे दीर्घत्वे च ॥ अधीयते ॥ थासि **थासः से** सस्य षत्वे च ॥ अधीषे ॥ आथामि इयङि टेरेत्वे दीर्घत्वे च ॥ अधीयाथे ॥ ध्वमि दीर्घत्वे टेरेत्वे च ॥ अधीध्वे ॥ इटि इयङि टेरेत्वे ॥ अधीये ॥ वहौ टेरेत्वे ॥ अधीवहे ॥ महिङि टेरेत्वे च ॥ अधीमहे ॥ लिटस्ते समागते अधि इ त इति जातं तत्र **गाङ् लिटि** इति इङो गात्वे अधिगा त इति जातं तत्र **लिटि धातोरनभ्यासस्ये**ति द्वित्वे अधिगा गा त इति जाते **ह्रस्व** इत्यभ्यासस्याचो ह्रस्वत्वे अधिग गा त इति जाते **कुहोश्चु**रिति गस्य जत्वे

अध्यैयि अध्यैवहि अध्यैमहि । अधीयीत अधीयीयाताम् अधीयीरन् । अध्येषीष्ट ॥ **विभाषा लुङ्लृङोः ।२।४।५०।** इङो गाङ् वा स्यात् ॥ **गाङ्कुटादिभ्योऽञ्णिन्ङित् ।१।२।१।** गाङादेशात्कुटादिभ्यश्च परेऽञ्णितः प्रत्यया ङितः स्युः ॥ **घुमास्थागापाजहातिसां हलि ।६।४।६६।** एषामात ईत्स्याद्धलादौ क्ङित्यार्धधातुके । अध्य-

---

अध्यैत ॥ लङः प्रथमपुरुषद्विवचने आतामि **आडजादीना**मिति आटि अधि आ इ आताम् इति जातं तत्र **अचिश्नुधातुभ्रुवां य्वोरियङुवङौ** इति इयङि **आटश्चे**ति वृद्धौ **इको यण्**-**ची**ति यणि **अकः सवर्णे दीर्घ** इति दीर्घे च ॥ अध्यैयाताम् ॥ झे **आत्मनेपदे**-**ष्वनत** इति झस्य अति अधि इ अत इति जातं तत्र **आडजादीना**मिति आटि अधि आ इ अत इयङि अधि आ इय् अत इति जातं तत्र **आटश्चे**ति वृद्धौ यणि **अतो गुणे** इति पररूपैकादेशे ॥ अध्यैयत ॥ थासि आटि वृद्धौ यणि च सस्य रुत्वे रेफस्य विसर्गत्वे च ॥ अध्यैथाः ॥ आथामि **आडजादीना**मिति आटि **अचिश्नुधातुभ्रुवा**मिति इयङि **आटश्चे**ति वृद्धौ यणि दीर्घत्वे च ॥ अध्यैयाथाम् ॥ ध्वमि आटि वृद्धौ यणि च ॥ अध्यैध्वम् ॥ इटि **आडजादीना**मिति आटि इयङि **आटश्चे**ति वृद्धौ यणि च ॥ अध्यैयि ॥ वहौ । अध्यैवहि ॥ महिङि । अध्यैमहि ॥ विधिलिङ्स्ते **लिङः सीयुट्** इति सीयुटि उटो लोपे **लिङः सलोपोऽनन्त्यस्ये**ति सलोपे **लोपो व्योर्वली**ति यलोपे ॥ अधीयीत ॥ आतामि सीयुटि उटो लोपे सलोपे इयङि दीर्घत्वे च ॥ अधीयीयाताम् ॥ झे **झस्य रन्** इति झस्य रनादेशे **लिङः सीयुट्** इति सीयुटि उटो लोपे **लिङः सलोपोऽनन्त्यस्ये**ति सलोपे **लोपो व्योर्वली**ति यलोपे **अचिश्नुधातुभ्रुवा**मिति इयङि दीर्घत्वे च कृते ॥ अधीयीरन् ॥ आशीर्लिङस्ते सीयुटि उटो लोपे यलोपे **सार्वधातुकार्धधातुकयो**रिति गुणे अधि ए सी त इति जातं तत्र इको यणि **सुट्तिथोः** इति सुटि उटो लोपे सकारयोः षकारत्वे **ष्टुना ष्टु**रिति ष्टुत्वे च ॥ अध्येषीष्ट ॥ अधिपूर्वादिङ्धातोरग्रे लुङः प्रथमपुरुषैकवचने ते आगते **विभाषा लुङ्लृङोः** इति इङो गाङि कृते च्लौ च्लेः सिचि च कृते अधि गास् त इति जातं तत्र **गाङ्कुटादिभ्योऽञ्णिन्ङित्** इति सिचो ङित्त्वे **घुमास्थागापाजहातिसां हलि** इति गकारोत्तरवर्तिन आकारस्य ईकारे कृते अधि गीस् त इति जाते **लुङ्लङ्लृङ्क्ष्वडुदात्त** इति अटि यणि च सस्य षत्वे **ष्टुना ष्टु**रिति ष्टुत्वे च ॥ अध्यगीष्ट ॥ वाग्रहणात् गाङादेशाभावे **आडजादीना**मिति आटि **आटश्चे**ति वृद्धौ यणि च कृते अध्यै त इति जातं तत्र च्लौ च्लेः सिचि इटो लोपे सस्य षत्वे ष्टुत्वे च ॥ अध्यैष्ट ॥ लृङस्ते स्ये तस्य ङित्त्वे आकारस्य ईकारे अटि यणि च सस्य षत्वे च कृते ॥ अध्यगीष्यत ॥ गाङादेशाभावपक्षे **आडजादीनामिति** आटि **आटश्चे**ति वृद्धौ यणि **स्यतासी लृलुटो**-

---

१ गाङ्कुटादिभ्योऽञ्णिन्ङित् ॥ अत्र गाङ्ग्रहणेन गाति न गृह्यते । तदर्थतया ङकारानुबन्धस्य तत्र चरितार्थत्वात् । आदेशङकारस्त्वचरितार्थः स्थानिवद्भावेनैव तद्वतः सिद्धत्वादत आह । गाङादेशादिति ।

गीष्ट अध्यैष्ट अध्यगीष्यत अध्यैष्यत । दुह प्रपूरणे २८ दोग्धि दुग्धः दुहन्ति । धोक्षि । दुग्धे दुहाते दुहते । धुक्षे दुहाथे धुग्ध्वे । दुहे दुहवहे दुहमहे । दुदोह दुदुहे दोग्धा धोक्ष्यति

---

रिति स्ये सस्य षत्वे च कृते ॥ अध्यैष्यत ॥ दुह प्रपूरणे धातुर्वर्तते लटस्तिपि **दादेर्धातोर्घ** इत्यनेन हस्य घकारे कृते **झषस्तथोर्धोऽध** इति तकारस्य धकारे कृते दुघ् धि इति जाते तत्र **झलां जश् झशि** इति घस्य गत्वे **सार्वधातुकार्द्धधातुकयो**रिति गुणे च कृते ॥ दोग्धि ॥ दुह् अथे तसि **दादेर्धातोर्घ** इति हस्य घत्वे **झषस्तथोर्धोऽध** इति तकारस्य धकारे **झलां जश् झशी**ति घस्य गत्वे सकारस्य रुत्वे रेफस्य विसर्गत्वे **क्ङिति चे**ति गुणाभावे ॥ दुग्धः ॥ धस्यान्तादेशे संयोगे च ॥ दुहन्ति ॥ लटः सिपि **पुगन्तलघूपधस्ये**ति गुणे **दादेर्धातोर्घ** इति हस्य घत्वे **एकाचो बशो भष् झषन्तस्य स्ध्वोः** इति दस्य धत्वे च कृते धोघ् सि इति जातं तत्र **झलां जश् झशि** इति घस्य गकारे कृते **खरि चे**ति गस्य कत्वे **आदेशप्रत्ययो**रिति सस्य षत्वे कषोः संयोगात् क्षकारे कृते ॥ धोक्षि ॥ आत्मनेपदिप्रत्यये लटः प्रथमपुरुषैकवचने ते समागते **टित आत्मनेपदानां टेरे** इत्येत्वे **सार्वधातुकमपित्** इति तकारस्य ङिद्वत्वे ङिद्वत्त्वाच्च **क्ङिति चे**ति गुणाभावे **दादेर्धातोर्घ** इति हस्य घे **झषस्तथोर्धोऽध** इति तकारस्य धकारे **झलां जश् झशी**ति घस्य गत्वे च कृते ॥ दुग्धे ॥ आतामि टेरेत्वे ॥ दुहाते ॥ झे **आत्मनेपदेष्वनत** इति झस्य अति टेरेत्वे च कृते ॥ दुहते ॥ थासि **थासः से** इति थासः सेकारे कृते **दादेर्धातोर्घ** इति हस्य घत्वे **एकाचो बशो भष् झषन्तस्य स्ध्वोः** इति दस्य धत्वे **झलां जश् झशि** इति घस्य गत्वे **खरि चे**ति गस्य कत्वे **आदेशप्रत्ययो**रिति सस्य षत्वे कषोः संयोगात्क्षे ङिद्वत्त्वाद्गुणाभावे च ॥ ॥ धुक्षे ॥ आथामि टेरेत्वे ॥ दुहाथे ॥ ध्वमि **टित आत्मनेपदानां टेरे** इति टेरेत्वे **दादेर्धातोर्घ** इति हस्य घत्वे **एकाचो बशो भष् झषन्तस्य स्ध्वो**रिति दस्य धत्वे **झलां जश् झशी**ति घस्य गत्वे ॥ धुग्ध्वे ॥ लट उत्तमपुरुषैकवचने इटि टेरेत्वे च ॥ दुहे ॥ वहि टेरेत्वे ॥ दुहवहे ॥ महिङि टेरेत्वे च ॥ दुहमहे ॥ दुह् धातोर्लिटस्ते **लिटि धातो**रिति धातोर्द्वित्वे **हलादिः शेष** इति हलोपे **लिटस्तझयोरेशिरेच्** इति तकारस्य एशि संयोगे च ॥ दुदुहे ॥ परस्मैपदप्रत्यये लिटस्तिपि तिपो णलि धातोर्द्वित्वे **हलादिः शेष** इति हलोपे **पुगन्तलघूपधस्ये**ति **सार्वधातुकार्द्धधातुकयो**रिति गुणे च ॥ दुदोह ॥ लुटस्तिपि **स्यतासी लृलुटो**रिति तासौ **दादेर्धातोर्घ** इति हस्य घत्वे **झषस्तथोर्धोऽध** इति तकारस्य धकारे **लुटः प्रथमस्य डारौरसः** इति तिपो डात्वे डित्त्वसामर्थ्यादभस्यापि टेर्लोपे **पुगन्तलघूपधस्ये**ति गुणे च ॥ दोग्धा ॥ लृटस्तिपि **स्यतासी लृलुटो**रिति स्ये **दादेर्धातोर्घ** इति हस्य घत्वे गत्वे **एकाचो बशो भष् झषन्तस्य स्ध्वोः** इति दस्य धत्वे **खरि चे**ति गस्य कत्वे **आदेशप्रत्यय-**

धोक्ष्यते । दोग्धु दुग्धात् दुग्धाम् दुहन्तु । दुग्धि दुग्धात् दुग्धम् दुग्ध । दोहानि । दुग्धाम् दुहाताम् दुहताम् । धुक्ष्व दुहाथाम् धुग्ध्वम् । दोहै दोहावहै दोहामहै । अधोक् अदुग्धाम् अदुहन् । अदोहम् । अदुग्ध अदुहाताम् अदुहत । अधुग्ध्वम् दुह्यात् दुहीत ॥

---

**षढोः कः सि** इति सस्य षत्वे **पुगन्तलघूपधस्य** इति गुणे च ॥ धोक्ष्यति ॥ आत्मनेपदिप्रत्यये ॥ धोक्ष्यते ॥ लोटस्तिपि **दादेर्धातोर्घः** इति हस्य घत्वे **झषस्तथोर्धोऽधः** इति तकारस्य धकारे **झलां जश् झशि** इति घस्य गत्वे **पुगन्तलघूपधस्य** इति गुणे **एरुः** इति तिप इकारस्योकारे च कृते ॥ दोग्धु ॥ तातङि गुणाभावे ॥ दुग्धात् ॥ तामि । दुग्धाम् ॥ झौ । दुहन्तु ॥ लोटः सिपि **सेर्ह्यपिच्च** इति सेर्हौ **हुझल्भ्यो हेर्धिः** इति हेर्धित्वे दुह् धि इति जातं । तत्र **दादेर्धातोर्घः** इति हस्य घत्वे **झलां जश् झशि** इति घस्य गत्वे च ॥ दुग्धि ॥ तातङि । दुग्धात् ॥ तमि । दुग्धम् ॥ ते । दुग्ध ॥ मिपि **मेर्निः** इति मेर्नित्वे **आडुत्तमस्य पिच्च** इति आटि **पुगन्तलघूपधस्य** इति गुणे च ॥ दोहानि ॥ वसि **नित्यं ङितः** इत्यनेन सलोपे **आडुत्तमस्य** इति आटि **पुगन्तलघूपधस्य** इति गुणे च ॥ दोहाव ॥ मस्यपि तथा ॥ दोहाम ॥ आत्मनेपदिप्रत्यये लोटस्ते हस्य घत्वे तकारस्य धत्वे घस्य गत्वे टेरेत्वे **आमेतः** इत्येकारस्यामि च ॥ दुग्धाम् ॥ आताम् । दुहाताम् ॥ झस्य **आत्मनेपदेष्वनतः** इति अति टेरेत्वे **आमेतः** इति एकारस्य आमि ॥ दुहताम् ॥ दुह् धातोः लोटो मध्यमपुरुषैकवचने थासि **थासः से** इति थासः सेकारे **सवाभ्यां वामौ** इति सकारोत्तरवर्त्त्येकारस्य वकारे **दादेर्धातोर्घः** इति हस्य घत्वे गत्वे **एकाचो बशो** इति दस्य धत्वे **खरि च** इति घस्य कत्वे **आदेशप्रत्यययोः** इति सस्य षत्वे कषोः संयोगे क्ष इति क्षे कृते ॥ धुक्ष्व ॥ आथामि ॥ दुहाथाम् ॥ ध्वमि **दादेर्धातोर्घः** इति हस्य घत्वे **एकाचो बशः** इति दस्य धत्वे **झलां जश् झशि** इति घस्य गत्वे ॥ धुग्ध्वम् ॥ लोट उत्तमैकवचने इटि टेरेत्वे **एत ऐ** इत्यनेन एकारस्यैकारे कृते **पुगन्तलघूपधस्य** इति गुणे ॥ दोहै ॥ वहि टेरेत्वे **एत ऐ** इति एकारस्यैकारे **आडुत्तमस्य** इति आटि **पुगन्तलघूपधस्य** इति गुणे ॥ दोहावहै ॥ एवं महिङि ॥ दोहामहै ॥ दुह् धातो लङस्तिपि **दादेर्धातोर्घः** इति हस्य घत्वे गत्वे **खरि च** इति गस्य कत्वे **एकाचो बशो भष्** इति दस्य धत्वे **पुगन्तलघूपधस्य** इति गुणे **लुङ्लङ्लृङ्क्ष्वडुदात्तः** इति अटि च अधोक् ति इति जातं तत्र **इतश्च** इति तिप इकारलोपे **हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्** इति तकारलोपे च ॥ अधोक् ॥ ताभि, अदुग्धाम् ॥ झौ झेरन्तादेशे अटि तिप इकारलोपे तकारलोपे च ॥ अदुहन् । अमि गुणे अटि च ॥ अदोहम् ॥ आत्मनेपदिप्रत्यये ते । अदुग्ध ॥ आतामि । अदुहाताम् ॥ झे **आत्मनेपदेष्वनतः** इति अति ॥ अदुहत ॥ ध्वमि अटि दस्य धत्वे हस्य घत्वे घस्य गत्वे च ॥ अधुग्ध्वम् ॥ विधिलिङि **यासुट् परस्मैपदेषूदात्तो ङिच्च** इति यासुटि उटो लोपे **लिङः सलोपोऽनन्त्यस्य** इति सलोपे **इतश्च** इति तिप इकारलोपे॥ दुह्यात् ॥ आत्मने-

**लिङ्सिचावात्मनेपदेषु** ।१।२।११। इक्समीपाद्धलः परौ झलादी लिङ्सिचौ कितौ स्तस्तङि । धुक्षीष्ट ॥ **शल इगुपधादनिटः क्सः** ।३।१।४५। इगुपधो यः शलन्तस्तस्मादनिटश्च्लेः क्सादेशः स्यात् । अधुक्षत् ॥ **लुग्वा दुहदिहलिहगुहामात्मनेपदे दन्त्ये** ।७।३।७३। एषां क्सस्य लुग्वा स्याद्दन्त्ये तङि । अदुग्ध अधुक्षत ॥ **क्सस्याचि** ।७।३।७२। अजादौ तङि क्सस्य लोपः । अधुक्षाताम् अधुक्षन्त ।

---

पदिप्रत्यये लिङस्ते **लिङः सीयुट्** इति सीयुटि उटो लोपे **लिङः सलोपोऽनन्त्यस्ये**ति सलोपे **लोपो व्योर्वली**ति यलोपे हकारस्येकारेण सह संयोगे कृते ॥ दुहीत ॥ दुह् अग्रे आशीर्लिङस्ते सीयुटि **लिङ्सिचावात्मनेपदेषु** इत्यनेन सीयुट्विशिष्टस्य लिङः कित्वे **लोपो व्योर्वली**ति यलोपे **दादेर्धातोर्घ** इति हस्य घत्वे **खरि चे**ति घस्य कत्वे **एकाचो बश** इति दस्य धत्वे **आदेशप्रत्यययो**रिति सस्य षत्वे **सुट् तिथो**रिति सुटि उटो लोपे सस्य षत्वे ष्टुत्वे कषोः संयोगात्क्षे कृते ॥ धुक्षीष्ट ॥ दुह् अग्रे लुङस्तिपि **च्लि लुङी**ति च्लौ **शल इगुपधादनिटः क्स** इति च्लेः क्सादेशे दुह् क्स ति इति जातं तत्रैकाचो बश इति दस्य धत्वे **दादेर्धातोर्घ** इति हस्य घत्वे **झलां जश् झशि** इति घस्य गत्वे **खरि चे**ति कत्वे धुक् क्स ति इति जाते **लशक्वतद्धिते** इति क्सादेशादेः कस्येत्संज्ञायां लोपे च कृते धुक् स ति इति जातं तत्र **लुङ्लङ्लृङ्क्ष्वडुदात्त** इति अटि **इतश्चे**ति तिप इकारलोपे सस्य षत्वे कषोः संयोगे क्ष इति क्षे ॥ अधुक्षत् ॥ आत्मनेपदप्रत्यये लुङस्ते च्लौ च्लेः **शल इगुपधादनिटः क्स** इति क्सादेशे दुह् क्स त इति जातं तत्र **लुग्वा दुहदिहलिहगुहामात्मनेपदे दन्त्ये** इत्यनेन क्सलोपे अटि **दादेर्धातोर्घ** इति हस्य घत्वे **झषस्तथोर्धो ध** इति दकारस्य धकारे **झलां जश् झशि** इति घस्य गत्वे ॥ अदुग्ध ॥ क्सलोपाभावपक्षे ॥ अधुक्षत ॥ आतामि च्लौ च्लेः क्से **क्सस्याचि** इति क्सलोपे प्राप्ते **अलोन्त्यस्ये**त्यनेनान्त्यस्य अकारस्य लोपे जाते **लशक्वतद्धिते** इति ककारलोपे च कृते दुह् स् आताम् इति जातं तत्र अटि **एकाचो बश** इति दस्य धत्वे **दादेर्धातोर्घ** इति हस्य घत्वे **खरि चे**ति घस्य कत्वे **आदेशप्रत्यययो**रिति सस्य षत्वे संयोगे च कृते ॥ अधुक्षाताम् ॥ झे **झोन्त** इति झस्यान्तादेशे **क्सस्याची**ति क्सोऽन्त्यलोपे कलोपे अटि दस्य धत्वे हस्य घत्वे घस्य कत्वे सस्य षत्वे संयोगे च ॥ अधुक्षन्त ॥ थासि च्लौ च्लेः क्सादेशे **लुग्वादुहदिहलिहगुहामात्मनेपदे दन्त्ये** इति क्सलोपे अटि **दादेर्धातोर्घ** इति हस्य घत्वे **झषस्तथोर्धोऽध** इति थस्य धत्वे **झलां जशझशी**ति घस्य गत्वे च ॥ अदुग्धाः ॥ लोपाभावपक्षे ॥ अधुक्षथाः ॥ आथामि च्लौ च्लेः क्सादेशे **क्सस्याचि** इति सर्वस्य क्सस्य लोपे प्राप्ते **अलोऽन्त्यस्ये**ति क्सोत्तरवर्णकारलोपे **लशक्वतद्धिते** इति कलोपे च दुह् स आथामिति जातं तत्र अटि दस्य धत्वे हस्य घत्वे सस्य षत्वे संयोगे अटि

अदुग्धाः अधुक्षथाः अधुक्षाथाम् अधुग्ध्वम् अधुक्षध्वम् । अधुक्षि अदुह्वहि अधुक्षावहि अधुक्षामहि । अधोक्ष्यत । एवं दिह् उपचये २१ । लिह् आस्वादने २२ लेढि लीढः लिहन्ति । लेक्षि । लीढे लिहाते लिहते । लिक्षे लिहाथे लीढ्वे । लिलेह लिलिहे लीढासि

---

च कृते ॥ अधुक्षाथाम् ॥ ध्वमि क्सलोपे । अधुग्ध्वम् ॥ क्सलोपाभावपक्षे च ॥ अधुक्षध्वम् ॥ इटि **क्सस्याचि**ीति स्कोत्तरवर्त्यकारलोपे कलोपे अटि दस्य भत्वे हस्य घत्वे घस्य कत्वे सस्य षत्वे च ॥ अधुक्षि ॥ वहौ अटि ॥ क्सलोपे । अदुह्वहि ॥ महिङि च ॥ अदुह्महि ॥ क्सलोपाभावपक्षे अधुक्षावहि ॥ अधुक्षामहि ॥ दुह् अग्रे लृङस्ते **स्यतासी लृलुटो**रिति स्ये **लुङ्लङ्लृ-ङ्क्ष्वडुदात्त** इति अटि **एकाचो बशो** इति दस्य धत्वे **दादेर्धातोर्घ** इति हस्य घत्वे **ख-रि** चेति घस्य कत्वे सस्य षत्वे गुणे च कृते ॥ अधोक्ष्यत ॥ दिह्धातो रूपाणि दुहसदृशानि ज्ञेयानि । लिह आस्वादने धातुर्वर्ततेऽग्रे लटस्तिपि **पुगन्तलघूपधस्ये**ति गुणे **हो ढ** इति हस्य ढत्वे **झषस्तथोर्धोऽध** इति तिपस्तकारस्य धकारे लेढ् धि इति जाते तत्र **ष्टुना ष्टु**रिति धकारस्य ढत्वे **ढो ढे लोप** इति ढलोपे च ॥ लेढि ॥ तसि **हो ढ** इति हस्य ढत्वे **झषस्त-थोर्धोऽध** इति तकारस्य धत्वे **ष्टुना ष्टु**रिति धस्य ढत्वे **ढो ढ** इति ढलोपे **ढ्रलोपे पूर्वस्य दीर्घोऽण** इति लकारोत्तरवर्तिन इकारस्य दीर्घत्वे ॥ लीढः ॥ झौ झस्यान्तादेशे लिहन्ति । सिपि **हो ढ** इति हस्य ढत्वे लिढ् सि इति जाते तत्र **षढोः कः सि** इति ढस्य कत्वे **आदेशप्रत्यययो**रिति सस्य षत्वे **पुगन्तलघूपधस्येति** गुणे कषो संयोगे च कृते ॥ ॥ लेक्षि ॥ थसि । लीढः ॥ थे । लीढ ॥ मिपि गुणे लेह्मि ॥ वसि गुणे ॥ लेह्व ॥ मसि गुणे ॥ लेह्म ॥ आत्मनेपदे लटस्ते **हो ढ** इति हस्य ढे **झषस्तथोर्धोऽध** इति तकारस्य धकारे **ष्टुना ष्टु**रिति ष्टुत्वे लिढ् ढे इति जाते तत्र **ढो ढे लोप** इति ढलोपे **ढ्रलोपे पूर्वस्य दीर्घोऽण** इति पूर्वाणो दीर्घत्वे ॥ लीढे ॥ आतामि टेरेत्वे ॥ लिहाते ॥ झे **आत्मनेपदेष्व-नत** इति झस्य अटि **टित आत्मनेपदानां टेरे** इति टेरेत्वे च ॥ लिहते ॥ थासि **थासः से** इति थास सेकारे **हो ढ** इति हस्य ढकारे **षढोः कः सि** इति ढस्य कत्वे कषो संयोगे च ॥ लिक्षे ॥ आथामि ॥ लिहाथे ॥ ध्वमि टेरेत्वे **हो ढ** इति हस्य ढत्वे ष्टु-त्वेन धस्य ढत्वे लिढ ढ्वे इति जाते तत्र **ढो ढे लोप** इति ढस्य लोपे **ढ्रलोपे पूर्वस्य दीर्घोण** इति दीर्घत्वे च ॥ लीढ्वे ॥ लिटस्तिपि णलि धातोर्द्वित्वे हल्लोपे गुणे च ॥ लिलेह। लिटस्ते धातोर्द्वित्वे हलो लोपे **लिटस्तझयोरेशिरेच्** इति एशि ॥ लिलिहे ॥ लुट सिपि तासौ **हो ढ** इति हस्य ढत्वे **झषस्तथो**रिति धत्वे ढत्वे **ढो ढे लोप** इति ढलोपे **ढ्रलोपे पूर्वस्य दीर्घोऽण** इति पूर्वाणो दीर्घत्वे च ॥ लीढासि ॥ थासि **थासः से** इति थास सेकारे **स्यतासी लृलुटो**रिति तासौ हस्य ढत्वे तकारस्य धकारत्वे धस्य ढत्वे ढलोपे पूर्वाणो दीर्घत्वे च ॥ लीढासे ॥ लृट सिपि **स्यतासी लृलुटो**रिति स्ये **हो ढ**

लीढासे लेक्ष्यति लेक्ष्यते । लेढु लीढात् लीढाम् लिहन्तु । लीढि लेहानि लीढाम् अलेट् अलेड् अलिक्षत् अलिक्षत अलीढ अलेक्ष्यत् अलेक्ष्यत । ब्रूञ् व्यक्तायां वाचि २३ ॥ **ब्रुवः पञ्चानामादित आहो ब्रुवः** ।३।४।८४। ब्रुवो लटस्तिबादीनां पञ्चानां

---

इति हस्य ढत्वे **षढोः कः सि** इति ढस्य कत्वे सस्य षत्वे कषोः संयोगात् क्षकारे गुणे च ॥ लेक्ष्यति ॥ आत्मनेपदे । लेक्ष्यते ॥ लोटस्तिपि हस्य ढत्वे **झषस्तथोर्धो ध** इति तकारस्य धकारे धस्य ष्टुत्वे ढलोपे गुणे **एरुरि**ति इकारस्य उत्वे च । लेढु ॥ तातङि ॥ लीढात् ॥ तामि हस्य ढत्वे तकारस्य ढत्वे ढलोपे पूर्वाणो दीर्घत्वे च ॥ लीढाम् ॥ झौ झेरन्तादेशे **एरुरि**ति तिप इकारस्योकारे ॥ लिहन्तु ॥ सिपि सेर्हित्वे **हेर्धि** रिति हेर्धित्वे हस्य ढत्वे ष्टुत्वेन धस्य ढत्वे ढलोपे पूर्वाणो दीर्घत्वे च ॥ लीढि ॥ मिपि **मेर्निः** इति मेर्नौ आटि गुणे च ॥ लेहानि ॥ आत्मनेपदे लोटस्ते हस्य ढत्वे तकारस्य धत्वे ष्टुत्वे धस्य ढत्वे ढलोपे टेरेत्वे एत आम् इति एकारस्य आमि च ॥ लीढाम् ॥ लङस्तिपि अटि **हो ढ** इति हस्य ढत्वे **पुगन्तलघूपधस्ये**ति गुणे जश्त्वे **वावसाने** इति डस्य टकारे च कृते **इतश्चे**ति तिप इकारलोपे **हल्ङ्याब्** इति तलोपे **वावसाने** इत्यस्याप्राप्तौ ॥ अलेड् ॥ आत्मनेपदे लङस्ते अटि हस्य ढत्वे तकारस्य धत्वे धस्य ष्टुत्वेन ढत्वे **ढो ढे लोप** इति ढलोपे **ढ्रलोपे पूर्वस्य दीर्घोऽण** इति पूर्वाणो दीर्घत्वे ॥ अलीढ ॥ विधिलिङि यासुटि उटो लोपे सलोपे तिप इकारलोपे च ॥ लिह्यात् ॥ आत्मनेपदे विधिलिङस्ते **लिङः सीयुट्** इति सीयुटि उटो लोपे **लोपो व्योर्वली**ति यलोपे **लिङः सलोपोऽनन्त्यस्ये**ति सलोपे ॥ लिहीत ॥ आशीर्लिङस्तिपि यासुटि उटो लोपे **इतश्चे**ति तिप इकारलोपे **स्कोः संयोगाद्योरन्ते चे**ति सलोपे ॥ लिह्यात् ॥ आत्मनेपदे आशीर्लिङस्ते **लिङः सीयुट्** इति सीयुटि उटो लोपे यलोपे **हो ढ** इति हस्य ढत्वे **षढोः कः सी**ति ढस्य कत्वे सस्य षत्वे **सुट् तिथो**-रिति सुटि उटो लोपे सस्य षत्वे ष्टुत्वे गुणे कषोः संयोगात्क्षे च कृते ॥ लिक्षीष्ट ॥ लुङस्तिपि **च्लि लुङी**ति च्लौ च्लेः **शल इगुपधादनिटः क्सः** इति क्से कृते **लशक्वतद्धिते** इति कलोपे अटि च अलिह् स ति इति जातं तत्र **हो ढ** इति हस्य ढत्वे **षढोः कः सी**ति ढस्य कत्वे सस्य षत्वे **इतश्चे**ति तिप इकारलोपे कषयोः संयोगे च ॥ अलिक्षत् ॥ आत्मनेपदे लुङस्ते टेरेत्वे ॥ अलिक्षत ॥ **लुग्वा दुहदिहलिहगुहामात्मनेपदेदन्त्ये** इति वाग्रहणात् क्सादेशाभावे हस्य ढत्वे तकारस्य धत्वे धस्य ढत्वे **ढो ढे लोप** इति ढलोपे **ढ्रलोपे पूर्वस्य दीर्घोऽण** इति दीर्घत्वे अटि च ॥ अलीढ॥ लङस्तिपि अटि **स्यतासी लृलुटो**रिति स्ये हस्य ढत्वे ढस्य कत्वे सस्य षत्वे **इतश्चे**ति तिप इकारलोपे गुणे च कषोः संयोगे च ॥ अलेक्ष्यत् ॥ आत्मनेपदे लृङस्ते ॥ अलेक्ष्यत ॥ ब्रूञ् व्यक्तायां वाचि धातुर्वर्ततेऽस्य लटस्तिपि **ब्रुवः पञ्चानामादित आहो ब्रुवः**

णलादयः पञ्च वा स्युर्ब्रुवश्चाहादेशः। आह आहतुः आहुः॥ **आहस्थः** ।८।२।३५। झलि परे। चर्त्वम्। आत्थ आहथुः॥ **ब्रुव ईट्** ।७।३।९३। ब्रुवः परस्य हलादेः पित ईट् स्यात्। ब्रवीति ब्रूतः ब्रुवन्ति। ब्रूते ब्रुवाते ब्रुवते॥ **ब्रुवो वचिः** ।२।४।५३। आर्धधातुके। उवाच ऊचतुः ऊचुः। उवचिथ उवक्थ ऊचे वक्ता वक्ष्यति वक्ष्यते

---

इत्यनेन लटस्तिपो णलि कृते ब्रुवश्च आहादेशे कृते। आह॥ अतुसि। आहतुः॥ उसि। आहुः। थलि **आहस्थ** इत्यनेन सर्वस्याहस्थाने थे प्राप्ते **अलोऽन्त्यस्ये**त्यनेनान्त्यस्य हस्य स्थाने थे कृते आथ् थ इति जातं तत्र **खरि चे**त्यनेन थस्य तकारे कृते॥ आत्थ॥ अथुसि आहथुः॥ **ब्रुवः पञ्चानामादित आहो ब्रुवः** इति सूत्रस्याप्राप्तौ लटस्तिपि ब्रू ति इति जातं तत्र **ब्रुव ईट्** इत्यनेन ईटि **सार्वधातुकार्धधातुकयो**रिति गुणे **एचोऽयवा-याव** इति अवि च कृते॥ ब्रवीति॥ तसि। ब्रूतः॥ झौ **झोऽन्त** इति झेरन्तादेशे **अचि श्नु-धातुभ्रुवां य्वोरियङुवङौ** इति उवङि कृते॥ ब्रुवन्ति। आत्मनेपदे लटस्ते आगते॥ ब्रूते॥ आतामि **टित आत्मनेपदानां टेरे** इति टेरेत्वे **अचि श्नुधातुभ्रुवां य्वो**रिति उवङि॥ ब्रुवाते॥ झे **आत्मनेपदेष्वनतः** इति झस्य अति उवङि टेरेत्वे च कृते॥ ब्रुवते॥ लिटस्तिपि तिपो णलि **ब्रुवो वचिः** इति ब्रुवो वचौ कृते **लिटि धातोरनभ्यासस्ये**ति द्वित्वे वच् वच् अ इति जाते **हलादिः शेषः** इति चलोपे ववच् अ इति जातं तत्र **लिट्यभ्यासस्योभयेषा**मिति अभ्यासस्य संप्रसारणे प्राप्ते किंनाम संप्रसारणं **इग्यणः संप्रसारण**मिति वकारस्थाने उकारे कृते पूर्वरूपे **अत उपधायाः** इत्यनेन वृद्धौ॥ उवाच॥ अतुसि **ब्रुवो वचिः** इति वचौ **वचिस्वपियजादीनां किति** इति संप्रसारणे पूर्वरूपे कृते उच् अतुस् इति जातं तत्र **लिटि धातोरनभ्यासस्ये**ति द्वित्वे **हलादिः शेषः** इति चलोपे **अकः सवर्णे दीर्घः** इति दीर्घत्वे सस्य रुत्वे रेफस्य विसर्गत्वे च कृते॥ ऊचतुः॥ एवं उसि। ऊचुः॥ थलि क्रादिनियमादिड्विकल्पे **ब्रुवो वचि**रिति वचौ द्वित्वे चलोपे अभ्यासस्य संप्रसारणे च कृते॥ उवचिथ॥ इडभावपक्षे॥ उवक्थ॥ आत्मनेपदे लिटस्ते **ब्रुवो वचिः** इति वचौ **वचिस्वपियजादीनां किति** इति संप्रसारणे पूर्वरूपे उच् त इति जातं तत्र **लिटि धातोरनभ्यासस्ये**ति द्वित्वे **हलादिः शेषः** इति च लोपे दीर्घत्वे **लिटस्तझयोरेशिरेच्** इति एशि कृते॥ ऊचे॥ लुटस्तिपि **स्यतासी ऌलुटो**रिति तासौ **ब्रुवो वचिः** इति वचौ **लुटः प्रथमस्य डारौ-रसः** इति तिपो डात्वे डित्त्वसामर्थ्यादभस्यापि टेर्लोपे **चोः कुः** रिति चस्य कत्वे च॥ वक्ता॥ ऌटस्तिपि स्यादेशे **ब्रुवो वचि**रिति वचौ **चोः कु**रिति चस्य कत्वे सस्य षत्वे कषोः संयोगे च॥ वक्ष्यति॥ आत्मनेपदे टेरेत्वे। वक्ष्यते॥ ब्रू आगमे लोटस्तिपि **ब्रुव ईट्** इति ईटि **सार्वधातुकार्धधातुकयो**रिति गुणे **एचोऽयवायावः** इति अवि एरु-

ब्रवीतु ब्रूतात् ब्रुवन्तु ब्रूहि ब्रवाणि ब्रूताम् ब्रवै अब्रवीत् अब्रूत ब्रूयात् ब्रुवीत उच्यात् वक्षीष्ट ॥ **अस्यतिवक्तिख्यातिभ्योऽङ् ।३।१।५२।** एभ्यश्च्लेरङ् स्यात् ॥ **वच उम् ।७।४।२०।** अङि परे । अवोचत् अवोचत अवक्ष्यत् अवक्ष्यत । ( चर्करीतं च ) चर्करीतमिति यङ्लुगन्तमदादौ बोध्यम् । ऊर्णुञ् आच्छादने २४ ॥ **ऊर्णोतेर्विभाषा ।७।३।९०।** वा वृद्धिः स्याद्धलादौ पिति सार्वधातुके । ऊर्णौति ऊर्णोति ऊर्णुतः

---

रिति तिप इकारस्योत्वे च ॥ ब्रवीतु ॥ आत्मनेपदे लोटस्ते **टित आत्मनेपदानां टेरे** इति टेरेत्वे **आमेत** इति एकारस्य आमि ॥ ब्रूताम् ॥ लङस्तिपि **ब्रुव ईट्** इति ईटि **लुङ्लङ्लृङ्क्ष्वडुदात्त** इति अटि गुणे अवादेशे **इतश्चे**ति तिप इकारलोपे च ॥ अब्रवीत् ॥ आत्मनेपदे लङस्ते अटि च ॥ अब्रूत ॥ विधिलिङस्तिपि **यासुट्परस्मैपदेषूदात्तो ङिच्चे**ति यासुटि उटो लोपे **इतश्चे**ति तिप इकारलोपे **स्कोः संयोगाद्योरन्ते चे**ति सलोपे च ॥ ब्रूयात् ॥ आत्मनेपदे लिङस्ते **लिङः सीयुट्** इति सीयुटि उटो लोपे **लिङः सलोपोऽनन्त्यस्ये**ति सलोपे **लोपो व्योर्वली**ति यलोपे **अचि श्नुधातुभ्रुवां य्वोरि**ति उवङि ॥ ब्रुवीत ॥ आशीर्लिङस्तिपि यासुटि उटो लोपे **ब्रुवो वचिः** इति वचौ **वचिस्वपियजादीना**मिति संप्रसारणे पूर्वरूपे कृते उच् यास् ति इति जातं तत्र **इतश्चे**ति तिप इकारलोपे **स्कोः संयोगाद्योरन्ते चे**ति सलोपे ॥ उच्यात् ॥ आ० पदे आशीर्लिङस्ते सीयुटि उटो लोपे **लोपो व्योर्वली**ति यलोपे च ब्रू सी त इति जातं तत्र **ब्रुवो वचिः** इति वचौ **चोः कुरि**ति चस्य कत्वे **सुट् तिथोरि**ति सुटि उटो लोपे उभयोः सकारयोः षत्वे कषोः संयोगे च ॥ वक्षीष्ट ॥ लुङस्तिपि **च्लि लुङी**ति च्लौ **ब्रुवो वचिरि**ति वचौ **अस्यतिवक्तिख्यातिभ्योऽङ्** इति च्लेरङादेशे कृते वच् अ ति इति जाते अटि **इतश्चे**ति तिप इकारलोपे च अवच् अत् इति जातं तत्र **वच उम्** इति उमि कृते अव उम् च् अत् इति जाते मकारलोपे गुणे संयोगे च कृते ॥ अवोचत् ॥ आ० पदे लुङस्ते ॥ अवोचत ॥ लृङस्तिपि **स्यतासी लृलुटो**रिति स्ये **ब्रुवो वचिः** इति वचौ **लुङ्लङ्लृङ्क्ष्वडुदात्त** इति अटि **चोः कुरि**ति चस्य कत्वे सस्य षत्वे **इतश्चे**ति तिप इकारलोपे च ॥ अवक्ष्यत् ॥ आ० पदे लृङस्ते ॥ अवक्ष्यत ॥ ऊर्णुञ् आच्छादने धातुर्वर्तते ऽग्रे लटस्तिपि **ऊर्णोतेर्विभाषा** इति वृद्धौ ॥ ऊर्णौति ॥ वृद्ध्यभावे गुणे च ॥ ऊर्णोति ॥ तसि ॥ ऊर्णुतः ॥ झौ झोऽन्तादेशे च **अचि श्नुधातुभ्रुवां य्वोरि**ति उवङि ॥ ऊर्णुवन्ति ॥ आ० पदे लटस्ते टेरेत्वे ॥ ऊर्णुते ॥ आतामि ॥ **अचि श्नुधातुभ्रुवां य्वोरि**ति उवङि टेरेत्वे ॥ ऊर्णुवाते ॥ झे **आत्मनेपदेष्वनत** इति अति उवङि ॥ ऊर्णुवते ॥ ऊर्णु अग्रे लिटि लिटस्तिपि तिपो णलि चागते ऊर्णु अ इति जाते **इजादेश्च गुरुमतोऽनृच्छः** इत्यनेन आमि प्राप्ते **ऊर्णोतेराम्नेति वाच्य**मिति आमोऽभावे **लि-**

ऊर्णुवन्ति । ऊर्णुते ऊर्णुवाते ऊर्णुवते । ( ऊर्णोतिराम्नेति वाच्यम् ) ॥ **नन्द्राः संयोगादयः** ।६।१।३। अचः पराः संयोगाद्यो नदरा द्विर्न भवन्ति । नुशब्दस्य द्वित्वम् । ऊर्णुनाव ऊर्णुनुवतुः ऊर्णुनुवुः ॥ **विभाषोर्णोः** ।१।२।३। इडादिप्रत्ययो वा ङित् स्यात् ॥ ऊर्णुनुविथ ऊर्णुनविथ ऊर्णुविता ऊर्णविता ऊर्णुविष्यति ऊर्णविष्यति ऊर्णोतु ऊर्णौतु ऊर्णवानि ऊर्णवै ॥ **गुणोऽपृक्ते** ।७।३।९१। ऊर्णोतेर्गुणोऽपृक्ते हलादौ पिति सार्वधातुके । वृद्ध्यपवादः । और्णोत् और्णोः ऊर्णुयात् ऊर्णुयाः ऊर्णुवीत ऊर्णूयात् ऊर्णुवि-

---

टि **धातोरनभ्यासस्येति** सूत्रेण आदिभूतादचः परस्य रेफस्य द्वित्वे प्राप्ते **नन्द्राः संयोगादय** इति रेफस्य द्वित्वाभावे केवलं णत्वस्यासिद्धत्वात् नुशब्दस्य द्वित्वे पूर्वनस्य णत्वे ऊर्णुनु अ इति जाते वृद्धौ **एचोऽयवायाव** इति आवि ॥ ऊर्णुनाव ॥ अतुसि **ऊर्णोतेराम्नेति** आमाभावे **लिटि धातोरनभ्यासस्येति** सरेफस्य णोर्द्वित्वे प्राप्ते **नन्द्राः संयोगादय** इति रेफस्य द्वित्वाभावे णत्वस्यासिद्धत्वात् नुशब्दस्य द्वित्वे पूर्वनस्य णत्वे उवङि च कृते ॥ ऊर्णुनुवतुः ॥ उसि ॥ ऊर्णुनुवुः ॥ थलि इटि द्वित्वे **विभाषोर्णोः** इति इडादिप्रत्ययस्य ङित्त्वमाश्रित्य गुणाभावे उवङि च कृते ॥ ऊर्णुनुविथ ॥ ङित्त्वाभावे गुणे अवादेशे च ॥ ऊर्णुनविथ ॥ लुटस्तिपि **स्यतासी ल्लृलुटोरि**ति तासी इटि **लुटः प्रथमस्य डारौरसः** इति तिपो डात्वे ङित्त्वसामर्थ्यादभस्यापि टेर्लोपे **विभाषोर्णोः** इति गुणाभावे उवङि च ॥ ऊर्णुविता ॥ वाग्रहणात् ङित्त्वाभावपक्षे **सार्वधातुकार्धधातुकयोरि**ति गुणे अवादेशे च ॥ ऊर्णविता ॥ लृटस्तिपि **स्यतासी ल्लृलुटोरि**ति स्ये इटि **विभाषोर्णोः** इति इडादिप्रत्ययस्य ङित्त्वमाश्रित्य गुणाभावे **अचि श्नुधातुभ्रुवामि**ति उवङि सस्य षत्वे च कृते ॥ ऊर्णुविष्यति ॥ ङित्त्वाभावे गुणे अवादेशे च कृते ॥ ऊर्णविष्यति ॥ लोटस्तिपि **ऊर्णोतेर्विभाषेति** वृद्धौ **एरुरि**ति तिप इकारस्योकारे ॥ ऊर्णौतु ॥ वृद्ध्यभावे गुणे च ॥ ऊर्णोतु ॥ तातङि ॥ ऊर्णुतात् ॥ मिपि **मेर्निः** इति मेर्नित्वे **आडुत्तमस्य पिच्चेति** आटि गुणे अवादेशे च ॥ ऊर्णवानि ॥ आ० पदे लोट उत्तमैकवचने इटि **टित आत्मनेपदानां टेरे** इति एत्वे **आडुत्तमस्य पिच्चेति** आटि **एत ऐ** इति ऐ **आटश्चेति** वृद्धौ गुणे अवादेशे च । ऊर्णवै । लङस्तिपि **आडजादीनामि**ति आटि **इतश्चेति** तिप इकारलोपे **ऊर्णोतेर्विभाषेति** वृद्धिर्लुङि **हलीति** वृद्धिं बाधित्वा **गुणोऽपृक्ते** इत्यनेन गुणे कृते आ ऊर्णोत् इति जाते तत्र **आटश्चेति** वृद्धौ ॥ और्णोत् ॥ सिपि, और्णोः ॥ लिङस्तिपि यासुटि उटो लोपे **इतश्चेति** तिप इकारलोपे **लिङः सलोपोऽनन्त्यस्येति** सलोपे च ॥ ऊर्णुयात् ॥ सिपि ॥ ऊर्णुयाः ॥ आ० पदे लिङस्ते **लिङः सीयुट्** इति सीयुटि उटो लोपे यलोपे **लिङः सलोपोऽनन्त्यस्ये**ति सलोपे उवङि ॥ ऊर्णुवीत ॥ आशीर्लिङस्तिपि या-

षीष्ट ऊर्णविषीष्ट ॥ **ऊर्णोतेर्विभाषा** ।७।२।६। इडादौ परस्मैपदे परे सिचि वा वृद्धिः पक्षे गुणः । और्णावीत् और्णवीत् और्णुवीत् और्णाविष्टाम् और्णविष्टाम् और्णुविष्टाम् और्णविष्ट और्णुविष्ट और्णविष्यत् और्णुविष्यत् ॥ इत्यदादयः ॥

## ॥ अथ तिङन्ते जुहोत्यादिगणप्रकरणम् ॥

हु दानादनयोः १ ॥ **जुहोत्यादिभ्यः श्लुः** ।२।४।७५।शपः श्लुः स्यात् ॥ **श्लौ**

---

सुटि उटो लोपे सलोपे तिप इकारलोपे **अकृत्सार्वधातुकयो**रिति दीर्घे च ॥ ऊर्णूयात् ॥ आ० पदे आशीर्लिङस्ते सीयुटि उटो लोपे **लोपो व्योर्वली**ति यलोपे **आर्द्धधातुकस्येड्वलादेः** इति इटि **अचि श्नुधातुभ्रुवा**मिति उवङि **सुट्तिथो**रिति सुटि उटो लोपे सकारयोः षत्वे ष्टुत्वे च ॥ ऊर्णुविषीष्ट ॥ **विभाषोर्णोः** इति ङित्वाभावे गुणे अवादेशे च ॥ ऊर्णविषीष्ट ॥ लुङस्तिपि **च्लि लुङी**ति च्लौ **च्लेः सिच्** इति सिचि इचो लोपे **आडजादीना**मिति आटि **इतश्चे**ति तिप इकारलोपे **आटश्चे**ति वृद्धौ **ऊर्णोतेर्विभाषा** इति वृद्धौ **आर्द्धधातुकस्येड्वलादेः** इति इटि **अस्तिसिचोपृक्ते** इति ईटि **इट ईटी**ति सलोपे **अकः सवर्णे दीर्घ** इति दीर्घत्वे **एचोयवायावः** इति आवि ॥ और्णावीत् ॥ वृद्ध्यभावे गुणे अवादेशे च ॥ और्णवीत् ॥ ङित्वपक्षे उवङि च ॥ और्णुवीत् ॥ तामि अटि च्लौ च्लेः सिचि इचो लोपे इटि **ऊर्णोतेर्विभाषे**ति वृद्धौ आवि सस्य षत्वे ष्टुत्वे च ॥ और्णाविष्टाम् ॥ गुणे अवि च ॥ और्णविष्टाम् ॥ ङित्वपक्षे उवङि च ॥ और्णुविष्टाम् ॥ आ० पदे लुङस्ते आटि च्लौ सिचि इचो लोपे इटि वृद्धौ गुणे अवि सस्य षत्वे ष्टुत्वे च ॥ और्णविष्ट ॥ ङित्वपक्षे उवङि च ॥ और्णुविष्ट ॥ लृङस्तिपि **स्यतासी लृलुटो**रिति स्ये इटि आटि **आटश्चे**ति वृद्धौ गुणे अवि तिप इकारलोपे ॥ और्णविष्यत् ॥ ङित्वपक्षे उवङि च कृते ॥ और्णुविष्यत् ॥ आ० पदे लृङस्ते स्ये इटि आटि वृद्धौ गुणे अवि सस्य षत्वे च ॥ और्णविष्यत ॥ ङित्वपक्षे उवङि च ॥ और्णुविष्यत ॥ इति अदादयः ॥

॥ नमः श्रीकेशवाभिख्यपादपङ्कजरेणवे ॥ यं धृत्वा शिरसा सद्यो यात्यज्ञोऽप्यतिसुज्ञताम् ॥

हु दानादनयोर्धातुरस्ति तस्माल्लटस्तिपि शपि च समागते **जुहोत्यादिभ्यः श्लुः** इति शपः श्लौ **लुक् श्लुलुप** इति प्रत्ययादर्शनस्य श्लुसंज्ञायां कृतायां हु ति इति जातं तत्र **श्लौ** धातोर्द्वे स्त इति धातोर्द्वित्वे हु हु ति इति जाते **कुहोश्चु**रिति हस्य झत्वे **अभ्यासे चर्च** इति झस्य जत्वे **सार्वधातुकार्द्धधातुकयो**रिति

---

१ हु दानादनयोः । यद्यपि अपुनर्ग्रहणाय स्वस्वत्वनिवृत्तिपूर्वकं परस्वत्वापादनमेव दानं तथापीह प्रयोगानुसारेण शास्त्रोक्तविधिबोधितहविर्विशेषद्रव्यस्य आहवनीयाग्न्यादौ प्रक्षेप एव दानमिति । अत एव पुरोडाशे प्रक्षेसव्ये प्रमात् केनचित् पुरुषेण पाषाणः प्रक्षिप्तः स तु प्रक्षेपो न होम इति ॥

।६।१।१०। धातोर्द्वे स्तः । जुहोति जुहुतः ॥ **अदभ्यस्तात्** ।७।१।४। झस्य हुश्नुवोरिति यण् । जुह्वति ॥ **भीह्रीभृहुवां श्लुवच्च** ।३।१।३९। एभ्यो लिट्याम्वा स्यादामि श्लाविव कार्यं च । जुहवाञ्चकार जुहाव होता होष्यति । जुहोतु जुहुतात् जुहुताम् जुह्वतु । जुहुधि जुहवानि अजुहोत् अजुहुताम् ॥ **जुसि च** ।७।३।८३। इगन्ताङ्गस्य गु-

---

गुणे च ॥ जुहोति ॥ तसि **जुहोत्यादिभ्यः** श्लुरिति श्लौ **श्लौ** इति धातोर्द्वित्वे **कुहोश्चुरिति** हस्य झत्वे **अभ्यासे चर्च्चेति** झस्य जत्वे तस. **सार्वधातुकमपित्** इति ङित्त्वात् गुणाभावे च ॥ जुहुत ॥ झौ **जुहोत्यादिभ्यः** श्लुः इति श्लौ **श्लौ** धातोर्द्वेस्त इति धातोर्द्वित्वे **कुहोश्चुरिति** हस्य झत्वे **अभ्यासे चर्च्च** इति झस्य जत्वे जु हु झि इति जाते तत्र **अदभ्यस्तात्** इति झस्य अदादेशे कृते जुहु अति इति जाते तत्र **हुश्नुवोः सार्वधातुके** इति यणि कृते ॥ जुह्वति ॥ लिटि **भीह्रीभृहुवां श्लुवच्चेति** आमि तस्य श्लुवद्भावात् **श्लाविति** धातोर्द्वित्वे हु ह आम् लिट् इति जाते तत्र **आम** इति लिटो लोपे **कृञ्चानुप्रयुज्यते लिटि** इति लिट्परे कृञि प्रयुक्ते हु हु आम् कृ लिट् इति जाते तत्र **कुहोश्चुरिति** हस्य झत्वे **अभ्यासे चर्च्च** इति झस्य जत्वे **सार्वधातुकार्धधातुकयोरिति** गुणे **एचोऽयवायाव** इति अवादेशे च कृते जुहवा कृ लिट् इति जाते लिटस्तिपि तिपो णलि च कृते जुहवाकृ अ इति जाते **लिटि धातोरनभ्यासस्येति** द्वित्वे जुहवा कृ कृ अ इति जाते **उरत्** इति अभ्यासऋकारस्य रपरे अकारादेशे **हलादिः शेष** इति रलोपे **कुहोश्चुरिति** कस्य चत्वे **अचो ञ्णिति** इति वृद्धौ च ॥ जुहवाञ्चकार ॥ लिटि आमोऽभावे लिटस्तिपि तिपो णलि **लिटि धातोरनभ्यासस्येति** द्वित्वे **कुहोश्चुरिति** हस्य झत्वे **अभ्यासे चर्च्च** इति झस्य जत्वे **अचो ञ्णिति** इति वृद्धौ आवि च ॥ जुहाव ॥ हु धातो लुटस्तिपि **स्यतासी लृलुटोरिति** तासौ **लुटः प्रथमस्य डारौरसः** इति तिपो डात्वे डित्त्वसामर्थ्यादभस्यापि टेर्लोपे गुणे च ॥ होता ॥ हु धातो लृटस्तिपि **स्यतासी लृलुटोरिति** स्ये गुणे सस्य षत्वे च ॥ होष्यति ॥ लोटस्तिपि शपि शप श्लुत्वे **श्लौ** इति धातोर्द्वित्वे हस्य झत्वे झस्य जत्वे गुणे **एरुरिति** तिप इकारस्योत्वे च ॥ जुहोतु ॥ **तुह्योस्तातङ्** इति तातङि गुणाभावे ॥ जुहुतात् ॥ तसस्तामादेशे ॥ जुहुताम् ॥ झे **अदभ्यस्तात्** इति झस्य अदादेशे **हुश्नुवोः सार्वधातुके** इति यणि **एरुः** इति तिप इकारस्योत्वे ॥ जुह्वतु ॥ लोटो मध्यमैकवचने सिपि शपि शप श्लुत्वे **श्लौ** इति धातोर्द्वित्वे **कुहोश्चुरिति** हस्य झत्वे **अभ्यासे चर्च्चेति** झस्य जत्वे च जुहुसि इति जाते तत्र **सेर्ह्यपिच्चेति** सेर्हौ **हुझल्भ्यो हेर्धिः** इति हेर्धित्वे च ॥ जुहुधि ॥ लोटो मिपि **मेर्निरिति** मेर्नौ **आडुत्तमस्येति** आटि गुणे अवादेशे च ॥ जुहवानि ॥ लङस्तिपि शपि शप श्लुत्वे धातोर्द्वित्वे हस्य झत्वे झस्य जत्वे अटि गुणे तिप इकारलोपे च कृते ॥ अजुहोत् ॥ तामि गुणाभावे ॥ अजुहुताम् ॥ झौ **झेर्जुस्** इति जुसि **जुसि चेति** गुणे

णोऽजादौ जुसि । अजुहवुः जुहुयात् हूयात् अहौषीत् अहोष्यत् । ञिभी भये २ बिभेति ॥ **भियोऽन्यतरस्याम्** ।६।४।११५। इकारः स्याद्धलादौ क्ङिति सार्वधातुके । बिभीतः बिभितः बिभ्यति । बिभयाञ्चकार बिभाय भेता भेष्यति बिभेतु बिभितात् बिभी-

---

अवादेशे च कृते ॥ अजुहवुः ॥ हु अग्रे लिङस्तिपि शपि शपः श्लुत्वे धातोर्द्वित्वे हस्य झत्वे झस्य जत्वे **यासुट्परस्मैपदेषूदात्तो ङिच्चे**ति यासुटि उटो लोपे **लिङः सलोपोऽनन्त्यस्ये**ति सलोपे **इतश्चे**ति तिप इकारलोपे च ॥ जुहुयात् ॥ आशीर्लिङस्तिपि यासुटि उटो लोपे **स्कोः संयोगाद्योरि**ति सलोपे **अकृत्सार्वधातुकयोरि**ति दीर्घत्वे तिप इकारलोपे च ॥ हूयात् ॥ लुङस्तिपि अटि **च्लि लुङी**ति च्लौ **च्लेः सिच्** इति सिचि इचो लोपे **इतश्चे**ति तिप इकारलोपे **अस्तिसिचोऽपृक्ते** इति ईटि **सिचि वृद्धिः परस्मैपदेष्वि**ति वृद्धौ सस्य षत्वे च ॥ अहौषीत् ॥ लृङस्तिपि **स्यतासी लृलुटो**रिति स्ये अटि गुणे सस्य षत्वे तिप इकारलोपे च ॥ अहोष्यत् ॥ ञिभी भये धातुरस्ति तस्मात् लटस्तिपि शपि **आदिर्ञिटुडवः** इत्यनेन ञिकारस्येत्संज्ञायां **तस्य लोप** इति लोपे **जुहोत्यादिभ्यः श्लुः** इति श्लुत्वे **श्लौ** इत्यनेन धातोर्द्वित्वे भी भी ति इति जाते **ह्रस्व** इत्यभ्यासाचो ह्रस्वत्वे **अभ्यासे चर्चे**ति भस्य बत्वे **सार्वधातुकार्द्धधातुकयोरि**ति गुणे ॥ बिभेति ॥ तसि शपः श्लुत्वे **श्लौ** इति धातोर्द्वित्वे **ह्रस्व** इति ह्रस्वत्वे **अभ्यासे चर्चे** इति भस्य बत्वे **भियोऽन्यतरस्याम्**इत्यनेन ईकारस्य इकारे कृते ॥ बिभितः ॥ पक्षे ॥ बिभीतः ॥ झे **श्लौ** इत्यनेन धातोर्द्वित्वे **ह्रस्व** इति ह्रस्वत्वे **अभ्यासे चर्चे**ति भस्य बत्वे **अदभ्यस्तात्** इति झस्य अति **हुश्नुवोः सार्वधातुके** इति यणि ॥ बिभ्यति ॥ लिटि **भीह्रीभृहुवां श्लुवच्चे**ति आमि आमः श्लुवद्भावाच्छ्लाविति द्वित्वे बिभी आम् लिट् इति जातं तत्र **आम** इति लिटो लोपे **कृञ्चानुप्रयुज्यते लिटि** इति लिट्परे कृञि प्रयुक्ते **लिटि धातोरनभ्यासस्ये**ति कृञो द्वित्वे **उरत्** इत्यनेन रपरे अदादेशे **हलादिः शेष** इति रलोपे बिभी आम् क कृ लिट् इति जातं तत्र लिटस्तिपि तिपो णलि **कुहोश्चुरि**ति कस्य चत्वे **अचो ञ्णिती**ति इति वृद्धौ **सार्वधातुकार्द्धधातुकयोरि**ति गुणे अयादेशे च ॥ बिभयांचकार ॥ आमोऽभावे लिटस्तिपि तिपो णलि **लिटि धातोरनभ्यासस्ये**ति धातोर्द्वित्वे भीभी अ इति जातं तत्र **ह्रस्व** इति ह्रस्वत्वे **अभ्यासे चर्चे**ति भस्य बत्वे **अचो ञ्णिती**ति इति वृद्धौ **एचोऽयवायावः** इति आयादेशे च ॥ बिभाय ॥ लुटस्तिपि **स्यतासी लृलुटो**रिति तासौ **लुटः प्रथमस्य डारौरसः** इति तिपो डात्वे डित्त्वसामर्थ्यादभस्यापि टेर्लोपे **सार्वधातुकार्द्धधातुकयोरि**ति गुणे च ॥ भेता ॥ लृटस्तिपि **स्यतासी लृलुटो**रिति स्ये **सार्वधातुकार्द्धधातुकयोरि**ति गुणे सस्य षत्वे ॥ भेष्यति ॥ लोटस्तिपि शपि शपः श्लुत्वे **श्लौ** इत्यनेन धातोर्द्वित्वे **ह्रस्व** इति ह्रस्वत्वे **अभ्यासे चर्चे** इति भस्य बत्वे **सार्वधातुकार्धधातुकयोरि**ति गुणे **एरुरि**ति तिप

तात् अविभेत् । बिभियात् बिभीयात् भीयात् अभैषीत् अभेष्यत् । ह्री लज्जायाम् ३ जिह्रेति जिह्रीतः जिह्रियति जिह्रयाञ्चकार जिह्राय ह्रेता ह्रेष्यति जिह्रेतु अजिह्रेत् जिह्रीः

इकारस्योत्वे ॥ बिभेतु ॥ तातङि **भियोन्यतरस्या**मिति ईकारस्य इकारत्वे ॥ बिभितात् ॥ पक्षे ॥ बिभीतात् ॥ लङस्तिपि शपि शपः श्लुवे **श्लौ** इति धातोर्द्वित्वे **ह्रस्व** इति ह्रस्वत्वे भस्य बत्वे अटि **इतश्चे**ति तिप इकारलोपे गुणे च ॥ अविभेत् ॥ लिङस्तिपि शपि शपः श्लुवे **श्लौ** इति धातोर्द्वित्वे **ह्रस्व** इति ह्रस्वत्वे **अभ्यासे चर्च** इति भस्य बत्वे यासुटि सुटो लोपे **इतश्चे**ति तिप इकारलोपे **लिङः सलोपोऽनन्त्यस्ये**ति सलोपे ॥ बिभीयात् ॥ **भियोन्यतरस्या**मिति ह्रस्वत्वे ॥ बिभियात् ॥ आशीर्लिङि यासुटि सुटो लोपे **इतश्चे**ति तिप इकारलोपे **स्कोः संयोगाद्योरन्ते** च इति सलोपे च ॥ भीयात् ॥ लुङस्तिपि च्लौ च्लेः **सिच्** इति सिचि इचो लोपे अटि **इतश्चे**ति तिप इकारलोपे **अस्तिसिचोऽपृक्ते** इति ईटि सस्य षत्वे **सिचि वृद्धिः परस्मैपदेषु** इति वृद्धौ ॥ अभैषीत् ॥ लृङस्तिपि **स्यतासी लृलुटो**रिति स्ये **लुङ्लङ्लृङ्क्ष्वडुदात्त** इति अटि **सार्वधातुकार्द्धधातुकयो**रिति गुणे सस्य षत्वे ॥ अभेष्यत् ॥ ह्री लज्जायां धातुर्वर्ततेऽस्य लटस्तिपि शपि शपः श्लुवे **श्लौ** इत्यनेन धातोर्द्वित्वे ह्री ह्री ति इति जाते **ह्रस्व** इति ह्रस्वत्वे **कुहोश्चु**रिति हस्य झत्वे **अभ्यासे चर्च** इति झस्य जत्वे **सार्वधातुकार्द्धधातुकयो**रिति गुणे ॥ जिह्रेति ॥ तसि ॥ जिह्रीतः ॥ झे **अदभ्यस्तात्** इति झस्य अति कृते **अचि श्नुधातुभ्रुवा**मिति इयङि ॥ जिह्रियति ॥ ह्री अग्रे लिटि **भीह्रीभृहुवां श्लुवच्चे**ति आमि **आम** इति लिटो लोपे **कृञ्चानुप्रयुज्यते लिटि** इति लिट्परे कृञि प्रयुक्ते **आमः** श्लुवत्त्वात् धातोर्द्वित्वे ह्री ह्री आम् कृ लिट् इति जातं तत्र **ह्रस्व** इत्यभ्यासाचो ह्रस्वत्वे **कुहोश्चु**रिति हस्य झत्वे **अभ्यासे चर्च**ति झस्य जत्वे च कृते जिह्री आम् कृ लिट् इति जातं तत्र लिटस्तिपि तिपो णलि **लिटि धातोरनभ्यासस्ये**ति कृञो द्वित्वे **उरत्** इति रपरे अकारे कृते जिह्री आम् कर् कृ अ इति जातं तत्र रलोपे **हलादिः शेष** इति रलोपे **कुहोश्चु**रिति कस्य चत्वे **अचो ञ्णिति** इति वृद्धौ **सार्वधातुकार्द्धधातुकयो**रिति गुणे **एचोऽयवायाव** इति अयादेशे च ॥ जिह्रयाञ्चकार ॥ आमोऽभावे लिटस्तिपि तिपो णलि च **लिटि धातोरनभ्यासस्ये**ति धातोर्द्वित्वे **हलादिः शेष** इति रलोपे **कुहोः श्चु**रिति हस्य झत्वे **अभ्यासे चर्च** इति झस्य जत्वे **अचो ञ्णिति** इति वृद्धौ **एचोऽयवायाव** इति आयादेशे च कृते ॥ जिह्राय ॥ लुटस्तिपि **स्यतासी लृलुटो**रिति तासौ **लुटः प्रथमस्य डारौरस** इति तिपो डात्वे डित्त्वसामर्थ्यादभस्यापि टेर्लोपे **सार्वधातुकार्द्धधातुकयो**रिति गुणे ॥ ह्रेता ॥ लृटस्तिपि **स्यतासी लृलुटो**रिति स्ये **सार्वधातुकार्द्धधातुकयो**रिति गुणे सस्य षत्वे च ॥ ह्रेष्यति ॥ लोटस्तिपि शपि शपः श्लुवे **श्लौ** इति धातोर्द्वित्वे **हलादिः शेष** इति

यात् अहैषीत् अहेष्यत् । पॄ पालनपूरणयोः ४ ॥ **अर्तिपिपर्त्योश्च** ।७।४।७७। अभ्यासस्य इकारोऽन्तादेशः स्यात् श्लौ । पिपर्ति ॥ **उदोष्ठ्यपूर्वस्य** ।७।१।१०२। अङ्गावयवौष्ठ्यपूर्वो य ऋत्तदन्तस्याङ्गस्य उत्स्यात् ॥ **हलि च** ।८।२।७७। रेफवान्तस्य धातोरुपधाया इको दीर्घो हलि । पिपूर्तः पिपुरति पपार ॥ **शॄदॄप्रां ह्रस्वो वा** ।७।४।१२। एषां किति लिटि ह्रस्वो वा स्यात् । पप्रतुः ॥ **ऋच्छत्यॄताम्** ।७।४।११।

---

रलोपे **ह्रस्व** इति ह्रस्वत्वे **कुहोश्चु**रिति हस्य झत्वे **अभ्यासे चर्चे**ति झस्य जत्वे गुरुरलोपे **ह्रस्व** इति ह्रस्वत्वे **कुहोश्चु**रिति हस्य झत्वे **अभ्यासे चर्चे**ति झस्य जत्वे गक-रिति तिप इकारस्योकारे च कृते ॥ जिहेतु ॥ लङस्तिपि शपि शपः श्लुत्वे **श्लौ** इति धातो-र्द्वित्वे **हलादिः शेष** इति रलोपे **कुहोश्चु**रिति हस्य झत्वे **अभ्यासे चर्चे**ति झस्य जत्वे **लुङ्लङ्लृङ्क्ष्वडुदात्त** इति अटि **सार्वधातुकार्द्धधातुकयो**रिति गुणे **इतश्चे**ति तिप इकारलोपे च ॥ अजिहेत् ॥ विधिलिङस्तिपि शपि शपः श्लुत्वे **श्लौ** इति धातोर्द्वित्वे **हलादिः शेष** इति रलोपे **कुहोश्चु**रिति हस्य झत्वे **अभ्यासे चर्चे**ति झस्य जत्वे **यासुट्-परस्मैपदेषूदात्तो ङिच्चे**ति यासुटि उटो लोपे **लिङः सलोपोऽनन्त्यस्ये**ति सलोपे **इतश्चे**ति तिप इकारलोपे च ॥ जिह्रीयात् ॥ लुङस्तिपि **च्लि लुङी**ति च्लौ **च्लेः सिच्** इति सिचि इचो लोपे **लुङ्लङ्लृङ्क्ष्वडुदात्त** इति अटि **इतश्चे**ति तिप इकारलोपे **अस्तिसिचोऽपृक्ते** इति ईटि सस्य पत्वे **सिचि वृद्धिः परस्मैपदेषु** इति वृद्धौ च ॥ अह्रैषीत् ॥ लङस्तिपि **स्यतासी लृलुटो**रिति स्ये अटि सस्य षत्वे तिप इकारलोपे गुणे च ॥ अह्रेष्यत् ॥ पॄ पालनपूरणयोर्धातुरस्ति तत्र लटस्तिपि शपि शपः श्लुत्वे **श्लौ** इत्यनेन धातोर्द्वित्वे पॄ पॄ ति इति जातं तत्र **अर्तिपिपर्त्योश्चे**ति इकारान्तादेशे पि पॄ ति इति जातं तत्र **सार्वधातुकार्द्धधातुकयो**रिति गुणे ॥ पिपर्ति ॥ तसि धातोर्द्वित्वे **अर्तिपिपर्त्योश्चे**ति अभ्यासस्य इकारान्तादेशे **उदोष्ठ्यपूर्वस्ये**ति रपरे उकारे कृते **हलि चे**ति दीर्घत्वे ॥ पिपूर्तः ॥ झे धातोर्द्वित्वे **अर्तिपिपर्त्यो**रिति अभ्यासस्य इकारान्तादेशे **अदभ्यस्तात्** इति झस्य अति **उदोष्ठ्यपूर्वस्ये**ति रपरे उकारे ॥ पिपुरति ॥ लिटस्तिपि तिपो णलि धातोर्द्वित्वे पॄ पॄ अ इति जातं तत्र अभ्यासह्रस्वे **उरत्** इति रपरे अदादेशे कृते पर् पॄ अ इति जातं तत्र **हलादिः शेष** इति रलोपे **अचोञ्णिती**ति इति वृद्धौ च ॥ पपार ॥ अतुसि **लिटि धातो**रिति धातोर्द्वित्वे ह्रस्वे **उरत्** इति रपरे अकारे कृते पर् पॄ अतुस् इति जातं तत्र **हलादिःशेष** इति रलोपे **शॄदॄप्रां ह्रस्वो वा** इत्यनेन ऋकारस्य ह्रस्वत्वे **इको यणची**ति यणि च ॥ पप्रतुः ॥ पक्षे **ऋच्छत्यॄता**मित्यनेन ऋकारस्य गुणे कृते ॥ पपरतुः ॥ उसि ॥ पप्रुः ॥ पक्षे ॥ पपरुः ॥ लुटस्तिपि

---

१ उदोष्ठ्यपूर्वस्य ॥ यदि चात्रसूत्रे अङ्गावयवेत्यर्थाकरणे संपूर्वकऋगतो स्यादित्युक्तम् कप्रत्यये ध्युकः कितीति इण्निषेधे ऋत इद्धातोरित्यनेनेत्वे समीर्ण इति भवति तदिदानीं समूर्णं इत्यनिष्टं प्रसज्येत ॥

तौदादिकच्छेर्ऋधातोर्ऋतां च गुणो लिटि । पपरतुः पपरुः ॥ **वृतो वा।७।२।३८।** वृङ्वृञ्भ्यामृदन्ताच्चेटो दीर्घो वा स्यान्न तु लिटि। परिता परीता । परिष्यति परीष्यति। पिपर्तु अपिपः अपिपूर्ताम् अपिपरुः पिपूर्यात् पूर्यात् अपारीत् ॥ **सिचि च परस्मैपदेषु ।७।२।४०।** अत्र इटो न दीर्घः । अपारिष्टाम् अपरिष्यत् अपरीष्यत् । ओहाक्

---

**स्यतासी लृलुटोरि**ति तासौ **लुटः प्रथमस्य डारौरसः** इति तिपो डाले डित्वसामर्थ्यादभस्यापि टेर्लोपे **आर्द्धधातुकस्येड्वलादेः** इति इटि पृ इ ता इति जातं तत्र **सार्वधातुकार्द्धधातुकयो**रिति गुणे ॥ परिता ॥ पक्षे **वृतो वा** इत्यनेन इटो दीर्घत्वे च ॥ परीता ॥ लृटस्तिपि **स्यतासी लृलुटो**रिति स्ये इटि गुणे सस्य षत्वे ॥ परिष्यति ॥ पक्षे **वृतो वा** इति इटो दीर्घत्वे ॥ परीष्यति ॥ लोटस्तिपि शपि शपः श्लुत्वे **श्लौ** इति धातोर्द्वित्वे **अर्तिपिपर्त्योरि**ति अभ्यासस्य इकारान्तादेशे **सार्वधातुकार्द्धधातुकयो**रिति गुणे **एरुः** इति इकारस्य उत्वे ॥ पिपर्तु ॥ लङस्तिपि शपि शपः श्लुत्वे **श्लौ** इति धातोर्द्वित्वे **अर्तिपिपर्त्योश्चे**ति अभ्यासस्य इकारान्तादेशे **लुङ्लङ्लृङ्क्ष्वडुदात्तः** इति अटि अपि पृ ति इति जातं तत्र **इतश्चे**ति तिप इकारलोपे **सार्वधातुकार्द्धधातुकयो**रिति गुणे अपि पर् त् इति जातं तत्र **हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्** इति तलोपे **खरवसानयोर्विसर्जनीयः** इति रेफस्य विसर्गत्वे ॥ अपिपः ॥ तामि धातोर्द्वित्वे अभ्यासस्य इकारान्तादेशे अटि च अपिपृ ताम् इति जातं तत्र **उदोष्ठ्यपूर्वस्ये**ति रपरे उकारे जाते अपि पुर् ताम् इति जातं तत्र **हलि चे**ति उपधाया इको दीर्घत्वे कृते ॥ अपिपूर्ताम् ॥ लङो झौ शपि शपः श्लुत्वे **श्लौ** इति धातोर्द्वित्वे **अर्तिपिपर्त्योश्चे**ति अभ्यासस्य इकारान्तादेशे **सिजभ्यस्तविदिभ्यश्चे**ति झेर्जुसि अपिपृ उस् इति जातं तत्र **जुसि चे**ति गुणे कृते सस्य रुत्वे रस्य विसर्गत्वे च ॥ अपिपरुः ॥ विधिलिङस्तिपि शपि शपः श्लुत्वे **श्लौ** इति धातोर्द्वित्वे **अर्तिपिपर्त्योश्चे**ति अभ्यासस्य इकारान्तादेशे पिपृ ति इति जातं तत्र **यासुट्परस्मैपदेषूदात्तो ङिच्चे**ति यासुटि उटो लोपे **लिङः सलोपोऽनन्त्यस्ये**ति सलोपे **इतश्चे**ति तिप इकारलोपे **उदोष्ठ्यपूर्वस्ये**ति रपरे उकारे जाते **हलि चे**ति उपधाया इको दीर्घत्वे च ॥ पिपूर्यात् ॥ आशीर्लिङस्तिपि यासुटि उटो लोपे **इतश्चे**ति तिप इकारलोपे **स्कोः संयोगाद्योरन्ते चे**ति सलोपे **उदोष्ठ्यपूर्वस्ये**ति रपरे उकारे जाते **हलि चे**ति उपधाया इको दीर्घत्वे ॥ पूर्यात् ॥ लुङस्तिपि **च्लि लुङी**ति च्लौ **च्लेः सिच्** इति सिचि इचो लोपे **लुङ्लङ्लृङ्क्ष्वडुदात्त** इति अटि **आर्द्धधातुकस्येड्वलादे**रिति इटि **इतश्चे**ति तिप इकारलोपे **अस्तिसिचोऽपृक्ते** इति ईटि **इट ईटि** इति सलोपे **अकः सवर्णे दीर्घः** इति दीर्घत्वे **सिचि वृद्धिः परस्मैपदेषु** इति वृद्धौ कृतायाम् ॥ अपारीत् ॥ तामि **वृतो चे**ति दीर्घतायां प्राप्तायां **सिचि च परस्मैपदेषु** इति इटो दीर्घत्वाभावे ॥ अपारिष्टाम् ॥ लृङस्तिपि

त्यागे ९ जहाति ॥ **जहातेश्च** ।६।४।११६। इद्वा स्यादलादौ क्ङिति सार्वधातुके । जहितः । **ईहल्यघोः** ।६।४।११३। श्नाभ्यस्तयोरात ईत्स्यात्सार्वधातुके क्ङिति हलि न तु घोः । जहीतः ॥ **श्नाभ्यस्तयोरातः** ।६।४।११२। अनयोरातो लोपः क्ङिति सार्वधातुके । जहति जहौ हाता हास्यति जहातु जहितात् जहीतात् ॥ **आ च हौ** ।६।४।११७। जहातेर्हौ परे आ स्याच्चादिदीतौ । जहाहि जहिहि जहीहि अजहात् अजहुः ॥ **लोपो**

---

**स्यतासी लृलुटो**रिति स्ये इटि अटि **इतश्चे**ति तिप इकारलोपे सस्य षत्वे **सार्वधातुकार्द्धधातुकयो**रिति गुणे च ॥ अपरिष्यत् ॥ **वृतो वे**ति पक्षे दीर्घे च ॥ अपरीष्यत् ॥ ओहाक् त्यागे धातुरस्ति तत्र तिपि शपि शपः श्लुत्वे **श्लौ** इति धातोर्द्वित्वे **ह्रस्व** इति अभ्यासाचो ह्रस्वत्वे **कुहोश्चु**रिति हस्य झत्वे **अभ्यासे चर्चे**ति झस्य जत्वे ॥ जहाति ॥ तसि शपि शपः श्लौ **श्लौ** इति धातोर्द्वित्वे **ह्रस्व** इत्यभ्यासह्रस्वत्वे **कुहोः श्चु**रिति हस्य झत्वे **अभ्यासे चर्चे**ति झस्य जत्वे **सार्वधातुकमपित्** इति तसो ङित्त्वे कृते **जहातेश्चे**ति हकारोत्तरवर्तिन आकारस्येकारे च कृते ॥ जहितः ॥ पक्षे **ई हल्यघो**रित्यनेन दीर्घेकारे कृते ॥ जहीतः ॥ लटः प्रथमपुरुषबहुवचने झौ **श्लौ** इति धातोर्द्वित्वे **ह्रस्व** इति अभ्यासह्रस्वत्वे **कुहोश्चु**रिति हस्य झत्वे **अभ्यासे चर्चे**ति झस्य जत्वे **अदभ्यस्तात्** इति झस्य अति च कृते जहा अति इति जातं तत्र **सार्वधातुकमपित्** इति ङित्त्वे **श्नाभ्यस्तयोरात** इति हकारोत्तरवर्त्याकारलोपे ॥ जहति ॥ लिटस्तिपि तिपो णलि **लिटि धातोरनभ्यासस्ये**ति धातोर्द्वित्वे **ह्रस्व** इति अभ्यासह्रस्वत्वे **कुहोश्चु**रिति हस्य झत्वे **अभ्यासे चर्चे**ति झस्य जत्वे जह अ इति जातं तत्र **आत औ णलः** इति णल औत्वे कृते वृद्धौ ॥ जहौ ॥ लुटस्तिपि **स्यतासी लृलुटो**रिति तासौ **प्रथमस्य डारौरसः** इति तिपो डात्वे डित्त्वसामर्थ्यादभस्यापि टेर्लोपे च ॥ हाता ॥ लृटस्तिपि **स्यतासी लृलुटो**रिति स्ये ॥ हास्यति ॥ लोटस्तिपि शपि शपः श्लुत्वे **श्लौ** इति धातोर्द्वित्वे अभ्यासह्रस्वत्वे हस्य झत्वे झस्य जत्वे **एरु**रिति तिप इकारस्योकारे ॥ जहातु ॥ तातङि **जहातेश्चे**ति आकारस्येकारे कृते ॥ जहितात् ॥ पक्षे **ई हल्यघोः** इति दीर्घेकारे कृते ॥ जहीतात् ॥ लोटो मध्यमपुरुषैकवचने सिपि **सेर्ह्यपिच्चे**ति सेर्हित्वे **श्लौ** इति धातोर्द्वित्वे **ह्रस्व** इति अभ्यासह्रस्वत्वे **कुहोश्चु**रिति हस्य झत्वे **अभ्यासे चर्चे**ति झस्य जत्वे च **आ च हौ** इत्यनेन आकारे कृते ॥ जहाहि ॥ इकारे कृते ॥ जहिहि ॥ ईकारे च कृते ॥ जहीहि ॥ लङस्तिपि धातोर्द्वित्वे अभ्यासह्रस्वत्वे हस्य झत्वे झस्य जत्वे अटि **इतश्चे**ति तिप इकारलोपे च ॥ अजहात् ॥ लङः प्रथमपुरुषबहुवचने झौ **सिजभ्यस्तविदिभ्यश्चे**ति झेर्जुसि जकारस्येत्संज्ञायां लोपे **श्नाभ्यस्तयोरात** इति आकारलोपे च ॥ अजहुः ॥ विधिलिङस्तिपि शपि शपः श्लुत्वे **श्लौ** इति धातोर्द्वित्वे अभ्यासह्रस्वत्वे **इतश्चेति** तिप इकारलोपे च हस्य झत्वे झस्य जत्वे

**यि** ।६।४।११८। जहातेराल्लोपो यादौ सार्वधातुके । जह्यात् । एर्लिङि । हेयात् अहासीत् अहास्यत् । माङ् माने शब्दे च ६ ॥ **भृञामित्** ।७।४।७६। भृञ् माङ् ओहाङ् एषां त्रयाणामभ्यासस्य इत्स्यात् श्लौ ॥ मिमीते मिमाते मिमते ममे माता मास्यते मिमीताम् अमिमीत मिमीत मासीष्ट अमास्त अमास्यत् । ओहाङ् गतौ ७। जिहीते जिहाते जिहते ।

---

यासुटि उटो लोपे **लिङः सलोपोऽनन्त्यस्ये**ति सलोपे **लोपो यि** इति सूत्रेण हकारान्त्याकारलोपे च ॥ जह्यात् ॥ आशीर्लिङस्तिपि यासुटि उटो लोपे तिप इकारलोपे **स्कोः संयोगाद्योरन्ते** चेति सलोपे **एर्लिङि** इत्यनेन हकारोत्तरवर्तिन आकारस्य एत्वे कृते ॥ हेयात् ॥ लुङस्तिपि **च्लि लुङीति** च्लौ **च्लेः सिच्** इति सिचि इज्भागलोपे **लुङ्लङ्लृङ्क्ष्वडुदात्तः** इति अटि **इतश्चे**ति तिप इकारलोपे **अस्तिसिचोऽपृक्ते** इति ईटि च कृते ॥ अहासीत् ॥ लृङस्तिपि **स्यतासी लृलुटो**रिति स्ये अटि **इतश्चे**ति तिप इकारलोपे ॥ अहास्यत् ॥ माङ् माने शब्दे च धातुर्वर्ततेऽग्रे लटस्ते शपि शप श्लुत्वे **श्लौ** इति धातोर्द्वित्वे **भृञामित्** इत्यनेनाभ्यासस्येकारे कृते मिमाते इति जाते तत्र **ई हल्यघोः** इति आकारस्य ईकारे कृते कृते च **टित आत्मनेपदानां टेरे** इति टेरेत्वे ॥ मिमीते ॥ आतामि धातोर्द्वित्वे **भृञामित्** इत्यभ्यासस्येकारे **श्नाभ्यस्तयो**रित्याकारलोपे टेरेत्वे च ॥ मिमाते ॥ झे झस्य **अदभ्यस्तात्** इति अति धातोर्द्वित्वे **भृञामित्** इति अभ्यासस्येकारे **श्नाभ्यस्तयो**रित्याकारलोपे च ॥ मिमते ॥ लिटस्ते **लिटि धातोरनभ्यासस्ये**ति द्वित्वे **ह्रस्व** इति ह्रस्वत्वे **लिटस्तझयोरेशिरेच्** इति एशि कृते **आतो लोप इटि चे**त्याकारलोपे च ॥ ममे ॥ लुटस्ते **स्यतासी लृलुटो**रिति तासौ **लुटः प्रथमस्य डारौरसः** इति तिपो डात्वे डित्वसामर्थ्यादभस्यापि टेर्लोपे ॥ माता ॥ लृटस्ते **स्यतासी लृलुटो**रिति स्ये टेरेत्वे च कृते ॥ मास्यते ॥ लोटस्ते शपि शप श्लुत्वे **श्लौ** इति धातोर्द्वित्वे **भृञामित्** इति अभ्यासस्येकारे **ई हल्यघोरि**ति माकारोत्तरवर्तिन आकारस्येकारे **टित आत्मनेपदानां टेरे** इति टेरेत्वे च कृते मिमीते इति जाते लोट **आमेतः** इत्येकारस्यामि ॥ मिमीताम् ॥ लङस्ते शपि शप श्लुत्वे **श्लौ** इति धातोर्द्वित्वे **भृञामित्** इति अभ्यासस्येकारे कृते **ई हल्यघो**रिति माकारोत्तरवर्तिन आकारस्य ईकारे कृते **लुङ्लङ्लृङ्क्ष्वडुदात्तः** इति अटि कृते ॥ अमिमीत ॥ विधिलिङस्ते शपि शप श्लुत्वे **श्लौ** इति धातोर्द्वित्वे **भृञामित्** इत्यभ्यासस्येकारे **लिङः सीयुट्** इति सीयुटि उटो लोपे **लोपो व्योर्वली**ति यलोपे **लिङः सलोपोऽनन्त्यस्ये**ति सलोपे **श्नाभ्यस्तयो**रित्याकारलोपे सयोगे च कृते ॥ मिमीत ॥ आशीर्लिङस्ते **लिङः सीयुट्** इति सीयुटि उटो लोपे **लो**

---

१ भृञामित् । भिञा त्रयाणामित्यतस्त्रयाणामित्यनुवर्त्तते । कपिञ्जलाधिकरणन्यायेन त्रयाणामिति लभ्यत इति पण्डिताः । त्रयाणां किं जहाति । श्लौ किं बभार ।

रणपोषणयोः ८ बिभर्ति बिभृतः बिभ्रति । बिभृते बिभ्राते बिभ्रते बिभराञ्चकार बभार बभर्थ बभृव बिभराञ्चक्रे बभ्रे भर्ता भरिष्यति भरिष्यते बिभर्तु बिभराणि बिभृताम्

---

वकारे **सार्वधातुकार्द्धधातुकयो**रिति गुणे ॥ बिभर्ति ॥ तसि धातोर्द्वित्वे **भृञामित्** इत्यभ्यासस्येकारे भस्य बत्वे च ॥ बिभृतः ॥ झौ धातोर्द्वित्वे **भृञामित्** इति अभ्यासस्य इकारे भस्य बत्वे **अदभ्यस्तात्** इति अति **इको यणची**ति यणि च कृते । बिभ्रति ॥ आत्मनेपदे लटस्ते समागते शपि शपः श्लुत्वे **श्लौ** इति धातोर्द्वित्वे **भृञामित्** इत्यभ्यासस्य इकारे भस्य बत्वे **टित आत्मनेपदानां टेरे** इति टेरेत्वे ॥ बिभृते ॥ आतामि धातोर्द्वित्वे अभ्यासस्य इकारे भस्य बत्वे **टित आत्मनेपदानां टेरे** इति टेरेत्वे **इको यणची**ति यणि च ॥ बिभ्राते ॥ झे **श्लौ** इति धातोर्द्वित्वे **भृञामित्** इत्यभ्यासस्य इकारे भस्य बत्वे **अदभ्यस्तात्** इत्यनेन अति कृते **टित आत्मनेपदानां टेरे** इति टेरेत्वे **इको यणची**ति यणि च ॥ बिभ्रते ॥ लिटि **भीह्रीभृहुवां श्लुवच्चे**ति आमि तस्य श्लुवद्भावाद्धातोर्द्वित्वे **उरदि**ति रपराकारे **हलादिः शेष** इति शेषहलो लोपे अभ्यासे बत्वे **भृञामि**दित्यनेनेत्वे **आम** इति लिट्लोपे **कृञ्चानुप्रयुज्यते लिटि** इति लिट्परे कृञि प्रयुक्ते लिटस्तिपि तिपो णलि **लिटि धातोरनभ्यासस्ये**ति कृञो द्वित्वे **उरत्** इति रपरे अदादेशे **हलादिः शेष** इति रलोपे **कुहोश्चु**रिति कस्य चत्वे **अचोञ्णि**ति इति वृद्धौ च कृतायाम् ॥ बिभराञ्चकार ॥ आमोऽभावे लिटि लिटस्तिपि तिपो णलि **लिटि धातो**रिति धातोर्द्वित्वे **उरत्** इति रपरे अदादेशे भर् भृ अ इति जाते **हलादिः शेष** इति रलोपे **अभ्यासे चर्च्चे**ति भस्य बत्वे **अचोञ्णिति** इति वृद्धौ ॥ बभार ॥ आत्मनेपदे लिटि **भीह्रीभृहुवां श्लुवच्चे**ति आमि श्लुवत्त्वाद्धातोर्द्वित्वे **भृञामित्** इति अभ्यासस्येकारान्तादेशे **अभ्यासे चर्च्चे**ति भस्य बत्वे **सार्वधातुकार्द्धधातुकयो**रिति गुणे बिभर् लिट् इति जातं तत्र **आम** इति लिटो लोपे **कृञ्चानुप्रयुज्यते लिटि** इति लिट्परे कृञि प्रयुक्ते **लिटि धातो**रिति कृञो द्वित्वे **उरत्** इति रपरे अदादेशे **हलादिः शेष** इति रलोपे **कुहोश्चु**रिति कस्य चत्वे लिटस्ते **लिटस्तझयोरेशिरेच्** इति एशि कृते **इको यणची**ति यणि कृते ॥ बिभराञ्चक्रे ॥ पक्षे लिटस्ते धातोर्द्वित्वे **उरत्** इति रपरे अदादेशे **हलादिः शेष** इति रलोपे **अभ्यासे चर्च्चे**ति भस्य बत्वे **लिटस्तझयोरेशिरेच्** इति तकारस्य एशि कृते यणि च कृते ॥ बभ्रे ॥ लुटस्तिपि **स्यतासी लृलुटो**रिति तासौ **लुटः प्रथमस्य डारौरसः** इति तिपो डात्वे डित्त्वसामर्थ्यादभस्यापि टेर्लोपे **सार्वधातुकार्द्धधातुकयो**रिति गुणे ॥ भर्ता ॥ लृटस्तिपि **स्यतासी लृलुटो**रिति स्ये **ऋद्धनोः स्ये** इति इटि **सार्वधातुकार्द्धधातुकयो**रिति गुणे ॥ सस्य षत्वे च भरिष्यति ॥ आ॰प॰ लृटस्ते **टित आत्मनेपदानां टेरे** इति

**अबिभः अबिभृताम् अबिभरुः अबिभृत बिभृयात् बिभ्रीत भ्रियात् भृषीष्ट अभार्षीत् अभृत अभरिष्यत् अभरिष्यत । डुदाञ् दाने ९ ददाति दत्तः ददति दत्ते ददाते ददते ददौ**

---

टेरेत्वे **ऋद्धनोः स्ये** इति इटि गुणे सस्य षत्वे च ॥ भरिष्यते ॥ लोटस्तिपि शपि शपः श्लुत्वे **श्लौ** इति धातोर्द्वित्वे **भृञामित्** इत्यभ्यासस्य इकारे **अभ्यासे चर्चे**ति भस्य बत्वे **सार्वधातुकार्द्धधातुकयो**रिति गुणे **एरु**रिति तिप इकारस्योकारे कृते ॥ बिभर्तु ॥ आ० पदे लोटस्ते शपि शपः श्लुत्वे धातोर्द्वित्वे अभ्यासस्य इकारान्तादेशे **टित आत्मनेपदानां टेरे** इति टेरेत्वे **आमेत** इति एकारस्य आमि कृते ॥ बिभृताम् ॥ लङस्तिपि शपि शपः श्लुत्वे **श्लौ** इति धातोर्द्वित्वे **भृञामित्** इत्यभ्यासस्य इकारान्तादेशे अटि **सार्वधातुकार्द्धधातुकयो**रिति गुणे **इतश्चे**ति तिप इकारलोपे **हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्** इति तलोपे **खरवसानयोर्विसर्जनीय** इति रस्य विसर्गत्वे ॥ अबिभः ॥ आ० पदेषु लङस्ते शपि शपः श्लुत्वे **श्लौ** इति धातोर्द्वित्वे **भृञामित्** इति इकारान्तादेशे अटि च कृते ॥ अबिभृत ॥ विधिलिङस्तिपि शपि शपः श्लुत्वे **श्लौ** इति धातोर्द्वित्वे **भृञामित्** इति इकारान्तादेशे यासुटि उटो लोपे **लिङः सलोपोऽनन्त्यस्ये**ति सलोपे च ॥ बिभृयात् ॥ आ०पदे लिङस्ते धातोर्द्वित्वे अभ्यासस्य इकारान्तादेशे **लिङः सीयुट्** इति सीयुटि उटो लोपे **लोपो व्योर्वली**ति यलोपे **स्कोः संयोगाद्योरन्ते चे**ति सलोपे **इको यणची**ति यणि च कृते ॥ बिभ्रीत ॥ आशीर्लिङस्तिपि यासुटि उटो लोपे **रिङ्शयग्लिङ्क्षु** इति ऋकारस्य रिङादेशे कृते भ्रियात् ॥ आत्मनेपदेषु आशीर्लिङस्ते सीयुटि उटो लोपे यलोपे **सुट् तिथो**रिति सुटि उटो लोपे सकारयोः षकारत्वे ष्टुत्वे च ॥ भृषीष्ट ॥ लुङस्तिपि च्लौ च्लेः सिचि इचो लोपे अटि तिप इकारलोपे **अस्तिसिचोऽपृक्ते** इति ईटि **सिचि वृद्धिः परस्मैपदेष्वि**ति वृद्धौ सस्य षत्वे च ॥ अभार्षीत् ॥ आत्मनेपदेषु लुङस्ते अटि च्लौ च्लेः सिचि इचो लोपे **उश्चे**ति सिचः कित्वे **क्ङिति चे**ति गुणाभावे **ह्रस्वादङ्गात्** इति सकारलोपे च कृते ॥ अभृत । लृङस्तिपि **स्यतासी लृलुटो**रिति स्ये अटि **ऋद्धनोः स्ये** इति इटि **सार्वधातुकार्द्धधातुकयो**रिति गुणे सस्य षत्वे अटि **इतश्चे**ति तिप इकारलोपे च ॥ अभरिष्यत् ॥ आ० पदेषु लृङस्ते स्ये **ऋद्धनोः स्ये** इति इटि गुणे अटि सस्य षत्वे च ॥ अभरिष्यत । डुदाञ् दाने धातुर्वर्त्ततेऽग्रे लटस्तिपि **आदिर्ञिटुडवः** इति ञेरित्संज्ञायां लोपे च कृते कृते च शपि शपः श्लुत्वे **श्लौ** इति धातोर्द्वित्वे **ह्रस्व** इति अभ्यासह्रस्वत्वे ॥ ददाति । तसि धातोर्द्वित्वे अभ्यासह्रस्वत्वे **श्नाभ्यस्तयो**रित्याकारलोपे **खरि चे**ति दस्य तकारे कृते ॥ दत्तः ॥ झौ धातोर्द्वित्वे अभ्यासह्रस्वत्वे **अदभ्यस्तात्** इति झस्य अति **श्नाभ्यस्तयो**रित्याकारलोपे च ॥ ददति ॥ आ० पदेषु लटस्ते शपि शपः श्लुत्वे **श्लौ** इति धातोर्द्वित्वे **ह्रस्व** इति अभ्यासह्रस्वत्वे **श्नाभ्यस्तयोरि**त्यालोपे **खरि चे**ति दस्य तत्वे च **टित आत्मनेपदानां टेरे**

अधात् अधित अधास्यत् अधास्यत । णिजिर् शौचपोषणयोः ११ ( इर इत्संज्ञा वाच्या )

**णिजां त्रयाणां गुणः श्लौ** ।७।४।७५। णिज् विज् विषामभ्यासस्य गुणः स्यात् श्लौ । नेनेक्ति नेनिक्तः नेनिजति नेनिक्ते निनेज निनिजे नेक्ता नेक्ष्यति नेक्ष्यते नेनेक्तु

---

इति धातोर्द्वित्वे **ह्रस्व** इत्यभ्यासह्रस्वत्वे **अभ्यासे चर्चे**ति धस्य दकारे **लुङ्लङ्लृङ्क्ष्वड्‌दात्तः** इति अटि **इतश्चे**ति तिप इकारलोपे च ॥ अदधात् ॥ आ० प० लङस्ते धातोर्द्वित्वेऽभ्यासह्रस्वत्वे **श्नाभ्यस्तयोरा**त इत्याल्लोपे **खरि चे**ति धस्य तकारे अटि च ॥ अधत्त ॥ विधिलिङस्तिपि **यासुट्परस्मैपदेष्वि**ति यासुटि उटो लोपे **लिङः सलोपोऽनन्त्यस्ये**ति सलोपे **अभ्यासे चर्चे**ति धस्य दत्वे **श्नाभ्यस्तयोरा**त इत्यालोपे ॥ दध्यात् ॥ आ० प० विधिलिङस्ते सीयुटि उटो लोपे **लोपो व्योर्वली**ति यलोपे धातोर्द्वित्वेऽभ्यासह्रस्वत्वे **अभ्यासे चर्चे**ति धस्य दत्वे **श्नाभ्यस्तयोरा**त इत्यालोपे च ॥ दधीत ॥ आशीर्लिङस्तिपि यासुटि उटो लोपे **इतश्चे**ति तिप इकारलोपे **स्कोः संयोगाद्योरन्ते चे**ति सलोपे **एर्लिङि** इत्याकारस्य एत्वे ॥ धेयात् ॥ आ० प० आशीर्लिङस्ते सीयुटि उटो लोपे **लोपो व्योर्वली**ति यलोपे **सुट्तिथोरि**ति सुटि उटो लोपे सस्य षत्वे ष्टुत्वे च ॥ धासीष्ट ॥ लुङस्तिपि च्लौ च्लेः सिचि **गातिस्थाघुपाभूभ्यः** इति सिचो लोपे अटि **इतश्चे**ति तिप इकारलोपे च ॥ अधात् ॥ आ० प० लुङस्ते च्लौ च्लेः सिचि अटि **स्थाघ्वोरिच्चे**ति इकारान्तादेशे सिचः कित्वे कित्वाद्गुणाभावे **ह्रस्वादङ्गात्** इति सिचो लोपे च ॥ अधित ॥ लृङस्तिपि **स्यतासी लृलुटोरि**ति स्ये अटि **इतश्चे**ति तिप इकारलोपे च ॥ अधास्यत् ॥ आ० प० लृङस्ते स्ये अटि च ॥ अधास्यत ॥ णिजिर् शौचपोषणयोः धातुर्वर्तते तत्र **इर इत्संज्ञा वाच्ये**ति इत्संज्ञायां लोपे **णो न** इति धात्वादेर्णस्य नत्वे च कृते लटस्तिपि शपि शपः श्लुवे **श्लौ** इति धातोर्द्वित्वे **हलादिः शेष** इति हलो लोपे **णिजां त्रयाणां गुणः श्लौ** इति अभ्यासस्य गुणे **चोः कुरि**ति जस्य गत्वे **पुगन्तलघूपधस्य चे**ति गुणे च ॥ नेनेक्ति ॥ तसि धातोर्द्वित्वे शेषहल्लोपे **णिजां त्रयाणां गुणः श्लौ** इत्यभ्यासगुणे तसः कित्वात् **पुगन्तलघूपधस्ये**ति गुणाभावे **चोः कुरि**ति जस्य गत्वे **खरि चे**ति गस्य कत्वे च ॥ नेनिक्तः ॥ झौ धातोर्द्वित्वे जलोपे **अदभ्यस्तादि**ति झस्य अति **णिजां त्रयाणां गुणः श्लौ** इति अभ्यासगुणे झस्य कित्वाद्गुणाभावे च ॥ नेनिजति ॥ आ० प० लटस्ते **इर इत्संज्ञा वाच्ये**ति इर इत्संज्ञाया लोपे च **णो न** इति धात्वादेर्णस्य नत्वे शपि शपः श्लुवे **श्लौ** इति धातोर्द्वित्वे **हलादिः शेष** इति अभ्यासहलो लोपे **णिजां त्रयाणां गुणः श्लौ** इति अभ्यासगुणे तकारस्य कित्वात् **पुगन्तलघूपधस्ये**ति धातोर्गुणाभावे **चोः कुरि**ति जस्य गत्वे **खरि चे**ति गस्य कत्वे **टित आत्मनेपदानां टेरे** इति टेरेत्वे ॥ नेनिक्ते ॥ लिटस्तिपि तिपो णलि **णो न** इति णस्य नत्वे **लिटि धातोरनभ्यासस्ये**ति द्वित्वे **हलादिः शेष** इति

**नेनिग्धि ॥ नाभ्यस्तस्याचि पिति सार्वधातुके ।७।३।८७।** लघूपधगुणो न स्यात् । नेनिजानि नेनिजाम् । अनेनेक् अनेनिक्ताम् अनेनिजुः । अनेनिजम् अनेनिक्व

---

जलोपे **पुगन्तलघूपधस्ये**ति गुणे ॥ निनेज ॥ आ० प० लिटस्ते आमोऽद्वित्वे जलोपे नकारस्य कित्त्वाद्गुणाभावे **लिटस्तझयोरेशिरेच्** इत्येशि कृते ॥ निनिजे ॥ लुटस्तिपि **स्यतासी लृलुटो**रिति तासौ **लुटः प्रथमस्य डारौरसः** इति तिपो डाले डित्वसामर्थ्यादभस्यापि टेर्लोपे **पुगन्तलघूपधस्ये**ति गुणे जस्य गत्वे गस्य कत्वे च ॥ नेक्ता ॥ लृटस्तिपि स्ये गुणे जस्य गत्वे गस्य कत्वे सस्य षत्वे च ॥ नेक्ष्यति ॥ आ० प० लृटस्ते टेरेत्वे च ॥ नेक्ष्यते ॥ लोटस्तिपि शपि शपः श्लुवे **श्लौ** इति द्वित्वे **हलादिः शेष** इति जलोपे **णिजां त्रयाणां गुणः श्लौ** इति अभ्यासगुणे **पुगन्तलघूपधस्ये**ति धातोर्गुणे जस्य गत्वे गस्य कत्वे **एरु**रिति तिप इकारस्योकारे च ॥ नेनेक्तु ॥ लोटः सिपि **सेर्ह्यपिच्चे**ति सेर्हित्वे **श्लौ** इति द्वित्वे **हलादिः शेष** इति जलोपे **णिजां त्रयाणां गुणः श्लौ** इति गुणे **हुझल्भ्यो हेर्धिः** इति हेर्धित्वे जस्य गत्वे ॥ नेनिग्धि ॥ लोटो मिपि **मेर्निः** इति मेर्नित्वे **आडुत्तमस्य पिच्चे**ति आटि **श्लौ** इति धातोर्द्वित्वे जलोपे **णिजां त्रयाणां गुणः श्लौ** इति अभ्यासगुणे **नाभ्यस्तस्याचि पिति सार्वधातुके** इति गुणाभावे ॥ नेनिजानि ॥ आ० प० लोटस्ते धातोर्द्वित्वे हलो लोपे **णिजां त्रयाणां गुणः श्लौ** इति अभ्यासगुणे **चोः कु**रिति जस्य गत्वे **खरि चे**ति गस्य कत्वे **टित आत्मनेपदानां टेरे** इति टेरेत्वे **आमेतः** इति लोट [illegible] ॥ नेनिक्ताम् ॥ लङस्तिपि **श्लौ** इति धातोर्द्वित्वे हलो लोपे **णिजां त्रयाणां गुणः** [illegible] अभ्यासगुणे **पुगन्तलघूपधस्ये**ति धातोर्गुणे **चोः कु**रिति [illegible] **इतश्चे**ति तिप इकारलोपे **हल्ङ्याब्भ्यो दीर्घा**दिति तलोपे [illegible] इति अटि च ॥ अनेनेक् ॥ ताम् । अनेनिक्ताम् ॥ झौ **श्लौ** इति [illegible] **हलादिः शेष** [illegible] जलोपे **णिजां त्रयाणां गुणः श्लौ** इत्यभ्यासगुणे **सिजभ्यस्तविदिभ्यश्च** [illegible] जुसि अटि च ॥ अनेनिजुः ॥ लङ उत्तमैकवचने मिपि **श्लौ** इति धातोर्द्वित्वे **हलादिः शेष** इति जलोपे **णिजां त्रयाणां गुणः श्लौ** इति अभ्यासगुणे **तस्थस्थमिपां तांतंताम** इति मिपोऽमि कृते **लुङ्लङ्लृङ्क्ष्वडुदात्तः** इति अटि च ॥ अनेनिजम् ॥ आ० प० लङस्ते धातोर्द्वित्वे हलो लोपे **णिजां त्रयाणां गुणः श्लौ** इति अभ्यासगुणे **चोः कु**रिति जस्य गत्वे **खरि चे**ति गस्य कत्वे अटि च ॥ अनेनिक्त ॥ विधिलिङस्तिपि शपि शपः श्लुवे **श्लौ** इति धातोर्द्वित्वे **हलादिः शेष** इत्यभ्यासजकारलोपे **णिजां त्रयाणां गुणः श्लौ** इति अभ्यासगुणे **यासुट्परस्मैपदेषूदात्तो ङिच्चे**ति यासुटि उटो लोपे **लिङः सलोपोऽनन्त्यस्ये**ति सलोपे **इतश्चे**ति तिप इकारलोपे च ॥ नेनिज्यात् ॥

नेनिज्यात् निज्यात् नेनिजीत निक्षीष्ट ॥ **इरितो वा ।३।१।५७।** इरितो धातोश्च्लेरङ् वा परस्मैपदेषु । अनिजत् अनैक्षीत् अनिक्त अनेक्ष्यत् अनेक्ष्यत ॥ इति जुहोत्यादयः ॥

## ॥ अथ तिङन्ते दिवादिगणप्रकरणम् ॥

दिवुँ क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु १॥ **दिवादिभ्यः श्यन् ।३।१।६९।** शपोऽपवादः । हलि चेति दीर्घः । दीव्यति दिदेव देविता देविष्यति

---

आशीर्लिङ्स्तिपि यासुटि उटो लोपे **इतश्चेति** तिप इकारलोपे **स्कोः संयोगाद्योरन्ते चेति** सलोपे ॥ निज्यात् ॥ आ० प० विधिलिङ्स्ते शपि शपः श्लौ **श्लौ** इति धातोर्द्वित्वे **हलादिः शेष** इति जलोपे **णिजां त्रयाणां गुणः श्लौ** इत्यभ्यासगुणे **लिङः सीयुट्** इति सीयुटि उटो लोपे **लोपो व्योर्वलीति** यलोपे **लिङः सलोपोऽनन्त्यस्येति** सलोपे ॥ नेनिजीत ॥ आ० प० आशीर्लिङ्स्ते सीयुटि उटो लोपे यलोपे **सुट्तिथोरिति** सुटि उटो लोपे **चोः कुरिति** जस्य गत्वे **खरि चेति** जस्य कत्वे सकारयोः षत्वे **ष्टुना ष्टुरिति** ष्टुत्वे ॥ निक्षीष्ट ॥ लुङ्स्तिपि **च्लि लुङि** इति च्लौ **इरितो वेति** च्लेरङि **लुङ्लङ्लृङ्क्ष्वडुदात्त** इति अटि **इतश्चेति** तिप इकारलोपे च ॥ अनिजत् ॥ **इरितो वेति** सूत्रे वाग्रहणात्पक्षे **च्लेः सिच्** इति सिचि इचो लोपे अटि **इतश्चेति** तिप इकारलोपे **अस्ति-सिचोऽपृक्ते** इति ईटि **वदव्रजहलन्तस्याच** इति वृद्धौ **चोः कुरिति** जस्य गत्वे गस्य च **खरि चेति** कत्वे सस्य षत्वे ॥ अनैक्षीत् ॥ आ० प० लुङ्स्ते **च्लि लुङीति** च्लौ **च्लेः सिच्** इति सिचि इचो लोपे **झलो झलीति** सलोपे **चोः कुरिति** जस्य गत्वे **खरि चेति** गस्य कत्वे अटि च ॥ अनिक्त ॥ लृङ्स्तिपि **स्यतासी लृलुटोरिति** स्ये **चोः कुरिति** जस्य गत्वे **खरि चेति** गस्य कत्वे सस्य षत्वे **पुगन्तलघूपधस्येति** गुणे **इतश्चेति** तिप इकारलोपे **लुङ्लङ्लृङ्क्ष्वडुदात्त** इति अटि ॥ अनेक्ष्यत् ॥ आ० प० लृङ्स्ते ॥ अनेक्ष्यत ॥ इति जुहोत्यादिगणः समाप्तः ॥

कैलासशैलवासी तौ श्रीकेशवमहेश्वरौ ॥ कुरुतां करुणादृष्टिर्दीनेऽपि दयाम्बुदौ ॥ १ ॥

अथ दिवादिगणः ॥ तत्र दिवुक्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु धातुर्वर्तते ऽस्य लट्स्तिपि **दिवादिभ्यः श्यन्** इति श्यनि शकारनकारयोरित्संज्ञायां लोपे **हलि चेति** दीर्घत्वे ॥ दीव्यति ॥ लिट्स्तिपि तिपो णलि **लिटि धातोरिति** धातोर्द्वित्वे **हलादिः शेष** इति वलोपे **पुगन्तलघूपधस्येति** गुणे च ॥ दिदेव ॥ लुट्स्तिपि **स्यतासी लृलुटोरिति** तासौ **लुटः प्रथमस्य डारौरस** इति तिपो डादेशे डित्त्वसा-

---

१ दिवुँक्रीडा० उदित् करणमुदितो वेतिक्त्वायामिड्विकल्पार्थं यस्य विभाषेति निष्ठायामिण्निषेधार्थं च । देवित्वा । द्यूत्वा । द्यूतम् ।

दिव्यतु अदीव्यत् दीव्येत् दीव्यात् अदेवीत् अदेविष्यत् । एवं षिवु तन्तुसन्ताने २। नृती गात्रविक्षेपे ३ नृत्यति ननर्त नर्तिता ॥ **सेऽसिचि कृतचृतछृदतृदनृतः** ।७।२।५७। एभ्यः परस्य सिज्भिन्नस्य सादेरार्धधातुकस्येड्वा । नर्तिष्यति नर्त्स्यति नृत्यतु अनृत्यत् नृ-

---

मर्थ्यादभस्यापि टेर्लोपे **आर्द्धधातुकस्येड्वलादे**रिति इटि **पुगन्तलघूपधस्ये**ति गुणे ॥ देविता ॥ लृटस्तिपि स्ये **आर्द्धधातुकस्येड्वलादे**रिति इटि **पुगन्तलघूपधस्ये**ति गुणे सस्य षत्वे च ॥ देविष्यति ॥ लोटस्तिपि **दिवादिभ्यः श्यन्** इति श्यनि **हलि चे**त्युपधादीर्घत्वे **एरु**रिति तिप इकारस्य उत्वे ॥ दीव्यतु ॥ लङस्तिपि **दिवादिभ्यः श्यन्** इति श्यनि **हलि चे**ति दीर्घत्वे अटि **इतश्चे**ति तिप इकारलोपे ॥ अदीव्यत् ॥ विधिलिङ-स्तिपि श्यनि **हलि चे**त्युपधादीर्घत्वे **यासुट्परस्मैपदेष्वि**ति यासुटि उटो लोपे **अतो येयः** इति यास इयादेशे **लोपो व्योर्वली**ति यलोपे **आद्गुण** इति गुणे **इतश्चे**ति तिप इकारलोपे च ॥ दीव्येत् ॥ आशीर्लिङस्तिपि यासुटि उटो लोपे **इतश्चे**ति तिप इकारलोपे **स्कोः संयोगाद्योरन्ते चे**ति सलोपे **हलि चे**त्युपधादीर्घत्वे ॥ दीव्यात् ॥ लुङस्तिपि **च्लि लुङी**ति च्लौ **च्लेः सिच्** इति च्लेः सिचि इचो लोपे अटि **आर्द्धधातुकस्ये-ड्वलादे**रिति इटि **इतश्चे**ति तिप इकारलोपे **अस्तिसिचोऽपृक्ते** इति ईटि **इट ईटि** इति सलोपे **पुगन्तलघूपधस्ये**ति गुणे च ॥ अदेवीत् ॥ लङस्तिपि **स्यतासी लृलु-टो**रिति स्ये **आर्द्धधातुकस्येड्वलादे**रिति इटि **लुङ्लङ्लृङ्क्ष्वडुदात्तः** इति अटि **पुगन्तलघूपधस्ये**ति गुणे सस्य षत्वे **इतश्चे**ति तिप इकारलोपे ॥ अदेविष्यत् ॥ एवं षिवु त-न्तुसंताने धातो रूपाणि ज्ञेयानि। नृती गात्रविक्षेपे धातुरस्ति तत्र लटस्तिपि **दिवादिभ्यः श्यन्** इति श्यनि शकारस्य **लशक्वतद्धिते** इति सूत्रेण नकारस्य **हलन्त्य**मित्यनेन कृतायामित्संज्ञायां **तस्य लोप** इति शकारनकारयोर्लोपे च कृते ॥ नृत्यति ॥ लिटस्तिपि तिपो णलि **लिटि धातोरनभ्यासस्ये**ति द्वित्वे **हलादिः शेष** इति तकारलोपे **उरत्** इत्यनेनाभ्यास-ऋकारस्य रपरे अदादेशे कृते **हलादिः शेष** इति रलोपे **पुगन्तलघूपधस्ये**ति गुणे च ॥ ननर्त ॥ लुटस्तिपि **स्यतासी लृलुटो**रिति तासौ **लुटः प्रथमस्य डारौरसः** इति तिपो डात्वे डित्त्वसामर्थ्यादभस्यापि टेर्लोपे **आर्द्धधातुकस्येड्वलादे**रिति इटि **पुगन्तलघूपधस्ये**ति गुणे च ॥ नर्तिता ॥ लृटस्तिपि **स्यतासी लृलुटो**रिति स्ये इटि **पुगन्तलघूपधस्ये**ति गुणे सस्य षत्वे च । नर्तिष्यति ॥ **सेऽसिचिकृतचृ-तछृदतृदनृत** इत्यनेन इडभावे गुणे च ॥ नर्त्स्यति ॥ लोटस्तिपि श्यनि **एरु**रिति तिप इकार-स्योत्वे च ॥ नृत्यतु ॥ लङस्तिपि श्यनि अटि **इतश्चे**ति तिप इकारलोपे च ॥ अनृत्यत ॥ विधिलिङस्तिपि श्यनि **यासुट्परस्मैपदेषूदात्त** इति यासुटि उटो लोपे **अतो येयः** इति यास इयादेशे **लोपो व्योर्वली**ति यलोपे **इतश्चे**ति तिप इकारलोपे गुणे च ॥

त्येत् नृत्यात् अनर्तीत् अनर्तिष्यत् अनर्त्स्यत् । त्रसी उद्वेगे ४ । वा भ्राशेति श्यन्वा । त्रस्यति त्रसति ॥ **वा जॄभ्रमुत्रसाम्** ।६।४।१२४। एषां किति लिटि सेटि थलि च एत्वाभ्यासलोपौ वा । त्रेसतुः तत्रसतुः त्रेसिथ तत्रसिथ त्रसिता । शो तनूकरणे ४ ॥ **ओतः श्यनि** ।७।३।७१। लोपः स्यात् श्यनि । श्यति श्यतः श्यन्ति । शशौ शशतुः शशुः । शाता शास्यति ॥ **विभाषा घ्राधेट्शाच्छासः** ।२।४।७८। एभ्यः

---

नृत्येत् ॥ आशीर्लिङस्तिपि यासुटि सुटौ लोपे **इतश्चेति** तिप इकारलोपे **स्कोः संयोगाद्योरन्ते चेति** सलोपे च ॥ नृत्यात् ॥ लुङस्तिपि **च्लि लुङीति** च्लौ **च्लेः सिच्** इति च्लेः सिचि इयो लोपे **आर्धधातुकस्येड्वलादेरिति** इटि **इतश्चेति** तिप इकारलोपे **अस्तिसिचोऽपृक्ते** इति ईटि **इट ईटि** इति सलोपे **पुगन्तलघूपधस्येति** गुणे **लुङ्लङ्लृङ्क्ष्वडुदात्त** इति अटि च ॥ अनर्तीत् ॥ लृङस्तिपि **स्यतासी लृलुटोरिति** स्ये अटि इटि **पुगन्तलघूपधस्येति** गुणे सस्य षत्वे **इतश्चेति** तिप इकारलोपे च ॥ अनर्तिष्यत् ॥ **सेऽसिचि कृतचृतच्छृदतृदनृत** इत्यनेन इड्विकल्पे ॥ अनर्त्स्यत् ॥ त्रसी उद्वेगे धातुरयं तस्माल्लटस्तिपि **दिवादिभ्यः श्यन्** इति श्यनि शकारनकारयोरित्संज्ञया लोपे च ॥ त्रस्यति ॥ **वा भ्राशेति** श्यनो विकल्पे ॥ त्रसति ॥ लिटस्तिपि तिपो णलि **लिटि धातोरनभ्यासस्येति** धातोर्द्वित्वे **हलादिः शेष** इति रकारलोपे **अत उपधाया** इति दीर्घे ॥ तत्रास ॥ अतुसि धातोर्द्वित्वे रलोपे **वा जॄभ्रमुत्रसामिति** एत्वाभ्यासलोपे च सति ॥ त्रेसतुः ॥ एत्वाभ्यासलोपाभावपक्षे च ॥ तत्रसतुः ॥ एवं थलि ॥ त्रेसिथ ॥ पक्षे ॥ तत्रसिथ ॥ लुटस्तिपि **स्यतासी लृलुटोरिति** तासौ **आर्धधातुकस्येड्वलादेरिति** इटि **लुटः प्रथमस्य डारौरस** इति तिपो डादेशे डित्वसामर्थ्यादभस्यापि टेर्लोपे ॥ त्रसिता ॥ शो तनूकरणे धातुरस्मात् लटस्तिपि **दिवादिभ्यः श्यनिति** श्यनि **ओतः श्यनि** इत्योकारलोपे । श्यति । श्यतः । श्यन्ति । लिटस्तिपि तिपो णलि **आदेच उपदेशेऽशिति** इति सूत्रेण धातोरात्वे **लिटि धातोरनभ्यासस्येति** धातोर्द्वित्वे **ह्रस्व** इत्यभ्यासह्रस्वत्वे **आत औ णल** इति णल औकारादेशे वृद्धौ च कृतायाम् ॥ शशौ ॥ अतुसि **आदेच उपदेशेऽशिति** इति धातोरात्वे **लिटि धातोरिति** धातोर्द्वित्वे **ह्रस्व** इत्यभ्यासह्रस्वत्वे **आतो लोप इटि चेति** आकारलोपे ॥ शशतुः ॥ उसि ॥ शशुः ॥ लुटस्तिपि **स्यतासी लृलुटोरिति** तासौ **आदेच उपदेशेऽशिति** इति एजन्तस्य धातोरात्वे **लुटः प्रथमस्य डारौरस** इति तिपो डादेशे डित्वसामर्थ्यादभस्यापि टेर्लोपे ॥ शाता ॥ लृटस्तिपि **स्यतासी लृलुटोरिति** स्ये **आदेच उपदेशेऽशिति** इति आत्वे ॥ शास्यति ॥ लुङस्तिपि **च्लि लुङीति** च्लौ **च्लेः सिच्** इति च्लेः सिचि **विभाषाघ्राधेट्शाच्छासः** इति सिचो लोपे **आदेच उपदेशेऽशिति** इति धातोरात्वे **लुङ्लङ्लृङ्क्ष्वडुदात्त** इति अटि **इतश्चेति** तिप इकारलोपे च ॥

सिचो लुग्वा स्यात् परस्मैपदे परे । अघात् अघाताम् अघुः ॥ **यमरमनमातां सक्च**
।७।२।७३। एषां सक् स्यात् एभ्यः सिच इट् स्यात् परस्मैपदेषु ङ्र्मकौ । अघासीत्
अघासिषाम् । छो छेदने ६ छ्यति । षोऽन्तकर्मणि ७ स्यति ससौ । दोऽवखण्डने ८
द्यति ददौ देयात् अदात् । व्यध ताडने ९ ॥ **ग्रहिज्यावयिव्यधिवष्टिविचतिवृ-**

---

घ्रात् ॥ लुङस्तसि **तस्थस्थमिपां तांतंताम** इति तामि च्लौ च्लेः सिचि
**विभाषा घ्राधेट्शाच्छास** इति सिचो लोपे **आदेच उपदेशेऽशिति** इति धा-
तोरोकारस्यात्वे अटि च ॥ अघाताम् ॥ लुङो झौ च्लौ च्लेः सिचि **विभाषा घ्राधे-**
**ट्शाच्छास** इति सिज्लोपे **आत** इति झेर्जुसि **आदेच उपदेशेऽशिति** इति
धातोरोकारस्यात्वे अटि **उस्यपदान्तात्** इत्यनेन पररूपे कृते ॥ अघुः ॥ सिज्लोपा-
भावे **यमरमनमातां सक्च**ेत्यनेन सकि सिच इटि च कृते **आदेच उपदेशेऽशिति**
इति धातोरोकारस्यात्वे शास् इस् ति इति जातं **लुङ्लङ्लृङ्क्ष्वडुदात्त** इति अटि
**इतश्च**ेति तिप इकारलोपे च अशास् इस् त् इति जातं तत्र **अस्तिसिचोऽपृक्ते** इति ईटि
**इट ईटि** इति सलोपे च ॥ अघासीत् ॥ लुङस्तसि **तस्थस्थमिपां तांतंताम** इति
तामि **च्लि लुङि**ति च्लौ **च्लेः सिच्** इति सिचि इचो लोपे **यमरमनमातां सक्च**ेति
सकि इटि **लुङ्लङ्लृङ्क्ष्वडुदात्त** इति अटि **आदेच उपदेशेऽशिती**ति धातोरोका-
रस्यात्वे अघासिस् ताम् इति जातं तत्र सस्य षत्वे कृते **ष्टुना ष्टु**रिति ष्टुत्वे च ॥ अघासिष्टाम् ॥
लुङो झौ **च्लि लुङी**ति च्लौ **च्लेः सिच्** इति सिचि इचो लोपे **आदेच उपदे-**
**शेऽशिति** इति धातोरोकारस्यात्वे **यमरमनमातां सक् च**ेति सकि सिच इटि च
**लुङ्लङ्लृङ्क्ष्वडुदात्त** इति अटि **सिजभ्यस्तविदिभ्यश्च**ेति झेर्जुसि जकारस्ये-
त्संज्ञायां लोपे च कृते कृते च सस्य षत्वे ॥ अघासिषुः ॥ छो छेदने धातुरस्त्यस्मै लटस्तिपि
**दिवादिभ्यः श्यन्** इति श्यनि **ओतः श्यनि** इति धातोरोकारलोपे ॥ छ्यति ॥ षोऽन्तक-
र्मणि धातुर्वर्ततेऽस्मै लटस्तिपि **दिवादिभ्यः श्यन्** इति श्यनि **धात्वादेः षः स** इति षस्य
सत्वे **ओतः श्यनि** इत्योकारलोपे च ॥ स्यति ॥ दोऽवखण्डने धातुरस्त्यस्मै लटस्तिपि श्यनि
**ओतः श्यनि** इत्योकारलोपे च ॥ द्यति ॥ लिटस्तिपि तिपो णलि **आदेच उपदेशे-**
**ऽशिति** इति धातोरोकारस्यात्वे **लिटि धातोरनभ्यासस्य**ेति धातोर्द्वित्वे **ह्रस्व** इति
ह्रस्वत्वे **आत औ णल** इति णल औत्वे वृद्धौ च ॥ ददौ ॥ आशीर्लिङस्तिपि यासुटि
उटो लोपे **आदेच उपदेशेऽशिति** इति धातोरोकारस्यात्वे **इतश्च**ेति तिप इकारलोपे
**एर्लिङि** इति एकारे **स्कोः संयोगाद्योरन्ते च**ेति सलोपे च ॥ देयात् ॥ लुङस्तिपि च्लौ
च्लेः सिचि **आदेच उपदेशेऽशिति**इत्योकारस्यात्वे **गातिस्थाघुपाभूभ्यः सिचः**
इति सिचो लोपे अटि **इतश्च**ेति तिप इकारलोपे च ॥ अदात् ॥ व्यध ताडने धातुरस्त्यस्मै
लटस्तिपि श्यनि **ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीना-**

**श्चतिपृच्छतिभृज्जतीनां ङिति च** ।६।१।१६। एषां संप्रसारणं स्यात्किति ङिति च । विध्यति विव्याध विविधतुः विविधुः विव्यधिथ विव्यद्ध व्यद्धा व्यत्स्यति विध्येत् विध्यात् अव्यात्सीत् । पुष पुष्टौ १० पुष्यति पुपोष पुपोषिथ पोष्टा पोक्ष्यति । पुषादीत्यङ्

---

निति संप्रसारणे कृते ॥ विध्यति ॥ व्यध अमे लिटस्तिपि णिपो णलि **लिटि धातोरनभ्यासस्येति** धातोर्द्वित्वे **हलादिः शेष** इति धलोपे व्य व्यध् अ इति जाते **लिट्यभ्यासस्योभयेषामि**त्यनेनाभ्यासस्य संप्रसारणे कृते विव्यध् अ इति जाते **अत उपधाया** इति वृद्धौ कृतायाम् ॥ विव्याध ॥ अतुसि **ग्रहिज्यावयिव्यधी**त्यनेन सूत्रेण धातोः संप्रसारणे **लिटि धातोरनभ्यासस्येति** धातोर्द्वित्वे **हलादिः शेष** इति धकारलोपे ॥ विविधतुः ॥ उसि **ग्रहिज्यावयिव्यधी**ति धातोः संप्रसारणे धातोर्द्वित्वे **हलादिः शेष** इति धलोपे च ॥ विविधुः ॥ थलि धातोर्द्वित्वे **हलादिः शेष** इति धलोपे **लिट्यभ्यासस्योभयेषा**मित्यभ्याससंप्रसारणे क्रादिनियमात् पक्षे इटि ॥ विव्यधिथ ॥ इडभावे **झषस्तथोर्धोऽध** इति थस्य धे **झलां जश् झशि** इत्यनेन धस्य दत्वे ॥ विव्यद्ध ॥ लुटस्तिपि **स्यतासी लृलुटो**रिति तासौ **लुटः प्रथमस्य डारौरस** इति तिपो डादेशे डित्सामर्थ्यादभस्यापि टेर्लोपे **झषस्तथोर्धोऽध** इति तकारस्य धे **झलां जश्झशी**ति पूर्वधस्य दत्वे

अपुषत् । शुष शोषणे ११ शुष्यति शुशोष अशुषत् । णश अदर्शने १२ नश्यति न-
नाश नेशतुः॥**रधादिभ्यश्च**॥७।२।४५। रधनशतृपदृपद्रुहमुहष्णुहष्णिह् एभ्यो वलाद्या-
र्धधातुकस्य वेट् स्यात् । नेशिथ ॥ **मस्जिनशोर्झलि** ॥७।१।६०। नुम् स्यात् । ननंष्ठ
नेशिव नेश्व नेशिम नेश्म नशिता नंष्टा नशिष्यति नङ्क्ष्यति नश्यतु अनश्यत् नश्येत्

---

**लघूपधस्ये**ति गुणे ॥ पोष्टा ॥ लृटस्तिपि **स्यतासी लृलुटो**रिति स्ये **पुगन्तलघू-**
**पधस्य चे**ति गुणे **षढोः कः सि** इति षकारस्य ककारादेशे **आदेशप्रत्यययो**रिति सस्य
पत्वे संयोगे च ॥ पोक्ष्यति ॥ लोटि । पुष्यतु ॥ लङि । अपुष्यत् ॥ वि० लि० पुष्येत् ॥
आशीर्लिङि । पुष्यात् ॥ लुङस्तिपि **च्लि लुङी**ति च्लौ **पुषादिद्युताद्युदितः प-**
**रस्मैपदेष्वि**ति च्लेः अङि कृते **क्ङिति चे**ति गुणाभावे **लुङ्लङ्लृङ्क्ष्वडुदात्त** इति
अटि **इतश्चे**ति तिप इकारलोपे च ॥ अपुषत् ॥ लृङस्तिपि । अपोक्ष्यत् ॥ शुष शोषणे
धातुर्वर्तते॥ऽग्रे लटस्तिपि श्यनि च । शुष्यति ॥ लिटि । शुशोष ॥ लुटि । शोष्टा ॥ लृटि
॥ शोक्ष्यति ॥ लोटि । शुष्यतु ॥ लङि । अशुष्यत् ॥ विधिलिङि । शुष्येत् ॥ आशी-
र्लिङि । शुष्यात् ॥ लुङस्तिपि **च्लि लुङी**ति च्लौ **पुषादिद्युताद्युदितः परस्मै-**
**पदेष्वि**ति च्लेरङि कृते **क्ङिति चे**ति ङित्वाद्गुणाभावे अटि तिप इकारलोपे ॥ अशुषत् ॥
लृङि ॥ अशोक्ष्यत् ॥ णश् अदर्शने धातुर्वर्ततेऽग्रे लटस्तिपि **णो न** इति धात्वादेर्णस्य नत्वे
**दिवादिभ्यः श्यनि**ति श्यनि ॥ नश्यति ॥ लिटस्तिपि तिपो णलि **णो न** इति णस्य
नत्वे **लिटि धातो**रिति धातोर्द्वित्वे **हलादिः शेष** इत्यभ्यासशकारलोपे **अत उप-**
**धाया** इति वृद्धौ ॥ ननाश ॥ अतुसि धातोर्द्वित्वे शलोपे **अत एकहल्मध्येनादेशा-**
**देर्लिटि** इति अभ्यासलोपे अकारस्य एकारे च कृते ॥ नेशतुः ॥ उसि । नेशुः ॥ थलि
धातोर्द्वित्वे अभ्यासशलोपे **रधादिभ्यश्चे**ति इटि **थलि च सेटि** इति अभ्यासलोपे धात्व-
कारस्यैकारे च कृते ॥ नेशिथ ॥ **रधादिभ्यश्चे**ति सूत्रे वाग्रहणादिडभावे ननश् थ इति स्थिते
**मस्जिनशोर्झलि** इति नुमि कृते उम्भागस्य लोपे ननन्श थ इति जातं तत्र **व्रश्चभ्रस्ज-**
**सृजमृजयजराजभ्राजच्छशां षः** इति शस्य षत्वे **ष्टुना ष्टु**रिति थस्य ठत्वे **नश्चा-**
**पदान्तस्य झली**ति नस्यानुस्वारे च कृते ॥ ननंष्ठ ॥ वे परे । नेशिव ॥ मेपरे । नेशिम इडभावे
च । नेश्व ॥ लुटस्तिपि **स्यतासी लृलुटो**रिति तासौ **लुटः प्रथमस्य डारौरसः** इति
तिपो डात्वे डित्वसामर्थ्यादभस्यापि टेर्लोपे **रधादिभ्यश्चे**ति इटि च ॥ नशिता ॥ इडभावे
च **मस्जिनशोर्झली**ति नुमि उम्लोपे **व्रश्चभ्रस्जे**ति शस्य षत्वे **ष्टुना ष्टु**रिति
ष्टुत्वे **नश्चापदान्तस्य झलि** इति नस्यानुस्वारे कृते ॥ नंष्टा ॥ लृटस्तिपि स्ये **रधादिभ्य-**
**श्चे**ति इटि सस्य षत्वे च ॥ नशिष्यति ॥ इडभावे **मस्जिनशोर्झली**ति नुमि उम्भाग-
लोपे **व्रश्चभ्रस्जे**ति शस्य षत्वे **नश्चापदान्तस्ये**ति नस्यानुस्वारे **षढोः कः सि** इति

नश्यात् अनश्यत् । षूङ् प्राणिप्रसवे १३ सूयते सुषुवे । क्रादिनियमादिट् । सुषुविषे सुषुविढ्वे सुषुविमहे सोता सविता । दूङ् परितापे १४ दूयते । दीङ् क्षये १५ दीयते ॥
**दीङो युडचि क्ङिति ।६।४।६३।** दीङः परस्याजादेः क्ङित आर्धधातुकस्य युट् । (वुग्युटावुवङ्यणोः सिद्धौ वक्तव्यौ) ॥ दिदीये ॥ **मीनातिमिनोतिदीङां**

---

षस्य कत्वे **आदेशप्रत्यययो**रिति सस्य षत्वे कषोः संयोगे च कृते ॥ नंक्ष्यति ॥ लोटि । नश्यतु । लङि । अनश्यत् ॥ विधिलिङि । नश्येत् ॥ आशीर्लिङि । नश्यात् ॥ लुङि च्लेरङादेशे **क्ङिति** चेति ङित्वाद्गुणाभावे अङि तिप इकारलोपे च ॥ अनशत् ॥ लृङि । अनशिष्यत् ॥ इडभावे च । अनंक्ष्यत् ॥ षूङ् प्राणिप्रसवे धातुर्वर्तते तस्मात् लटस्ते **धात्वादेः षः सः** इति धात्वादेः षस्य सत्वे श्यनि शकारनकारयोरित्संज्ञायां लोपे च **टित आत्मनेपदानां टेरे** इति टेरेत्वे च ॥ सूयते ॥ लिटस्ते **धात्वादेः षः सः** इति षस्य सत्वे **लिटि धातो**रिति धातोर्द्वित्वे **ह्रस्वः** इति अभ्यासाचो ह्रस्वत्वे **लिटस्तझयोरेशिरेच्** इति तकारस्य एशि कृते **अचि श्नुधातुभ्रुवां य्वोरियङुवङौ** इति उवङि सस्य षत्वे च कृते ॥ सुषुवे ॥ लिटो मध्यमपुरुषैकवचने थासि **थासः से** इति थासः सेकारे कृते धातोर्द्वित्वे **ह्रस्व** इत्यभ्यासह्रस्वत्वे क्रादिनियमादिटि उवङि सस्य षत्वे च कृते ॥ सुषुविषे ॥ महिङ् । सुषुविमहे ॥ महिङि । सुषुविमहे ॥ लुटस्ते **स्यतासी लृलुटो**रिति तासौ **लुटः प्रथमस्य डारौरसः** इति तकारस्य डात्वे डित्वसामर्थ्यादभस्यापि टेर्लोपे **सार्वधातुकार्धधातुकयो**रिति गुणे च ॥ सोता ॥ **स्वरतिसूतिसूयतिधूञूदितो वा** इति पक्षे इडागमे गुणे अवि च कृते ॥ सविता ॥ दूङ् परितापे धातुरस्मात्प्रे लटस्ते श्यनि शकारनकारयोरित्संज्ञायां लोपे **टित आत्मनेपदानां टेरे** इति टेरेत्वे च कृते ॥ दूयते ॥ दीङ् क्षये धातुरस्मात्प्रे लटस्ते श्यनि **टित आत्मनेपदानां टेरे** इति टेरेत्वे च ॥ दीयते ॥ लिटस्ते धातोर्द्वित्वे **ह्रस्व** इत्यभ्यासह्रस्वत्वे दिदीत इति जातं तत्र **लिटस्तझयोरेशिरेच्** इति तकारस्य एशि कृते **दीङो युडचि क्ङिति** इति अजादेरार्धधातुकस्य युटि कृते उटो लोपे कृते दिदीय् ए इति जाते तत्र **असिद्धवदत्राभा**दित्यनेन युटोऽसिद्धत्वं परिकल्प्य यणि प्राप्ते **वुग्युटावुवङ्यणोः सिद्धौ वक्तव्यौ** इति वार्तिकेन यणि कर्तव्ये युटः सिद्धत्वात् ॥ दिदीये ॥ इति रूपं जातम् ॥ लुटस्ते **स्यतासी लृलुटो**रिति तासौ **लुटः प्रथमस्य डारौरसः** इति तस्य डात्वे डित्वसामर्थ्यादभस्यापि टेर्लोपे **मीनातिमिनोतिदीङां ल्यपि च** इति धातोरात्वे ॥ दाता ॥ लृटस्ते स्ये **मीनातिमिनोतिदीङां**

**ल्यपि च** ।६।१।५०। एषामात्वं स्यात् ल्यपि चादशित्येज्निमित्ते । दाता दास्यति अदास्त । डीङ् विहायसा गतौ १६ डीयते डिड्ये डयिता । पीङ् पाने १७ पीयते पेता अपेष्ट । माङ् माने १८ मायते ममे । जनी प्रादुर्भावे १९ ॥ **ज्ञाजनोर्जा** ७।३।७९। अनयोर्जादेशः स्यात् शिति । जायते जज्ञे जनिता जनिष्यते ॥ **दीपजनबुधपूरिता-**

---

**ल्यपि चे**ति आत्वे **टित आत्मनेपदानां टेरे** इति टेरेत्वे च ॥ दास्यते ॥ लुङस्ते च्लौ च्लेः सिचि इचो लोपे **मीनातिमिनोतिदीङां ल्यपि चे**ति इकारस्यात्वे अटि च ॥ अदास्त ॥ डीङ् विहायसा गतौ धातुरस्यग्रे लटस्ते श्यनि **टित आत्मनेपदानां टेरे** इति टेरेत्वे ॥ डीयते ॥ लिटस्ते धातोर्द्वित्वे अभ्यासह्रस्वत्वे **लिटस्तझयोरेशिरेच्** इत्येशि कृते **एरनेकाचोऽसंयोगपूर्वस्ये**ति यणि च कृते ॥ डिड्ये ॥ लुटस्ते **स्यतासी लृलुटो**रिति तासौ **लुटः प्रथमस्य डारौरस** इति तस्य डात्वे डित्वसामर्थ्यादभस्यापि टेर्लोपे **आर्धधातुकस्येड्वलादे**रिति इटि **सार्वधातुकार्धधातुकयो**रिति गुणे **एचोयवायाव** इति अयि च कृते ॥ डयिता ॥ पीङ् पाने धातुरस्यग्रे लटस्ते श्यनि **टित आत्मनेपदानां टेरे** इति टेरेत्वे ॥ पीयते ॥ लुटस्ते **स्यतासी लृलुटो**रिति तासौ **लुटः प्रथमस्य डारौरस** इति तकारस्य डात्वे डित्वसामर्थ्यादभस्यापि टेर्लोपे **एकाच उपदेशेऽनुदात्तात्** इत्यनेन इडभावे **सार्वधातुकार्धधातुकयो**रिति गुणे च ॥ पेता ॥ लुङस्ते **च्लि लुङी**ति च्लौ **च्लेः सिचि**ति सिचि इचो लोपे **लुङ्लङ्लृङ्क्ष्वडुदात्त** इति अटि **सार्वधातुकार्धधातुकयो**रिति गुणे सस्य षत्वे **ष्टुना ष्टु**रिति ष्टुत्वे च ॥ अपेष्ट ॥ माङ् माने धातुरस्ति तदग्रे लटस्ते श्यनि **टित आत्मनेपदानां टेरे** इति टेरेत्वे ॥ मायते ॥ लिटस्ते **लिटि धातोरनभ्यासस्ये**ति धातोर्द्वित्वे **ह्रस्व** इत्यभ्यासह्रस्वत्वे **लिटस्तझयोरेशिरेच्** इति तकारस्य एशि **अतो गुणे** इति पररूपे कृते ॥ ममे ॥ जनी प्रादुर्भावे धातुरस्यग्रे लटस्ते श्यनि **ज्ञाजनोर्जा** इत्यनेन जन्धातोर्जादेशे **टित आत्मनेपदानां टेरे** इति टेरेत्वे च कृते ॥ जायते ॥ लिटस्ते **लिटि धातोरनभ्यासस्ये**ति धातोर्द्वित्वे **हलादिः शेष** इति अभ्यासनलोपे च जजन् त इति जातं तत्र **लिटस्तझयोरेशिरेच्** इति तकारस्यैशि कृते **गमहनजनखनघसां लोपः क्ङित्यनङि** इत्यनेनोपधालोपे जज्न् ए इति जातं तत्र **स्तोः श्चुना श्चु**रिति नस्य ञत्वे संयोगे च कृते ॥ जज्ञे ॥ लुटस्ते तासौ **लुटः प्रथमस्य डारौरस** इति तकारस्य डात्वे डित्वसामर्थ्यादभस्यापि टेर्लोपे **आर्धधातुकस्येड्वलादे**रिति इटि च कृते ॥ जनिता ॥ लृटस्ते **स्यतासी लृलुटो**रिति स्ये इटि सस्य षत्वे **टित आत्मनेपदानां टेरे** इति टेरेत्वे च ॥ जनिष्यते ॥ लुङस्ते **च्लि लुङी**ति च्लौ **दीपजनबुधपूरितायिप्यायिभ्योऽन्यतरस्या**मित्यनेन च्लेश्चिणि कृते चकारणकार-

**यिप्यायिभ्योऽन्यतरस्याम्** ।३।१।६१। एभ्यश्च्लेश्चिण् वा स्यात् एकवचने तशब्दे परे ॥ **चिणो लुक्** ।६।४।१०४। चिणः परस्य तशब्दस्य लुक् स्यात् ॥ **जनिवध्योश्च** ।७।३।३५। अनयोरुपधाया वृद्धिर्न स्याच्चिणि ञ्णिति कृति च । अजनि अजनिष्ट । दीपी दीप्तौ २० दीप्यते दिदीपे अदीपि अदीपिष्ट । पद गतौ २१ पद्यते पेदे पत्ता पत्सीष्ट ॥ **चिण् ते पदः** ।३।१।६०। पदश्च्लेश्चिण् स्यात्तशब्दे परे । अपादि अपत्साताम् अपत्सत । विद सत्तायाम् २२ विद्यते वेत्ता अवित्त । बुध अवगमने २३ बुध्यते

---

योरित्संज्ञायां लोपे च कृते **लुङ्लङ्लृङ्क्ष्वडुदात्तः** इति अटि अजनि त इति जाते **चिणो लुक्** इत्यनेन चिणः परस्य तकारस्य लोपे **अत उपधायाः** इति वृद्धौ प्राप्तायां **जनिवध्योश्चे**ति वृद्ध्यभावे च ॥ अजनि ॥ चिणभावपक्षे **च्लेः सिच्** इति सिचि इचो लोपे अटि इटि सस्य षत्वे ष्टुत्वे च ॥ अजनिष्ट ॥ दीपी दीप्तौ धातुरस्मात् लटस्ते श्यनि टेरेत्वे च ॥ दीप्यते ॥ लिटस्ते **लिटि धातो**रिति धातोर्द्वित्वे **हलादिः शेषः** इति अभ्यासलोपे **ह्रस्वः** इत्यभ्यासह्रस्वे **लिटस्तझयोरेशिरेच्** इति तकारस्य एशि कृते ॥ दिदीपे ॥ लुङस्ते च्लौ **दीपजनबुधपूरितायिप्यायिभ्योऽन्यतरस्या**मिति च्लेश्चिणि अटि **चिणो लु**गिति तलोपे । अदीपि । चिणभावपक्षे च्लेः सिचि इचो लोपे अटि इटि सस्य षत्वे **ष्टुना ष्टु**रिति ष्टुत्वे च ॥ अदीपिष्ट ॥ पद गतौ धातुरस्मात् लटस्ते श्यनि टेरेत्वे च ॥ पद्यते ॥ लिटस्ते धातोर्द्वित्वे **हलादिः शेषः** इत्यभ्यासहलोपे **लिटस्तझयोरेशिरे**जिति एशि **अत एकहल्मध्येऽनादेशादेर्लिटि** इति अभ्यासलोपे अकारस्य एत्वे च ॥ पेदे ॥ लुटस्ते तासौ तकारस्य डात्वे डित्वसामर्थ्यादभस्यापि टेर्लोपे **खरि चे**ति दस्य तकारे च

असृक्षाताम् । मृष तितिक्षायाम् २६ मृष्यति मृष्यते ममर्ष ममर्षिथ ममृषिषे मर्षितासि मर्षितासे मर्षिष्यति मर्षिष्यते । णह बन्धने २७ नह्यते नह्यति ननाह ननद्ध नेहिथ नेहे नद्धा नत्स्यति अनात्सीत् अनद्ध ॥ इति दिवादयः ॥

---

टेरेत्वे च ॥ सक्ष्यते ॥ आशीर्लिङस्ते **लिङः सीयुट्** इति सीयुटि उटो लोपे **लोपो व्योर्वली**ति यलोपे **सुट् तिथोः**रिति सुटि उटो लोपे **व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः** इति जस्य षत्वे **षढोः कः सि** इति षस्य कत्वे **आदेशप्रत्यययोः**रिति सीयुटः सस्य षत्वे सुटः सस्य षत्वे च **ष्टुना ष्टुः**रिति ष्टुत्वे संयोगे च ॥ सृक्षीष्ट ॥ लुङस्ते च्लौ च्लेः सिचि इचो लोपे **झलो झली**ति सिचः सलोपे **लिङ्सिचावात्मनेपदेष्वि**ति सिचः कित्वे कित्त्वाद्गुणाभावे **व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः** इति जस्य षत्वे ष्टुत्वे **लुङ्लङ्लृङ्क्ष्वडुदात्तः** इति अटि ॥ असृष्ट ॥ आतामि च्लौ च्लेः सिचि इचो लोपे **व्रश्चे**ति जस्य षत्वे **षढोः कः सी**ति षस्य कत्वे **आदेशप्रत्यययोः**रिति सिचः सस्य षत्वे संयोगे अटि च ॥ असृक्षाताम् ॥ मृष तितिक्षायां धातुरस्त्यत्र लटस्तिपि श्यनि ॥ मृष्यति ॥ लटस्ते श्यनि च ॥ मृष्यते ॥ लिटस्तिपि तिपो णलि **लिटि धातोरनभ्यासस्ये**ति द्वित्वे **हलादिः शेषः** इत्यभ्यासलोपे **उरत्** इत्यभ्यासऋकारस्य रपरे अदादेशे पुनर्हलादिः शेषः इति रलोपे ममृष अ इति जातं तत्र **पुगन्तलघूपधस्ये**ति गुणे कृते ॥ ममर्ष ॥ थलि इटि ॥ ममर्षिथ ॥ आत्मने० थासि **थासः से** इति थासः से इटि धातुद्वित्वे अभ्यासषलोपे **उरत्** इति अभ्यासऋवर्णस्य रपरे अदादेशे पुनर्हलादिःशेषः इति रलोपे सस्य षत्वे च ॥ ममृषिषे ॥ लुटो मध्यमैकवचने सिपि **स्यतासी लृलुटो**रिति तासी इकारलोपे **आर्द्धधातुकस्येड्वलादे**रिति इटि **तासस्त्योर्लोपः** इति सलोपे गुणे च ॥ मर्षितासि ॥ लुट आ० प० प्रथमैकवचने थासि **थासः से** तासौ इलोपे इटि **तासस्त्योर्लोपः** इति सलोपे गुणे च ॥ मर्षितासे ॥ लृटस्तिपि **स्यतासी लृलुटो**रिति स्ये **आर्द्धधातुकस्येड्वलादे**रिति इटि **पुगन्तलघूपधस्ये**ति गुणे सस्य षत्वे च ॥ मर्षिष्यति ॥ आ० प० लृटस्ते स्ये इटि गुणे सस्य षत्वे **टित आत्मनेपदानां टेरे** इति टेरेत्वे ॥ मर्षिष्यते ॥ णह बन्धने धातुरस्त्यत्र लटस्तिपि श्यनि **णो नः** इति णस्य नत्वे च ॥ नह्यति ॥ आत्मनेप० लटस्ते श्यनि **णो नः** इति णस्य नत्वे टेरेत्वे ॥ नह्यते ॥ लिटस्तिपि तिपो णलि **लिटि धातोरनभ्यासस्ये**ति द्वित्वे **हलादिः शेषः** इति अभ्यासहलोलोपे **अत उपधायाः** इति वृद्धौ ॥ ननाह ॥ आ० प० लिटस्ते **लिटि धातो**रिति धातुद्वित्वे **हलादिः शेषः** इति अभ्यासहकारलोपे **लिटस्तझयोरेशिरेच्** इति तकारस्य एशि कृते त्वे च **अत एकहल्मध्येऽनादेशादेर्लिटि** इत्यनेनाभ्यासलोपपूर्वमकारस्य एकारत्वे च ॥ नेहे ॥ प० प० मध्यमैकवचने थलि **लिटि धातो**रिति धातुद्वित्वे **हलादिः शेषः** इति हलोपे **उपदेशेऽत्वतः** इति इडभावे **नहो**

## ॥ अथ तिङन्ते स्वादिगणप्रकरणम् ॥

षुञ् अभिषवे १॥ **स्वादिभ्यः श्नुः** ।३।१।७३। शपोऽपवादः । सुनोति सुनुतः । हु-श्नुवोरिति यण् । सुन्वन्ति सुन्वः सुनुवः । सुनुते सुन्वाते सुन्वते । सुन्वहे सुनुवहे सुषाव सुषुवे

---

**धः** इति हस्य धत्वे **झषस्तथोर्धोऽधः** इति थस्य धत्वे **झलां जश् झशि**ति पूर्वधस्य दत्वे ॥ ननद्ध ॥ क्रादिनियमात् थले इटि कृते **अत एकहल्मध्येऽनादेशादेर्लिटि** इत्यभ्यासलोपपूर्वमकारस्य एकारे कृते ॥ नेहिथ ॥ लुटस्तिपि **स्यतासी लृलुटो**रिति तासौ **लुटः प्रथमस्य डारौरसः** इति तिपो डात्वे डित्त्वसामर्थ्यादभस्यापि टेर्लोपे नह्ता इति जाते तत्र **नहो धः** इति हस्य धत्वे **झषस्तथोर्धोऽधः** इति तकारस्य धकारे **झलां जश् झशी**ति पूर्वधस्य दत्वे ॥ नद्धा ॥ लृटस्तिपि स्ये **नहो धः** इति हस्य धत्वे **खरि चे**ति धस्य तकारे च कृते ॥ नत्स्यति ॥ आ० प० लृटस्ते टेरेत्वे च ॥ नत्स्यते ॥ लुङस्तिपि **च्लि लुङी**ति च्लौ **च्लेः सिच्** इति सिचि इचो लोपे **नहो धः** इति हस्य धत्वे **खरि चे**ति धस्य तकारे **वदव्रजहलन्तस्याचः** इति वृद्धौ **हल्ङ्या**विति तिप इकारलोपे **अस्तिसिचोऽपृक्ते** इति ईटि **लुङ्लङ्लृङ्क्ष्वडुदात्तः** इति अटि च ॥ अनात्सीत् ॥ आ० प० लुङस्ते च्लौ च्लेः सिचि इचो लोपे अटि **झलो झली**ति सलोपे **नहो धः** इति हस्य धत्वे **झषस्तथोर्धोऽधः** इति तकारस्य धकारे **झलां जश् झशी**ति धस्य दत्वे ॥ अनद्ध ॥ इति दिवादयः संपूर्णाः ॥

श्रीसद्गुरुकृपालोकलेशालम्बबलादिदं ॥ यथामति मयाऽलेखि क्षन्तव्यं स्खलितं बुधैः ॥

षुञ् अभिषवे धातुर्वर्ततेऽग्रे लटस्तिपि **स्वादिभ्यः श्नुः** इति श्नौ **धात्वादेः षः सः** इति षस्य सत्वे **सार्वधातुकार्धधातुकयो**रिति गुणे च ॥ सुनोति ॥ तसि श्नौ **सार्वधातुकमपित्** इति तसो ङिद्वत्वात् **क्ङिति चे**ति गुणाभावे ॥ सुनुतः ॥ श्नौ झेरन्तादेशे श्नौ **हुश्नुवोः सार्वधातुके** इति यणि ॥ सुन्वन्ति ॥ आ० प० लटस्ते **स्वादिभ्यः श्नुः** इति श्नौ **टित आत्मनेपदानां टेरे** इति टेरेत्वे ॥ सुनुते ॥ आताम् **हुश्नुवोः सार्वधातुके** इति यणि टेरेत्वे **धात्वादेः षः सः** इति षस्य सत्वे ॥ सुन्वाते ॥ झे **धात्वादेः षः सः** इति षस्य सत्वे **आत्मनेपदेष्वनतः** इति झस्य अदादेशे **हुश्नुवोः सार्वधातुके** इति यणि ॥ सुन्वते ॥ प० प० उत्तमद्विवचने वसि **लोपश्चास्यान्यतरस्यां म्वोः** इत्युकारलोपे ॥ सुन्वः ॥ लोपाभावपक्षे ॥ सुनुवः ॥ आ० प० उत्तमद्विवचने वहौ **लोपश्चास्यान्यतरस्यां म्वोः** इत्युकारलोपे **टित आत्मनेपदानां टेरे** इति टेरेत्वे ॥ सुन्वहे ॥ लोपाभावपक्षे इति षस्य सत्वे ॥ सुनुवहे ॥ लिट्तिपि

---

१ षुञ् अभिषवे । अभिषवः स्नपनं पीडनं स्नानं सुरासंधानं च

सोता सुनु सुनवानि सुनवै सुनुयात् सूयात् ॥ **स्तुसुधूञ्भ्यः परस्मैपदेषु** ।७।२।७२। एभ्यः सिच इट् स्यात् परस्मैपदेषु । असावीत् असोष्ट । चिञ् चयने २ चिनोति चिनुते ॥ **विभाषा चेः** ।७।३।५८। अभ्यासात्परस्य कुत्वं वा स्यात्सनि लिटि च।

---

तिपो णलि **धात्वादेः षः स** इति षस्य सत्वे **लिटि धातोरनभ्यासस्ये**ति द्वित्वे **आदेशप्रत्यययो**रिति सस्य षत्वे **अचोञ्णिति** इति वृद्धौ **एचोऽयवायाव** इति आवि कृते ॥ सुषाव ॥ आ० प० लिटस्ते **धात्वादेः षः सः** इति षस्य सत्वे **लिटि धातो**रिति द्वित्वे **लिटस्तझयोरेशिरेच्** इति एशि कृते **आदेशप्रत्यययो**रिति सस्य षत्वे **अचि श्नुधातुभ्रुवां य्वोरियङुवङौ** इति उवङि कृते ॥ सुषुवे ॥ लुटस्तिपि **स्यतासी लृलुटो**रिति तासौ **लुटः प्रथमस्य डारौरसः** इति तिपो डात्वे डित्वसामर्थ्यादभस्यापि टेर्लोपे **पुगन्तलघूपधस्ये**ति गुणे ॥ सोता ॥ लोटो मध्यमैकवचने सिपि **सेर्ह्यपिच्चे**ति सेर्हौ **स्वादिभ्यः श्नुः** इति श्नौ शकारलोपे **उतश्च प्रत्ययादसंयोगपूर्वात्** इति हेर्लुकि ॥ सुनु ॥ लोट उत्तमैकवचने मिप्यागते **मेर्निः** इति मेर्नित्वे **आडुत्तमस्य पिच्चे**ति आटि **स्वादिभ्यः श्नुः** इति श्नौ **सार्वधातुकार्धधातुकयो**रिति गुणे **एचोऽयवायाव** इति अवादेशे च ॥ सुनवानि ॥ आ० प० लोट उत्तमैकवचने इटि **स्वादिभ्यः श्नुः** इति श्नौ **आडुत्तमस्य पिच्चे**ति आटि **आटश्चे**ति वृद्धौ **अचि श्नुधातुभ्रुवां य्वोरियङुवङौ** इत्युवङि कृते ॥ सुनुवै ॥ विधिलिङस्तिपि श्नौ यासुटि उटो लोपे **लिङः सलोपोऽनन्त्यस्ये**ति सलोपे **इतश्चे**ति तिप इकारलोपे ॥ सुनुयात् ॥ आशीर्लिङस्तिपि यासुटि उटो लोपे **इतश्चे**ति तिप इकारलोपे **स्कोः संयोगाद्योरन्ते चे**ति सलोपे **अकृत्सार्वधातुकयोर्दीर्घ** इति अजन्ताङ्गस्य दीर्घत्वे॥ सूयात् ॥ लुङस्तिपि **च्लि लुङी**ति च्लौ **च्लेः सिच्** इति सिचि इचो लोपे अटि असु स् ति इति जातं तत्र **स्तुसुधूञ्भ्यः परस्मैपदेषु** इति सिच इटि असु इ स् ति इति जातं तत्र **इतश्चे**ति तिप इकारलोपे **सिचि वृद्धिः परस्मैपदेषु** इति वृद्धौ **एचोऽयवायाव** इति आवि कृते असाविस् त् इति जातं तत्र **अस्तिसिचोऽपृक्ते** इति ईटि **इट ईटि** इत्यनेन सलोपे दीर्घत्वे च ॥ असावीत् ॥ आ० प० लुङस्ते च्लौ च्लेः सिचि इचो लोपे अटि **आदेशप्रत्यययो**रिति सस्य षत्वे **सार्वधातुकार्धधातुकयो**रिति गुणे ष्टुत्वे च ॥ असोष्ट ॥ चिञ् चयने धातुरस्मात् लटस्तिपि श्नौ गुणे च ॥ चिनोति ॥ आ० प० लटस्ते श्नौ टेरेत्वे च ॥ चिनुते ॥ लिटस्तिपि तिपो णलि **लिटि धातो**रिति धातुद्वित्वे **विभाषा चेः** इति कुत्वे चिकि अ इति जातं तत्र **अचोऽञ्णिति** इति वृद्धौ **एचोऽयवायाव** इति आयि च कृते ॥ चिकाय ॥ कुत्वाभा-

---

१ विभाषाचेः । नशोरिति सूत्रात् पुरिस्तनुवर्तने सन्लिटोर्जेरित्यतः सन् लिटोरिति च । तन्नुदाहरणं चिचीषति चिकीषति ॥

चिकाय चिचाय चिक्ये चिच्ये अचैषीत् अचेष्ट । स्तृञ् आच्छादने ३ स्तृणोति स्तृणुते ॥ **शर्पूर्वाः खयः** ।७।४।६१। अभ्यासस्य शर्पूर्वाः खयः शिष्यन्तेऽन्ये हलो लुप्यन्ते । तस्तार तस्तरतुः तस्तरे । गुणोर्तीति गुणः । स्तर्यात् ॥ **ऋतश्च संयोगादेः** ।७।२।४३। ऋदन्तात्संयोगादेः परयोर्लिङ्सिचोरिड्वा स्यात्तङि । स्तरिषीष्ट स्तृषीष्ट अस्तरिष्ट अस्तृत । धूञ् कम्पने ४ धूनोति धूनुते दुधाव । स्वरतीति वेट् । दुधविथ दुधोथ ॥ **श्र्युकः**

---

थपक्षे ॥ चिचाय ॥ आ० प० लिटस्ते धातुद्वित्वे **लिटस्तझयोरेशिरेच्** इति तकारस्य एशि **विभाषा चेः** इति कुत्वे **इको यणचीति** यणि च ॥ चिक्ये ॥ कुत्वाभावपक्षे ॥ चिच्ये ॥ लुङस्तिपि च्लौ च्लेः सिचि इचो लोपे अटि **इतश्चेति** तिप इकारलोपे **अस्ति-सिचोऽपृक्ते** इति ईटि **सिचि वृद्धिः परस्मैपदेष्विति** वृद्धौ ॥ अचैषीत् ॥ आ० प० लुङस्ते च्लौ सिचि इचो लोपे अटि तस्य षत्वे ष्टुत्वे गुणे च ॥ अचेष्ट ॥ स्तृञ् आच्छादने धातुरस्यग्रे लटस्तिपि श्नौ गुणे **अट्कुप्वाङ्नुम्व्यवायेपीति** नस्य णत्वे ॥ स्तृणोति ॥ लिटस्तिपि तिपो णलि **लिटि धातोरनभ्यासस्येति** धातोर्द्वित्वे स्तृ स्तृ अ इति जाते तत्र **उरत्** इत्यभ्यासऋकारस्य रपरे अदादेशे **शर्पूर्वाः खय** इत्यनेन सकारलोपे तर् स्तृ अ इति जाते **हलादिः शेष** इति रलोपे **अचोञ्णितीति** इति वृद्धौ ॥ तस्तार ॥ अतुसि । तस्त-रतुः ॥ लिटस्ते धातुद्वित्वे **उरत्** इत्यभ्यासऋवर्णस्य अदादेशे **शर्पूर्वाः खयः** इति सलोपे **लिटस्तझयोरेशिरेच्** इत्येशि **पुगन्तलघूपधस्य** चेति गुणे च ॥ तस्तरे ॥ आशी-र्लिङस्तिपि यासुटि उटो लोपे **इतश्चेति** तिप इकारलोपे **गुणोर्तीति** गुणे **स्कोः संयो-गाद्योरन्ते** चेति सलोपे च ॥ स्तर्यात् ॥ आ० प० आशीर्लिङस्ते **लिङः सीयुट्** इति सीयुटि उटो लोपे **ऋतश्च संयोगादेः** इत्यनेन इटि **सुट् तिथोरिति** सुटि उटो लोपे **गुणोर्तीति** गुणे सस्य षत्वे ॥ स्तरिषीष्ट ॥ इडभावपक्षे ॥ स्तृषीष्ट ॥ लुङस्ते च्लौ च्लेः सिचि इचो लोपे अटि **ऋतश्च संयोगादेः** इति इटि सस्य षत्वे ष्टुत्वे गुणे च ॥ अस्तरिष्ट ॥ इडभावपक्षे ॥ अटि च्लौ च्लेः सिचि इचो लोपे उश्चेति सिचः कित्वे कि-त्वात् **क्ङिति** चेति गुणाभावे **ह्रस्वादङ्गादिति** सिचो लोपे च ॥ अस्तृत ॥ धूञ् कम्पने धातुरस्ति तदग्रे लटस्तिपि श्नौ गुणे च ॥ धूनोति ॥ आ० प० लटस्ते श्नौ कित्वाद्गुणा-भावे **टित आत्मनेपदानां टेरे** इति टेरेत्वे च ॥ धूनुते ॥ लिटस्तिपि तिपो णलि **लिटि धातो**रिति द्वित्वे **ह्रस्व** इति ह्रस्वत्वे **अभ्यासे चर्चेति** धस्य दत्वे **अचोञ्णिति** इति वृद्धौ **एचोऽयवायाव** इति आवि च ॥ दुधाव ॥ थलि **स्वरतिसू-तिसूयतीति** वेटि गुणे अवि च ॥ दुधविथ ॥ इडभावपक्षे धातुद्वित्वे **अभ्यासे चर्चेति** धस्य दत्वे **सार्वधातुकार्धधातुकयोरिति** गुणे च ॥ दुधोथ ॥ लिट उत्तमद्विवचने वे **श्र्युकः किति** इत्यनेन परमपि स्वरत्यादिविकल्पं बाधित्वा निषेधे प्राप्ते **कृसृभृवृ-**

**क्रिति** ।७।२।११। श्रिञ एकाच उगन्ताच्च गित्किवोरिण् न। परमपि स्वरत्यादि-विकल्पं बाधित्वा पुरस्तात्प्रतिषेधकाण्डारम्भसामर्थ्यादनेन निषेधे प्राप्ते क्रादिनियमान्नि-त्यमिट्। दुधुविथ दुधुवे अधावीत् अधविष्ट अधोष्ट अधविष्यत् अधोष्यत् अधविष्यताम् अधोष्यताम् अधविष्यत अधोष्यत ॥ इति स्वादयः ॥

## ॥ अथ तिङन्ते तुदादिगणप्रकरणम् ॥

तुद व्यथने १॥ **तुदादिभ्यः शः** ।३।१।७७। शपोऽपवादः। तुदति तुदते तुतोद

---

**स्तुद्रुस्रुश्रुवो लिटि** इति क्रादिनियमान्नित्ये इटि कृते दुधु इथ इति जातं तत्र **अचिश्नु-धातुभ्रुवां य्वोरियङुवङौ** इति उवङि ॥ दुधुविथ ॥ आ० प० लिटस्ते **लिटि धातोरि**ति द्वित्वे **अभ्यासे चर्चे**ति धस्य दत्वे **लिटस्तझयोरे**शेरिति उवङादेशे च ॥ दुधुवे ॥ लुङस्तिपि च्लौ च्लेः सिचि इचो लोपे **स्तुसुधूञ्भ्यः परस्मैपदेषु** इति इटि **इतश्चे**ति तिप इकारलोपे **अस्तिसिचोऽपृक्ते** इति ईटि **इट ईटि** इति स-लोपे **सिचि वृद्धिः परस्मैपदेष्वि**ति वृद्धौ **एचोऽयवायावः** इति आवि अटि च कृते ॥ अधावीत् ॥ आ० प० लुङस्ते **च्लि लुङी**ति च्लौ **च्लेः सिच्** इति सिचि इचो लोपे **स्वरतिसूतिसूयतिधूञूदितो वे**ति इटि **सार्वधातुकार्द्धधातुकयो**-रिति गुणे **एचोऽयवायावः** इति अवि सस्य षत्वे ष्टुत्वे अटि च ॥ अधविष्ट ॥ इडभावपक्षे च्लौ च्लेः सिचि इचो लोपे गुणे सस्य षत्वे गुणे अटि च ॥ अधोष्ट ॥ लृङस्तिपि **स्य-तासी लृलुटो**रिति स्ये **स्वरतिसूतिसूयतिधूञूदितो वे**तिइटि **सार्वधातुकार्द्ध-धातुकयो**रिति गुणे **एचोयवायावः** इति अवि **लुङ्लङ्लृङ्क्ष्वडुदात्त** इति अटि सस्य षत्वे **इतश्चे**ति तिप इकारलोपे च ॥ अधविष्यत् ॥ इडभावपक्षे स्ये गुणे सस्य षत्वे तिप इकारलोपे च ॥ अधोष्यत् ॥ लृङस्तसि **तस्थस्थमिपां तांतंतामः** इति तामि **स्यतासी लृलुटो**रिति स्ये **स्वरतिसूतिसूयतिधूञूदितो वे**ति इटि **सार्वधातुकार्द्धधातुकयो**रिति गुणे अवि सस्य षत्वे अटि च ॥ अधविष्यतां ॥ इडभावपक्षे तामि स्ये गुणे सस्य षत्वे अटि च ॥ अधोष्यतां ॥ आ० प० लृङस्ते स्ये इटि गुणे अवि सस्य षत्वे अटि च ॥ अधविष्यत ॥ इडभावपक्षे ॥ स्ये गुणे सस्य षत्वे अटि च ॥ अधोष्यत ॥ इति स्वादयः ॥

जयन्ति केशवकृपादृष्टिपीयूषवृष्टयः। मन्मनोरथमञ्जर्यः फलन्ति याभिरन्वहम् ॥ १ ॥

तुद व्यथने धातुरस्ति तदग्रे लटस्तिपि **तुदादिभ्यः श** इति शे ॥ तुदति ॥ आ० प० लटस्ते शे टेरेत्वे च ॥ तुदते ॥ लिटस्तिपि तिपो णलि **लिटि धातो**रिति धातुद्वित्वे **हलादिः शेष** इति दलोपे **पुगन्तलघूपधस्य चे**ति गुणे ॥ तुतोद ॥ थलि धातुद्वित्वे हल्लोपे **आर्धधातुकस्येड्वलादे**रिति इटि **पुगन्तलघूपधस्ये**ति गुणे च ॥ तुतो-

तुतोदिथ तुतुदे तोत्ता अतौत्सीत् अतुत्त । णुद प्रेरणे २ नुदति नुदते नुनोद नोत्ता । भ्रस्ज पाके ३ ग्रहिज्येति संप्रसारणम् । सस्य श्चुत्वेन शः । शस्य जश्त्वेन जः । भृज्जति भृज्जते ॥ **भ्रस्जो रोपधयो रमन्यतरस्याम्** ।६।४।४७। भ्रस्जे रेफस्योपधायाश्च स्थाने रमागमो वा स्यादार्धधातुके । मित्त्वादन्त्यादचः परः स्थानषष्ठीनिर्देशाद्रोपधयोर्नि-

---

दिथ ॥ आत्मनेपदेषु लिटस्ते **लिटि धातोरनभ्यासस्येति** द्वित्वे **हलादिः शेष** इति दलोपे **क्ङिति चेति** गुणाभावे **लिटस्तझयोरेशिरेच्** इत्येशि ॥ तुतुदे ॥ लुटस्ते **स्यतासी ललुटो**रिति तासौ **लुटः प्रथमस्य डारौरस** इति तिपो डात्वे डित्त्वसा-मर्थ्यादभस्यापि टेर्लोपे **खरि चेति** दस्य तकारे **पुगन्तलघूपधस्य चेति** गुणे ॥ तोत्ता ॥ **लुङ्लङ्लृङ्क्ष्व-**लुङस्तिपि **च्लि लुङीति** च्लौ **च्लेः सिच्** इति सिचि इचो लोपे **डुदात्त** इति अटि **इतश्चेति** तिप इकारलोपे **अस्तिसिचोऽपृक्ते** इति ईटि **खरि चेति** दस्य तत्वे **वदव्रजहलन्तस्याचः** इति वृद्धौ च ॥ अतौत्सीत् ॥ आ० प० लुङस्ते च्लेः सिचि इचो लोपे **झलो झलीति** सलोपे **खरि चेति** दस्य तत्वे ॥ अतुत्त ॥ णुद प्रे-रणे धातुर्वर्षीति तदग्रे लटस्तिपि **तुदादिभ्यः शः** इति शे **णो न** इति णस्य नत्वे ॥ नुदति ॥ आ० प० लटस्ते शे टेरेत्वे च ॥ नुदते ॥ लिटस्तिपि तिपो णलि धातुद्वित्वे दलोपे **पुगन्तलघूपधस्येति** गुणे ॥ नुनोद ॥ आ० प० लिटस्ते धातुद्वित्वे दलोपे **लिट-स्तझयोरेशिरेच्** इत्येशि ॥ नुनुदे ॥ लुटस्तिपि तासौ तिपो डात्वे डित्त्वसामर्थ्यादभस्यापि टेर्लोपे **खरि चेति** दस्य तत्वे गुणे च ॥ नोत्ता ॥ भ्रस्ज पाके धातुर्वरीवरीत्यग्रे लटस्तिपि **तुदा-दिभ्यः श** इति शे ङित्त्वे **ग्रहिज्येति** संप्रसारणे कृते भृस् ज अ ति इति जातं तत्र **स्तोः श्चुना श्चु**रिति सस्य शत्वे **झलां जश् झशी**ति शस्य जत्वे च ॥ भृज्जति ॥ आ० प० लटस्ते टेरेत्वे च ॥ भृज्जते ॥ लिटस्तिपि तिपो णलि **लिटि धातो**रिति धातुद्वित्वे भ्रस्ज् भ्रस्ज् अ इति जातं तत्र **हलादिः शेष** इति हलो लोपे भभ्रस्ज अ इति जाते **अभ्यासे चर्चेति** भस्य बत्वे बभ्रस्ज इति जातं तत्र **भ्रस्जो रोपधयोरमन्यतरस्या**मिति रेफस्य उपधीभूतस्य तस्य च स्थाने रम् प्राप्तः स कुत्र स्यात् **मिदचोऽन्त्यात्पर** इति अ-न्त्यादकारोत्तरवर्तिनोऽकारात्परे रमि जाते बभ रम् ज् अ इति जातं तत्र मकारस्य **हल-न्त्य**मित्यनेन रेफोत्तरवर्त्यकारस्य **चोपदेशेऽजनुनासिक इत्** इति इत्संज्ञायां कृतायां **तस्य लोप** इति तयोर्लोपे च कृते ॥ बभर्ज ॥ रमभावपक्षे तु भ्रस्ज् भ्रस्ज् अ इति स्थिते **हलादिः शेष** इति हलां लोपे **अभ्यासे चर्चेति** भस्य बत्वे **स्तोः श्चुना श्चु**रिति

---

१ यत्र स्थानिर्दिष्टः स्थानषष्ठ्या निर्दिश्य विधीयते स तत्स्थाने भवति । इकोयणचीत्यादौ यणादिवत् । प्रकृते तु रमोनिर्दिष्टस्थानिकत्वाद्रोपधयोः स्थाने न भवति । एवं चास्यागमादेशत्वे भवतो यथाक्रमः प्र-स्ययागमत्वे । केचित्त्विदमयुक्तमिति वदन्ति । तथाहि । सनः क्तिचि लोपश्चास्यान्यतरस्याम् ।६।४।४५। इत्येतत्सूत्राल्लोप इत्यनुवर्त्य भ्रस्जो रोपधयोर्लोपो भवति रमूत्वागम इति ॥

अभ्राक्षीत् अभर्ष्ट अभ्रष्ट । कृष विलेखने ४ कृषति कृषते चकर्ष चकृषे ॥ **अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्** ।६।१।५९। उपदेशेऽनुदात्तो य ऋदुपधस्तस्याम्वा स्याज्झलादावकिति । क्रष्टा कर्ष्टा कृक्षीष्ट । (स्पृशमृशकृषतृपदृपां च्लेः सिज्वा वाच्यः) अक्राक्षीत् अकार्क्षीत् अकृक्षत् अकृष्ट अकृक्षाताम् अकृक्षत अकृक्षथाः । अकृक्षाताम् अकृक्षन्त । मिल

---

**सी**ति षस्य कत्वे **इतश्चे**ति तिप इकारलोपे **अस्तिसिचोऽपृक्ते** इति ईटि **आदेशप्रत्ययो**रिति सिचः सस्य षत्वे **वदव्रजहलन्तस्याचः** इति वृद्धौ अटि च कृते ॥ अभ्राक्षीत् ॥ रमभावपक्षे च्लौ च्लेः सिचि इचो लोपे **स्कोः संयोगाद्यो**रिति सलोपे **व्रश्चे**ति जस्य षत्वे **षढोः कः सी**ति षस्य कत्वे **इतश्चे**ति तिप इकारलोपे **अस्तिसिचोऽपृक्ते** इति ईटि सस्य षत्वे **वदव्रजहलन्तस्ये**ति वृद्धौ अटि च ॥ अभ्राक्षीत् ॥ आ० प० लुङस्ते च्लौ च्लेः सिचि इचो लोपे अटि **भ्रस्जो रोपधयो**रिति रमि **झलो झली**ति सलोपे **व्रश्चे**ति जस्य षत्वे ष्टुत्वे च ॥ अभर्ष्ट ॥ रमभावपक्षे च्लेः सिचि **झलो झली**ति सिचः सलोपे **स्कोः संयोगाद्यो**रिति सलोपे **व्रश्चे**ति जस्य षत्वे ष्टुत्वे अटि च कृते ॥ अभ्रष्ट ॥ कृष विलेखने धातुरस्ति तदग्रे **तुदादिभ्यः शः** इति शे ॥ कृषति ॥ आ० प० । टेरेत्वे ॥ कृषते ॥ लिटस्तिपि तिपो णलि **लिटि धातो**रिति धातुद्वित्वे **हलादिः शेषः** इति हल्लोपे **उरत्** इति अभ्यासऋवर्णस्य अति रलोपे **कुहोश्चु**रिति कस्य चत्वे **पुगन्तलघूपधस्य चे**ति गुणे च ॥ चकर्ष ॥ आ० प० लिटस्ते धातुद्वित्वे हलो लोपे कस्य चत्वे **लिटस्तझयोरेशिरेच्** इत्येशि ॥ चकृषे ॥ लुटस्तिपि **स्यतासी लृलुटो**रिति तासौ **लुटः प्रथमस्ये**ति तिपो डात्वे डित्त्वसामर्थ्यादभस्यापि टेर्लोपे **अनुदात्तस्य चर्दुपधस्यान्यतरस्या**मित्यमि मलोपे **इको यणची**ति यणि ष्टुत्वे च ॥ क्रष्टा ॥ अमभावपक्षे गुणे कृते ॥ कर्ष्टा ॥ आशीर्लिङस्तिपि यासुटि उटो लोपे **इतश्चे**ति तिप इकारलोपे **स्कोः संयोगाद्योरन्ते चे**ति सलोपे च ॥ कृष्यात् ॥ आ० प० आशीर्लिङस्ते **लिङः सीयुट्** इति सीयुटि उटो लोपे यलोपे **सुट्तिथो**रिति सुटि उटो लोपे सस्य षत्वे ष्टुत्वे च कृष् सीष्ट इति जातं तत्र **षढोः कः सी**ति षस्य कत्वे सस्य षत्वे संयोगे च कृते ॥ कृक्षीष्ट ॥ लुङस्तिपि **च्लि लुङी**ति च्लौ **स्पृशमृशकृषतृपदृपां च्लेः सिज्वा वाच्य** इति सिचि इचो लोपे **अनुदात्तस्य चर्दुपधस्यान्यतरस्या**मित्यमि कृ अम् ष् स् ति इति जातं तत्र मलोपे यणि अटि **इतश्चे**ति तिप इकारलोपे **षढोः कः सी**ति षस्य कत्वे **आदेशप्रत्यययो**रिति सिचः सस्य षत्वे **अस्तिसिचोऽपृक्ते** इति ईटि **वदव्रजहलन्तस्याचः** इति वृद्धौ ॥ अक्राक्षीत् ॥ अमभावपक्षे **सिचि वृद्धिः परस्मैपदेष्वि**ति वृद्धौ ॥ अकार्क्षीत् ॥ सिचोऽभावे च **शल इगुपधादनिटः क्सः** इति च्लेः क्सादेशे कृते ककारस्येत्संज्ञायां लोपे च कृते अटि **इतश्चे**ति तिप इकारलोपे **षढोः कः सी**ति षस्य कत्वे सस्य षत्वे संयोगे च कृते

सङ्गमे ५ मिलति मिलते मिमेल मेलिता अमेलीत् । मुच्लृ मोचने ६॥ **शे मुचादीनाम्** ।७।१।५९। मुच्लिप्विद्लुप्सिच्कृत्खिद्पिशां नुम् स्यात् शे परे । मुञ्चति मुञ्चते मोक्ता मुच्यात् मुक्षीष्ट अमुचत् अमुक्त अमुक्षाताम् । लुप्लृ छेदने ७ लुम्पति लुम्पते लोप्ता अलुपत् अलुप्त । विदॢ लाभे ८ विन्दति विन्दते विवेद विविदे । व्याघ्रभूतिमते

---

॥ अकुक्षत् ॥ आ० प० लुङस्ते च्लौ च्लेः सिचि इचो लोपे अटि **झलो झली**ति सिचः सलोपे षुत्वे च ॥ अकुष्ट ॥ आतामि षस्य कत्वे सस्य षत्वे संयोगे अटि च ॥ अकुक्षातां ॥ लुङो झे झस्य **आत्मनेपदेष्वनतः** इत्यदादेशे षस्य कत्वे सस्य षत्वे अटि संयोगे च ॥ अकुक्षत ॥ मिल संगमे धातुरस्यग्रे लटस्तिपि **तुदादिभ्यः शः** इति शे ॥ मिलति ॥ आ० प० लटस्ते टेरेत्वे च ॥ मिलते ॥ लिटस्तिपि तिपो णलि **लिटि धातोरनभ्यासस्ये**ति द्वित्वे **हलादिः शेषः** इति ललोपे **पुगन्तलघूपधस्येति** गुणे ॥ मिमेल ॥ लुटस्ते **स्यतासी लृलुटो**रिति तासौ **आर्द्धधातुकस्ये**ति इटि **लुटः प्रथमस्ये**ति तिपो डात्वे डित्वसामर्थ्यादमस्यापि टेर्लोपे **पुगन्तलघूपधस्य चे**ति गुणे ॥ मेलिता ॥ लुङस्तिपि **च्लि लुङी**ति च्लौ **च्लेः सिच्** इति सिचि इचो लोपे **लुङ्लङ्लृङ्क्ष्वडुदात्तः** इति अटि **इतश्चे**ति तिप इकारलोपे **आर्द्धधातुकस्येड्वलादे**रिति इटि **अस्तिसिचोऽपृक्ते** इति ईटि **इट ईटि** इति सलोपे **पुगन्तलघूपधस्ये**ति गुणे च ॥ अमेलीत् ॥ मुच्लृ मोचने धातुर्वर्ततेऽग्रे लटस्तिपि **तुदादिभ्यः शः** इति शे **शे मुचादीना**मिति नुमि उम्भागलोपे अनुस्वारे परसवर्णे ॥ मुञ्चति ॥ आ० प० लटस्ते शे नुमि टेरेत्वे च ॥ मुञ्चते ॥ लुटस्तिपि तासौ तिपो डात्वे डित्वसामर्थ्यादमस्यापि टेर्लोपे **चोः कु**रिति चस्य कत्वे **पुगन्तलघूपधस्ये**ति गुणे च ॥ मोक्ता ॥ आशीर्लिङस्तिपि **यासुट्परस्मैपदेषूदात्तो ङिच्चे**ति यासुटि उटो लोपे **इतश्चे**ति तिप इकारलोपे **स्कोः संयोगाद्योरन्ते चे**ति सलोपे ॥ मुच्यात् ॥ आ० प० आशीर्लिङस्ते **लिङः सीयुट्** इति सीयुटि उटो लोपे **लोपो व्यो**रिति यलोपे **चोः कु**रिति कुत्वे **आदेशप्रत्यययो**रिति सस्य षत्वे संयोगे **सुट् तिथो**रिति सुटि उटो लोपे ष्टुत्वे च ॥ मुक्षीष्ट ॥ लुङस्तिपि च्लौ **पुषादिद्युताद्यॢदितः परस्मैपदेषु**विति च्लेः अङि **इतश्चे**ति तिप इकारलोपे अटि च ॥ अमुचत् ॥ आ० प० लुङस्तिपि च्लौ च्लेः सिचि इचो लोपे **झलो झली**ति सलोपे **चोः कु**रिति चस्य कत्वे अटि च ॥ अमुक्त ॥ आतामि । अमुक्षाताम् ॥ लुप्लृ छेदने धातुरस्त्यग्रे लटस्तिपि शे **शे मुचादीना**मिति नुमि उम्लोपे **नश्चापदान्तस्य झली**ति नस्यानुस्वारे **अनुस्वारस्य ययि परसवर्णः** इति परसवर्णे ॥ लुम्पति । आ० प० लटस्ते शे टेरेत्वे **शे मुचादीना**मिति नुमि उम्भागलोपे नस्यानुस्वारे अनुस्वारस्य च परसवर्णे ॥ लुम्पते ॥ लुटस्तिपि **स्यतासी लृलुटो**रिति तासौ तिपो डात्वे डित्वात् टेर्लोपे **पुगन्तलघूपधस्ये**ति गुणे ॥ लोप्ता ॥ लुङस्तिपि **च्लि लुङी**ति च्लौ **पुषादिद्यु-**

सद् । वेदिता । भाष्यमतेऽनिट् । परिवेत्ता । षिच क्षरणे ९ सिञ्चति सिञ्चते ॥ **लिपिसिचिह्वश्च** ।३।१।५३। एभ्यश्च्लेरङ् स्यात् । असिचत् ॥ **आत्मनेपदेष्वन्यतरस्याम्** ।३।१।५४। लिपि सिचि ह्वः परस्य च्लेरङ् वा । असिचत असिक्त । लिप उपदेहे १० उपदेहो वृद्धिः । लिम्पति लिम्पते लेप्ता अलिपत् अलिपत अलिप्त । इति उभयपदिनः । कृती छेदने ११ कृन्तति चकर्त कर्तिता कर्तिष्यति कर्त्स्यति अकर्तीत् ।

---

**तास्त्यदित** इति च्लेरङि कृते अटि **इतश्चे**ति तिप इकारलोपे च ॥ अलुपत् ॥ आ० प० लुङस्ते च्लौ **च्लेः सिच्** इति सिचि इचो लोपे **झलो झली**ति सलोपे अटि च ॥ अलुप्त ॥ विद्लृ लाभे धातुरस्ति तदग्रे लटस्तिपि **तुदादिभ्यः श** इति शे **शे मुचादीनामि**ति नुमि उमो लोपे ॥ विन्दति ॥ आ० प० लटस्ते शे नुमि टेरेत्वे च ॥ विन्दते ॥ लिटस्तिपि तिपो णलि धातुद्वित्वे शेषहल्लोपे **पुगन्तलघूपधस्ये**ति गुणे ॥ विवेद ॥ आ०प० लिटस्ते **लिटि धातोरनभ्यासस्ये**ति धातुद्वित्वे **हलादिः शेष** इति दलोपे **लिटस्तझयोरेशिरेच्** इत्येशि ॥ विविदे ॥ लुटस्तिपि **स्यतासी लृलुटोरि**ति तासी **लुटः प्रथमस्य डारौरस** इति तिपो डात्वे डित्वाट्टेर्लोपे गुणे च **व्याघ्रभूति**मते सेट् तत **आर्धधातुकस्येड्वलादेरि**ति इटि ॥ वेदिता ॥ भाष्यमते इडभावात् **खरि चे**ति दस्य तकारे कृते ॥ वेत्ता ॥ एवं परिपूर्वकविद्लृधातोर्लुटस्तिपि ॥ परिवेत्ता ॥ षिच् क्षरणे धातुर्वर्तते तदग्रे लटस्तिपि शे **शे मुचादीना**मिति नुमि **धात्वादेः षः स** इति षस्य सत्वे अनुस्वारे परसवर्णे च कृते ॥ सिञ्चति ॥ आ० प० लटस्ते ॥ सिञ्चते ॥ लुङस्तिपि **च्लि लुङी**ति च्लौ **लिपिसिचि ह्वश्चे**ति च्लेरङि अटि तिप इकारलोपे च ॥ असिचत् ॥ आ० प० लुङस्ते च्लौ **आत्मनेपदेष्वन्यतरस्या**मिति च्लेरङि अटि ॥ असिचत ॥ च्लेरङोऽभावे च्लेः सिचि इचो लोपे **झलो झली**ति सलोपे **चोः कु**रिति चस्य कत्वे अटि च ॥ असिक्त ॥ लिप उपदेहे धातुरस्ति तदग्रे लटस्तिपि **तुदादिभ्यः श** इति शे **शे मुचादीना**मिति नुमि ॥ लिम्पति । आ० प० लटस्ते शे नुमि टेरेत्वे च ॥ लिम्पते ॥ लुटस्तिपि **स्यतासी लृलुटो**रिति तासौ **लुटः प्रथमस्ये**ति तिपो डात्वे डित्वाट्टिलोपे **पुगन्तलघूपधस्ये**ति गुणे ॥ लेप्ता ॥ लुङस्तिपि च्लौ **लिपिसिचिह्वश्चे**ति च्लेरङि अटि तिप इकारलोपे च ॥ अलिपत् ॥ आ० प० । लुङस्ते च्लौ **आत्मनेपदेष्वन्यतरस्या**मिति अङि अटि । अलिपत ॥ अङोऽभावे ॥ अलिप्त ॥ इत्युभयपदिनः ॥ कृती छेदने धातुरस्यग्रे **तुदादिभ्यः श** इति शे **शे मुचादीना**मिति नुमि अनुस्वारे परसवर्णे च कृते ॥ कृन्तति ॥ लिटस्तिपि तिपो णलि **लिटि धातो**रिति द्वित्वे **हलादिः शेष** इत्यभ्यासतकारलोपे **उरत्** इति रपरे अदादेशे **हलादिः शेष** इति रलोपे **कुहोश्चु**रिति कस्य चत्वे **पुगन्तलघूपधस्ये**ति गुणे ॥ चकर्त ॥ लुटस्तिपि तासौ तिपो डात्वे इटि गुणे च ॥ कर्तिता ॥ लृटस्तिपि स्ये **सेऽसि-**

खिद परिघाते १२ खिन्दति चिखेद खेत्ता । पिश अवयवे १३ पिंशति पेशिता । ओव्रश्चू छेदने १४ वृश्चति वव्रश्च वव्रश्चिथ वव्रष्ठ व्रश्चिता व्रष्टा व्रश्चिष्यति व्रक्ष्यति वृश्च्यात् ।

---

**सेऽसिचि कृतचृतच्छृदतृदनृतः** इति पक्षे इटि **पुगन्तलघूपधस्ये**ति गुणे सस्य षत्वे ॥ कर्तिष्यति ॥ इडभावे । कर्त्स्यति ॥ लुङस्तिपि च्लौ च्लेः सिचि इचो लोपे **आर्धधातुकस्ये**ति इटि **इतश्चे**ति तिप इकारलोपे **अस्तिसिचोऽपृक्ते** इति ईटि **इट ईटि** इति सलोपे दीर्घत्वे गुणे अटि च ॥ अकर्तीत् ॥ खिद परिघाते धातुरस्यमे **तुदादिभ्यः श** इति शे **शे मुचादीना**मिति नुमि ॥ खिन्दति ॥ लिटस्तिपि तिपो णलि **लिटि धातोरनभ्यासस्ये**ति द्वित्वे **हलादिः शेष** इति दलोपे **कुहोश्चु**रिति खस्य छत्वे **अभ्यासे चर्चे**ति छस्य चत्वे **पुगन्तलघूपधस्ये**ति गुणे ॥ चिखेद ॥ लुटस्तिपि *स्यतासी लृलुटो*रिति *तासौ तिपो डात्वे डित्त्वाट्टिलोपे खरि चेति दस्य तकारे गुणे* ॥ खेत्ता ॥ पिश अवयवे **तुदादिभ्यः श** इति शे **शे मुचादीना**मिति नुमि ॥ पिंशति ॥ लुटस्तिपि **स्यतासी लृलुटो**रिति तासौ **लुटः प्रथमस्य डारौरसः** इति तिपो डात्वे डित्वाट्टिलोपे इटि गुणे च ॥ पेशिता ॥ ओव्रश्चू छेदने धातुर्वर्तते तदग्रे लटस्तिपि **तुदादिभ्यः श** इति शे **उपदेशेऽजनुनासिक इ**दिति ओकारस्य ऊकारस्य चेत्संज्ञाया लोपे च कृते **ग्रहिज्ये**ति सूत्रेण सम्प्रसारणे **संप्रसारणाच्चे**ति सूत्रेण पूर्वरूपे च कृते ॥ वृश्चति ॥ लिटस्तिपि तिपो णलि **लिटि धातो**रिति द्वित्वे सम्प्रसारणं तदाश्रयं च कार्यं बलवदिति वचनात् पूर्वं **लिट्यभ्यासस्योभयेषा**मित्यभ्याससम्प्रसारणे वृश्च व्रश्च अ इति जाते तत्र **उरत्** इत्यभ्यासऋवर्णस्य रपरे अदादेशे वर्‌श्च् व्रश्च अ इति जाते **हलादिः शेष** इति हलो लोपे ॥ वव्रश्च ॥ थलि द्वित्वे **लिट्यभ्यासस्ये**ति सम्प्रसारणे **उरत्** इत्यभ्यासऋवर्णस्य अदादेशे **हलादिः शेष** इति हलो लोपे **स्वरतिसूतिसूयति-धूञूदितो वे**ति पक्षे इटि ॥ वव्रश्चिथ ॥ इडभावे द्वित्वे हलोपे सम्प्रसारणे अभ्यासऋवर्णस्य रपरे अदादेशे कृते च **हलादिः शेष** इति रलोपे वव्रश्च्थ इति जाते शत्वस्यासिद्धत्वात् **स्कोरि**ति सलोपे **व्रश्चभ्रस्जे**ति शस्य षत्वे **ष्टुना ष्टु**रिति थस्य ठत्वे ॥ वव्रष्ठ ॥ लुटस्तिपि **स्यतासी लृलुटो**रिति तासौ **स्वरतिसूतिसूयतिधूञूदितो वे**ति इटि **लुटः प्रथमस्य डारौरस** इति तिपो डात्वे डित्त्वसामर्थ्याद्भस्यापि टेर्लोपे ॥ व्रश्चिता ॥ इडभावे शत्वस्यासिद्धत्वात् **स्कोरि**ति सलोपे **व्रश्चभ्रस्जे**ति शस्य षत्वे **ष्टुना ष्टु**रिति तकारस्य टकारत्वे ॥ व्रष्टा ॥ लृटस्तिपि **स्यतासी**ति स्ये **स्वरतिसूतिसूयतिधूञू-दितो वे**ति इटि सस्य षत्वे ॥ व्रश्चिष्यति ॥ इडभावे । व्रक्ष्यति ॥ आशीर्लिङस्तिपि **यासुट्परस्मैपदेषूदात्तो ङिच्चे**ति यासुटि स्टो लोपे **इतश्चे**ति तिप इकारलोपे **ग्रहिज्यावयिव्यधी**ति सम्प्रसारणे **संप्रसारणाच्चे**ति पूर्वरूपे कृते ॥ वृश्च्यात् ॥

अव्रश्चीत् । अव्राक्षीत् । व्यच व्याजीकरणे १५ विचति विव्याच विविचतुः व्यचिता व्यचिष्यति विच्यात् अव्याचीत् अव्यचीत् । व्यचेः कुटादित्वमनसीति तु नेह प्रवर्तते । अनसीति पर्युदासेन कृन्मात्रविषयत्वात् । उछि उञ्छे १६ उञ्छति । उञ्छः कणश आदानं कणिशाद्यर्जनं शीलमिति यादवः । ऋच्छ गतीन्द्रियप्रलयमूर्तिभावेषु १७ ऋच्छति । ऋच्छत्यॄतामिति गुणः । द्विहल्ग्रहणस्याऽनेकहल्उपलक्षणत्वान्नुट् । आ-

---

लुङस्तिपि **च्लि लुङि** इति च्लौ **च्लेः सिच्** इति सिचि इचो लोपे **स्वरतिसूति** इति इटि **इतश्चे**ति तिप इकारलोपे **अस्तिसिचोऽपृक्ते** इति ईटि **इट ईटि** इति सलोपे अटि च ॥ अव्रश्चीत् ॥ व्यच व्याजीकरणे धातुर्वर्ततेऽग्रे लटस्तिपि **तुदादिभ्यः श** इति शे **ग्रहिज्यावयिव्यधी**ति संप्रसारणे **संप्रसारणाच्चे**ति पूर्वरूपादेशे ॥ विचति ॥ लिटस्तिपि तिपो णलि **लिटि धातोरनभ्यासस्ये**ति द्वित्वे **लिट्यभ्यासस्योभयेषा**मिति संप्रसारणे **संप्रसारणाच्चे**ति अकारस्य पूर्वरूपादेशे **हलादिः शेष** इति शेषहलो लोपे वृद्धौ ॥ विव्याच ॥ अतुसि **ग्रहिज्यावयिव्यधी**ति धातोः संप्रसारणे **संप्रसारणाच्चे**ति पूर्वरूपे धातुद्वित्वे शेषहलो लोपे ॥ विविचतुः ॥ लुटस्तिपि **स्यतासी**ति तासौ **आर्द्धधातुकस्येड्वलादेः** इति इटि तिपो डात्वे डित्वसामर्थ्यादभस्यापि टेर्लोपे ॥ व्यचिता ॥ लृटस्तिपि स्ये इटि च ॥ व्यचिष्यति ॥ आशीर्लिङस्तिपि **यासुट् परस्मैपदेषूदात्तो ङिच्चे**ति यासुटि उटो लोपे **इतश्चे**ति तिप इकारलोपे **ग्रहिज्ये**ति संप्रसारणे **संप्रसारणाच्चे**ति पूर्वरूपे **स्कोः**रिति सलोपे च ॥ विच्यात् ॥ लुङस्तिपि **च्लि लुङी**ति च्लौ **च्लेः सिच्** इति सिचि इचो लोपे **आर्द्धधातुकस्येड्वलादे**रिति इटि **इतश्चे**ति तिप इकारलोपे **अस्तिसिचोऽपृक्ते** इति ईटि **इट ईटि** इति सलोपे **अतो हलादेर्लघोः** इति वृद्धौ **लुङ्लङ्लृङ्क्ष्वडुदात्त** इति अटि च कृते ॥ अव्याचीत् ॥ वृद्ध्यभावे । अव्यचीत् ॥ **व्यचेः कुटादित्वमनसी**ति वार्तिकमाश्रित्य अव्यच् स् त् इत्यत्र सिचः सकारस्यासुभिन्नत्वात् कुटादित्वं स्यात् कुटादित्वे च सति **गाङ्कुटादिभ्यो ऽञ्णिन्ङित्** इति सस्य ङित्त्वं स्यात् ङित्वे च सति **ग्रहिज्यावयिव्यधी**त्यनेन संप्रसारणे आप्ते **व्यचेः कुटादित्वमनसी**ति वार्तिकस्य असुभिन्नकृदन्तमात्रविषयत्वात् नायं सिचः सकारः कृत्प्रत्ययस्थस्ततो नात्र तस्य वार्तिकस्य प्रवृत्तिरपि जायटीतीत्यलं पल्लवितेन ॥ उछि उञ्छे धातुरस्त्यग्रे लटस्तिपि शे च ॥ उञ्छति ॥ ऋच्छ गतीन्द्रियप्रलयमूर्तिभावेषु धातुरस्त्यग्रे लटस्तिपि **तुदादिभ्यः श** इति शे ॥ ऋच्छति ॥ लिटस्तिपि तिपो णलि **लिटि धातोरनभ्यासस्ये**ति धातुद्वित्वे **उरदि**ति रपरत्वे अकारे **हलादिः शेष** इति हलो लोपे **अत आदे**रित्यभ्यासदीर्घत्वे **तस्मान्नुड्द्विहलः** इति नुटि उटो लोपे **ऋच्छत्यॄता**मिति गुणे ॥ आनर्छ ॥

नर्च्छे आनर्च्छतुः ऋच्छिता । उज्झ उत्सर्गे १८ उज्झति । लुभ विमोहने १९ लुभति ॥

**तीषसहलुभरुषरिषः ।७।२।४८।** इच्छत्यादेः परस्य सादेरार्धधातुकस्येड्वा स्यात् । लोभिता लोब्धा लोभिष्यति । तृप तृम्फ तृप्तौ २१ तृपति तर्प तर्पिता अतर्पीत् तृम्फति (शे तृम्फादीनां नुम् वाच्यः) आदिशब्दः प्रकारे । तेन येऽत्र नकारानुषक्तास्ते तृम्फादयः । ततृम्फ तृफ्यात् । मृड पृड सुखने २३ मृडति पृडति । शुन गतौ २४ शुनति । इष इच्छायाम् २५ इच्छति एषिता एष्टा एषिष्यति इष्यात् ऐषीत् । कुट कौटिल्ये २६ गाङ्

---

श्नतुसि । आनर्च्छतुः ॥ लुटस्तिपि **स्यतासी लृलुटोरि**ति तासी **आर्द्धधातुकस्येड्वलादे**रिति इटि **लुटः प्रथमस्य डारौरसः** इति तिपो डात्वे डित्त्वसामर्थ्यादभस्यापि टेर्लोपे॥ ऋच्छिता ॥ उज्झ उत्सर्गे **तुदादिभ्यः शः** इति शे ॥ उज्झति ॥ लुभ विमोहने शे समागते ॥ लुभति ॥ लुटस्तिपि तासौ तिपो डात्वे टेर्लोपे **तीषसहलुभरुषरिषः** इत्यनेन इटि **पुगन्तलघूपधस्ये**ति गुणे लोभिता तत्र चेडभावे **झषस्तथोर्धोऽधः** इति तकारस्य धत्वे **झलां जश् झशी**ति भस्य बत्वे च गुणे ॥ लोब्धा ॥ लृटस्तिपि **स्यतासी लृलुटोरि**ति स्ये **तीषसहलुभरुषरिष** इति इटि गुणे सस्य षत्वे च ॥ लोभिष्यति ॥ तृप तृप्तौ धातुर्वर्तते लटस्तिपि ॥ तृपति ॥ लिटस्तिपि तिपो णलि **पुगन्तलघूपधस्ये**ति गुणे **लिटि धातोरनभ्यासस्ये**ति धातोर्द्वित्वे **हलादिः शेष** इत्यभ्यासहलो लोपे ॥ ततर्प ॥ लुटस्तिपि **स्यतासी लृलुटोरि**ति तासौ इटि **पुगन्तलघूपधस्ये**ति गुणे तिपो डात्वे डित्त्वसामर्थ्यादभस्यापि टेर्लोपे ॥ तर्पिता ॥ लुङ्स्तिपि **च्लि लुङी**ति च्लौ **च्लेः सिच्** इति सिचि इचो लोपे **आर्द्धधातुकस्येड्वलादे**रिति इटि **पुगन्तलघूपधस्ये**ति गुणे **इतश्चे**ति तिप इकारलोपे **अस्तिसिचोऽपृक्ते** इति ईटि **इट ईटि** इति सलोपे **लुङ्लङ्लृङ्क्ष्वडुदात्त** इति अटि ॥ अतर्पीत् ॥ तृम्फ तृप्तौ धातुरस्ति तदग्रे लटस्तिपि शे **तृम्फादीनां शे नुम् वक्तव्य** इति नुमि नमो लोपे अनुस्वारे परसवर्णे शस्य सार्वधातुकत्वात्**सार्वधातुकमपि**दित्यनेन ङित्वे **अनिदितां**मिति नलोपे ॥ तृम्फति ॥ लिटस्तिपि तिपो णलि **लिटि धातोरनभ्यासस्ये**ति द्वित्वे **उरत्** इत्यभ्यास ऋवर्णस्य रपरे अति **हलादिः शेष** इति लोपे च ॥ ततृम्फ ॥ आशीर्लिङ्स्तिपि **यासुट्परस्मैपदेषूदात्तो ङिच्चे**ति यासुटि उटो लोपे **इतश्चे**ति तिप इकारलोपे **स्कोः संयोगाद्योरन्ते** चेति सकारलोपे **अनिदितां हल उपधायाः क्ङिति** इति नकारलोपे ॥ तृफ्यात् ॥ मृड पृड सुखने धातू स्तोऽग्रे लटस्तिपि शे च ॥ मृडति ॥ पृडति ॥ शुन गतौ ॥ शुनति ॥ इष इच्छाया धातुरस्ति तदग्रे लटस्तिपि शे च **इषुगमियमां छ** इति षस्य छत्वे **छे चे**ति तुकि टकोलोपे **स्तोः श्चुना श्चुरि**ति तस्य चत्वे च ॥ इच्छति ॥ लिटस्तिपि तिपो णलि धातुद्वित्वे हलो लोपे इ इष् अ इति जाते **पुगन्तलघूपधस्य चे**ति

कुटादीति ङित्वम् । चुकुटिथ चुकोट चुकुट कुटिता । पुट संश्लेषणे २७ पुटति पुटिता । स्फुट विकसने २८ स्फुटति स्फुटिता । स्फुर स्फुल संचलने ३० स्फुरति स्फुलति ॥ **स्फुरतिस्फुलत्योर्निर्निविभ्यः** ।८।३।७३। षत्वं वा स्यात् । निष्फुरति निःस्फुरति । णू स्तवने ३१ परिणूतगुणोदयः । नुवति नुनाव नुविता । टुमस्जो शुद्धौ ३२ मज्जति

---

गुणे इ एप् अ इति जातं तत्र **अभ्यासस्यासवर्णे** इत्ययङि । इयेप ॥ लुटस्तिपि **स्यतासी लृलुटो**रिति तासौ **लुटः प्रथमस्य डारौरसः** इति तिपो डात्वे डित्त्वसामर्थ्यादभस्यापि टेर्लोपे **तीषसहलुभरुषरिष** इति इटि **पुगन्तलघूपधस्ये**ति गुणे च ॥ एपिता ॥ इडभावे **ष्टुना ष्टु**रिति ष्टुत्वे ॥ एष्टा ॥ लृटस्तिपि स्ये **आर्धधातुकस्येड्वलादे**रिति इटि सस्य षत्वे गुणे च ॥ एषिष्यति ॥ आशीर्लिङस्तिपि यासुटि दटो लोपे **इतश्चे**ति तिप इकारलोपे **स्कोः संयोगाद्योरन्ते चे**ति सलोपे ॥ इष्यात् ॥ लुङस्तिपि **च्लि लुङी**ति च्लौ **च्लेः सिच्** इति सिचि इचो लोपे **आर्द्धधातुकस्येड्वलादे**रिति इटि **इतश्चे**ति तिप इकारलोपे **अस्तिसिचोऽपृक्ते** इति ईटि **इट ईटि** इति सलोपे **आडजादी-नामि**ति आटि **आटश्चे**ति वृद्धौ च ॥ ऐपीत् ॥ कुट कौटिल्ये धातुरस्ति तदग्रे लिटस्तिपि तिपो णलि धातुद्वित्वे हलो लोपे **कुहोश्चु**रिति कस्य चत्वे **गाङ्कुटादिभ्योऽञ्णिन्ङित्** इति ङित्वे ङित्वाच्च **क्ङिति चे**ति गुणाभावे ॥ चुकुट ॥ थलि इटि ॥ चुकुटिथ ॥ लिट उत्तमैकवचने णलि **णलुत्तमो वे**ति णिद्विकल्पात् ङित्वस्यापि विकल्पस्ततो यस्मिन् पक्षे णलो णित्वं गणितं तस्मिन् पक्षे तस्य ङित्वात् **क्ङिति चे**ति गुणाभावे ॥ चुकुट ॥ यस्मिन् पक्षे च नाङ्गीकृतं तस्य णित्वं तस्मिन् पक्षे ङित्वाभावात्**पुगन्तलघूपधस्ये**ति गुणे चुकोट ॥ लुटस्तिपि तासौ तिपो डात्वे टेर्लोपे इटि च कृते ॥ कुटिता ॥ पुट संश्लेषणे धातुरस्ति तदग्रे लटस्तिपि शे च ॥ पुटति ॥ लुटस्तिपि तासौ तिपो डात्वे टेर्लोपे इटि च ॥ पुटिता ॥ स्फुट विकसने लटस्तिपि शे च ॥ स्फुटति ॥ लुटस्तिपि तासौ तिपो डात्वे टेर्लोपे इटि च ॥ स्फुटिता ॥ स्फुर स्फुल संचलने धातू स्तोऽग्रे लटस्तिपि शे च ॥ स्फुरति ॥ स्फुलति ॥ निपूर्वकस्फुरधातोरग्रे लटस्तिपि **स्फुरतिस्फुलत्योर्निर्निविभ्य** इति सस्य षत्वे ॥ निष्फुरति ॥ निःस्फुरति ॥ णू स्तवने धातुरस्ति तदग्रे लटस्तिपि शे धात्वादेर्णस्य न इति णस्य नत्वे **अचिश्नुधातुभ्रुवां य्वोरियङुवङौ** इति उवङि ॥ नुवति ॥ लिटस्तिपि तिपो णलि धातुद्वित्वे **ह्रस्व** इत्यभ्यासाचो ह्रस्वत्वे **अचोञ्णिति** इति वृद्धौ **एचोयवा-याव** इति आवि च कृते ॥ नुनाव ॥ लुटस्तिपि **स्यतासी लृलुटो**रिति तासौ **आर्द्ध-धातुकस्येड्वलादे**रिति इटि तिपो डात्वे टेर्लोपे च ॥ नुविता ॥ टुमस्जो शुद्धौ धातुरस्ति तत्र **आदिर्ञिटुडवः** इति टुलोपे लटस्तिपि **तुदादिभ्यः** इति शे **स्तोः श्चुना श्चु**रिति सस्य शत्वे **झलां जश् झशि** इति शस्य जत्वे ॥ मज्जति ॥ लिटस्तिपि तिपो णलि **लिटि**

ममज्ज । मस्जिनशोरिति नुम् ( मस्जेरन्त्यात्पूर्वो नुम् वाच्यः ) संयोगादिलोपः । ममङ्क्थ ममज्जिथ मङ्क्ता मङ्क्ष्यति अमाङ्क्षीत् अमाङ्क्ताम् अमाङ्क्षुः । रुजो भङ्गे ३३ रुजति रोक्ता रोक्ष्यति अरौक्षीत् । भुजो कौटिल्ये ३४ रुजिवत् । विश प्रवेशने ३५

---

**धातोरनभ्यासस्ये**ति धातुद्वित्वे **हलादिः शेष** इति हलां लोपे **स्तोः श्चुना श्चुरि**ति सस्य शत्वे **झलां जश् झशि** इति शस्य जत्वे च कृते ॥ ममज्ज ॥ थलि धातुद्वित्वे **हलादिः शेष** इति हलो लोपे म मस्ज् थ इति जातं तत्र **मस्जिनशो**रिति नुम् प्राप्तः सच **मस्जेरन्त्यात्पूर्वो नुम् वाच्य** इति वार्तिकेन अन्त्यात् पूर्वं नुमि जाते ममस्न्ज् इति जातं तत्र **स्कोः संयोगाद्योरन्ते चे**ति सलोपे ममन्ज् थ इति जाते **चोः कुः** इति जस्य गत्वे **खरि चे**ति गस्य कत्वे नस्यानुस्वारे परसवर्णे ॥ ममङ्क्थ ॥ क्रादिनियमादिटि सत्यागते झलादित्वाभावान्न नुमोऽभावे ममज्जिथ ॥ लुटस्तिपि **स्यतासी लृलुटो**रिति तासी **लुटः प्रथमस्य डारौरस** इति तिपो डात्वे डित्त्वसामर्थ्यादभस्यापि टेर्लोपे मस्ज् ता इति जातं तत्र **मस्जिनशोर्झलि** इति नुमि उभो लोपे **स्कोः संयोगाद्यो**रिति सलोपे **चोः कु**रिति जस्य गत्वे **खरि चे**ति गस्य कत्वे नस्यानुस्वारे परसवर्णे च ॥ मङ्क्ता ॥ लृटस्तिपि स्ये **मस्जिनशोर्झली**ति नुमिउभो लोपे **स्कोः संयोगाद्यो**रिति सलोपे **चोः कु**रिति जस्य गत्वे **खरि चे**ति गस्य कत्वे नस्यानुस्वारे परसवर्णे **आदेशप्रत्ययो**रिति सस्य षत्वे संयोगे च ॥ मङ्क्ष्यति ॥ लुङस्तिपि **च्लि लुङी**ति च्लौ **च्लेः सिच्** इति सिचि इचो लोपे **इतश्चे**ति तिप इकार लोपे **अस्तिसिचोऽपृक्ते** इति ईटि **मस्जिनशोर्झली**ति नुमि उभो लोपे च कृते मस्न्ज्स् ईत् इति जातं तत्र **स्कोः संयोगाद्योरन्ते चे**ति सलोपे **चोः कु**रिति जस्य गत्वे **खरि चे**ति गस्य कत्वे अनुस्वारे परसवर्णत्वे च **आदेशप्रत्ययो**रिति सस्य षत्वे **लुङ्लङ्लृङ्क्ष्वडुदात्त** इति अटि **वदव्रजहलन्तस्याचः** इति वृद्धौ च कृतायाम् ॥ अमाङ्क्षीत् ॥ तामि च्लौ च्लेः सिचि इचो लोपे **झलो झली**ति सिचः सलोपे **मस्जिनशो**रिति नुमि उभो लोपे **स्कोः संयोगाद्यो**रिति सलोपे **चोः कु**रिति जस्य गत्वे **खरि चे**ति गस्य कत्वे अटि अनुस्वारे परसवर्णे च **वदव्रजहलन्तस्ये**ति वृद्धौ च ॥ अमाङ्क्ताम् ॥ लुङो झौ परे च्लौ च्लेः सिचि इचो लोपे **सिजभ्यस्तविदिभ्यश्चे**ति झेर्जुसि **मस्जिनशो**रिति नुमि उम्भागलोपे **स्कोः संयोगाद्यो**रिति सलोपे जस्य कुत्वेन गत्वे गस्य **खरि चे**ति कत्वे सस्य षत्वे अनुस्वारे परसवर्णत्वे अटि **वदव्रजहलन्तस्ये**ति वृद्धौ च ॥ अमाङ्क्षुः ॥ रुजो भङ्गे धातुरस्ति तदग्रे लटस्तिपि शे च ॥ रुजति ॥ लुटस्तिपि तासी तिपो डात्वे टेर्लोपे **चोः कु**रिति जस्य गत्वे **पुगन्तलघूपधस्ये**ति गुणे ॥ रोक्ता ॥ लृटस्तिपि स्ये **चोः कु**रिति जस्य गत्वे **खरि च** इति गस्य कत्वे **आदेशप्रत्ययो**रिति सस्य षत्वे **पुगन्तलघूपधस्ये**ति गुणे ॥

विशति । मृश् आमर्शने ३६ आमर्शनं स्पर्शः । अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्[1] । अम्राक्षीत् अमार्क्षीत् अमृक्षत् । षद्लृ विशरणगत्यवसादनेषु ३७ सीदतीत्यादि । शद्लृ शातने ३८ ॥ **शदेः शितः** १।३।६०। शिद्भाविनोऽस्मात्तङानौ स्तः । शीयते शीयताम् अशीयत शीयेत । शशाद शत्ता शत्स्यति अशदत् अशत्स्यत् । कृ विक्षेपे ३९ ॥ **ऋत**

---

रोक्ष्यति ॥ लुङस्तिपि **च्लि लुङि**ति च्लौ **च्लेः सिच्** इति सिचि इचो लोपे **इतश्चे**ति तिप इकारलोपे **अस्तिसिचोऽपृक्ते** इति ईटि **चोः कु**रिति जस्य गत्वे **खरि** चेति गस्य कत्वे **आदेशप्रत्यययो**रिति सस्य षत्वे **वदव्रजहलन्तस्याच** इति वृद्धौ कषोः संयोगात्क्षे अटि च कृते ॥ अरौक्षीत् ॥ भुजो कौटिल्ये रुजवत् रूपाणि । विश प्रवेशने धातुस्तदग्रे लटस्तिपि शे च ॥ विशति ॥ मृश् आमर्शने धातुरस्ति तदग्रे लुङस्तिपि **च्लि लुङी**ति च्लौ **च्लेः सिच्** इति सिचि इचो लोपे मृश् स् ति इति जातं तत्र **अनुदात्तस्य चर्दुपधस्यान्यतरस्या**मित्यनेन अमि कृते मृ अम् श् स् ति इति जातं तत्र **हलन्त्य**मिति मकारस्येत्संज्ञाय लोपे च कृते **इको यणची**ति यणि कृते **व्रश्चभ्रस्जे**ति शस्य षत्वे कृते **षढोः कः सी**ति षस्य कत्वे **आदेशप्रत्यययो**रिति सस्य षत्वे **इतश्चे**ति तिप इकारलोपे कृते **अस्तिसिचोऽपृक्ते** इति ईटि अटि **वदव्रजहलन्तस्याच** इति वृद्धौ ॥ अम्राक्षीत् । अमभावे **वदव्रजहलन्तस्याच** इति मकारोत्तरवर्तिन आकारवृद्धौ आर्रूपायां कृतायाम् ॥ अमार्क्षीत् ॥ पक्षे **शल इगुपधादनिटः क्सः** इत्यनेन च्लेः स्थाने क्सादेशे कृते **लशक्वतद्धिते** इति ककारस्येत्संज्ञायां **तस्य लोप** इति लोपे **व्रश्चभ्रस्जे**ति शस्य षत्वे **षढोः कः सी**ति षस्य कत्वे **आदेशप्रत्यययो**रिति सस्य षत्वे कषोः संयोगात्क्षत्वे च कृते ॥ अमृक्षत् ॥ षद्लृ विशरणगत्यवसादनेषु **पाघ्राध्मास्थे**ति सीदादेशे कृते लटस्तिपि **तुदादिभ्यः श** इति शे ॥ सीदति ॥ शद्लृ शातने धातुरस्ति तत्र शे **पाघ्राध्मास्थे**ति शीयादेशे **शदेः शित** इत्यनेन लटः स्ते समागते **तुदादिभ्यः श** इति शे **टित आत्मनेपदानां टेरे** इतिटेरेत्वे च कृते ॥ शीयते ॥ लोटस्ते शीयादेशे शे टेरेत्वे **आमेत** इत्यनेन एकारस्य आमि च कृते ॥ शीयताम् । लिङस्ते शीयादेशे शे अटि च ॥ अशीयत ॥ विधिलिङस्ते शीयादेशे शे यासुटि स्टो लोपे यास इयादेशे गुणादेशे च ॥ शीयेत ॥ लिटः शिद्भावित्वाभावात्तिपि तिपो णलि धातुद्वित्वे अभ्यासहल्लोपे **वदव्रजहलन्तस्याच** इति वृद्धौ ॥ शशाद ॥ एवं लुटस्तिपि तासौ तिपो डात्वे डित्वसामर्थ्यात् टेर्लोपे **खरि** चेति दस्य तत्वे च ॥ शत्ता ॥ लृटस्तिपि स्ये

---

1 अनुदात्तस्य चर्दुपधस्यान्यतरस्याम् ॥ आदेच उपदेशेऽशितीति सूत्रादुपदेश इत्यनुवर्तते । उपदेशे किं सप्तु सप्तुनि कृते ञिनत्यादिर्नित्यमित्यनेनोदात्तत्वादम् न स्यात् । ऋदुपधः किं कर्ता । झलि किं ससर्प । अकितीति किं सृष्टः ।

**इद्धातोः** ।७।१।१००। ऋदन्तस्य धातोरङ्गस्य इत्स्यात् । किरति चकार चकरतुः च-करुः करीता करिता कीर्यात् ॥ **किरतौ लवने** ६।१।१४०। उपात्किरतेः सुट् छे-दने । उपस्किरति ॥ **अड्भ्यासव्यवायेऽपि** ६।१।१३६। ( सुट्कात्पूर्व इति वक्त-व्यम् ) उपास्किरत् उपचस्कार ॥ **हिंसायां प्रतेश्च** ६।१।१४१। उपात्प्रतेश्च किरतेः सुट् स्याद्धिंसायाम् । उपस्किरति प्रतिस्किरति । गॄ निगरणे ४०॥**अचि विभाषा** ८।२।२१। गिरते रेफस्य लोऽजादौ प्रत्यये । गिरति गिलति जगार जगाल जगरिथ जग-

---

**खरि** **चे**ति दकारस्य तकारे ॥ शत्स्यति ॥ लुङस्तिपि **च्लि लुङी**ति च्लौ च्लेः **पुषादिद्युताद्य्लृदित** इति अङि अटि ॥ अशदत् ॥ लृङस्तिपि स्ये अटि **खरि** **चे**ति दस्य तकारे **इतश्चे**ति तिप इकारलोपे ॥ अशत्स्यत् ॥ कॄ विक्षेपे धातुरस्यग्रे लट-स्तिपि शे **ऋत इद्धातोः** इति रपरे इदादेशे कृते ॥ किरति ॥ लिटस्तिपि तिपो णलि **लिटि** **धातो**रिति धातुद्वित्वे **उरत्** इत्यभ्यासऋवर्णस्य रपरे अदादेशे **हलादिः शेष** इति रलोपे **ऋच्छत्यॄता**मित्यनेन गुणे कृते ककर् अ इति जातं तत्र **अत उपधाया** इति वृद्धौ **कुहोश्चु**रिति कस्य चत्वे ॥ चकार ॥अतुसि गुणे कृते ॥ चकरतुः ॥ उसि गुणे ॥ चकरुः ॥ लुटस्तिपि **स्यतासी लृलुटो**रिति तासौ **लुटः प्रथमस्य डारौरसः** इति तिपो डारे डित्वाट्टिलोपे **आर्द्धधातुकस्येड्वलादे**रिति इटि गुणे **वॄतो वे**ति इटो दीर्घत्वे च कृते ॥ करीता ॥ **वॄतो वे**ति सूत्रस्याप्राप्तौ ॥ करिता ॥ आशीर्लिङस्तिपि यासुटि उटो लोपे **ऋत इद्धातो**रिति रपरे इदादेशे कृते किर्यास् ति इति जातं तत्र **इतश्चे**ति तिप इकारलोपे **स्कोः संयोगाद्यो**रिति सलोपे **हलि चे**ति सूत्रेण दीर्घादेशे ॥ कीर्यात् ॥ **किरतौ लवने** इत्यनेन सुटि कृते ॥ उप सुट् किरति इति जाते उटो लोपे च ॥ उप-स्किरति ॥ लिटस्तिपि तिपो णलि **लिटि धातो**रिति धातोर्द्वित्वे कृते उप कृ कृ अ इति

लिथ गरिता गरीता गलिता गलीता । प्रच्छ ज्ञीप्सायाम् ४१॥ ग्रहिज्येति संप्रसारणम् । पृच्छति पप्रच्छ पप्रच्छतुः पप्रच्छुः । प्रष्टा प्रक्ष्यति अप्राक्षीत् । मृङ् प्राणत्यागे ४२ ॥ **म्रियतेर्लुङ्लिङोश्च** ।१।३।६१। लुङ्लिङोः शितश्च प्रकृतिभूतान्मृङस्तङ् नान्यत्र । रिङ् । इयङ् । म्रियते ममार मर्ता मरिष्यति मृषीष्ट अमृत । पृङ् व्या-

---

श्चि० इटि० गुणे **कुहोश्चु**रिति गस्य जत्वे च ॥ जगरिथ ॥ **अचि विभाषे**ति रेफस्य लत्वे च ॥ जगलिथ ॥ लुटस्तिपि **स्यतासी लृलुटो**रिति तासी **आर्धधातुकस्ये-ड्वलादे**रिति इटि **पुगन्तलघूपधस्ये**ति गुणे **लुटः प्रथमस्य डारौरसः** इति तिपो डात्वे डित्वाट्टिलोपे च **वॄतो वे**ति विकल्पेन दीर्घत्वे ॥ गरिता, गरीता ॥ **अचि विभाषे**ति रेफस्य लत्वे ॥ गलिता । गलीता ॥ प्रच्छ ज्ञीप्सायां धातुरस्ति तदग्रे लटस्तिपि **तुदादिभ्यः** इति शे **ग्रहिज्यावयिव्यधि** इति संप्रसारणे **संप्रसारणाच्चे**ति पूर्वरूपैकादेशे कृते ॥ पृच्छति ॥ लिटस्तिपि तिपो णलि धातोर्द्वित्वे **हलादिः शेषः** इति हल्लोपे ॥ पप्रच्छ ॥ अतुसि । पप्रच्छतुः ॥ उसि । पप्रच्छुः ॥ लुटस्तिपि **स्यतासी लृलुटो**रिति तासी **लुटः प्रथमस्य डारौरसः** इति तिपो डात्वे डित्वाट्टिलोपे **व्रश्चभ्रस्जसृजमृजयजराज-भ्राजच्छशां षः** इति छस्य षत्वे **ष्टुना ष्टु**रिति ष्टुत्वे ॥ प्रष्टा ॥ लृटस्तिपि स्ये **व्रश्चे**ति छस्य षत्वे **षढोः कः सी**ति षस्य कत्वे **आदेशप्रत्यययो**रिति सस्य षत्वे कषोः संयोगात्क्षे च कृते ॥ प्रक्ष्यति ॥ लुङस्तिपि **च्लि लुङी**ति च्लौ **च्लेः सिच्** इति सिचि इचो लोपे **व्रश्चे**ति छस्य षत्वे **षढोः कः सी**ति षस्य कत्वे **आदेशप्रत्यययो**रिति सस्य षत्वे **इतश्चे**ति तिप इकारलोपे **अस्तिसिचोऽपृक्ते** इति ईटि **लुङ्लङ्-लृङ्क्ष्वडुदात्तः** इति अटि **वदव्रजहलन्तस्याचः** इति वृद्धौ ॥ अप्राक्षीत् ॥ मृङ् प्राणत्यागे धातुरस्ति तदग्रे **म्रियतेर्लुङ्लिङोश्चे**ति सूत्रेण लटस्ते शे **रिङ्शय-ग्लिङ्क्षु** इति रिङि कृते **अचि श्नुधातुभ्रुवां य्वोरियङुवङौ** इति इयङि **टित आत्मनेपदानां टेरे** इति टेरेत्वे ॥ म्रियते ॥ लिटस्तिपि तिपो णलि धातुद्वित्वे **उरत्** इति अभ्यासऋवर्णस्य रपरे अदादेशे **हलादिः शेषः** इति रलोपे **अचो ञ्णिती**ति वृद्धौ ॥ ममार ॥ लुटस्तिपि तासौ तिपो डात्वे डित्वाट्टिलोपे गुणे च कृते ॥ मर्ता ॥ लृटस्तिपि **ऋद्धनोः स्ये** इति इटि **पुगन्तलघूपधस्ये**ति गुणे **आदेशप्रत्यययो**रिति सस्य षत्वे ॥ मरिष्यति ॥ आशीर्लिङस्ते समागते **लिङः सीयुट्** इति सीयुटि उटो लोपे **लोपो व्योर्वली**ति यलोपे **सुट्तिथोः** इति सुटि उटो लोपे **आदेशप्रत्यययो**रिति सकारयोः षत्वे कृते मृषीष् त इति जातं तत्र **ष्टुना ष्टु**रिति ष्टुत्वे च **उश्चे**ति किद्धः

---

१ म्रियतेर्लुङ्लिङोश्च ॥ अत्र चकारात् शित इति अनुकृष्यते तदाह शितश्च प्रकृतिभूतादिति । तङिति । आत्मनेपदमित्यर्थः । तेन म्रियमाण इति सिद्धम् ॥

यामे ४३ प्रायेणायं व्याङ्पूर्वः । व्याप्रियते व्यापप्रे व्यापप्राते व्यापरिष्यते व्यापृत व्यापृषाताम् । जुषी प्रीतिसेवनयोः ४४ जुषते जुजुषे । ओविजी भयचलनयोः ४५ प्रायेणायमुत्पूर्वः उद्विजते ॥ **विज इट्** ।१।२।२। विजेः पर इडादिप्रत्ययो ङिद्वत् । उद्विजिता ॥ इति तुदादयः ॥

## ॥ अथ तिङन्ते रुधादिगणप्रकरणम् ॥

रुधिर् आवरणे १॥ **रुधादिभ्यः[1] श्नम्** ।३।१।७८। शपोऽपवादः । रुणद्धि । भ-

---

फित्वाच्च गुणाभावे ॥ मृषीष्ट ॥ लुङस्ते **च्लि लुङि**ति च्लौ **च्लेः सिच्** इति सिचि **ह्रस्वादङ्गात्** इति सिचो लोपे अटि च कृते ॥ अमृत ॥ भि आङ्पूर्वकः पृङ् व्यायामे धातुरस्ति तदग्रे लटस्ते **तुदादिभ्यः श** इति शे **रिङ्शयग्लिङ्क्षु** इति रिङि कृते प्रि अत इति जाते **अचि श्नुधातुभ्रुवां य्वोरियङुवङौ** इति इयङि कृते कृते च **टित आत्मनेपदानां टेरे** इति टेरेत्वे ॥ व्याप्रियते॥ लिटस्ते **लिटि धातोरनभ्यासस्ये**ति द्वित्वे **उरत्** इत्यभ्यासऋवर्णस्य रपरे अदादेशे **हलादिः शेष** इति रलोपे व्यापपृ ■ इति जातं तत्र **लिटस्तझयोरेशिरेच्** इति एशि कृते कृते च **इको यणची**ति यणि ॥ व्यापप्रे ॥ आतामि, व्यापप्राते ॥ लृटस्ते **स्यतासी लृलुटो**रिति स्ये **ऋद्धनोः स्ये** इति इटि **पुगन्तलघूपधस्ये**ति गुणे **टित आत्मनेपदानां टेरे** इति टेरेत्वे ॥ व्यापरिष्यते ॥ लुङस्ते **च्लि लुङी**ति च्लौ **च्लेः सिची**ति सिचि **उश्चे**ति सूत्रेण सिचः कित्वे **ह्रस्वादङ्गात्** इति सिचो लोपे **क्ङिति चे**ति गुणाभावे ॥ व्यापृत ॥ आतामि झल्परत्वाभावात् सिचो लोपाभावे सस्य षत्वे ॥ व्यापृषाताम् ॥ जुषी प्रीतिसेवनयोः धातुर्वर्तते तदग्रे लटस्ते शे टेरेत्वे च ॥ जुषते ॥ लिटस्ते धातुद्वित्वे **हलादिः शेष** इति षलोपे **लिटस्तझयोरेशिरेजि**ति एशि ॥ जुजुषे ॥ ओविजी भयचलनयोः प्रायेण उत्पूर्वस्तदग्रे लटस्ते शे टेरेत्वे च उद्विजते ॥ लुटस्ते **स्यतासी लृलुटो**रिति तासौ **आर्द्धधातुकस्येड्वलादे**रिति इटि **लुटः प्रथमस्य डारौरस** इति तिपो डाले ङित्वाट्टिलोपे **विज इट्** इत्यनेन ङिद्भावाद् गुणाभावे ॥ उद्विजिता ॥ इति तुदादयः समाप्ताः ।

यथामतीदमलिखं श्रीसरस्वत्यनुग्रहात् दयार्द्रहृदयश्रीमद्गुरूणां च दयादृशा ॥ १ ॥

रुधिर् आवरणे धातुरस्ति तदग्रे लटस्तिपि **रुधादिभ्यः श्नम्** इति श्नमि **मिदचोऽन्त्यात्पर** इत्यनेन अन्त्यादचः परे श्नमि कृते रु श्नम् ध् ति इति जाते **लशक्वतद्धिते** इति शकारस्येत्संज्ञायां लोपे च **हलन्त्यमि**ति मस्येत्संज्ञायां लोपे च कृते **अट्कुप्वाङ्नुम्-**

---

[1] रुधादिभ्यः श्नम् ॥ श्नमः प्रत्ययत्वात्सर्वप्रत्ययवत् परविधानमुचितं परन्तु मित्वादन्त्यादचः परविधानम् । प्रत्ययसंज्ञाप्रयोजनं तु लशक्वतद्धित इति सूत्रेणेत्संज्ञा ।

सोरल्लोपः । रुन्धः रुन्धन्ति । रुणत्सि रुन्धः रुन्ध । रुणध्मि रुन्ध्वः रुन्ध्मः । रुन्धाते । रुन्धते । रुन्त्से रुन्धाथे रुन्ध्वे । रुन्धे रुन्ध्वहे रुन्ध्महे । रुरोध रुरुधे रोद्धा रोत्स्यति रोत्स्यते रुणद्धु रुन्धात् रुन्धाम् रुन्धन्तु । रुन्धि रुणधानि रुणधाव रुणधाम रुन्धाम्

---

**व्यवायेपि** इति नस्य णत्वे **झषस्तथोर्धोऽध** इत्यनेन तस्य धत्वे **झलां जश् झशि** इति धस्य दत्वे ॥ रुणद्धि ॥ लटः प्रथमपुरुषस्य द्विवचने तसि श्नमि **श्नसोरल्लोप** इति अल्लोपे शल्लोपे मलोपे **झषस्तथोर्धोऽध** इति तस्य धत्वे **झलां जश् झशी**ति धस्य दत्वे ॥ रुन्द्धः ॥ लटः प्रथमस्य झौ झस्यान्तादेशे श्नमि शलोपे मलोपे च कृते ॥ रुन्धन्ति ॥ सिपि श्नमि शकारमकारयोर्लोपे **खरि चे**ति धस्य तकारे कृते **अट्कुप्वाङ्नुम्व्यवाये-पी**ति नस्य णत्वे ॥ रुणत्सि ॥ थसि श्नमि शमयोर्लोपे **श्नसोरल्लोप** इत्यकारलोपे **झषस्तथो-र्धोऽध** इति थस्य धत्वे **झलां जश् झशि** इति धस्य दत्वे ॥ रुन्द्धः ॥ थे श्नमि अ-ल्लोपे **झषस्तथोर्धोऽध** इति थस्य धत्वे **झलां जश् झशि** इति धस्य दत्वे ॥ रुन्द्ध ॥ मिपि श्नमि शमयोर्लोपे नस्य णत्वे च कृते ॥ रुणध्मि ॥ वसि श्नमि शमयोर्लोपे **श्नसो-रल्लोप** इति अल्लोपे ॥ रुन्ध्वः ॥ एवं मसि ॥ रुन्ध्मः ॥ आ० प० लटस्ते **रुधा-दिभ्यः श्नम्** इति श्नमि शमयोरित्संज्ञायां लोपे च **श्नसोरल्लोप** इति नकारो-त्तरवर्त्यकारलोपे **झषस्तथोर्धोऽध** इति तस्य धत्वे **झलां जश् झशि** इति पूर्वधस्य दत्वे **टित आत्मनेपदानां टेरे** इति टेरेत्वे च कृते ॥ रुन्द्धे ॥ आतामि श्नमि शमयोर्लोपे **श्नसोरल्लोप** इति अल्लोपे **टित आत्मनेपदानां टेरे** इति टेरेत्वे च कृते ॥ रुन्धाते ॥ झे श्नमि शमयोर्लोपे अल्लोपे **आत्मनेपदेष्वनतः** इति झस्य अति कृते **टित आत्म-नेपदानां टेरे** इति टेरेत्वे च ॥ रुन्धते ॥ थासि श्नमि शमयोर्लोपे अल्लोपे **थासः से** इति थासः सेत्वे **खरि चे**ति धस्य तकारे कृते ॥ रुन्त्से ॥ आथामि श्नमि शमयोर्लोपे अ-ल्लोपे **टित आत्मनेपदानां टेरे** इति टेरेत्वे कृते ॥ रुन्धाथे ॥ ध्वमि श्नमि शमयोर्लोपे अल्लोपे **झरो झरि सवर्णे** इति पूर्वधलोपे कृते ॥ रुन्ध्वे ॥ इटि श्नमि शमयोर्लोपे श्नसो-रल्लोपे **टित आत्मनेपदाना**मिति टेरेत्वे ॥ रुन्धे ॥ वहि श्नमि शमयोर्लोपे अल्लोपे टेरेत्वे च कृते ॥ रुन्ध्वहे ॥ एवं महिङि ॥ रुन्ध्महे ॥ लिटस्तिपि तिपो णलि **लिटि धातो-रनभ्यासस्ये**ति धातुद्वित्वे **हलादिः शेष** इति धलोपे **पुगन्तलघूपधस्य चे**ति गुणे च कृते ॥ रुरोध ॥ आ० प० लिटस्ते धातुद्वित्वे धलोपे **लिटस्तझयोरेशिरेच्** इति तकारस्य एशि कृते ॥ रुरुधे ॥ लुटस्तिपि **स्यतासी लृलुटो**रिति तासौ **लुटः प्रथमस्य डारौरस** इति तिपो डात्वे डित्वाट्टिलोपे **झषस्तथोर्धोऽध** इति धत्वे **झलां जश् झशि** इति धस्य दत्वे गुणे च कृते ॥ रोद्धा ॥ लृटस्तिपि **स्यतासी लृलुटो**रिति स्ये **खरि चे**ति धस्य तकारे **पुगन्तलघूपधस्ये**ति गुणे च कृते ॥ रोत्स्यति ॥ आ० प० लृटस्ते स्ये धस्य तत्वे टेरेत्वे गुणे च कृते ॥ रोत्स्यते ॥ लोटस्तिपि **रुधादिभ्यः श्नम्** इति

रुन्धाताम् रुन्धताम् रुन्त्स्व रुणधै रुणधावहै रुणधामहै । अरुणत् अरुणद् अरुन्धाम् अरुन्धन् । रुन्ध्यात् रुन्धीत् रुध्यात् रुत्सीष्ट अरुधत् अरौत्सीत् । अरुद्ध अरुत्साताम्

---

श्नमि शमयोर्लोपे **झषस्तथोर्धोऽध** इति तस्य धत्वे पूर्वधस्य दत्वे **एरुः** इति तिप इकारस्योत्वे **अट्कुप्वाङ्नुम्व्यवायेऽपी**ति नस्य णत्वे च कृते ॥ रुणद्धु ॥ **तुह्योस्तातङ्ङाशिष्यन्यतरस्या**मिति तातङि श्नमि शमयोर्लोपे **श्नसोरल्लोप** इत्यल्लोपे **झषस्तथोर्धोऽध** इति तकारस्य धत्वे **झरो झरी**ति पूर्वधलोपे च कृते ॥ रुन्धात् ॥ ताम्मि श्नमि शमयोर्लोपे **श्नसोरल्लोप** इत्यल्लोपे **झषस्तथोर्धोऽध** इति तस्य धत्वे **झरो झरि सवर्णे** इति पूर्वधलोपे ॥ रुन्धाम् ॥ झि **झोऽन्त** इति अन्तादेशे श्नमि शमयोर्लोपे **श्नसोरल्लोप** इत्यल्लोपे **एरुरि**ति इकारस्योकारे ॥ रुन्धन्तु ॥ लोटो मध्यमैकवचने सिपि **रुधादिभ्यः श्नम्** इति श्नमि शमयोर्लोपे **श्नसोरल्लोप** इति अल्लोपे **सेर्ह्यपिच्चे**ति सेर्हित्वे **हुझल्भ्यो हेर्धिः** इति हेर्धित्वे **झरो झरि सवर्णे** इति पूर्वधलोपे ॥ रुन्धि ॥ लोटो मिपि श्नमि शमयोर्लोपे **मेर्निः** इति मेर्नित्वे **आडुत्तमस्य पिच्चे**ति आटि नस्य णत्वे ॥ रुणधानि ॥ लोटो वसि श्नमि शमयोर्लोपे **आडुत्तमस्य पिच्चे**ति आटि नस्य णत्वे **नित्यं ङितः** इति सलोपे च ॥ रुणधाव ॥ एवं ॥ रुणधाम ॥ आ० प० लोटः प्रथमपुरुषैकवचने ते श्नमि शमयोर्लोपे अल्लोपे **झषस्तथोर्धोऽध** इति तस्य धत्वे **झरो झरि सवर्णे** इति धलोपे **टित आत्मनेपदानां टेरे** इति टेरेत्वे **आमेतः** इति एकारस्य आमि ॥ रुन्धाम् ॥ आतामि । रुन्धाताम् ॥ झे **आत्मनेपदेष्वनतः** इति झस्य अदादेशे टेरेत्वे **आमेतः** इत्यामि कृते ॥ रुन्धताम् ॥ लोटस्थासि श्नमि शमयोर्लोपे अल्लोपे **थासः से** इति थासः सेत्वे **सवाभ्यां वामौ** इत्यनेन सकारोत्तरवर्तिन एकारस्य वत्वे **खरि चे**ति धस्य तकारे कृते ॥ रुन्त्स्व ॥ लोट उत्तमैकवचने इटि श्नमि शमयोर्लोपे **टित आत्मनेपदानां टेरे** इति टेरेत्वे **एत ऐ** इत्यनेन एकारस्य ऐकारे कृते कृते च नस्य णत्वे ॥ रुणधै ॥ वहौ श्नमि शमोर्लोपे **आडुत्तमस्य पिच्चे**ति आटि **टित आत्मनेपदाना**मिति टेरेत्वे **एत ऐ** इति एकारस्य ऐत्वे नस्य णत्वे कृते ॥ रुणधावहै ॥ एवं महिङि, रुणधामहै ॥ लङलिपि **रुधादिभ्यः श्नम्** इति श्नमि शमोर्लोपे

अरुत्सत । अरोत्स्यत् अरोत्स्यत । भिदिर् विदारणे २ । छिदिर् द्वैधीकरणे ३ । युजिर् योगे ४ । रिचिर् विरेचने ५ । रिणक्ति रिङ्क्ते रिरेच रेक्ता रेक्ष्यति अरिणक्

उक्ते श्नमि श्नमोर्लोपे **लिङःसीयुट्** इति सीयुटि टटो लोपे **लोपोव्योर्वलीति** यलोपे **लिङः सलोपोऽनन्त्यस्येति** सलोपे **श्नसोरल्लोप** इत्यल्लोपे संयोगे च कृते ॥ रुन्धीत ॥ आशीर्लिङस्तिपि यासुटि उटो लोपे तिप इकारलोपे **स्कोः संयोगाद्योरन्ते-चेति** सलोपे ॥ रुध्यात् ॥ आ० प० । आशीर्लिङस्ते सीयुटि टटो लोपे **लोपोव्योर्वलीति** यलोपे **सुट्तिथोः** इति सुटि टटो लोपे शस्य धत्वे **ष्टुना ष्टुरिति** ष्टुत्वे **खरि चेति** धस्य तकारे च कृते ॥ रुत्सीष्ट ॥ लुङस्तिपि **च्लि लुङीति** च्लौ **इरितो वेति** च्लेरङि **इतश्चेति** तिप इकारलोपे अटि ॥ अरुधत् ॥ **इरितो** वेत्यस्याप्राप्तौ तु **च्लेः सिच्** इति सिचि इचो लोपे **इतश्चेति** तिप इकारलोपे **अस्तिसिचोऽपृक्ते** इति ईटि अटि च कृते अरुध् स ई त् इति जातं तत्र **खरि चेति** धस्य तकारे **वदव्रजहलन्तस्याच** इति वृद्धौ च कृतायाम् । अरौत्सीत् ॥ आ० प० लुङस्ते **च्लि लुङीति** च्लौ **च्लेः सिच्** इति सिचि इचो लोपे **झलोझलीति** सलोपे अटि **झषस्तथोर्धोऽध** इति तकारस्य धत्वे **झलां जश् झशीति** पूर्वधस्य दत्वे ॥ अरुद्ध ॥ आतामि च्लौ च्लेः सिचि इचो लोपे **खरि चेति** धस्य तत्वे अटि च कृते ॥ अरुत्साताम् ॥ झे च्लौ च्लेः सिचि इचो लोपे अटि **आत्मनेपदेष्वनतः** इति झस्यादादेशे **खरि चेति** धस्य तत्वे च कृते ॥ अरुत्सत ॥ लृङस्तिपि **स्यतासी लृलुटोरिति** स्ये अटि **खरि चेति** धस्य तत्वे **इतश्चेति** तिप इकारलोपे **पुगन्तलघूपधस्य चेति** गुणे च कृते ॥ अरोत्स्यत् ॥ आ० प० लृङस्ते परे च ॥ अरोत्स्यत ॥ एवं भिदिर् छिदिर् युजिर् धातूनामपि रूपाणि ज्ञेयानि । रिचिर् विरेचने धातुरस्ति तदग्रे लटस्तिपि **रुधादिभ्यः श्नम्** इति श्नमि श्नमोर्लोपे **चोः कुः** इति चस्य कत्वे नस्य णत्वे च कृते ॥ रिणक्ति ॥ आ० प० लटस्ते श्नमि श्नमोर्लोपे **श्नसोरल्लोप** इत्यलोपे **चोः कुरिति** चस्य कत्वे अनुस्वारे परसवर्णे च कृते **टित आत्मनेपदानां टेरे** इति टेरेत्वे च कृते ॥ रिङ्क्ते ॥ लिटस्तिपि तिपो णलि **लिटि धातोरिति** धातुद्वित्वे **हलादिः शेष** इत्यभ्यासचलोपे **पुगन्तलघूपधस्य चेति** गुणे च कृते ॥ रिरेच ॥ आ० प० लिटस्ते धातुद्वित्वे अभ्यासचलोपे **लिटस्तझयोरेशिरेच्** इत्येशि कृते ॥ रिरिचे ॥ लुटस्तिपि तासौ तिपो डात्वे डित्वाट्टेर्लोपे **चोः कुरिति** चस्य कत्वे गुणे च कृते ॥ रेक्ता ॥ लृटस्तिपि स्ये **चोः कुरिति** चस्य कत्वे **आदेशप्रत्यययोरिति** सस्य षत्वे गुणे संयोगे च कृते ॥ रेक्ष्यति ॥ आ० प० लृटस्ते ॥ रेक्ष्यते ॥ लङस्तिपि श्नमि श्नमयोर्लोपे **इतश्चेति** तिप इकारलोपे **हल्ङ्याभ्यो दीर्घात्** इति तलोपे अटि **अट्कुप्वाङ्नुम्व्यवायेपीति** नस्य णत्वे **चोः कुरिति** चस्य कत्वे च कृते ॥ अरिणक् ॥ आ० प० लङस्ते श्नमि श्नमयोर्लोपे **श्नसोरल्लोप** इत्यल्लोपे चस्य कत्वे **नश्चापदान्तस्येत्यनुस्वारे अनुस्वारस्य ययि परसवर्ण** इति परसवर्णत्वे अटि च कृते ॥ अरिङ्क्त ॥

अरिचत् अरैक्षीत् अरिक्त । विचिर् पृथग्भावे ६ । विनक्ति विङ्क्ते । क्षुदिर् संपेषणे ७ क्षुणत्ति क्षुन्ते क्षोत्ता अक्षुदत् अक्षौत्सीत् अक्षुत्त । उच्छृदिर् दीप्तिदेवनयोः ८ छृणत्ति छृन्ते चच्छर्द । सेऽसिचीति वेट् । चच्छृत्से चच्छृदिषे छर्दिता छर्दिष्यति छर्त्स्यति

---

लुङस्तिपि च्लौ **इरितो वे**ति अङि अटि **इतश्चे**ति तिप इकारलोपे च कृते ॥ अरिचत् ॥ **इरितो वे**ति सूत्रस्याप्राप्तौ च्लेः सिचि इचो लोपे **इतश्चे**ति तिप इकारलोपे **अस्तिसिचोऽपृक्ते** इति ईटि **चोः कु**रिति चस्य कत्वे अटि **वदव्रजहलन्तस्याचः** इति वृद्धौ **आदेशप्रत्यययो**रिति सस्य षत्वे संयोगे च कृते ॥ अरैक्षीत् ॥ आ० प० लुङस्ते च्लौ सिचि इचो लोपे **झलो झली**ति सलोपे चस्य कत्वे अटि च कृते ॥ अरिक्त ॥ विचिर् पृथग्भावे धातुरस्ति तदग्रे लटस्तिपि **रुधादिभ्यः श्नम्** इति शमयोर्लोपे **चोः कु**रिति चस्य कत्वे ॥ विनक्ति ॥ आ० प० लटस्ते श्नमि **श्नसोरल्लोप** इत्यल्लोपे शमोर्लोपे **चोः कु**रिति चस्य कत्वे **नश्चापदान्तस्ये**ति नस्यानुस्वारे **अनुस्वारस्य ययी**ति परसवर्णे ॥ विङ्क्ते ॥ क्षुदिर् संपेषणे लटस्तिपि श्नमि शमयोर्लोपे **खरि चे**ति दस्य तत्वे नस्य णत्वे च कृते ॥ क्षुणत्ति ॥ आ० प० लटस्ते श्नमि शमयोर्लोपे **श्नसोरि**त्यल्लोपे **झरो झरी**ति तलोपे टेरेत्वे च ॥ क्षुन्ते ॥ लुटस्तिपि **स्यतासी लृलुटो**रिति तासौ तिपो डारवे डित्वाट्टिलोपे **खरि चे**ति दस्य तत्वे गुणे च ॥ क्षोत्ता ॥ लुङस्तिपि च्लौ **इरितो वे**त्यङि अटि **इतश्चे**ति तिप इकारलोपे ॥ अक्षुदत् ॥ **इरितो वे**त्यस्याप्राप्तौ च्लेः सिचि इचो लोपे **इतश्चे**ति तिप इकारलोपे **अस्तिसिचोऽपृक्ते** इति ईटि अटि **खरि चे**ति दस्य तत्वे **वदव्रजहलन्तस्याचः** इति वृद्धौ ॥ अक्षौत्सीत् ॥ आ० प० लुङस्ते **च्लि लुङी**ति च्लौ **च्लेः सिच्** इति सिचि इचो लोपे अटि **खरि चे**ति दस्य तत्वे च कृते ॥ अक्षुत्त ॥ उच्छृदिर् दीप्तिदेवनयोर्धातुरस्ति उकारस्य **उपदेशेऽजनुनासिक इत्** इत्यनेन इत्सञ्ज्ञापूर्वक लोपे श्नमि शमयोर्लोपे **खरि चे**ति दस्य तत्वे नस्य णत्वे च ॥ छृणत्ति ॥ आ० प० लटस्ते श्नमि **श्नसोरल्लोप** इत्यल्लोपे **खरि चे**ति दस्य तत्वे **झरो झरि सवर्णे** इति तलोपे **टित आत्मनेपदाना**मिति टेरेत्वे ॥ छृन्ते ॥ लिटस्तिपि तिपो णलि द्वित्वे **उरत्** इत्यनेनाभ्यासऋवर्णस्य रपरे अदादेशे **हलादिः शेष** इति रलोपे **पुगन्तलघूपधस्य चे**ति गुणे **अभ्यासे चर्चे**त्यनेनाभ्यासस्य चत्वे ॥ चच्छर्द ॥ आ० प० लिटस्ते धातुद्वित्वे **उरत्** इत्यभ्यासऋवर्णस्य रपरे अदादेशे **हलादिः शेष** इति रलोपे **अभ्यासे चर्चे**ति छस्य चत्वे **लिटस्तझयोरेशिरेच्** इति एशि च कृते ॥ चच्छृदे ॥ आ० प० लिट्मध्यमैकवचने थासि **थासः से** इति थास से धातुद्वित्वे अभ्यासहल्लोपे अभ्यासऋवर्णस्य रपरे अदादेशे रलोपे **अभ्यासे चर्चे**ति छस्य चत्वे **से सिचिकृतचृतछृदतृदनृतः** इति इटि सस्य षत्वे ॥ चच्छृदिषे ॥ इडभावे **खरि चे**ति दस्य

**जिहिंस हिंसिता । उन्दी क्लेदने १३ उनत्ति उन्तः उन्दन्ति । उन्दाञ्चकार औनत् औन्ताम् औन्दन् औनः औनत् औनदम् । अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु १४ अनक्ति अङ्क्तः**

---

दत्वे तकारस्य **हल्ङ्याब्भ्यो दीर्घा**दिति लोपे अटि कृते **झलां जशोऽन्ते** इति दस्य डत्वे **वावसाने** इति डस्य टत्वे च ॥ अहिणेट् ॥ हिसि हिंसायां धातुरस्ति तदग्रे लटस्तिपि श्नमि शमयोर्लोपे च कृते हिनस् ति इति जात तत्र **इदितो नुम् धातो**रिति नुमि उम्भागलोपे हिनन् स् ति इति जात तत्र **श्नान्नलोप** इति नकारलोपे च कृते ॥ हिनस्ति ॥ लिटस्तिपि तिपो णलि द्वित्वे हलो लोपे **इदितो नुम् धातो**रिति नुमि नस्यानुस्वारे **कुहोश्चु**रिति हस्य झत्वे **अभ्यासे चर्चे**ति झस्य जत्वे ॥ जिहिंस ॥ लुटस्तिपि तासौ तिपो डात्वे डित्वाट्टिलोपे इटि **इदितो नुम् धातो**रिति नुमि उमो लोपे नस्यानुस्वारत्वे च ॥ हिंसिता ॥ उन्दी क्लेदने धातुरस्ति तदग्रे लटस्तिपि श्नमि शमयोर्लोपे **श्नान्नलोप** इति नलोपे **खरि चे**ति दस्य तत्वे च कृते ॥ उनत्ति ॥ तसि श्नमि शमोर्लोपे **श्नसोरल्लोप** इत्यल्लोपे **श्नान्नलोप** इति नलोपे **खरि चे**ति दस्य तत्वे **झरो झरि सवर्णे** इति तकारस्य लोपे च ॥ उन्तः ॥ झौ झेरन्तादेशे च ॥ उन्दन्ति ॥ लिटि **इजादेश्च गुरुमतोऽनृच्छः** इति आमि **आम** इति लिटो लोपे **कृञ्चानुप्रयुज्यते लिटि** इति लिट्परे कृञि प्रयुक्ते उन्दाम् कृ लिट् इति जात तत्र लिटस्तिपि तिपो णलि **लिटि धातोरनभ्यासस्ये**ति कृञो द्वित्वे **उरत्** इत्यभ्यासऋवर्णस्य रपरे अदादेशे **हलादिः शेष** इति रलोपे **कुहोश्चु**रिति कस्य चत्वे **अचो ञ्णिति** इति वृद्धौ च कृतायां कृते चानुस्वारस्य परसवर्णत्वे ॥ उन्दाञ्चकार ॥ लङस्तिपि श्नमि शमयोर्लोपे **श्नान्नलोप** इति नलोपे **आडजादीना**मिति आटि **आटश्चे**ति वृद्धौ **खरि चे**ति दस्य तत्वे **इतश्चे**ति तिप इकारलोपे **झरो झरि सवर्णे** इति पूर्वतकारलोपे ॥ औनत् ॥ तामि श्नमि शमयोर्लोपे अल्लोपे **श्नान्नलोप** इति नलोपे दस्य तत्वे **झरो झरि सवर्णे** इति पूर्वतकारलोपे आटि वृद्धौ च ॥ औन्ताम् ॥ झौ **झोऽन्त** इत्यन्तादेशे श्नमि शमयोर्लोपे अल्लोपे **श्नसोरल्लोप** इत्यल्लोपे **श्नान्नलोप** इति नलोपे **इतश्चे**ति तिप इकारलोपे **हल्ङ्याब्भ्यो दीर्घा**दिति तलोपे **आडजादीना**मिति आटि **आटश्चे**ति वृद्धौ ॥ औन्दन् ॥ सिपि श्नमि शमयोर्लोपे **खरि चे**ति दस्य तकारे **झरो झरि सवर्णे** इति तलोपे **श्नान्नलोप** इति नलोपे **इतश्चे**ति सिप इकारलोपे सस्य रुत्वे रस्य विसर्जनीयत्वे च कृते **आडजादीना**मिति आटि **आटश्चे**ति वृद्धौ च ॥ औनः ॥ मिपि श्नमि शमयोर्लोपे **श्नान्नलोप** इति नलोपे **तस्थस्थमिपां तांतंतामः** इति मिपो अमि कृते उनद् अम् इति जात तत्र **आडजादीना**मिति आटि **आटश्चे**ति वृद्धौ कृतायाम् ॥ औनदम् ॥ अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु धातुरस्त्यग्रे लटस्तिपि श्नमि शमयोर्लोपे **चोः कु**रिति जस्य गत्वे **खरि चे**ति गस्य कत्वे च ॥ अनक्ति ॥ तसि श्नमि शमयोर्लोपे अल्लोपे जस्य गत्वे गस्य कत्वे नस्यानु-

अञ्जन्ति । आनञ्ज आनञ्जिथ आनङ्क्थ अञ्जिता अङ्क्ता अङ्ग्धि अनजानि आनक् ।
**अञ्जेः सिचि ।७।२।७१।** अञ्जेः सिचो नित्यमिट् स्यात् । आञ्जीत् । तञ्चू संकोचने
१८ तनक्ति तङ्क्ता तञ्चिता । ओविजी भयचलनयोः १६ विनक्ति विङ्क्तः । विज इडिति

---

स्वारत्वे **अनुस्वारस्य ययी**ति परसवर्णत्वे ॥ अङ्क्तः ॥ झौ **झोन्त** इति झस्यान्तादेशे श्नमि शमयोर्लोपे अल्लोपे **श्नान्नलोप** इति नलोपे नस्यानुस्वारे परसवर्णे च ॥ अञ्जन्ति ॥ लिटस्तिपि तिपो णलि **लिटि धातो**रिति धातुद्वित्वे **हलादिः शेष** इत्यभ्यासहलोलोपे अ अञ् ज् अ इति जाते **अत आदेः** इत्यकारस्य दीर्घत्वे **तस्मान्नुड्द्विहल** इति नुटि उटो लोपे संयोगे च कृते ॥ आनञ्ज ॥ थलि **लिटि धातो**रिति धातोर्द्वित्वे **हलादिः शेष** इति अभ्यासहलोलोपे **अत आदेः** इति अकारस्य दीर्घत्वे **तस्मान्नुड्द्विहल** इति नुटि उटो लोपे **स्वरतिसूतिसूयतिधूञूदितो वे**ति इटि नस्यानुस्वारे परसवर्णे च ॥ आञ्जिथ ॥ इडभावे **चोः कु**रिति जस्य गत्वे **खरि चे**ति गस्य कत्वे नस्यानुस्वारेऽनुस्वारस्य च परसवर्णत्वे ॥ आनङ्क्थ ॥ लुटस्तिपि तासौ तिपो डात्वे टेर्लोपे **स्वरतिसूतिसूयती**ति इटि ॥ अञ्जिता ॥ इडभावे जस्य गत्वे गस्य कत्वेऽनुस्वारस्य परसवर्णत्वे च ॥ अङ्क्ता ॥ लोटो मध्यमैकवचने सिपि **सेर्ही**रिति सेर्हित्वे **हुझल्भ्यो हेर्धि**रिति हेर्धित्वे **चोः कु**रिति जस्य गत्वे नस्यानुस्वारे अनुस्वारस्य परसवर्णत्वे च अङ्ग्धि इति जातं तत्र संयोगे कृते ॥ अङ्ग्धि ॥ लोटो बहुवचने मिपि **मेर्निः** इति मेर्नित्वे **आडुत्तमस्य पिच्चे**ति आटि श्नमि शमयोर्लोपे **श्नान्नलोप** इति नलोपे ॥ अनजानि । लङस्तिपि श्नमि शमयोर्लोपे **श्नान्नलोप** इति नलोपे **इतश्चे**ति तिप इकारलोपे **हल्ङ्याब्भ्यो दीर्घा**दिति तलोपे जस्य **चोः कु**रिति गत्वे **वावसाने** इति गस्य कत्वे **आडजादीना**मिति आटि च ॥ आनक् ॥ लुङस्तिपि **च्लेः सिच्** इति सिचि इचो लोपे **इतश्चे**ति तिप इकारलोपे **अस्तिसिचोऽपृक्ते** इति ईटि **अञ्जेः सिचि** इति इटि **इट ईटि** इति सलोपे **आडजादीना**मिति आटि ॥ आञ्जीत् ॥ तञ्चू संकोचने लटस्तिपि श्नमि शमयोर्लोपे **श्नान्नलोप** इति नलोपे **चोः कु**रिति चस्य कत्वे ॥ तनक्ति ॥ लुटस्तिपि **स्यतासी लृलुटो**रिति तासौ तिपो डात्वे टेर्लोपे **स्वरतिसूति** इति इटि च ॥ तञ्चिता ॥ इडभावे **चोः कु**रिति चस्य कत्वे नस्यानुस्वारत्वेऽनुस्वारस्य परसवर्णत्वे ॥ तङ्क्ता ॥ ओविजी भयचलनयोस्तत्र लटस्तिपि श्नमि शमयोर्लोपे **चोः कु**रिति जस्य गत्वे **खरि चे**ति गस्य कत्वे ॥ विनक्ति ॥ तसि श्नमि शमयोर्लोपे **श्नसोरल्लोप** इत्यल्लोपे **चोः कु**रिति जस्य गत्वे **खरि चे**ति गस्य कत्वे च ॥ विङ्क्तः ॥ लिटो मध्यमैकवचने थलि **लिटि धातो**रिति द्वित्वे **हलादिः शेष** इति अभ्यासहल्लोपे **आर्धधातुकस्येड्वलादे**रिति इटि **विज इट्** इत्यनेन इटो ङित्वं, ङित्वाच्च गुणाभावे ॥ विविजिथ ॥ लुटस्तिपि तासौ

ञ्जिलम्। विविजिथ विजिता अविनक् अविजीत्। शिष्लृ विशेषणे १७ शिनष्टि शिंष्टः शिंषन्ति। शिनक्षि शिशेष शिशेषिथ शेष्टा शेक्ष्यति। शेर्ढि। शिण्ढि शिनषाणि अशिनट् शिंष्यात् शिष्यात् अशिषत्। एवं पिष्लृ संचूर्णने १८। भञ्जो आमर्दने १९॥ **श्नान्नलोपः** ।६।४।२३। श्नमः परस्य नस्य लोपः स्यात्। भनक्ति बभञ्जिथ बभङ्क्थ भङ्क्ता

---

तिपो डात्वे टेर्लोपे इटि च॥ विनिता॥ लङस्तिपि श्नमि शमयोर्लोपे **इतश्चे**ति तिप इकारलोपे **चोः कु**रिति जस्य गत्वे **खरि चे**ति गस्य कत्वे **हल्ङ्याब्भ्यो दीर्घा**दिति तलोपे अटि च कृते॥ अविनक्॥ लुङस्तिपि। च्लौ च्लेः सिचि इचो लोपे **इतश्चे**ति तिप इकारलोपे **अस्तिसिचोऽपृक्ते** इति ईटि **आर्द्धधातुकस्येड्वलादे**रिति इटि **इट ईटि** इति सलोपे अटि च॥ अविजीत्॥ शिष्लृ विशेषणे धा० तदग्रे लटस्तिपि श्नमि शमयोर्लोपे ष्टुत्वे॥ शिनष्टि॥ तसि श्नमि शमयोर्लोपे **श्नसोरल्लोप** इत्यल्लोपे ष्टुत्वे **नश्चापदान्तस्ये**ति नस्यानुस्वारे॥ शिंष्टः॥ झौ **झोऽन्तः** इति झेरन्तादेशे श्नमि शमयोर्लोपे **श्नसो**रित्यल्लोपे नस्यानुस्वारे च॥ शिंषन्ति॥ लटः सिपि श्नमि शमयोर्लोपे **षढोः कः सि** इति षस्य कत्वे **आदेशप्रत्यययो**रिति सिपः सस्य षत्वे कषोः संयोगे क्षे॥ शिनक्षि॥ लिटस्तिपि तिपो णलि **लिटि धातोरनभ्यासस्ये**ति द्वित्वे **हलादिः शेष** इति शेषहलो लोपे **पुगन्तलघूपधस्ये**ति गुणे॥ शिशेष॥ लिटो मध्यमैकवचने थलि द्वित्वे हलो लोपे क्रादिनियमादिटि गुणे च॥ शिशेषिथ लुटस्तिपि तासौ तिपो डात्वे डित्वाट्टिलोपे गुणे ष्टुत्वे च॥ शेष्टा॥ लटस्तिपि स्ये **षढोः कः सी**ति षस्य कत्वे **आदेशप्रत्ययो**रिति सस्य षत्वे गुणे संयोगे च॥ शेक्ष्यति॥ लोटो मध्यमैकवचने सिपि श्नमि शमयोर्लोपे **सेर्ह्यपिच्चे**ति सेर्हित्वे **श्नसोरल्लोप** इत्यल्लोपे **हुझल्भ्यो हेर्धि**रिति हेर्धित्वे **ष्टुना ष्टु**रिति धस्य ढत्वे **झरो झरि सवर्णे** इति षलोपे नस्यानुस्वारेऽनुस्वारस्य च परसवर्णत्वे॥ शिण्ढि॥ लोट उत्तमैकवचने मिपि **मेर्नि**रिति मेर्नित्वे **आडुत्तमस्य पिच्चे**ति आटि श्नमि शमयोर्लोपे नस्य णत्वे॥ शिनषाणि॥ लङस्तिपि श्नमि शमयोर्लोपे **इतश्चे**ति इकारलोपे **झलां जशोऽन्ते** इति षस्य डत्वे **हल्ङ्याब्भ्यो दीर्घा**दिति तलोपे अटि च कृते॥ अशिनट्॥ विधिलिङस्तिपि श्नमि शमयोर्लोपे यासुटि उटो लोपे **श्नसोरल्लोप** इत्यल्लोपे नस्यानुस्वारे **लिङः सलोपोऽनन्त्यस्ये**ति सलोपे तिप इकारलोपे च॥ शिंष्यात्॥ आशीर्लिङस्तिपि श्नमोऽभावात्॥ शिष्यात्॥ लुङस्तिपि **च्लि लुङी**ति च्लौ **पुषादिद्युताद्यॢदितः परस्मैपदेषु** इत्यङि **इतश्चे**ति तिप इकारलोपे अटि च॥ अशिषत्॥ एवं पिष्लृ चूर्णने धातो रूपाणि ज्ञेयानि॥ भञ्जो आमर्दने धा० तदग्रे लटस्तिपि श्नमि शमयोर्लोपे **श्नान्नलोप** इति नलोपे **चोः कु**रिति जस्य गत्वे **खरि चे**ति गस्य कत्वे च॥ भनक्ति॥ लिटो मध्यमैकवचने थलि **लिटि धातो**रिति धातुद्वित्वे **हलादिः शेष** इति हलो लोपे

न्धाताम् इनधै ऐन्ध ऐन्धाताम् । ऐन्धाः । विद विचारणे २२ विन्ते वेत्ता ॥ इति रुधादयः ॥

## ॥ अथ तिङन्ते तनादिगणप्रकरणम् ॥

तनु विस्तारे १ ॥ **तनादिकृञ्भ्यः उः** ।३।१।७९। शपोऽपवादः । तनोति त-

---

इन्धांचक्रे ॥ लुटस्ते तासौ तकारस्य डात्वे टेर्लोपे इटि च ॥ इन्धिता ॥ लोटः प्रथमैकवचने ते श्नमि श्नमयोर्लोपे अल्लोपे नलोपे **झषस्तथोर्धोऽध** इति तस्य धत्वे **टित आत्मनेपदानां टेरे** इति टेरेत्वे **झरो झरि सवर्णे** इति पूर्वधस्य लोपे **आमेत** इत्येकारस्यामि ॥ इन्धाम् ॥ आतामि श्नमि श्नमयोर्लोपे अल्लोपे नलोपे टेरेत्वे **आमेत** इत्यामि च ॥ इन्धाताम् ॥ लोट उत्तमपुरुषस्यैकवचने इटि श्नमि श्नमयोर्लोपे **श्नान्नलोप** इति नलोपे **आडुत्तमस्ये**ति आटि **आटश्चे**ति वृद्धौ ॥ इनधै ॥ लङस्ते श्नमि श्नमयोर्लोपे **श्नसोरल्लो**पे **श्नान्नलोप** इति नलोपे **झषस्तथोर्धोऽध** इति तस्य धत्वे **झरो झरि सवर्णे** इति पूर्वधस्य लोपे **आडजादीना**मित्याटि **आटश्चे**ति वृद्धौ ॥ ऐन्ध ॥ आतामि । ऐन्धाताम् ॥ लङो मध्यमपुरुषैकवचने थासि श्नमि श्नमयोर्लोपे अल्लोपे नलोपे **झषस्तथोर्धोऽध** इति थस्य धत्वे **झरो झरी**ति पूर्वधस्य लोपे सस्य रुत्वे रेफस्य च विसर्गत्वे **आडजादीना**मित्याटि **आटश्चे**ति वृद्धौ ॥ ऐन्धाः ॥ विद विचारणे धा० तदमे लटस्ते श्नमि श्नमयोर्लोपे अल्लोपे **खरि चे**ति दस्य तत्वे **झरो झरी**ति तलोपे टेरेत्वे च ॥ विन्ते ॥ लुटस्ते तासौ तकारस्य डात्वे टेर्लोपे दस्य तत्वे गुणे च ॥ वेत्ता ॥ इति रुधादयः ॥

उपास्महे महेशाह्वतातानां श्रीशिवात्मनाम् । श्रीसद्गुरूणां च कृपाकल्पवल्लिमतल्लिकाम् ॥

अथ तनादयः ॥ तनु विस्तारे धा० तदमे लटस्तिपि **तनादिकृञ्भ्य उः** इति शबपवादविधायके उकारे **पुगन्तलघूपधस्ये**ति गुणे च कृते ॥ तनोति ॥ आ० प० लटस्ते **तनादिकृञ्भ्य उः** इत्युकारे **सार्वधातुकमपित्** इति ङिद्वत्वे ङित्वाच्च गुणाभावे **टित आत्मनेपदानां टेरे** इति टेरेत्वे च ॥ तनुते ॥ लिटस्तिपि तिपो णलि **लिटि धातो**रिति द्वित्वे **हलादिः शेष** इति हलो लोपे **अत उपधाया** इति वृद्धौ च ॥ ततान ॥ आ० प० धातोर्द्वित्वे हलो लोपे **लिटस्तझयोरेशिरेच्** इत्येशि **अत एकहल्मध्येऽनादेशादेर्लिटि** इत्यनेनाभ्यासलोपे धातोरकारस्यैत्वे च ॥ तेने ॥ लुटो मध्यमैकवचने सिपि तासौ तिपो डात्वे डित्वाट्टिलोपे इटि च ॥ तनितासि ॥ आ० प० लुटस्थासि थासः सेत्वे च ॥ तनितासे ॥ लृटस्तिपि **स्यतासी लृलुटो**रिति स्ये इटि सस्य षत्वे च ॥ तनिष्यति ॥ आ० प० लृटस्ते स्ये इटि टेरेत्वे सस्य षत्वे च ॥ तनिष्यते ॥ लोटस्तिपि **तनादिकृञ्भ्य उ**रित्युकारे गुणे **एरु**रितीकारस्योकारे च ॥ तनोतु ॥ आ० प० लोटस्ते उकारे टेरेत्वे **आमेत** इत्येकारस्यामि ॥ तनुताम् ॥ लङस्तिपि उकारे अटि

साथाः असनिष्ठाः । क्षणु हिंसायाम् ३ क्षणोति क्षणुते । ह्म्यन्तेति न वृद्धिः । अक्षणीत् अक्षत अक्षणिष्ट अक्षथाः अक्षणिष्ठाः । क्षिणु च ४ । उप्रत्यये लघूपधस्य गुणो वा। क्षिणोति क्षेणोति क्षेणिता अक्षेणीत् अक्षित अक्षेणिष्ट । तृणु अदने ५ तृणोति तर्णोति तृणुते तर्णुते । डुकृञ् करणे ६ करोति ॥ **अत उत्सार्वधातुके** ।६।४।११०। उप्र-

---

धेत्वे च ॥ असात ॥ सिज्लोपाभावे इटि षुत्वे अटि च ॥ असनिष्ट ॥ थासि च्लौ च्लेः सिचि **तनादिभ्यस्तथासोः** इति सिज्लोपे अटि **जनसनखनां सन्झलोः** इत्याकारान्तादेशे दीर्घत्वे च ॥ असाथाः ॥ सिज्लोपाभावे इटि सस्य षत्वे ष्टुत्वे अटि च ॥ असनिष्ठाः ॥ क्षणु हिंसायां धा० तदमे लटस्तिपि उकारे गुणे च ॥ क्षणोति ॥ आ० प० लटस्ते उकारे टेरेत्वे च ॥ क्षणुते ॥ लुङस्तिपि **च्लि लुङि**ति च्लौ च्लेः **सिच्** इति सिचि इचो लोपे **इतश्चे**ति तिप इकारलोपे **अस्तिसिचोऽपृक्ते** इति ईटि **आर्धधातुकस्येड्वलादे**रिति इटि **इट ईटि** इति सलोपे अटि च **ह्म्यन्तक्षणश्वसजागृणिश्व्येदिता**मिति वृद्ध्यभावे ॥ अक्षणीत् ॥ लुङस्ते च्लौ च्लेः सिचि **तनादिभ्यस्तथासोः** इति सिचो लोपे **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** इति णलोपे अटि ॥ अक्षत ॥ सिज्लोपाभावे **आर्धधातुकस्येड्वलादे**रिति इटि सस्य षत्वे ष्टुत्वे अटि च ॥ अक्षणिष्ट ॥ लुङस्थासि च्लौ च्लेः सिचि इचो लोपे **तनादिभ्यस्तथासो**रिति सिज्लोपे **अनुदात्तोपदेशवनतितनोत्यादीना**मिति णलोपे ॥ अक्षथाः ॥ सिज्लोपाभावे इटि सस्य षत्वे ष्टुत्वे अटि च ॥ अक्षणिष्ठाः ॥ क्षिणु हिंसायां धा० तत्र लटस्तिपि उकारे गुणे च ॥ क्षिणोति ॥ उप्रत्यये लघूपधस्य गुणो वेति पक्षे गुणे ॥ क्षेणोति ॥ लुटस्तिपि तासी तिपो डावे टेर्लोपे इटि गुणे च ॥ क्षेणिता ॥ लुङस्तिपि च्लौ च्लेः सिचि इचो लोपे **आर्धधातुकस्येड्वलादे**रिति इटि **इतश्चे**ति तिप इकारलोपे **अस्तिसिचोऽपृक्ते** इति ईटि **इट ईटि** इति सलोपे अटि गुणे च ॥ अक्षेणीत् ॥ आ० प० लुङस्ते च्लौ च्लेः सिचि **तनादिभ्यस्तथासो**रिति सिज्लोपे **अनुदात्तोपदेशवनतितनोत्यादीना**मिति णलोपे अटि च ॥ अक्षित ॥ सिज्लोपाभावे इटि सस्य षत्वे ष्टुत्वे गुणे अटि च ॥ अक्षेणिष्ट ॥ तृणु अदने धा० त० लटस्तिपि उकारे गुणे च ॥ तृणोति ॥ उप्रत्यये लघूपधस्येति तकारोत्तरवर्तिन ऋकारस्य गुणे च ॥ तर्णोति ॥ आ० प० लटस्ते **तनादिकृञ्भ्य उः** इत्युकारे गुणे टेरेत्वे च ॥ तृणुते ॥ उप्रत्यये लघूपधस्येति ऋकारस्य गुणे टेरेत्वे च ॥ तर्णुते ॥ डुकृञ् करणे धा० तत्र लटस्तिपि **तनादिकृञ्भ्य उः** इत्युकारे **पुगन्तलघूपधस्ये**ति ऋकारस्य गुणे **सार्वधातुकार्धधातुकयो**रित्युकारगुणे च ॥ करोति ॥ तसि उकारे ऋकारगुणे करुतः इति जाते तत्र **अत उत्सार्वधातुके** इति करोऽकारस्य उत्वे ॥ कुरुतः ॥ झौ झेरन्ता-

**संपरिभ्यां करोतौ भूषणे** ।६।१।१३७। **समवाये च** ।६।१।१३८। संपरिपूर्वस्य करोतेः सुट् स्याद्भूषणे संघाते चार्थे । संस्करोति । अलंकरोतीत्यर्थः । संस्कुर्वन्ति । सङ्घीभवन्तीत्यर्थः । संपूर्वस्य क्वचिदभूषणेऽपि सुट् । संस्कृतंभक्षा इति ज्ञापकात् ॥ **उपात्प्रतियत्नवैकृतवाक्याध्याहारेषु च** ।६।१।१३९। उपात्कृञः सुट् स्यादेष्वर्थेषु चात्प्रागुक्तयोरर्थयोः । प्रतियत्नो गुणाधानम् । विकृतमेव वैकृतं विकारः । वाक्याध्याहार आकाङ्क्षितैकदेशपूरणम् । उपस्कृता कन्या । उपस्कृता ब्राह्मणाः । एधोदकस्योपस्कुरुते । उपस्कृतं भुङ्क्ते । उपस्कृतं ब्रूते । वनु याचने ७ वनुते वनने । मनु अवबोधने ८ मनुते मेने मनिता मनिष्यते मनुताम् अमनुत मन्वीत मनिषीष्ट अमनिष्ट अमत अमनिष्यत ॥ इति तनादयः ॥

---

लोपे **इतश्चेति** तिप इकारलोपे **अस्तिसिचोऽपृक्ते** इति ईटि **यदव्रजहलन्तस्याच** इति वृद्धौ अटि सस्य षत्वे च ॥ अकार्षीत् ॥ आ० प० लुङस्ते च्लौ च्लेः सिचि **ह्रस्वादङ्गात्** इति सिज्लोपे अटि ङित्त्वात् गुणाभावे च ॥ अकृत ॥ लृङस्तिपि स्ये इटि गुणे अटि सस्य षत्वे तिप इकारलोपे च ॥ अकरिष्यत् ॥ एवं आ० प० लृङस्ते ॥ अकरिष्यत । संपूर्वकस्य कृञ्धातोः परिपूर्वस्य कृञ्धातोश्च **संपरिभ्यां करोतौ भूषणे** इत्यनेन सुटि उटो लोपे ॥ संस्करोति । अलंकरोतीत्यर्थः ॥ **समवाये च** इत्यनेन सुटि च ॥ संस्कुर्वन्ति । सङ्घीभवन्तीत्यर्थः ॥ उपस्कृता कन्या ॥ उपस्कृता ब्राह्मणाः ॥ एधोदकस्योपस्कुरुते ॥ उपस्कृतं भुङ्क्ते ॥ उपस्कृतं ब्रूते ॥ इत्यत्र **उपात्प्रतियत्नवैकृतवाक्याध्याहारेषु** चेत्यनेन सुट् भवति उपस्कृता कन्या, भूषिता इत्यर्थः ॥ उपस्कृता ब्राह्मणाः, सङ्घीभूता इत्यर्थः ॥ एधो दकस्य उपस्कुरुते, गुणाधानं कुरुते इत्यर्थः ॥ उपस्कृतं भुङ्क्ते, विकृतं भुङ्क्ते इत्यर्थः । उपस्कृतं ब्रूते, अध्याहारयुक्तं ब्रूते इत्यर्थः ॥ वनु याचने धा० तदग्रे लटस्ते **तनादिकृञ्भ्य उः** इत्युकारे टेरेत्वे च ॥ वनुते ॥ लिटस्ते धातुद्वित्वे हल्लोपे **लिटस्तझयोरेशिरेच्** इत्येशि वबने इति जातं तत्र **अत एकहल्मध्येनादेशादेर्लिटी**ति प्राप्ते **नशसददवादिगुणाना**मिति निषेधे ॥ ववने ॥ मनु अवबोधने लटस्ते **तनादिकृञ्भ्य** उरित्युकारे टेरेत्वे च ॥ मनुते ॥ लिटस्ते **लिटि धातोरनभ्यासस्येति** द्वित्वे **हलादिः शेष** इति नलोपे **लिटस्तझयोरेशिरेच्** इति एशि ममने इति जातं तत्र **अत एकहल्मध्येनादेशादेर्लिटि** इत्यनेनाभ्यासलोपे अकारस्यैत्वे च ॥ मेने ॥ लुटस्ते तासौ तस्य डात्वे टेर्लोपे इटि च ॥ मनिता ॥ लृटस्ते स्ये इटि सस्य षत्वे टेरेत्वे च ॥ मनिष्यते ॥ लोटस्ते उकारे टेरेत्वे **आमेत** इत्येकारस्यामि च ॥ मनुताम् ॥ लङस्ते उकारे अटि च ॥ अमनुत ॥ विधिलिङस्ते उकारे **लिङः सीयुट्** इति सीयुटि उटो लोपे **लोपो व्योर्वली**ति यलोपे **लिङः सलोपोऽनन्त्यस्ये**ति सलोपे **इको यणची**ति यणि ॥ मन्वीत ॥ आशीर्लिङस्ते **लिङः सीयुट्** इति सीयुटि उटो लोपे **आर्ध-**

## ॥ अथ तिङन्ते क्र्यादिगणप्रकरणम् ॥

डुक्रीञ् द्रव्यविनिमये १ ॥ **क्र्यादिभ्यः श्ना** ।३।१।८१। शपोऽपवादः क्रीणाति । ईहल्यघोः । क्रीणीतः । श्नाभ्यस्तयोरातः । क्रीणन्ति । क्रीणासि क्रीणीथः क्रीणीथ । क्रीणामि क्रीणीवः क्रीणीमः । क्रीणीते क्रीणाते क्रीणते । क्रीणीषे क्रीणाथे क्रीणीध्वे । क्रीणे क्रीणीवहे क्रीणीमहे । चिक्राय चिक्रियतुः चिक्रियुः । चिक्रेथ चिक्रयिथ चिक्रिये

---

**धातुकस्येड्वलादे**रिति इटि **सुट्तिथो**रिति सुटि उटो लोपे सकारयोः षत्वे ष्टुत्वे च ॥ मनिषीष्ट ॥ लुङस्ते च्लौ च्लेः सिचि इचो लोपे इटि अटि ष्टुत्वे च ॥ अमनिष्ट ॥ लृङस्ते स्ये इटि अटि सस्य षत्वे च ॥ अमनिष्यत ॥ इति तनादयः पूर्णाः ॥

॥ श्रिये श्रीमत्सरस्वत्याः पदपङ्कजरेणवः ॥ सन्तुश्रीसद्गुरूणां च शेमुषीमलसंमुपः ॥ १॥

अथ क्र्यादयो लिख्यन्ते ॥ डुक्रीञ् द्रव्यविनिमये धा० लटस्तिपि **क्र्यादिभ्यः श्ना** इत्यनेन श्नाकारे शस्येत्संज्ञायां **तस्य लोप** इति लोपे **अट्कुप्वाङ्नुम्व्यवायेपी**ति नस्य णत्वे च ॥ क्रीणाति ॥ तसि श्नाप्रत्यये कृते शकारलोपे **ई हल्यघोः** इत्यनेन ईकारे नस्य णत्वे च ॥ क्रीणीतः ॥ झौ श्नाप्रत्यये कृते **झोन्त** इत्यनेन झस्यान्तादेशे शलोपे नस्य णत्वे **श्नाभ्यस्तयोरात** इत्याकारलोपे च ॥ क्रीणन्ति ॥ सिपि श्नाकारे शलोपे नस्य णत्वे ॥ क्रीणासि ॥ थसि श्नाकारे शलोपे **ई हल्यघो**रित्याकारस्य ईकारे च ॥ क्रीणीथः ॥ तथैव थे परे ॥ क्रीणीथ ॥ मिपि **क्र्यादिभ्यः श्ना** इति श्नाकारे शलोपे नस्य णत्वे ॥ क्रीणामि ॥ वसि श्नाकारे शलोपे नस्य णत्वे **ई हल्यघो**रिति आकारस्य ईकारे ॥ क्रीणीवः ॥ तथैव मसि ॥ क्रीणीमः ॥ आ० प० लटस्ते श्नाकारे शलोपे नस्य णत्वे **ई हल्यघो**रिति आकारस्य ईकारे **टित आत्मनेपदानां टेरे** इति टेरेत्वे च ॥ क्रीणीते ॥ आतामि श्नाकारे शलोपे नस्य णत्वे टेरेत्वे **श्नाभ्यस्तयोरात** इति आकारलोपे संयोगे च ॥ क्रीणाते ॥ झे श्नाकारे शलोपे नस्य णत्वे **आत्मनेपदेष्वनत** इति झस्य अदादेशे **श्नाभ्यस्तयोरात** इत्याकारलोपे टेरेत्वे च ॥ क्रीणते ॥ थासि श्नाकारे शलोपे नस्य णत्वे **थासः से** इति थासः सेत्वे **ई हल्यघो**रिति आकारस्य ईकारे सस्य षत्वे च ॥ क्रीणीषे ॥ आथामि श्नाकारे शलोपे नस्य णत्वे **श्नाभ्यस्तयोरात** इत्याकारलोपे टेरेत्वे च ॥ क्रीणाथे ॥ ध्वमि श्नाकारे शलोपे नस्य णत्वे **ई हल्यघो**रित्याकारस्य ईकारे टेरेत्वे च क्रीणीध्वे ॥ इटि श्नाकारे शलोपे नस्य णत्वे **श्नाभ्यस्तयोरात** इत्याकारलोपे टेरेत्वे ॥ क्रीणे ॥ वहौ श्नाकारे शलोपे नस्य णत्वे **ई हल्यघोः** इति आकारस्य ईकारे टेरेत्वे ॥ क्रीणीवहे ॥ एवं महिङि । क्रीणीमहे ॥ लिटस्तिपि तिपो णलि **लिटि धातोरनभ्यासस्ये**ति द्वित्वे **हलादिः शेष** इति रलोपे **कुहोश्चु**रित्यभ्यासककारस्य चकारे **अचोञ्णिति** इति वृद्धौ **एचोऽयवायाव** इत्यायादेशे ॥ चिक्राय ॥ अतुसि धातुद्वित्वे

क्रेता क्रेष्यति क्रेष्यते क्रीणातु क्रीणीतात् क्रीणीताम् अक्रीणात् अक्रीणीत क्रीणीयात् क्रीणीत क्रीयात् क्रेषीष्ट अक्रैषीत् अक्रेष्ट अक्रेष्यत् अक्रेष्यत ॥ प्रीञ् तर्पणे कान्तौ च २ प्रीणाति प्रीणीते । श्रीञ् पाके ३ श्रीणाति श्रीणीते । मीञ् हिंसायाम् ४ ॥ **हिनु-**

रलोपे कस्य चत्वे **अचि श्नुधातुभ्रुवां य्वोरियङुवङौ** इति इयङि ॥ चिक्रियतुः ॥ उसि धातुद्वित्वे हल्लोपे कस्य चत्वे **अचि श्नुधातुभ्रुवां य्वोरियङुवङौ** इतीयङि ॥ चिक्रियुः ॥ थसि इडभावे गुणे च ॥ चिक्रेथ ॥ पक्षे भारद्वाजमते इटि गुणे अयादेशे ॥ चिक्रयिथ ॥ आ० प० लिटस्ते **लिटि धातो**रितिद्वित्वे **हलादिः शेष** इति रलोपे **ह्रस्व** इत्यभ्यासाचो ह्रस्वत्वे **कुहोश्चु**रित्यभ्यासककारस्य चकारे **लिटस्तझयोरेशिरेच्** इत्येशि **अचि श्नुधातुभ्रुवां य्वो**रितीयङि ॥ चिक्रिये ॥ लुटस्तो तासी तस्य डात्वे टिलोपे गुणे च ॥ क्रेता ॥ लृटस्ते स्ये सस्य षत्वे गुणे च ॥ क्रेष्यते ॥ लोटस्तिपि श्नाकारे शलोपे नस्य णत्वे **एरु**रिति तिप इकारस्योकारे ॥ क्रीणातु ॥ **तुह्योस्तातङि**ति तातङि **ई हल्यघोः** इत्याकारस्य ईकारे ॥ क्रीणीतात् ॥ आ० प० लोटस्ते श्नाकारे शलोपे नस्य णत्वे **ई हल्यघो**रित्याकारस्य ईकारे टेरेत्वे **आमेत** इत्येकारस्य आमि च ॥ क्रीणीताम् ॥ लङस्तिपि श्नाकारे शलोपे नस्य णत्वे **इतश्चे**ति तिप इकारलोपे अटि च ॥ अक्रीणात् ॥ आ० प० । लङस्ते श्नाकारे शलोपे नस्य णत्वे अटि **ई हल्यघो**रित्याकारस्य ईकारे ॥ अक्रीणीत ॥ विधिलिङस्तिपि **यासुट् परस्मैपदेषु**ति यासुटि उटो लोपे श्नाकारे शलोपे नस्य णत्वे **इतश्चे**ति तिप इकारलोपे **लिङः सलोपोऽनन्त्यस्ये**ति सलोपे **ई हल्यघो**रित्याकारस्य ईकारे ॥ क्रीणीयात् ॥ आ० प० विधिलिङस्ते **लिङः सीयुट्** इति सीयुटि उटो लोपे **लोपो व्योर्वली**ति यलोपे **लिङः सलोपोऽनन्त्यस्ये**ति सलोपे श्नाकारे शलोपे नस्य णत्वे **श्नाभ्यस्तयोरातः** इत्याकारलोपे ॥ क्रीणीत ॥ आशीर्लिङस्तिपि यासुटि उटो लोपे **इतश्चे**ति तिप इकारलोपे **स्कोः संयोगाद्योरन्ते चे**ति सलोपे ॥ क्रीयात् ॥ आ० प० आशीर्लिङस्ते सीयुटि उटो लोपे **लोपो व्योर्वली**ति यलोपे **सुट्तिथो**रिति सुटि उटो लोपे उभयो. सकारयो. षत्वे ष्टुत्वे गुणे च ॥ क्रेषीष्ट ॥ लुङस्तिपि च्लौ च्लेः सिचि इचो लोपे **इतश्चे**ति तिप इकारलोपे **अस्तिसिचोऽपृक्ते** इति ईटि **सिचि वृद्धि**रिति वृद्धौ अटि च ॥ अक्रैषीत् ॥ आ० प० लुङस्ते च्लौ च्लेः सिचि इचो लोपे अटि गुणे षत्वे च ॥ अक्रेष्ट ॥ लृटस्तिपि **स्यतासी लृलुटो**रिति स्ये अटि **इतश्चे**ति तिप इकारलोपे सस्य षत्वे गुणे च ॥ अक्रेष्यत् ॥ आ० प० लृङस्ते स्ये अटि सस्य षत्वे गुणे च अक्रेष्यत ॥ प्रीञ् तर्पणे कान्तौ च धा० तदभे लिटस्तिपि श्नाकारे शलोपे नस्य णत्वे च ॥ प्रीणाति ॥ आ० प० लटस्ते श्नाकारे शलोपे नस्य णत्वे **ई हल्यघो**रित्याकारस्य ईकारे टेरेत्वे च ॥ प्रीणीते ॥ श्रीञ् पाके लटस्तिपि श्नाकारे शलोपे नस्य णत्वे च ॥ श्रीणाति ॥ आ० प० लटस्ते श्नाकारे शलोपे नस्य णत्वे

स्कुञ् आप्रवणे ६ ॥ स्तम्भुस्तुम्भुस्कम्भुस्कुम्भुस्कुञ्भ्यः श्नुश्च ।३।१।८२। चात् श्ना । स्कुनोति स्कुनाति स्कुनुते स्कुनीते चुस्काव चुस्कुवे स्कोता अस्कौषीत् अस्कोष्ट । स्तम्भ्वादयश्चत्वारः सौत्राः । सर्वे रोधनार्थाः परस्मैपदिनः ॥ हलः श्नः शानज्झौ ३।१।८३। हलः परस्य श्नः शानजादेशः स्याद्धौ परे । स्तभान ॥ जॄस्तम्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च ।३।१।५८। च्लेरङ् वा स्यात् ॥ स्तन्भेः ।८।३।६७।

---

एचोयवायाव इत्यायि च ॥ सिपाय ॥ आ० प० लिटस्ते द्वित्वे लिटस्तझयोरेशिरेच् इत्येशि सस्य षत्वे एरनेकाचोऽसंयोगपूर्वस्येति यणि ॥ शिप्ये ॥ लुटस्तिपि स्यतासी लृलुटोरिति तासौ तिपो डात्वे डित्वाट्टिलोपे सार्वधातुकार्धधातुकयोरिति गुणे च ॥ सेता ॥ स्कुञ् आप्रवणे धा० लटस्तिपि क्र्यादिभ्य इति श्नाकारे शलोपे च स्कुनाति ॥ स्तम्भुस्तुम्भुस्कम्भुस्कुम्भुस्कुञ्भ्यः श्नुश्चेति श्नौ शकारलोपे सार्वधातुकार्धधातुकयोरिति गुणे च ॥ स्कुनोति ॥ आ० प० लटस्ते स्तम्भुस्तुम्भुस्कम्भ्विति श्नौ शलोपे टेरेत्वे च ॥ स्कुनुते ॥ श्नाकारे शलोपे ई हल्यघोरित्याकारस्य ईकारे टेरेत्वे च ॥ स्कुनीते ॥ लिटस्तिपि लिटि धातोरिति द्वित्वे शर्पूर्वाः खयः इति सलोपे कुहोश्चुरिति कस्य चत्वे अचो ञ्णितीति इति वृद्धौ एचोयवायाव इति आवि च ॥ चुस्काव ॥ आ० प० लिटस्ते द्वित्वे शर्पूर्वाःखय इत्यभ्यासलोपे कुहोश्चुरिति कस्य चत्वे लिटस्तझयोरेशिरेच् इत्येशि अचि श्नुधातुभ्रुवां य्वोरिति उवङि ॥ चुस्कुवे ॥ लुटस्तिपि तासौ तिपो डात्वे टिलोपे गुणे च ॥ स्कोता ॥ लुङस्तिपि च्लौ च्लेः सिचि इचो लोपे इतश्चेति इकारलोपे अस्तिसिचोऽपृक्ते इति ईटि सस्य षत्वे अटि सिचि वृद्धिः परस्मैपदेष्विति वृद्धौ ॥ अस्कौषीत् ॥ आ० लुङस्ते च्लौ च्लेः सिचि इचो लोपे सस्य षत्वे गुणे ष्टुत्वे अटि च ॥ अस्कोष्ट ॥ स्तम्भुधातोर्लोट् मध्यमैकवचने सिपि श्नाकारे सेर्ह्यपिच्चेति सेर्हित्वे हलः श्नः शानज्झौ इति श्नाकारस्य शानचि शलोपे च अनिदितां हल उपधायाः क्ङिति इति नलोपे अतो हेः इति हलोपे च ॥ स्तभान ॥ विस्तम्भू धातोर्लुङस्तिपि च्लौ अटि इतश्चेति तिप इकारलोपे जॄस्तम्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्चेति च्लेरङि अनिदितामिति नलोपे स्तन्भेः इति सस्य षत्वे ष्टुत्वे च ॥ व्यष्टभत् ॥ अङोभावे च्लेः सिचि इचो लोपे इटि तिप इकारलोपे अस्तिसिचोऽपृक्ते इति ईटि इट ईटि इति सलोपे अटि च कृते ॥ अस्तम्भीत् ॥ युञ् बन्धने धा० लटस्तिपि श्नाकारे शलोपे ॥ युनाति ॥ आ० प० लटस्ते श्नाकारे शलोपे ईहल्यघोरित्यात ईकारे टे-

---

१ हलः [illegible] शानज्झौ ॥ स्तभानेति । अनातोहेरिति लुकि कर्तव्ये सन्निपातपरिभाषा न प्रवर्तते सूत्रारम्भसामर्थ्यात् । अत एव जहीत्यत्र हिलोपवारणायेय परिभाषा नोपन्यस्ता ॥

अवारिषाम् अवरिष्ट अवरीष्ट अवूर्ष्ट । धून् कम्पने १६ धुनाति धुनीते धोता धविता

एशि **ऋच्छत्यृता**मिति गुणे च कृते ॥ ववरे ॥ लुटस्तिपि **स्यतासी लृलुटो**रिति तासौ **लुटः प्रथमस्य डारौरसः** इति तिपो डात्वे डित्वाट्टेर्लोपे **आर्द्धधातुकस्येड्-वलादे**रिति इटि **सार्वधातुकार्द्धधातुकयो**रिति गुणे **वृतो वा** इत्यनेन इटो दीर्घत्वे च कृते ॥ वरीता ॥ दीर्घत्वाभावे ॥ वरिता ॥ आशीर्लिङस्तिपि **यासुट्परस्मैपदेषूदात्तो ङिच्चेति** यासुटि **इतश्चेति** तिप इकारलोपे **स्कोः संयोगाद्योरन्ते चे**ति सलोपे **उदोष्ठ्यपूर्वस्ये**ति ऋदन्ताङ्गस्य उत्वे **हलि चे**ति दीर्घत्वे कृते कृते च **अचो रहा-भ्यां द्वे** इति वकारस्य द्वित्वे ॥ वूर्य्यात् ॥ आ० प० आशीर्लिङस्ते **लिङः सीयुट्** इति सीयुटि उटो लोपे **लोपो व्योर्वली**ति यलोपे **सुट्तिथो**रिति सुटि उटो लोपे **लिङ्सिचोरात्मनेपदेष्वि**ति वेटि **ऋच्छत्यृता**मिति गुणे **आदेशप्रत्य-ययो**रित्युभयोः सकारयोर्मूर्द्धन्यत्वे **ष्टुना ष्टु**रिति तस्य टत्वे च कृते ॥ वरिषीष्ट ॥ इडभावे लिङस्ते सीयुटि उटो लोपे यलोपे सुटि उटोलोपे **उदोष्ठ्यपूर्वस्ये**ति ऋदन्ता-ङ्गस्योकारे **हलि चे**ति दीर्घत्वे उभयोः सकारयोष्षकारे कृते ष्टुत्वे च कृते ॥ वूर्षीष्ट ॥ लुङस्तिपि **च्लिलुङी**ति च्लौ **च्लेः सिच्** इति सिचि इचो लोपे **आर्द्धधातुकस्ये-ड्वलादे**रिति इटि **इतश्चेति** तिप इकारलोपे **अस्तिसिचोऽपृक्ते** इति ईटि **इट ईटि** इति सलोपे **सिचि वृद्धिः परस्मैपदेष्वि**ति वृद्धौ अटि दीर्घत्वे च कृते ॥ ॥ अवारीत् ॥ लुङः प्रथमस्य द्विवचने तसि च्लौ च्लेः सिचि इचो लोपे इटि **सिचि वृद्धिः परस्मैपदेष्वि**ति वृद्धौ अटि **तस्थस्थमिपां तांतंताम** इति तामि सस्य षत्वे ष्टुत्वे **वृतो वे**ति इटो दीर्घत्वे च ॥ अवारीष्टाम् । दीर्घत्वाभावे । अवारिष्टाम् ॥ आ०प०लुङस्ते च्लौ च्लेः सिचि इचो लोपे **लिङ्सिचोरात्मनेपदेष्वि**ति वेटि गुणे अटि **वृतो वे**ति दीर्घत्वे सस्य षत्वे ष्टुत्वे च ॥ अवरीष्ट ॥ दीर्घाभावे ॥ अवरिष्ट ॥ **लिङ्सिचो**रिति इड-भावे च्लौ सिचि इचो लोपे **उदोष्ठ्यपूर्वस्ये**ति ऋदन्ताङ्गस्योकारे **हलि चे**ति दीर्घत्वे सस्य षत्वे ष्टुत्वे अटि च कृते ॥ अवूर्ष्ट ॥ धून् कम्पने धातुरस्तस्ते लटस्तिपि **क्र्यादिभ्यः श्ना** इति श्नाकारे शलोपे **प्वादीनां ह्रस्व** इति धकारोत्तरवर्तिन ऊकारस्य ह्रस्वत्वे च कृते ॥ धुनाति ॥ आ० प० लटस्ते श्नाकारे शलोपे **ई हल्यघोरि**त्याकारस्य ईकारे **टित आत्मनेपदानां टेरे** इति टेरेत्वे **प्वादीनां ह्रस्व** इति उकारस्य ह्रस्वत्वे च ॥ धुनीते ॥ लुटस्तिपि तासौ तिपो डात्वे डित्वाट्टिलोपे **स्वरतिसूतिसूय-तिधूञूदितो वेति** वेटि गुणे **एचोऽयवायाव** इत्यवि ॥ धविता । इडभावे च । धोता ॥ लुङस्तिपि च्लौ च्लेः सिचि इचो लोपे **स्तुसुधूञ्भ्यः परस्मैपदेष्वि**ति इटि **इत-श्चेति** तिप इकारलोपे **अस्तिसिचोऽपृक्ते** इति ईटि **इट ईटि** इति सलोपे **सिचि**

**लिङ्सिचोरात्मनेपदेषु ।७।२।४२।** वृङ्वृञ्भ्यामृदन्ताच्च परयोर्लिङ्सिचोरिड्वा स्यात्तङि ॥ **न लिङि ।७।२।३९।** वृत इटो लिङि न दीर्घः । स्तरिषीष्ट । उश्चेति कित्त्वम् । स्तीर्षीष्ट । सिचि च परस्मैपदेषु । अस्तारीत् अस्तारिष्टाम् अस्तारिषुः । अस्तरिष्ट अस्तीर्ष्ट । कॄञ् हिंसायाम् १४ कृणाति कृणीते चकार चकरे वृञ् वरणे १५ वृणाति वृणीते ववार ववरे वरिता वरीता । उदोष्ठ्यपूर्वस्य इत्युत्वम् । वूर्यात् वरिषीष्ट वूर्षीष्ट अवारीत्

---

चेति दीर्घत्वे च ॥ स्तीर्यात् ॥ आ० प० आशीर्लिङस्ते सीयुटि उटो लोपे **लोपो व्योर्वली**ति यलोपे **सुट्तिथोरि**ति सुटि उटो लोपे **लिङ्सिचोरात्मनेपदेषु** इति इड्विकल्पे गुणे **न लिङि** इति वृतो वेति सूत्रप्राप्तदीर्घत्वे निषेधे उभयोः सकारयोः षत्वे ष्टुत्वे च ॥ स्तरीषीष्ट ॥ इडभावे **ऋत इद् धातोः** इति इकारे **हलि चे**ति दीर्घत्वे ॥ स्तीर्षीष्ट ॥ लुङस्तिपि **च्लि लुङी**ति च्लौ **च्लेः सिच्** इति सिचि इचो लोपे **आर्द्धधातुकस्ये**ति इटि **इतश्चे**ति तिप इकारलोपे **अस्तिसिचोऽपृक्ते** इति ईटि **इट ईटि** इति सलोपे **सिचि वृद्धिः परस्मैपदेषु** इति वृद्धौ च ॥ अस्तारीत् ॥ **तस्थस्थमिपां तांतंतामः** इति तसस्तामि कृते च्लौ च्लेः सिचि इचो लोपे **आर्द्धधातुकस्ये**ति इटि अटि **सिचि वृद्धिः परस्मैपदेष्वि**ति वृद्धौ सस्य षत्वे ष्टुत्वे च ॥ अस्तारिष्टाम् ॥ लुङो झौ **सिजभ्यस्तविदिभ्यश्चे**ति झेर्जुसि **चुटू** इति जस्येत्संज्ञायां जस्य लोपे च्लौ च्लेः सिचि इचो लोपे इटि वृद्धौ अटि सस्य षत्वे च ॥ अस्तारिषुः ॥ आ० प० लुङस्ते च्लौ च्लेः सिचि इचलोपे **लिङ्सिचोरात्मनेपदेषु** इति इटि गुणे अटि सस्य षत्वे ष्टुत्वे च ॥ अस्तरिष्ट ॥ इडभावपक्षे **ऋत इद् धातोः** इति ऋकारान्ताङ्गस्य इकारे **हलि चे**ति दीर्घत्वे च सस्य षत्वे ष्टुत्वे अटि च ॥ अस्तीर्ष्ट ॥ कॄञ् हिंसायां धा० लटस्तिपि श्नाकारे शलोपे नस्य णत्वे **प्वादीनां ह्रस्वः** इति ह्रस्वत्वे च ॥ कृणाति ॥ आ० प० लटस्ते श्नाकारे शलोपे नस्य णत्वे **ई हल्यघोरि**त्यात ईत्वे टेरेत्वे च ॥ कृणीते ॥ लिटस्तिपि तिपो णलि द्वित्वे **उरत्** इति अभ्यासऋवर्णस्य रपरे अदादेशे **हलादिः शेषः** इति लोपे **कुहोश्चुरि**ति कस्य चत्वे **अचोञ्णिति** इति वृद्धौ च ॥ चकार ॥ आ० प० लिटस्ते द्वित्वे अभ्यासऋवर्णस्य **उरत्** इति रपरे अदादेशे **हलादिः शेषः** इति रलोपे **कुहोश्चुरि**ति कस्य चत्वे **लिटस्तझयोरेशिरेच्** इति एशि **ऋच्छत्यॄताम्**मिति गुणे च ॥ चकरे ॥ वृञ् वरणे धा० लटस्तिपि श्नाकारे शलोपे नस्य णत्वे **प्वादीनां ह्रस्वः** इति ह्रस्वत्वे ॥ वृणाति ॥ आ० प० लटस्ते श्नाकारे शलोपे नस्य णत्वे **ई हल्यघोरि**त्यात ईत्वे टेरेत्वे **प्वादीनां ह्रस्वः** इति ह्रस्वत्वे च ॥ वृणीते ॥ लिटस्तिपि तिपो णलि **लिटि धातोरनभ्यासस्ये**ति द्वित्वे अभ्यासऋवर्णस्य **उरत्** इति रपरे अदादेशे रलोपे **अचोञ्णिति** इति वृद्धौ च ॥ ववार ॥ आ० प० लिटस्ते द्वित्वे **उरत्** इति रपरे अदादेशे **हलादिः शेषः** इति रलोपे **लिटस्तझयोरेशिरेच्** इति

अवारिष्टाम् अवरिष्ट अवरीष्ट अवूर्ष्ट । धूञ् कम्पने १६ धुनाति धुनीते धोता धविता

---

एशि **ऋच्छत्यॄता**मिति गुणे च कृते ॥ ववरे ॥ लुटस्तिपि **स्यतासी लृलुटो**रिति तासौ **लुटः प्रथमस्य डारौरसः** इति तिपो डात्वे डित्वाट्टिलोपे **आर्द्धधातुकस्येड्वलादे**रिति इटि **सार्वधातुकार्द्धधातुकयो**रिति गुणे **वॄतो वा** इत्यनेन इटो दीर्घत्वे च कृते ॥ वरीता ॥ दीर्घत्वाभावे ॥ वरिता ॥ आशीर्लिङस्तिपि **यासुट्परस्मैपदेषूदात्तो ङिच्चेति** यासुटि **इतश्चेति** तिप इकारलोपे **स्कोः संयोगाद्योरन्ते चेति** सलोपे **उदोष्ठ्यपूर्वस्येति** ऋदन्ताङ्गस्य उत्वे **हलि चेति** दीर्घत्वे कृते कृते च **अचो रहाभ्यां द्वे** इति यकारस्य द्वित्वे ॥ वूर्य्यात् ॥ आ० प० आशीर्लिङस्ते **लिङः सीयुट्** इति सीयुटि उटो लोपे **लोपो व्योर्वलीति** यलोपे **सुट्तिथो**रिति सुटि उटो लोपे **लिङ्सिचोरात्मनेपदेष्विति** वेटि **ऋच्छत्यॄता**मिति गुणे **आदेशप्रत्ययो**रित्युभयोः सकारयोर्मूर्द्धन्यत्वे **ष्टुना ष्टु**रिति तस्य टत्वे च कृते ॥ वरिषीष्ट ॥ इडभावे लिटस्ते सीयुटि उटो लोपे यलोपे सुटि उटोलोपे **उदोष्ठ्यपूर्वस्येति** ऋदन्ताङ्गस्योकारे **हलि चेति** दीर्घत्वे उभयोः सकारयोष्षकारे कृते ष्टुत्वे च कृते ॥ वूर्षीष्ट ॥ लुङस्तिपि **च्लिलुङीति** च्लौ **च्लेः सिच्** इति सिचि इचो लोपे **आर्द्धधातुकस्येड्वलादे**रिति इटि **इतश्चेति** तिप इकारलोपे **अस्तिसिचोऽपृक्ते** इति ईटि **इट ईटि** इति सलोपे **सिचि वृद्धिः परस्मैपदेष्विति** वृद्धौ अटि दीर्घत्वे च कृते ॥ ॥ अवारीत् ॥ लुङः प्रथमस्य द्विवचने तसि च्लौ च्लेः सिचि इचो लोपे इटि **सिचि वृद्धिः परस्मैपदेष्विति** वृद्धौ अटि **तस्थस्थमिपां तांतंताम** इति तामि सस्य षत्वे ष्टुत्वे **वॄतो वेति** इटो दीर्घत्वे च ॥ अवारीष्टाम् । दीर्घत्वाभावे । अवारिष्टाम् ॥ आ०प०लुङस्ते च्लौ च्लेः सिचि इचो लोपे **लिङ्सिचोरात्मनेपदेष्विति** वेटि गुणे अटि **वॄतो वेति** दीर्घत्वे सस्य षत्वे ष्टुत्वे च ॥ अवरीष्ट ॥ दीर्घाभावे ॥ अवरिष्ट ॥ **लिङ्सिचो**रिति इडभावे च्लौ सिचि इचो लोपे **उदोष्ठ्यपूर्वस्येति** ऋदन्ताङ्गस्योकारे **हलि चेति** दीर्घत्वे सस्य षत्वे ष्टुत्वे अटि च कृते ॥ अवूर्ष्ट ॥ धूञ् कम्पने धातुरस्याग्रे लटस्तिपि **क्र्यादिभ्यः श्ना** इति श्नाकारे शलोपे **प्वादीनां ह्रस्व** इति धकारोत्तरवर्तिन ऊकारस्य ह्रस्वत्वे च कृते ॥ धुनाति ॥ आ० प० लटस्ते श्नाकारे शलोपे **ई हल्यघो**रित्याकारस्य ईकारे **टित आत्मनेपदानां टेरे** इति टेरेत्वे **प्वादिनां ह्रस्व** इति उकारस्य ह्रस्वत्वे च ॥ धुनीते ॥ लुटस्तिपि तासौ तिपो डात्वे डित्वाट्टिलोपे **स्वरतिसूतिसूयतिधूञूदितो वेति** वेटि गुणे **एचोऽयवायाव** इत्यवि ॥ धविता । इडभावे च । धोता ॥ लुङस्तिपि च्लौ च्लेः सिचि इचो लोपे **स्तुसुधूञ्भ्यः परस्मैपदेष्विति** इटि **इतश्चेति** तिप इकारलोपे **अस्तिसिचोऽपृक्ते** इति ईटि **इट ईटि** इति सलोपे **सिचि**

अधावीत् अधविष्ट अधोष्ट। ग्रह उपादाने ।१७ गृह्णाति गृह्णीते जग्राह जगृहे ॥ **ग्रहोऽलिटि दीर्घः** ।७।२।३७। एकाचो ग्रहेर्विहितस्येटो दीर्घो न तु लिटि। ग्रहीता गृह्णातु ॥ **हलः श्नः शानज्झौ** ।३।१।८३। हलः परस्य श्नः शानजादेशः स्याद्धौ परे। गृहाण गृह्यात् ग्रहीषीष्ट। ह्यन्तेति न वृद्धिः। अग्रहीत् अग्रहीष्टाम् अग्रहीष्ट

---

**वृद्धिः परस्मैपदेष्वि**ति वृद्धौ आवि अटि दीर्घत्वे च कृते ॥ अधावीत् ॥ आ० प० लुङस्ते च्लौ च्लेः सिचि इचो लोपे **स्वरतिसूति** इति इटि गुणे अवि अटि सस्य षत्वे ष्टुत्वे च ॥ अधविष्ट ॥ इडभावे ॥ अधोष्ट ॥ ग्रह उपादाने धातुरस्ति तत्र लटस्तिपि **क्र्यादिभ्यः श्ना** इति श्नाकारे शब्लोपे **ग्रहिज्ये**ति गकारान्तर्वर्तिरेफस्य संप्रसारणे ऋकारे कृते पूर्वरूपे च **अट्कुप्वाङ्नुम्व्यवायेपी**ति नस्य णत्वे ॥ गृह्णाति ॥ आ० प० लटस्ते श्नाकारे **ग्रहिज्ये**ति संप्रसारणे **ई हल्यघोरि**त्याकारस्य ईकारे **टित आत्मनेपदानां टेरे** इति टेरेत्वे च कृते ॥ गृह्णीते ॥ लिटस्तिपि तिपो णलि **लिटि धातोरनभ्यासस्ये**ति द्वित्वे **हलादिः शेष** इत्यभ्यासगतयोरेफहकारयोर्लोपे **कुहोश्चुरि**ति गस्य जत्वे **अत उपधाया** इति वृद्धौ ॥ जग्राह ॥ आ० प० लिटस्ते **लिटि धातोरनभ्यासस्ये**ति द्वित्वे **हलादिः शेष** इति रेफहकारयोर्लोपे **कुहोश्चुरि**ति गस्य जत्वे **ग्रहिज्ये**ति संप्रसारणे **लिटस्तझयोरेशिरेजि**ति एशि कृते ॥ जगृहे ॥ लुटस्तिपि **स्यतासी लृलुटो**रिति तासौ **लुटः प्रथमस्य डारौरसः** इति तिपो डात्वे डित्वाट्टिलोपे **आर्द्धधातुकस्येड्वलादे**रिति इटि **ग्रहोऽलिटि दीर्घः** इति इट इकारस्य दीर्घत्वे च कृते ॥ ग्रहीता ॥ लोटस्तिपि श्नाकारे शब्लोपे **एरुः** इतीकारस्योत्वे **अट्कुप्वाङ्नुम्व्यवायेपी**ति नस्य णत्वे **ग्रहिज्ये**ति संप्रसारणे च कृते ॥ गृह्णातु ॥ आ० प० लोटस्ते श्नाकारे शब्लोपे संप्रसारणे नस्य णत्वे **ई हल्यघोरि**त्याकारस्य ईकारे **टित आत्मनेपदानां टेरे** इति टेरेत्वे **आमेत** इत्येकारस्य आमि च कृते ॥ गृह्णीताम् ॥ लोटो मध्यमस्यैकवचने सिपि **सेर्ह्यपिच्चे**ति सेर्हित्वे **क्र्यादिभ्यः श्ना** इति श्नाकारे **ग्रहिज्यावयिव्यधी**ति संप्रसारणे **हलः श्नः शानज्झौ** इति शानचि कृते ग्रह् शानच् हि इति जातं तत्र **हलन्त्य**मिति च लोपे **उपदेशेऽजनुनासिक इत्** इति नकारोच्चरवर्तिकारलोपे **लशक्वतद्धिते** इति शलोपे संप्रसारणे नस्य णत्वे **अतो हेरि**ति हिलोपे च कृते ॥ गृहाण ॥ आशीर्लिङस्तिपि **यासुट्परस्मैपदेष्वि**ति यासुटि उटो लोपे **इतश्चे**ति तिप इकारलोपे **ग्रहिज्ये**ति संप्रसारणे **स्कोः संयोगाद्योरन्ते चे**ति सलोपे च कृते ॥ गृह्यात् ॥ आ०प० आशीर्लिङस्ते **लिङः सीयुट्** इति सीयुटि उटो लोपे **लोपो व्योर्वली**ति यलोपे **सुट् तिथो**रिति सुटि उटो लोपे **आर्द्धधातुकस्येड्वलादे**रिति इटि **ग्रहोऽलिटि दीर्घः** इति इकारस्य दीर्घत्वे उभयोः सकारयोः षत्वे ष्टुत्वे च ॥ ग्रहीषीष्ट ॥ लुङस्तिपि **च्लि लुङी**ति च्लौ **च्लेः सिच्** इति सिचि इचो लोपे इटि **इतश्चे**ति तिप इकारलोपे **अस्तिसि-**

अग्रहीषाताम् । कुष निष्कर्षे १८ कुष्णाति कोषिता । अश भोजने १९ अश्नाति आश अशिता अशिष्यति अश्नातु अशान । मुष स्तेये २० मोषिता मुषाण । ज्ञा अवबोधने २१ जज्ञौ । वृङ् संभक्तौ २२ वृणीते वव्रृषे वव्रृढ्वे वरिता वरीता अवरिष्ट अवरीष्ट अवृत ॥ इति क्र्यादयः ॥

---

**घोऽपृक्ते** इति इटि **इट ईटि** इति सलोपे अटि च कृते **ह्मयन्ते**ति वृद्ध्यभावे ॥ अग्रहीत् ॥ द्विवचने तसि च्लौ च्लेः सिचि इचो लोपे **तस्थस्थमिपा**मिति तसस्तामि इटि अटि **ग्रहोऽलिटि दीर्घ** इति दीर्घत्वे सस्य षत्वे ष्टुत्वे च कृते ॥ अग्रहीष्टाम् ॥ आ० प० लुङः प्रथमस्य द्विवचने आतामि च्लौ च्लेः सिचि इचो लोपे इटि **ग्रहोऽलिटि** इति इकारदीर्घत्वे अटि सस्य षत्वे च कृते ॥ अग्रहीषाताम् ॥ कुष निष्कर्षे धातुरस्ति तत्र लटस्तिपि श्नाकारे शलोपे **रषाभ्यां नो णः** इति नस्य णत्वे ॥ कुष्णाति ॥ लुटस्तिपि तासौ तिपो डात्वे डित्वाट्टिलोपे इटि **पुगन्तलघूपधस्ये**ति गुणे ॥ कोषिता ॥ अश भोजने धातुरस्त्यग्रे लटस्तिपि श्नाकारे शलोपे च कृते ॥ अश्नाति ॥ लिटस्तिपि तिपो णलि **लिटि धातोरनभ्यासस्ये**ति द्वित्वे **हलादिः शेष** इति शेषहल्लोपे दीर्घत्वे च ॥ आश ॥ लुटस्तिपि **स्यतासी लृलुटो**रिति तासौ **लुटः प्रथमस्ये**ति तिपो डात्वे डित्वाट्टिलोपे इटि च कृते ॥ अशिता ॥ लृटस्तिपि स्ये इटि सस्य षत्वे च कृते ॥ अशिष्यति ॥ लोटस्तिपि **क्र्यादिभ्यः श्ना** इति श्नाकारे **एरुः** इति तिप इकारस्य उकारे च कृते ॥ अश्नातु ॥ लोटो मध्यमैकवचने सिपि **सेर्ह्यपिच्चे**ति सेर्हित्वे **क्र्यादिभ्यः श्ना** इति श्नाकारे **हलः श्नः शानज्झौ** इति शानचादेशे शलोपे च-लोपे **अतो हेः** इति हेर्लुकि ॥ अशान ॥ मुष स्तेये धातुरस्त्यग्रे लुटस्तिपि तासौ तिपो डात्वे डित्वाट्टिलोपे **आर्द्धधातुकस्येड्वलादे**रिति इटि **पुगन्तलघूपधस्ये**ति गुणे च कृते ॥ मोषिता ॥ लोटो मध्यमैकवचने सिपि श्नाकारे **सेर्ह्यपिच्चे**ति सेर्हित्वे **हलः श्नः शानज्झौ** इति श्नाकारस्य शानचि शलोपे चलोपे **अतो हेः** इति हलोपे नस्य णत्वे च कृते ॥ मुषाण ॥ ज्ञा अवबोधने धातुरस्त्यग्रे लिटस्तिपि तिपो णलि **लिटि धातोरनभ्यासस्ये**ति द्वित्वे **हलादिः शेष** इति शेषहल्लोपे **आत औ णलः** इति णल औकारे कृते कृतायां च वृद्धौ ॥ जज्ञौ ॥ वृङ् संभक्तौ धातुरस्ति तत्र लटस्ते श्नाकारे शलोपे **ईहल्यघोरि**ति आकारस्य ईकारे **टित आत्मनेपदानां टेरे** इति टेरेत्वे नस्य णत्वे च कृते ॥ वृणीते ॥ लिटो मध्यमैकवचने थासि **थासः से** इति थासः सेकारे **लिटि धातोरनभ्यासस्ये**ति द्वित्वे **उरत्** इति रपरे अदादेशे **हलादिः शेष** इति रलोपे सस्य षत्वे च कृते **कृसृभृवृस्तुद्रुस्रुश्रुवो लिटि** इति इडभावे ॥ वव्रृषे ॥ लिटो मध्यमबहुवचने ध्वमि धातोर्द्वित्वे **उरत्** इति रपरे अदादेशे **हलादिः शेष** इति

## ॥ अथ तिङन्ते चुरादिगणप्रकरणम् ॥

चुर स्तेये १ ॥ **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** ।३।१।२५। एभ्यो णिच् स्यात् । चूर्णान्तेभ्यः प्रातिपदिकाद्धात्वर्थ इत्येव सिद्धम् । तेषामिह ग्रहणं प्रपञ्चार्थम् । चुरादिभ्यस्तु स्वार्थे । पुगन्तेति गुणः सनाद्यन्ता इति धातुत्वम् । तिप्शबादि गुणायादेशौ । चोरयति ॥ **णिचश्च**।१।३।७४। णिजन्तादात्मनेपदं स्यात्कर्तृगामिनि क्रियाफले । चोरयते चोरयामास चोरयिता चोर्यात्

---

रलोपे **इणः षीध्वं लुङ्लिटां धोऽङ्गात्** इति धस्य ढत्वे टेरेत्वे च कृते ॥ वरीढ्वे ॥ लुटस्तिपि तासौ तिपो डात्वे डित्वाट्टिलोपे इटि **सार्वधातुकार्धधातुकयो**रिति गुणे **वृतो वे**ति दीर्घत्वे ॥ वरीता । दीर्घाभावे । वरिता ॥ लुङस्ते **च्लि लुङी**ति **च्लौ च्लेः सिच्** इति सिचि इचो लोपे इटि गुणे अटि सस्य षत्वे ष्टुत्वे च कृते ॥ अवरिष्ट ॥ **वृतो वे**ति दीर्घत्वे ॥ अवरीष्ट ॥ इडभावे च च्लौ च्लेः सिचि इचो लोपे **उश्चे**ति सिचः कित्त्वे कित्त्वाद्गुणाभावे **ह्रस्वादङ्गात्** इति सलोपे च कृते ॥ अवृत ॥ इति भ्वादयः समाप्ताः ॥

तुम श्रीकेशवकृपाकल्पनट्टीमतल्लिकाम् । स्वाश्रिताभीष्टफलदा सर्वसंतापहारिणीम् ॥ १ ॥

अथ चुरादय. । चुर स्तेये धातुरस्ति तत्र **सत्यापपाशे**ति णिचि णकारचकारयोर्लोपे **पुगन्तलघूपधस्ये**ति गुणे कृते **सनाद्यन्ता धातव** इति धातुत्वे चोरि इति जाते तत्र **वर्तमाने लट्** इति लटि लटस्तिपि **कर्तरि शप्** इति शपि शकारपकारयोर्लोपे **सार्वधातुकार्धधातुकयो**रिति गुणे **एचोऽयवायाव** इत्ययादेशे च कृते ॥ चोरयति ॥ **णिचश्चे**ति आत्मनेपदत्वे लटस्ते शपि शपयोर्लोपे गुणे अयादेशे **टित आत्मनेपदानां टेरे** इति टेरेत्वे च ॥ चोरयते ॥ लिटि **कास्यनेकाच आम् वक्तव्य** इत्यनेन आमि कृते चोरि आम् लिट् इति जाते तत्र **आमः** इत्यनेन लिटो लोपे **कृञ्चानुप्रयुज्यते लिटि** इति लिट्परे अस् प्रयुक्ते चोरि आम् अस् लिट् इति जाते तत्र लिटस्तिपि तिपो णलि **लिटि धातोरनभ्यासस्ये**ति द्वित्वे **हलादिः शेष** इति सलोपे च कृते चोरि आम् अ अस् इति जाते तत्र दीर्घे **सार्वधातुकार्धधातुकयो**रिति गुणे अयादेशे च कृते ॥ चोरयामास ॥ लुटस्तिपि **स्यतासीति** तासौ **लुटः प्रथमस्य डारौरस** इति तिपो डात्वे डित्वाट्टिलोपे इटि **सार्वधातुकार्धधातुकयो**रिति गुणे अयादेशे च कृते ॥ चोरयिता ॥ आशीर्लिङस्तिपि **यासुट्परस्मैपदेषूदात्तो ङिच्चे**ति यासुटि उटो लोपे **इतश्चे**ति तिप इकारलोपे **स्कोः संयोगाद्योरन्ते चे**ति सलोपे चोरि यात् इति जाते तत्र **णेरनिटि** इति णिग्रहणस्य रेफोत्तरवर्तिन इकारस्य लोपे **अचोरञ्भ्यां द्वे** इति यद्द्वित्वे

चोरयिषीष्ट । णिश्रीति चङ् । णौ चङीति ह्रस्वः चङि द्वित्वम् । हलादिः शेषः । दीर्घो लघोरित्यभ्यासस्य दीर्घः । अचूचुरत् अचुचुरत । कथ वाक्यप्रबन्धे २ अल्लोपः ॥ **अचः परस्मिन्पूर्वविधौ ।१।१।५७।** परनिमित्तोऽजादेशः स्थानिवत्स्यात्स्थानिभूतादचः पूर्वत्वेन दृष्टस्य विधौ कर्तव्ये । इति स्थानिवत्त्वान्नोपधावृद्धिः । कथयति । अग्लोपित्वाद्दीर्घसन्वद्भावौ न । अचकथत् । गण संख्याने ३ गणयति ॥ **ई च गणः ।४।७।९७।** गणयते-

॥ चोर्य्यात् ॥ णिचश्चेत्यात्मनेपदत्वे आशीर्लिङ्लस्ते **लिङः सीयुट्** इति सीयुटि उटो लोपे **आर्द्धधातुकस्येड्वलादे**रिति इटि **सुट्तिथो**रिति सुटि उटो लोपे **सार्वधातुकार्धधातुकयो**रिति गुणे अयादेशे उभयोः सकारयोः षकारत्वे ष्टुत्वे च कृते ॥ चोरयिषीष्ट ॥ लुङस्तिपि च्लौ **णिश्रिद्रुस्रुभ्यः कर्तरि चङ्** इति च्लेश्चङि चकारङकारयोर्लोपे **इतश्चे**ति तिप इकारलोपे चोरि अत् इति जातं तत्र **णेरनिटि** इति णिलोपे चोर् अत् इति जातं तत्र **णौ चङ्युपधाया ह्रस्वः** इत्युपधाह्रस्वत्वे कृते चुर् अत् इति जातं तत्र **चङि** इति द्वित्वे **हलादिः शेष** इति रलोपे **लुङ्लङ्लृङ्क्ष्वडुदात्त** इति अटि **दीर्घो लघो**रित्यभ्यासस्य दीर्घत्वे कृते ॥ अचूचुरत् ॥ आ० प० लुङस्ते ॥ अचूचुरत ॥ कथ वाक्यप्रबन्धे धातुरस्ति तत्र **सत्यापपाशरूप-**त्रादिसूत्रेण णिचि णलोपे चलोपे कथ इ इति जातं तत्र **आर्द्धधातुकं शेष** इत्यनेन णिच्संबन्धिन इकारस्यार्धधातुकसंज्ञायां कृतायां **अतो लोप** इत्यनेन थकारोत्तरवर्तिनोऽकारस्य लोपे कृते कथ् इ इति जाते**वर्तमाने लट्** इति लटि लटस्तिपि शपि च कृते कथ् इ अति इति जातं तत्र **अत उपधाया** इति सूत्रेण ककारोत्तरवर्त्यकारस्य वृद्धौ प्राप्तायां **अचः पर-स्मिन्पूर्वविधौ** इत्यनेन परं णिचं निमित्तीकृत्य जातस्य थकारोत्तरवर्त्यकारलोपरूपस्याजादेशस्य स्थानिवत्त्वे ककारोत्तरवर्त्यकारस्योपधारूपत्वाभावात् वृद्ध्यभावे कथ् इ अ ति इति जातं तत्र गुणे **एचोयवायाव** इति अयादेशे च कृते ॥ कथयति ॥ कथधातोर्णिचिर्लुङस्तिपि **च्लि लुङी**ति च्लौ **णिश्रिद्रुस्रुभ्यः कर्तरि चङ्** इति च्लेश्चङि चकारङकारयोर्लोपे कथ् इ अति इति जातं तत्र **णेरनिटि** इति णेर्लोपे **चङि** इत्यनेन द्वित्वे कथ् कथ् अति इति जाते **हलादिः शेष** इति पूर्वथकारलोपे कथ् अति इति जाते **कुहोश्चु**रिति कस्य चत्वे **लुङ्लङ्लृङ्क्ष्वडुदात्त** इति अटि **इतश्चे**ति तिप इकारलोपे ॥ अचकथत् ॥ आ० प० लुङस्ते आगते ॥ अचकथत ॥ गण संख्याने धातुरस्ति तत्र **सत्यापपाशरूपवीणे**त्यादिसूत्रेण णिचि णकारचकारयोर्लोपे **अतो लोप** इति णकारान्तःपात्यकारलोपे गणि इति जातं तत्र **वर्तमाने लट्** इति लटि लटस्तिपि **कर्तरि शप्** इति शपि शपयोर्लोपे गुणे **एचोयवायाव** इति अयादेशे च कृते ॥ गणयति ॥ गण संख्याने धातुरस्ति तत्र **सत्यापपाशे**ति णिचि णकारचकारयोर्लोपे **च्लि लुङी**ति च्लौ च्लेः **णिश्रिद्रुस्रुभ्यः कर्तरि चङ्** इति चङि चकारङकारयोर्लोपे **णेरनिटी**ति णिलोपे

रभ्यासस्य ईत्स्याद्वाद्चङ्परे णौ । अजीगणत् अजगणत् ॥ इति चुरादयः ॥

## ॥ अथ तिङन्ते ण्यन्तप्रक्रियाप्रकरणम् ॥

**[1]स्वतन्त्रः कर्ता** ।१।४।५४। क्रियायां स्वातन्त्र्येण विवक्षितोऽर्थः कर्ता स्यात् ॥ **[2]तत्प्रयोजको हेतुश्च** ।१।४।५५। कर्तुः प्रयोजको हेतुसंज्ञः कर्तृसंज्ञश्च स्यात् ॥ **[3]हेतुमति च** ।३।१।२६। प्रयोजकव्यापारे प्रेषणादौ च वाच्ये धातोर्णिच् स्यात् । भवन्तं प्रेरयति भावयति ॥ **ओः पुयण्ज्यपरे** ।७।४।८०। सनि परे यदङ्गं तदवयवाभ्यासोकारस्य

---

**चङी**ति धातोर्द्वित्वे शेषहलो लोपे गगण् अति इति जातं तत्र **कुहोश्चु**रिति गस्य जत्वे अटि **इतश्चे**ति तिप इकारलोपे **ई च गण** इत्यनेनाभ्यासस्य ईकारे कृते ॥ अजीगणत् ॥ पक्षे ॥ अजगणत् ॥ इति चुरादयः पूर्णाः ॥

श्रीकेशवं कृपापारपारावारमुपास्महे । वारंवारमपाराब्धिनिवासपदवाप्तये ॥

भवन्तं प्रेरयति भावयतीत्यत्र **स्वतन्त्रः कर्ता** इत्यनेन कर्तृसंज्ञाया **तत्प्रयोजको हेतुश्चे**त्यनेन तत्प्रयोजके हेतुसंज्ञां कर्तृसंज्ञां च विधाय **हेतुमति चे**त्यनेन भूधातोरग्रे णिचि कृते भू इ इति जाते तत्र **अचो ञ्णिती**ति वृद्धौ भौ इ इति जाते तत्र **एचोऽयवायावः** इत्यनेन आवि कृते भावि इति जाते **सनाद्यन्ता धातवः** इति धातुत्वे लटस्तिपि शपि गुणे अयादेशे च कृते ॥ भावयति ॥ भूधातोरग्रे **हेतुमति चे**त्यनेन णिचि कृते णकारस्य **चुटू** इत्यनेन चकारस्य च **हलन्त्यमि**त्यनेन चेत्संज्ञायां कृतायां कृते च **तस्य लोपः** इत्यनेन णकारचकारयोर्लोपे भू इ इति जाते तत्र लुङ एकवचने तिप्यागते **लुङ्लङ्लृङ्क्ष्वडुदात्तः** इत्यनेन अटि कृते अभू इति जाते तत्र **च्लि लुङी**त्यनेन च्लौ कृते **णिश्रिद्रुस्रुभ्यः कर्तरि चङ्** इत्यनेन च्लेश्चङादेशे चकारङकारयोरित्संज्ञाविधानपूर्वं लोपे च कृते अभू इ अति इति जाते तत्र **चङि** इति सूत्रेण द्वित्वे कृते अभू भू इ अति इति जाते तत्र **ह्रस्वः** इत्यनेनाभ्यासाचो ह्रस्वत्वे कृते कृते च **अभ्यासे चर्चे**त्यनेन पूर्वभस्य बत्वे अबुभू इ अति इति जाते तत्र **सन्वल्लघुनि चङ्परेऽनग्लोपे** इत्यनेन सन्वद्भावे कृते **ओः पुयण्ज्यपरे** इत्यनेन अभ्यासोकारस्येकारे कृते अबिभू अति इति जाते तत्र **दीर्घो लघोः** इत्यनेन उभयोरभ्यासस्य दीर्घत्वे कृते कृते च **सार्वधातुकार्धधातुकयो**रिति गुणे **एचोऽयवायाव** इति अवादेशे **इतश्चे**त्यनेन तिप इकारलोपे च ॥ अबीभवत् ॥ ष्ठा गतिनिवृत्तौ धातुर्वर्तते तस्मात् एकस्तिष्ठति तमन्य प्रेरयतीत्यस्मिन्नर्थे **तत्प्रयोजको हेतुश्चे**त्यनेन हेतुसंज्ञां कर्तृसंज्ञां च विधाय **हेतुमति चे**त्यनेन

---

१ स्वतन्त्रः कर्ता ॥ स्वातन्त्र्यं च कर्तृत्व धयसमभिव्याहारे प्रधानीभूतधात्वर्थाश्रयत्वम् । २ तत्प्रयोजको हेतुश्च । तच्छब्देन स्वतन्त्रः कर्तेति सूत्रात् कर्तृपदं परामृश्यते । तस्य कर्तुः प्रयोजकः प्रेरकः स्वव्यापारानुकूलव्यापारवानित्यर्थः । चकारः संज्ञाद्वयसमावेशार्थः । ३ हेतुमति च । स्वनिष्ठाधारतानिरूपिताधेयतासंबन्धेन हेतुर्यस्मिन् स हेतुमान् व्यापारस्तस्मिन् वाच्ये णिजित्याह प्रयोजकव्यापार इति ॥

इत्स्यात्पवर्गीयण्जकारेष्ववर्णपरेषु परतः । अबीभवत् । ष्ठा गतिनिवृत्तौ ॥ **अर्तिह्रीव्लीरीक्नुयीक्ष्माय्यातां पुङ्णौ** ।७।३।३६। स्थापयति ॥ **तिष्ठतेरित्** ७।४।५। उपधाया इदादेशः स्याच्चङ्परे णौ । अतिष्ठिपत् । घट चेष्टायाम् ॥ **मितां ह्रस्वः** ।६।४।९२। घटादीनां ज्ञपादीनां च ह्रस्वः । घटयति । ज्ञप ज्ञाने ज्ञापने च ज्ञपयति अजिज्ञपत् ॥ इति ण्यन्तप्रक्रिया ॥

---

णिचि ततो लटस्तिपि **कर्तरिशप्** इति शपि **अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ्णौ** इत्यनेन पुकि उक इत्संज्ञायां लोपे च कृते स्थाप् इ अति इति जातं तत्र **सार्वधातुकार्द्धधातुकयो**रिति गुणे **एचोयवायाव** इति अयादेशे च ॥ स्थापयति ॥ ष्ठाधातोर्लुङः प्रथमैकवचने तिप्यागते **हेतुमति चे**ति णिचि णकारचकारयोरित्संज्ञायां लोपे च **लुङ्लङ्लृङ्क्ष्वडुदात्त** इत्यनेन अटि **अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ्णौ** इत्यनेन पुकि उको लोपे च कृते अ स्थाप् इ ति इति जातं तत्र **णिश्रिद्रुस्रुभ्यः कर्तरि चङ्** इत्यनेन चङि कृते चकारङकारयोरित्संज्ञायां लोपे च कृते अ स्था प् इ अ ति इति जाते **तिष्ठतेरित्** इत्यनेनोपधाया इकारे कृते अ स्थि प् इ अ ति इति जाते **चङी**त्यनेन प्रथमस्य द्वित्वे कृते अ स्थिप् स्थि प् इ अ ति इति जाते **हलादिः शेष** इति प्राप्ते **शर्पूर्वाः खयः** इत्यनेन थशेषे अन्यहलो लोपे अथि स्थिप् इ अ ति इति जाते **अभ्यासे चर्च** इत्यनेन पूर्वथस्य तत्वे **णेरनिटि** इत्यनेन णेर्लोपे कृते **आदेशप्रत्यययो**रिति सस्य षत्वे **ष्टुना ष्टु**रित्यनेन थस्य ठत्वे पकारस्याकारेण सह संयोगे कृते तकारोत्तरवर्तिन इकारस्य च **इतश्चे**त्यनेन लोपे कृते ॥ अतिष्ठिपत् ॥ घट चेष्टायामित्यस्माद्धातोर्लटस्तिपि **हेतुमति चे**त्यनेन णिचि णकारचकारयोर्लोपे घट् इ इति जातं तत्र **कर्तरि शप्** इत्यनेन शपि शकारपकारयोर्लोपे घट् इ अ तीति जातं तत्र **अत उपधाया** इत्यनेन घकारोत्तरवर्त्यकारदीर्घत्वे कृते कृते च **मितां ह्रस्वः** इत्यनेन ह्रस्वत्वे **सार्वधातुकार्द्धधातुकयोः** इत्यनेनेकारस्य गुणे **एचोयवायाव** इत्ययादेशे च विहिते ॥ घटयति ॥ ज्ञाधातोर्लटस्तिपि **हेतुमति चे**त्यनेन णिचि **अर्तिह्रीव्लीरीक्नुयीक्ष्माय्यातां पुङ्णौ** इत्यनेन पुकि उको लोपे ज्ञाप् इ ति इति जाते **कर्तरि शप्** इति शपि **मितां ह्रस्व** इति ज्ञाकारोत्तरवर्त्याकारस्य ह्रस्वत्वे **सार्वधातुकार्द्धधातुकयो**रित्यनेनेकारस्य गुणत्वे **एचोयवायाव** इति अयि कृते ॥ ज्ञपयति ॥ ज्ञाधातोर्लुङस्तिपि **हेतुमति चे**त्यनेन णिचि **अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ्णौ** इति पुकि **लुङ्लङ्लृङ्क्ष्वडुदात्त** इति अटि च कृते अ ज्ञा प् इ ति इति जातं तत्र **णिश्रिद्रुस्रुभ्यः कर्तरि चङ्** इति चङि कृते कृते च ककारङकारयोर्लोपे अ ज्ञा प् इ अ तीति जाते **मितांह्रस्व** इत्यनेन ज्ञकारोत्तरवर्त्याकारस्य ह्रस्वत्वे **चङि** इत्यनेन द्वित्वे अ ज्ञ ज्ञप् इ अ ति इति जाते

रभ्यासस्य ईत्स्यात्सन्वल्लघुपरे णौ । अजीगणत् अजगणत् ॥ इति चुरादयः ॥

## ॥ अथ तिङन्ते ण्यन्तप्रक्रियाप्रकरणम् ॥

**स्वतन्त्रः कर्ता** ।१।४।५४। क्रियायां स्वातन्त्र्येण विवक्षितोऽर्थः कर्ता स्यात् ॥ **तत्प्रयोजको हेतुश्च** ।१।४।५५। कर्तुः प्रयोजको हेतुसंज्ञः कर्तृसंज्ञश्च स्यात् ॥ **हेतुमति च** ।३।१।२६। प्रयोजकव्यापारे प्रेषणादौ च वाच्ये धातोर्णिच् स्यात् । भवन्तं प्रेरयति भावयति ॥ **ओः पुयण्ज्यपरे** ।७।४।८०। सनि परे यदङ्गं तदवयवाभ्यासोकारस्य

---

ण्चङीति धातोर्द्वित्वे शेषहलो लोपे गगण् अति इति जातं तत्र **कुहोश्चुरिति** गस्य जत्वे अटि **इतश्चेति** तिप इकारलोपे **ई च गण** इत्यनेनाभ्यासस्य ईकारे कृते ॥ अजीगणत् ॥ पक्षे ॥ अजगणत् ॥ इति चुरादयः पूर्णाः ॥

श्रीकेशवं कृपापारपारावारमुपास्महे । वारंवारमपाराच्छविद्यासंपदवाप्तये ॥

भवन्तं प्रेरयति भावयतीत्यत्र **स्वतन्त्रः कर्ता** इत्यनेन कर्तृसंज्ञायां **तत्प्रयोजको हेतुश्चे**त्यनेन तत्प्रयोजके हेतुसंज्ञा कर्तृसंज्ञां च विधाय **हेतुमति चे**त्यनेन भूधातोरग्रे णिचि कृते भू इ इति जातं तत्र **अचो ञ्णितीति** वृद्धौ भौ इ इति जातं तत्र **एचोयवायाव** इत्यनेन आवि कृते भावि इति जाते **सनाद्यन्ता धातव** इति धातुत्वे लटस्तिपि शपि गुणे अयादेशे च कृते ॥ भावयति ॥ भूधातोरग्रे **हेतुमति चे**त्यनेन णिचि कृते णकारस्य **चुटू** इत्यनेन चकारस्य च **हलन्त्यमि**त्यनेन चेत्संज्ञायां कृतायां कृते च **तस्य लोप** इत्यनेन णकारचकारयोर्लोपे भू इ इति जातं तत्र लुङ एकवचने तिप्यागते **लुङ्लङ्लृङ्क्ष्वडुदात्त** इत्यनेन अटि कृते अभू इति जातं तत्र **च्लि लुङी**त्यनेन च्लौ कृते **णिश्रिद्रुस्रुभ्यः कर्तरि चङ्** इत्यनेन च्लेश्चङादेशे चकारङकारयोरित्संज्ञाविधानपूर्वं लोपे च कृते अभू इ अति इति जातं तत्र **चङि** इति सूत्रेण द्वित्वे कृते अभू भू इ अति इति जातं तत्र **ह्रस्व** इत्यनेनाभ्यासाचो ह्रस्वत्वे कृते कृते च **अभ्यासे चर्चे**त्यनेन पूर्वभस्य बत्वे अबुभू इ अति इति जातं तत्र **सन्वल्लघुनि चङ्परेऽनग्लोपे** इत्यनेन सन्वद्भावे कृते **ओः पुयण्ज्यपरे** इत्यनेन अभ्यासोकारस्येकारे कृते अबिभू अति इति जातं तत्र **दीर्घो लघोः** इत्यनेन लघोरभ्यासस्य दीर्घत्वे कृते कृते च **सार्वधातुकार्द्धधातुकयोरि**ति गुणे **एचोयवायाव** इति अवादेशे **इतश्चे**त्यनेन तिप इकारलोपे च ॥ अबीभवत् ॥ ष्ठा गतिनिवृत्तौ धातुर्वर्तते तस्मात् एकस्तिष्ठति तमन्यः प्रेरयतीत्यस्मिन्नर्थे **तत्प्रयोजको हेतुश्चे**त्यनेन हेतुसंज्ञां कर्तृसंज्ञां च विधाय **हेतुमति चे**त्यनेन

---

१ स्वतन्त्रः कर्ता ॥ स्वातन्त्र्यं च कर्तृप्रत्ययसमभिव्याहारे प्रधानीभूतधात्वर्थाश्रयत्वम् । २ तत्प्रयोजको हेतुश्च । तच्छब्देन स्वतन्त्रः कर्तेति सूत्रात् कर्तृपदं परामृश्यते । तस्य कर्तुः प्रयोजकप्रेरकत्वव्यापारानुकूलव्यापारवानित्यर्थः । चकारः संज्ञाद्वयसमावेशार्थः । ३ हेतुमति च । स्वनिष्ठाधारतानिरूपिताधेयतासंबन्धेन हेतुर्यस्मिन् स हेतुमान् व्यापारस्तस्मिन् वाच्ये णिजित्याह प्रयोजकव्यापार इति ॥

इत्स्वापवर्गीयण्जकारेष्ववर्णपरेषु परतः । अवीभवत् । ष्ठा गतिनिवृत्तौ ॥ **अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ्णौ** ।७।३।३६। स्थापयति ॥ **तिष्ठतेरित्** ७।४।५। उपधाया इदादेशः स्याच्चङ्परे णौ । अतिष्ठिपत् । घट चेष्टायाम् ॥ **मितां ह्रस्वः** ।६। ४।९२। घटादीनां ज्ञपादीनां च ह्रस्वः । घटयति । ज्ञप ज्ञाने ज्ञापने च ज्ञपयति अजिज्ञपत् ॥ इति ण्यन्तप्रक्रिया ॥

---

णिचि ततो लटस्तिपि **कर्तरिशप्** इति शपि **अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ्णौ** इत्यनेन पुकि उक्त इत्संज्ञायां लोपे च कृते स्थाप् इ अति इति जातं तत्र **सार्वधातुकार्धधातुकयो**रिति गुणे **एचोयवायाव** इति अयादेशे च ॥ स्थापयति ॥ ष्ठाधातोर्लुङः प्रथमैकवचने तिप्यागते **हेतुमति चे**ति णिचि णकारचकारयोरित्संज्ञायां लोपे च **लुङ्लङ्लृङ्क्ष्वडुदात्तः** इत्यनेन अटि **अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ्णौ** इत्यनेन पुकि उक्तो लोपे च कृते अ स्थाप् इ ति इति जातं तत्र **णिश्रिद्रुस्रुभ्यः कर्तरि चङ्** इत्यनेन चङि कृते चकारङकारयोरित्संज्ञायां लोपे च कृते अ स्था प् इ अ ति इति जाते चङीत्यनेन प्र- **तिष्ठतेरित्** इत्यनेनोपधाया इकारे कृते अ स्थि प् इ अ ति इति जाते चङीत्यनेन प्रथमस्य द्वित्वे कृते अ स्थिप् स्थि प् इ अ ति इति जाते **हलादिः शेष** इति प्राप्ते **शर्पूर्वाः खयः** इत्यनेन थशेषे अन्यहलो लोपे अथि स्थिप् इ अ ति इति जाते **अभ्यासे चर्च** इत्यनेन पूर्वथस्य तत्वे **णेरनिटि** इत्यनेन णेर्लोपे कृते **आदेशप्रत्यययो**रिति सस्य षत्वे **ष्टुना ष्टुः** इत्यनेन थस्य ठत्वे पकारस्याकारेण सह संयोगे कृते तकारोत्तरवर्तिन इकारस्य च **इतश्चे**त्यनेन लोपे कृते ॥ अतिष्ठिपत् ॥ घट चेष्टायामित्यस्माद्धातोर्लटस्तिपि **हेतुमति चे**त्यनेन णिचि णकारचकारयोर्लोपे घट् इ इति जातं तत्र **कर्तरि शप्** इत्यनेन शपि शकारपकारयोर्लोपे घट् इ अ तीति जातं तत्र **अत उपधाया** इत्यनेन घकारोत्तरवर्तकारदीर्घत्वे कृते कृते च **मितां ह्रस्वः** इत्यनेन ह्रस्वत्वे **सार्वधातुकार्धधातुकयोः** इत्यनेनेकारस्य गुणे **एचोयवायाव** इत्ययादेशे च विहिते ॥ घटयति ॥ ज्ञाधातोर्लटस्तिपि **हेतुमति चे**त्यनेन णिचि **अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ्णौ** इत्यनेन पुकि उक्तो लोपे ज्ञाप् इ ति इति जाते **कर्तरि शप्** इति शपि **मितां ह्रस्व** इति ज्ञाकारोत्तरवर्त्याकारस्य ह्रस्वत्वे **सार्वधातुकार्धधातुकयो**रित्यनेनेकारस्य गुणत्वे **एचोयवायाव** इति अयि कृते ॥ ज्ञपयति ॥ ज्ञाधातोर्लुङस्तिपि **हेतुमति चे**त्यनेन णिचि **अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ्णौ** इति पुकि **लुङ्लङ्लृङ्क्ष्वडुदात्तः** इति अटि च कृते अ ज्ञा प् इ ति इति जातं तत्र **णिश्रिद्रुस्रुभ्यः कर्तरि चङ्** इति चङि कृते कृते च ककारङकारयोर्लोपे अ ज्ञा प् इ अ तीति जाते **मितांह्रस्व** इत्यनेन ज्ञकारोत्तरवर्त्याकारस्य ह्रस्वत्वे **चङि** इत्यनेन द्वित्वे अ ज्ञ ज्ञप् इ अ ति इति जाते

## ॥ अथ तिङन्ते सन्नन्तप्रक्रियाप्रकरणम् ॥

**धातोः कर्मणः समानकर्तृकादिच्छायां वा** ।३।१।७। इषिकर्मण इषिणैककर्तृकाद्धातोः सन्प्रत्ययो वा स्यादिच्छायाम् । पठ व्यक्तायां वाचि ॥ **सन्यङोः** ।६।१।९। सन्नन्तस्य यङन्तस्य च प्रथमस्यैकाचो द्वे स्तोऽजादेस्तु द्वितीयस्य । सन्यतः । पठितुमिच्छति पिपठिषति । कर्मणः किम् । गमनेनेच्छति । समानकर्तृकात्किम् । शिष्याः

---

**सन्वल्लघुनि चङ्परे नग्लोपे** इति सन्वद्भावे प्राप्ते **सन्यत** इति अभ्यासस्येकारे कृते अ शि श प् इ अतीति जातं तत्र **हलादिः शेष** इत्यनेन शेषहल्लोपे कृते अजिज्ञप् इ अ तीति जातं तत्र **णेरनिटि** इति णेर्लोपे अज्झीनं परेण संयोज्यमिति पकारस्याकारेण सह संयोगे कृते **इतश्चे**त्यनेन तिप इकारलोपे च कृते ॥ अजिज्ञपत् ॥ इति णिजन्तप्रक्रिया समाप्ता ॥

वन्दे सद्गुरुपादाब्जद्वयमेवानुवासरम् । यत्प्रभावाद्भवेदज्ञोऽप्याशुप्रज्ञोत्तमोत्तमः ॥ १ ॥

पठितुमिच्छतीत्यत्र **धातोः कर्मणस्समानकर्तृकादिच्छायां वा** इति सूत्रेण सनि कृते पठ् सन् इति जाते **हलन्त्यमि**त्यनेन नकारस्येत्संज्ञायां कृतायां कृते च **तस्य लोप** इत्यनेन लोपे पठ्स इति जातं तत्र लटस्तिप्यागते **कर्तरि शप्** इति शपि कृते शकारस्य **लशक्वतद्धिते** इत्यनेन पकारस्य च **हलन्त्यमि**त्यनेनेत्संज्ञां विधाय कृते च **तस्य लोप** इत्यनेन तयोर्लोपे **सन्यङोः** इत्यनेन पठ्भागस्य द्वित्वे कृते पठ् पठ् स अ ति इति जाते **हलादिः शेष** इति पूर्वठकारस्य लोपे **सन्यतः** इत्यनेनाभ्यासाकारस्येकारे कृते पिपठ् स अ तीति जातं तत्र **आर्द्धधातुकस्येड्वलादे**रित्यनेनेटि कृते **आदेशप्रत्यययो**रित्यनेन सस्य षत्वे च कृते अतोगुणे इत्यनेन पररूपे कृते ॥ पिपठिषति ॥ **धातोः कर्मणः समानकर्तृकादिच्छायां** वेति सूत्रे कर्मण इति नावदिष्यच्चेद्भगवान् पाणिनिस्तर्हि गमनेनेच्छतीत्यत्रापि सन्प्राप्तिरभविष्यदित्येतन्निवारणाय कर्मण इत्युक्तं तेन गमनेत्यस्य पदस्य कर्मत्वाभावात् न सन्प्राप्तिः । समानकर्तृकादिति नावदिष्यच्चेद्भगवान् सूत्रकारस्तर्हि पठन्तु शिष्या इतीच्छति गुरुरित्यत्रापि सना भाव्यं तन्माभूदित्येतदर्थं समानकर्तृकादित्युक्तं ततः पठनक्रियाकर्तारः शिष्या इच्छाक्रिया कर्ता च गुरुरिति भिन्नकर्तृकत्वान्न सनः प्राप्तिः वाग्रहणं कृतं तेन पठितुमिति वाक्यमपि भवति । अत्तुमिच्छतीत्यत्र **धातोः कर्मणस्समानकर्तृकादिच्छायां** वेत्यनेन सनि कृते नलोपे अत्स इति जातं तत्र लटस्तिपि **कर्तरि शप्** इति शपि शकारपकारयोर्लोपे च सिद्धे अत् स अ ति इति जातं तत्र **लुङ्सनोर्घस्लृ** इत्यनेनादो घसि कृते **सन्यङो**रित्यनेन द्वित्वे च सिद्धे घस् घस् स अ-

---

१ धातोः कर्मणः समानकर्तृकादिच्छायां वा । इषिकर्मण इष्यादिरिच्छायामिति सूत्रार्थः, कर्मणे यत्र । न तदपेक्षणेव गृह्यम इति भावः । पठितुमिच्छतीति । एकविंशतिसाहस्रीपर्यायमेवेदं इति शाब्दबोधः ॥

अकितोऽभ्यासस्य दीर्घो यङ्लुकोः । कुटिलं व्रजति वाव्रज्यते ॥ **यस्य हलः** ।६।४।४९। यस्येति संघातग्रहणम् । हलः परस्य यशब्दस्य लोप आर्धधातुके । आदेः परस्य । अतो लोपः । वाव्रजाञ्चक्रे वाव्रजिता ॥ **रीगृदुपधस्य च** ।७।४।९०। ऋदुपधस्य धातोरभ्यासस्य रीगागमो यङ्लुकोः । वरीवृत्यते वरीवृताञ्चक्रे वरीवृतिता ॥ **क्षुभ्नादिषु च** ।७।४।३९। णत्वं न । नरीनृत्यते जरीगृह्यते ॥ इति यङन्तप्रक्रिया ॥

---

**आम्प्रत्ययवत्कृञ** इत्यामि **आम** इति लिट्लोपे **कृञ्चानुप्रयुज्यते लिटि** इति लिट्परे कृञि प्रयुक्ते वव्रज् य आम् कृ लिट् इति जातं तत्र **यस्य हलः** इत्यनेन यलोपे प्राप्ते **आदेः परस्येति** सूत्रेणादेर्यकारमात्रस्य लोपे जाते **अतो लोप** इति सूत्रेणावशिष्टस्याकारस्य लोपे जाते वव्रजां कृ लिट् इति जातं तत्र **लिटि धातोरनभ्यासस्येति** द्वित्वे **उरत्** इति अभ्यासऋवर्णस्य रपरेऽकारे कृते वव्रजां कर् कृ इति जाते **हलादिः शेष** इति रलोपे **कुहोश्चुरिति** ककारस्य चकारे लिटस्ते कृते **लिटस्तझयोरेशिरेच्** इति एशि शलोपे **इको यणचीति** यणि **दीर्घोऽकित** इति सूत्रेणाभ्यासदीर्घत्वे कृते ॥ वाव्रजाञ्चक्रे ॥ व्रजधातोर्लुटि **नित्यं कौटिल्ये गतौ** यङि **सन्यङोरिति** धातोर्द्वित्वे हलादिः शेषेण लोपे **यस्य हल** इति यलोपप्राप्तौ **आदेः परस्येति** यकारमात्रस्य लोपे **अतो लोप** इति सूत्रेणावशिष्टस्याकारस्यापि लोपे **दीर्घोऽकित** इति सूत्रेणाभ्यासदीर्घत्वे च कृते वाव्रज् लुट् इति जातं तत्र तिपि **स्यतासी लृलुटोरिति** तासी इकारलोपे **लुटः प्रथमस्य डारौरस** इति तिपो डात्वे लुट् इति डलोपे डिति भस्य टेर्लोपे इति डित्वसामर्थ्यादभस्यापि टेर्लोपे **आर्द्धधातुकस्येड्वलादेरिति** इटि टलोपे कृते च संयोगे ॥ वाव्रजिता ॥ वृतु वर्तने धातुरस्ति तत्र **धातोरेकाच** इति यङि **सन्यङोरिति** द्वित्वे **उरदिति** रपरत्वे **हलादिः शेष** इति शेषहलो लोपे **रीगृदुपधस्य चेति** रीगागमे कृते **कर्तरि शप्** इति शपि शकारपकारयोर्लोपे **अतो गुणे** इति पररूपत्वे **टित आत्मनेपदानामिति** टेरेत्वे च कृते ॥ वरीवृत्यते ॥ वृतुधातोर्लिटि **धातोरेकाच** इति यङि **सन्यङोरिति** द्वित्वे अभ्यासहलो लोपे **रीगृदुपधस्य चेति** रीगागमे ककारलोपे **कास्यनेकाच आम्** इत्यामि **आमः** इति लिट्लोपे **कृञ्चानुप्रयुज्यते लिटि** इति लिट्परे कृञि प्रयुक्ते सति परीवृत य आम् कृ लिट् इति जातं तत्र **यस्य हलः** इति सूत्रेण यलोपे **लिटि धातोरनभ्यासस्येति** कृद्वित्वे **उरत्** इति सूत्रेणाभ्याससंबन्धिन ऋवर्णस्य रपरेऽकारे कृते **हलादिः शेष** इति रलोपे **कुहोश्चुरिति** कस्य चत्वे लिटस्ते समागते **लिटस्तझयोरेशिरेच्** इत्येशि **इको यणचीति** यणि ॥ वरीवृताञ्चक्रे ॥ वृतुधातोर्लुटि यङि **सन्यङोरिति** द्वित्वे अभ्यासहलां लोपे **रीगृदुपधस्य चेति** रीकि कलोपे वरीवृत् य लुट् इति जातं तत्र तिपि **यस्य हल** इति यलोपे **स्यतासी लृलुटोरिति** तासौ **लुटः प्रथमस्य डारौरस** इति डात्वे डित्वसामर्थ्यादभस्यापि टेर्लोपे **आर्द्धधातुकस्येड्वला-**

शार्थे च द्योत्ये धातोरेकाचो हलादेर्यङ् स्यात् ॥ **गुणो यङ्लुकोः ।७।४।८२।** अभ्यासस्य गुणो यङि यङ्लुकि च परतः । ङिदन्तत्वादात्मनेपदम् । पुनःपुनरतिशयेन वा भवति बोभूयते । बोभूयाञ्चक्रे अबोभूयिष्ट ॥ **नित्यं कौटिल्ये गतौ ।३।१।२३।** गत्यर्थात्कौटिल्य एव यङ् स्यान्न तु क्रियासमभिहारे ॥ **दीर्घोऽकितः ।७।४।८३।**

---

**चर्चे**ति भस्य बत्वे च कृते **गुणोयङ्लुको**रित्यनेनाभ्यासस्य गुणे बोभूय इति जातं तत्र **सनाद्यन्ते**ति धातुत्वेऽ**नुदात्तङित आत्मनेपदमि**त्यनेन ङित्वादात्मनेपदत्वे लटस्ते समागते **टित आत्मनेपदानां टेरे** इति टेरेत्वे कृते शपि शकारपकारयोर्लोपे **अतोगुणे** इति पररूपे ॥ बोभूयते ॥ भूधातोः पौनःपुन्ये द्योत्ये **धातोरेकाच** इति यङि ङलोपे **सन्यङो**रित्यनेन धातोर्द्वित्वे **ह्रस्व** इत्यनेनाभ्यासाचो ह्रस्वत्वे **अभ्यासेचर्चे**ति भस्य बत्वे **गुणोयङ्लुको**रित्यनेनाभ्यासस्य गुणे कृते बोभूय इति जातं तत्र **सनाद्यन्ते**ति धातुत्वेऽ**नुदात्तङित आत्मनेपदं** इत्यनेनात्मनेपदत्वाल्लिटस्ते समागते **कास्यनेकाच आम् वक्तव्यः** इत्यनेन आमि कृते बोभूय आम् त इति जातं तत्र **आमः** इत्यनेन लिट्लोपे **अतो लोपः** इति यकारोत्तरवर्त्यकारलोपे संयोगे च कृते बोभूयां इति जातं तत्र **कृञ्चानुप्रयुज्यते लिटि** इति लिट्परे कृञि प्रयुक्ते लिटो लस्य च प्रथमैकवचने बोभूयां कृत इति जातं तत्र **लिटि धातो रनभ्यासस्ये**त्यनेन कृद्वित्वे बोभूयां कृ कृ त इति जातं तत्र **उरत्** इति सूत्रेणाभ्यासऋवर्णस्य रपरे अदादेशे कृते **हलादिः शेष** इति रलोपे **कुहोश्चु**रिति कस्य चकारे **लिटस्तझयोरेशिरेच्** इति तकारस्य एशि कृते शलोपे **इकोयणची**ति यणि च कृते ॥ बोभूयाञ्चक्रे ॥ बोभूधातोर्धातोर्यङि **सन्यङो**रिति धातोर्द्वित्वे **ह्रस्व** इति सूत्रेणाभ्यासाचो ह्रस्वत्वे **अभ्यासेचर्चे**ति पूर्वभस्य बत्वे **गुणोयङ्लुको**रिति गुणे च कृते बोभूय इति जातं तत्र लुङस्ते समागते **लुङ्लङ्लृङ्क्ष्वडुदात्त** इति अटि कृते अबोभूय त इति जातं तत्र **च्लिलुङी**ति शबाद्यपवादेन च्लौ कृते **च्लेः सिच्** इति च्लेः सिचि कृते इचो लोपे च कृते अबोभूय स त इति जातं तत्र **आर्द्धधातुकस्येड्वलादे**रिति इटि **अतो लोप** इत्यनेन यकारोत्तरवर्त्यकारलोपे संयोगे कृते **आदेशप्रत्यययो**रिति सस्य मूर्द्धन्यादेशे **ष्टुना ष्टु**रिति ष्टुत्वे च कृते ॥ अबोभूयिष्ट ॥ व्रज गतौ धातुरस्ति तत्र **नित्यं कौटिल्ये गतौ** इत्यनेन यङि कृते व्रज् य इति जाते **सन्यङो**रिति धातोः प्रथमस्य द्वित्वे **हलादिः शेपः** इतिलोपे वव्रज् य इति जातं तत्र लटस्ते समागते टेरेत्वे च कृते **कर्तरिशप्** इति शपि शकारपकारयोर्लोपे **दीर्घोऽकितः** इत्यनेनाभ्यासस्य दीर्घत्वे **अतो गुणे** इत्यनेन पररूपत्वे जाते ॥ वाव्रज्यते ॥ व्रजधातोर्लटि **नित्यं कौटिल्ये गतौ** इति यङि **सन्यङो**रिति धातोः प्रथमस्य द्वित्वे **हलादिः शेष** इति लोपे **कास्यनेकाच**

अकितोऽभ्यासस्य दीर्घो यङ्लुकोः । कुटिलं व्रजति वाव्रज्यते ॥ **यस्य हलः** ।६।४।४९। यस्येति संघातग्रहणम् । हलः परस्य यशब्दस्य लोप आर्धधातुके । आदेः परस्य । अतो लोपः । वाव्रजाञ्चक्रे वाव्रजिता ॥ **रीगृदुपधस्य च** ।७।४।९०। ऋदुपधस्य धातोरभ्यासस्य रीगागमो यङ्लुकोः । वरीवृत्यते वरीवृताञ्चक्रे वरीवृतिता ॥ **क्षुभ्नादिषु च** ।८।४।३९। णत्वं न । नरीनृत्यते जरीगृह्यते ॥ इति यङन्तप्रक्रिया ॥

---

**आम्वक्तव्य** इत्यामि **आम** इति लिट्लोपे **कृञ्चानुप्रयुज्यते लिटि** इति लिट्परे कृञि प्रयुक्ते वव्रज् य आम् कृ लिट् इति जातं तत्र **यस्य हलः** इत्यनेन यलोपे प्राप्ते **आदेः परस्ये**ति सूत्रेणादेर्यकारमात्रस्य लोपे जाते **अतो लोप** इति सूत्रेणावशिष्टस्याकारस्य लोपे जाते वव्रजां कृ लिट् इति जातं तत्र **लिटि धातोरनभ्यासस्ये**ति द्वित्वे **उरत्** इत्यभ्यासऋवर्णस्य रपरेऽकारे कृते वव्रजां चकृ कृ इति जाते **हलादिः शेष** इति रलोपे **कुहोश्चु**रिति ककारस्य चकारे लिटस्ते कृते **लिटस्तझयोरेशिरेच्** इति एशि शलोपे **इको यणची**ति यणि **दीर्घोऽकित** इति सूत्रेणाभ्यासदीर्घत्वे कृते ॥ वाव्रजाञ्चक्रे ॥ व्रजधातोर्लुटि **नित्यं कौटिल्ये गतौ** यङि **सन्यङो**रिति धातोर्द्वित्वे हलादिः शेषेण लोपे **यस्य हल** इति यलोपप्राप्तौ **आदेः परस्ये**ति यकारमात्रस्य लोपे **अतो लोप** इति सूत्रेणावशिष्टस्याकारस्यापि लोपे **दीर्घोऽकित** इति सूत्रेणाभ्यासदीर्घत्वे च कृते वाव्रज् लुट् इति जातं तत्र तिपि **स्यतासी लृलुटो**रिति तासी इकारलोपे **लुटः प्रथमस्य डारौरस** इति तिपो डात्वे चुटू इति डलोपे डिति भस्य टेर्लोपे इति डित्वसामर्थ्यादभस्यापि टेर्लोपे **आर्द्धधातुकस्येड्वलादे**रिति इटि टलोपे कृते च संयोगे ॥ वाव्रजिता ॥ वृतु वर्तने धातुरस्ति तत्र **धातोरेकाच** इति यङि **सन्यङो**रिति द्वित्वे **उर**दिति रपरत्वे **हलादिः शेष** इति शेषहलो लोपे **रीगृदुपधस्य** चेति रीगागमे कृते **कर्तरि शप्** इति शपि शकारपकारयोर्लोपे **अतो गुणे** इति पररूपत्वे **टित आत्मनेपदाना**मिति टेरेत्वे च कृते ॥ वरीवृत्यते ॥ वृतुधातोर्लिटि **धातोरेकाच** इति यङि **सन्यङो**रिति द्वित्वे अभ्यासहलो लोपे **रीगृदुपधस्य** चेति रीगागमे ककारलोपे **कास्यनेकाच आम्** इत्यामि **आमः** इति लिट्लोपे **कृञ्चानुप्रयुज्यते लिटि** इति लिट्परे कृञि प्रयुक्ते सति परीवृत् य आम् कृ लिट् इति जातं तत्र **यस्य हलः** इति सूत्रेण यलोपे **लिटि धातोरनभ्यासस्ये**ति कृद्वित्वे **उरत्** इति सूत्रेणाभ्याससंबन्धिन ऋवर्णस्य रपरेऽकारे कृते **हलादिः शेष** इति रलोपे **कुहोश्चु**रिति कस्य चत्वे लिटस्ते समागते **लिटस्तझयोरेशिरेच्** इत्येशि **इको यणची**ति यणि ॥ वरीवृतांचक्रे ॥ वृतुधातोर्लुटि यङि **सन्यङो**रिति द्वित्वे अभ्यासहलां लोपे **रीगृदुपधस्य** चेति रीकि कलोपे वरीवृत् य लुट् इति जातं तत्र तिपि **यस्य हल** इति यलोपे **स्यतासी लृलुटो**रिति तासी **लुटः प्रथमस्य डारौरस** इति डात्वे डित्वसामर्थ्यादभस्यापि टेर्लोपे **आर्द्धधातुकस्येड्वला-**

## ॥ अथ तिङन्ते यङ्लुगन्तप्रक्रियाप्रकरणम् ॥

**यङोऽचि च ।२।४।७४।** यङोऽचि प्रत्यये लुक् स्याच्चकारात्तं विनापि क्वचित् । अनैमित्तिकोऽयमन्तरङ्गत्वादादौ भवति । ततः प्रत्ययलक्षणेन यङन्तत्वाद्द्वित्वमभ्यासकार्यम् । धातुत्वाल्लडादयः । शेषात्कर्तरीति परस्मैपदम् । चर्करीतं चेत्यदादौ पाठाच्छपो लुक् ॥ **यङो वा ।७।३।९४।** यङ्लुगन्तात्परस्य हलादेः पितः सार्वधातुकस्येड्वा स्यात् । भूसुवोरिति गुणनिषेधो यङ्लुकि भाषायां न । बोभूतु तेतिक्ते इति छन्दसि निपातनात् ।

---

देरिति इटि टलोपे संयोगे च कृते ॥ चरीकृतिता ॥ कृत्धातोरपि **धातोरेकाच** इति यङि **सन्यङो**रिति द्वित्वे **उरद्**ति रपरत्वे अभ्यासहलोलोपे **रीगृदुपधस्य** चेति रीगागमे ककारलोपे **कर्तरि शप्** इति शपि लटस्ते **अतो गुणे** इत्यकारस्य पररूपत्वे **टित आत्मनेपदानां टेरे** इति टेरेत्वे **क्षुभ्नादिषु** चेति नस्य णत्वाभावे ॥ चरीकृत्यते ॥ ग्रहधातोर्धा**तोरेकाचो हलादे**रिति यङि **ग्रहिज्ये**ति संप्रसारणे पूर्वरूपे च **सन्यङो**रिति द्वित्वे **उरद्**ति रपरत्वे अभ्यासहलो लोपे **रीगृदुपधस्य** चेति रीगागमे ककारलोपे गरीगृह् य त इति जाते **कुहोश्चु**रिति सूत्रेणाभ्यासगकारस्य जकारे कृते **कर्तरि शप्** इति शपि शकारपकारयोर्लोपे **अतो गुणे** इति पररूपे टेरेत्वे च ॥ जरीगृह्यते ॥ इति यङन्तप्रक्रिया ॥

श्रीमत्केशवदैशिकदयावशोत्थैककलेशतोऽद्य मया ।
लिखितं यङन्तविषये यत्तच्छोध्यं दयालुभिर्विबुधैः ॥ १ ॥

नत्वा दैशिकवर्यश्रीकेशवपादपङ्कजद्वन्द्वम् ।
इह यङ्लुगन्तविषये लिखाम्यहं बालबोधाय ॥ १ ॥

भू धातुर्वर्तते तत्र **धातोरेकाचो हलादेः क्रियासमभिहारे यङ्** इति यङि **यङोऽचि**चेति यङो लुकि **प्रत्ययलोपे प्रत्ययलक्षण**माश्रित्य **सन्यङो**रिति धातोर्द्वित्वे **ह्रस्वः** अभ्यासस्याचो ह्रस्वत्वे भुभू इति जातं तत्र **सनाद्यन्ता धातव** इत्यनेन धातुत्वमाश्रित्य लडादिषु प्राप्तेषु **शेषात्कर्तरि परस्मैपद**मित्यनेन परस्मैपदसंबन्धिनि एत्यागते भुभू लट् इति जातं तत्र **अभ्यासे चर्चे**त्यनेन भस्य बत्वे बुभू लट् इति जातं तत्र **गुणो यङ्लुकोः** इति अभ्यासस्य गुणे बोभू लट् इति जातं तत्र लटस्तिपि **कर्तरि शप्** इति शपि **चर्करीतं** चेति सूत्रेण यङ्लुगन्तस्यादादौ गणनात् **अदिप्रभृतिभ्यः शपः** इति सूत्रेण शपो लोपे **यङो वे**ति सूत्रेण पितः सार्वधातुकस्य ईटि कृते कृते च टलोपे बोभू ई ति इति जातं तत्र **भूसुवो**रिति गुणनिषेधो भाषायां न । बोभूतु तेतिक्ते इति छन्दसि निपातनात् **सार्वधातुकार्धधातुकयो**रिति गुणे **एचोऽयवायाव** इति सूत्रेण अवादेशे च ॥

बोभवीति बोभोति बोभूतः । अदभ्यस्तात् । बोभुवति बोभवाञ्चकार बोभवामास बोभविता बोभविष्यति बोभवीतु बोभोतु बोभूतात् बोभूताम् बोभुवतु बोभूहि बोभवानि

---

बोभवीति ईडभाव पक्षे॥बोभोति॥भूधातोर्धातो**रेकाचो हलादे**रिति यङि **यङोऽचि चे**ति यङ्लुकि **प्रत्ययलोपे प्रत्ययलक्षण**मिति प्रत्ययत्वे **सन्यङो**रिति द्वित्वे **ह्रस्वः** अभ्यासस्याच्च इत्यभ्यासाचो ह्रस्वत्वे भुभू इति जातं तत्र **सनाद्यन्ता धातव** इति धातुत्वाल्लटः प्रथमस्य द्विवचने तस्यागते **कर्तरि शप्** इति शपि यङ्लुगन्तस्यादादौ गणनात् **अदिप्रभृतिभ्यः शपः** इति शपो लोपे **अभ्यासे चर्चे**ति भस्य बत्वे **गुणो यङ्लुको**रित्यभ्यासस्य गुणे च कृते ॥ बोभूतः ॥ एवं लटः प्रथमबहुवचने झी **धातोरेकाच** इति यङि **यङोऽचि चे**ति यङो लुकि **सन्यङो**रिति द्वित्वे **ह्रस्व** इत्यभ्यासह्रस्वत्वे **अभ्यासे चर्चे**ति भस्य बत्वे **गुणो यङ्लुको**रिति गुणे शपि **अदिप्रभृतिभ्यः शप** इति शपो लोपे च बोभू झि इति जातं तत्र **अदभ्यस्तात्** इति झस्य अदादेशे **अचि श्नुधातुभ्रुवां य्वोरियङुवङौ** इति भकारोत्तरवर्तिन ऊकारस्य उवङि कृते ॥ बोभुवति ॥ भूधातोः पूर्ववत् यङि यङ्लुकि द्वित्वे अभ्यासह्रस्वत्वे **अभ्यासे चर्चे**ति भस्य बत्वे **सनाद्यन्ता** इति धातुत्वे धातुत्वाच्च लिटि समागते **कास्यनेकाच आम् वक्तव्यः** इति आमि **आमः** इति लिटो लोपे **कृञ्चानुप्रयुज्यते लिटी**ति कृञि बोभू आम् कृ लिट् ति जातं तत्र तिपि **परस्मैपदानां णलतुसुस्** इति तिपो णलि णकारलकारयोर्लोपे **लिटि धातोरनभ्यासस्ये**ति कृद्वित्वे **उरत्** इति अभ्यासऋवर्णस्य रपरे अदादेशे कृते बोभू आम् कर् कृ अ इति जातं तत्र **हलादिः शेष** इति रलोपे **कुहोश्चु**रिति कस्य चत्वे **अचो ञ्णिती**ति वृद्धौ बोभू आं चकार इति जातं तत्र **सार्वधातुकार्द्धधातुकयो**रिति भकारोत्तरवर्तिन उकारस्य गुणे **एचोयवायाव** इत्यवादेशे च कृते ॥ बोभवाञ्चकार ॥ एवं लिट्परेऽसि प्रयुक्ते ॥ बोभवामास ॥ यङं यङ्लुकं द्वित्वं अभ्यासह्रस्वत्वं धातुत्वं च विधाय लुटि कृते **स्यतासी लृलुटो**रिति तासौ बोभू तास् लुट् इति जातं तत्र **लुटः प्रथमस्य डारौरस** इति लुटो डात्वे डित्त्वसामर्थ्यादभस्यापि टेर्लोपे **आर्द्धधातुकस्येड्वलादे**रिति इटि **सार्वधातुकार्द्धधातुकयो**रिति गुणे **एचोयवायाव** इति अवादेशे च कृते ॥ बोभविष्यति ॥एवमेव यङ् यङ्लुक् द्वित्वाभ्यासह्रस्वत्वभत्वाभ्यासगुणत्वधातुत्वविधानपूर्वं लृटि **स्यतासी लृलुटो**रिति स्ये लृटस्तिपि **आर्द्धधातुकस्येड्वलादे**रिति इटि **सार्वधातुकार्द्धधातुकयो**रिति गुणे अवादेशे सस्य षत्वे च कृते ॥ बोभविष्यति ॥ एवं लोटि लोटस्तिपि **यङो वे**ति ईटि **सार्वधातुकार्द्धधातुकयो**रिति गुणे कृते बोभू ई ति इति जातं तत्र **एचोयवायाव** इति अवादेशे **एरु**रित्यनेन तकारोत्तरवर्तिन इकारस्योकारे कृते ॥ बोभवीतु ॥ ईडभावपक्षे ॥ बोभोतु ॥ तातङि ॥ बोभूतात् ॥ **तस्थस्थमिपां तांतंतामः**

अबोभवीत् अबोभोत् अबोभूताम् अबोभवुः । बोभूयात् बोभूयाताम् बोभूयुः । बोभूयात् बोभूयास्ताम् बोभूयासुः । गातिस्थेति सिचो लुक् । यङो वेतीट्पक्षे गुणं बाधित्वा नित्यत्वाद्वुक् । अबोभूवीत् अबोभोत् अबोभूताम् अबोभूवुः । अबोभविष्यत् ॥ इति यङ्लुगन्ताः ॥

---

इति तामि ॥ बोभूतः ॥ झौ **अदभ्यस्तात्**इति अदादेशे गुणे उवङादेशे एरुरिति इकारस्योकारत्वे च कृते ॥ बोभुवतु ॥ **सेर्ह्यपिच्च**ेति सेर्हित्वे अपित्त्वात् ईडभावे ॥ बोभूहि ॥ लोट् उत्तमपुरुषबहुवचने मिपि ॥ बोभूमि इति जाते **मेर्निः** इति मेर्नित्वे **आडुत्तमस्य पिच्च**ेति आटि **सार्वधातुकार्धधातुकयो**रिति गुणे अवादेशे च कृते ॥ बोभवानि ॥ भूधातोः **धातोरेकाचो हलादे**रिति यङि **यङोऽचि च**ेति यङ्लोपे **सन्यङो**रिति द्वित्वे **ह्रस्वः** इति अभ्यासह्रस्वे **अभ्यासे चर्च**ेति भस्य बत्वे **गुणो यङ्लुको**रिति गुणे च कृते बोभू इति जाते सति **सनाद्यन्ता धातवः** इति धातुत्वमङ्गीकृत्य तस्माल्लङस्तिपि **लुङ्लङ्लृङ्क्ष्वडुदात्तः** इति अटि **यङो वे**ति सूत्रेण ईटि **सार्वधातुकार्धधातुकयो**रिति गुणे **एचोऽयवायावः** इत्यवि **इतश्च**ेति तिप इकारलोपे च कृते ॥ अबोभवीत् ॥ ईडभावपक्षे च ॥ अबोभोत् ॥ **तस्थस्थमिपां तांतंतामः** इति तामि अटि च कृते ॥ अबोभूताम् ॥ पूर्ववत् बोभू इति कृते लङ् उत्तमपुरुषबहुवचने झौ **सिजभ्यस्तविदिभ्यश्च**ेति झेर्जुसि **लुङ्लङ्लृङ्क्ष्वडुदात्तः** इति अटि **जुसि च**ेति भकारोत्तरवर्त्यूकारस्य गुणे अवादेशे च

## ॥ अथ तिङन्ते नामधातुप्रक्रियाप्रकरणम् ॥

**सुप आत्मनः क्यच्** ।३।१।८। इषिकर्मण एषितुः संबन्धिनः सुबन्तादिच्छायामर्थे क्यच् प्रत्ययो वा स्यात् ॥ **सुपो धातुप्रातिपदिकयोः** ।२।४।७१। एतयो-

---

इकारलोपे संयोगे च ॥ अबोभूवीत् ॥ इडभावपक्षे **सार्वधातुकार्द्धधातुकयो**रिति गुणे कृते ॥ अबोभूत् ॥ तामि अटि कृते ॥ अबोभूताम् ॥ झौ झेर्जुसि जलोपे वुकि उवो लोपे अटि च कृते ॥ अबोभूवुः ॥ पूर्ववत् बोभू इति विधाय **सनाद्यन्ता** इति धातुत्वमङ्गीकृत्य लृङस्तिपि **स्यतासी लृलुटो**रिति स्ये **आर्धधातुकस्ये**ति इटि **सार्वधातुकार्द्धधातुकयो**रिति गुणे सस्य षत्वे अवादेशे अटि तिप इकारलोपे च ॥ अबोभविष्यत् ॥

श्रीमत्केशवदेशिककरुणालोकप्रभावतः पूर्णः ॥
इति यङ्लुगन्तविषयो जातः शोध्यो दयालुभिर्विबुधैः ॥ १ ॥
स्मृत्वा गौरीप्राणनाथाङ्घ्रिपद्मं नत्वा श्रीमत्तातपादाब्जयुग्मम् ॥
ध्यायंध्यायं सद्गुरून् केशवाख्यान् चैषामेतत्त्वत्प्रसादाल्लिखामि ॥ १ ॥

आत्मनः पुत्रमिच्छति इत्यर्थे **सुप आत्मनः क्यच्** इति सूत्रेण क्यचि कृते पुत्रं क्यच् इति जातं तत्र **सनाद्यन्ते**ति धातुत्वे **सुपो धातुप्रातिपदिकयो**रिति सुब्रूपस्य लोपे पुत्र क्यच् इति जाते चलोपे कलोपे च कृते **क्यचि चे**ति सूत्रेणावर्णस्य ईवर्णे कृते पुत्रीय इति जातं तत्र **सनाद्यन्ता धातवः** इति धातुत्वं स्वीकृत्य लटस्तिपि **कर्तरि शप्** इति शपि शपयोर्लोपे **अतो गुणे** इति सूत्रेण पररूपैकादेशे च कृते ॥ पुत्रीयति ॥ आत्मनो राजानमिच्छतीत्यर्थे **सुप आत्मनः क्यच्** इषिकर्मकं एषितुः संबन्धि च सुबन्तं किमस्ति राजानमिति सुबन्तमस्ति ततः क्यचि कृते राजानं क्यच् इति जातं तत्र **हलन्त्य**मित्यनेन चस्येत्संज्ञां विधाय **तस्य लोप** इति लोपे **लशक्वतद्धिते** इति सूत्रेण कस्येत्संज्ञां विधाय **तस्य लोप** इति कलोपे राजानं य इति जाते **सनाद्यन्ते**ति धातुत्वे **सुपो धातुप्रातिपदिकयोः** अत्र धात्ववयवसुबस्ति प्रातिपदिकावयवो वा सुबस्ति अत्र धात्ववयवः सुबस्ति तस्य क्यचि लोपे कृते राजन् य इति जातं तत्र कस्य सूत्रस्य प्राप्तिः **नः क्ये** इति नान्तस्यैव पदत्वे **नलोपः प्रातिपदिकान्तस्ये**ति नलोपे राज य इति जातं तत्र **क्यचिचे**ति जकारोत्तरवर्तिनोऽवर्णस्य ईवर्णत्वे कृते राजीय तिपि शपि शपयोर्लोपे **अतो गुणे** इति पररूपैकादेशे च ॥ राजीयति ॥ नान्तमेवेति नावदिष्यत्त्वाचार्यास्तर्हि आत्मनो वाचमिच्छति तत्र पदत्वे **चोः कु**रित्यनेन कुत्वमभविष्यत्तन्निवारणाय नान्तमेवेत्युक्तं तथा सति चान्तस्य पदत्वाभावात् न कुत्वम् ॥ वाच्यति इति जातम् ॥ आत्मनो गिरमिच्छतीत्यत्र

रवयवस्य सुपो लुक् ॥ **क्यचि च** ।७।४।३३। अवर्णस्य ईः । आत्मनः पुत्रमिच्छति पुत्रीयति ॥ **नः क्ये** ।१।४।१५। क्यचि क्यङि च नान्तमेव पदं नान्यत् । नलोपः । राजीयति । नान्तमेवेति किम् । वाच्यति । हलि च । गीर्यति पूर्यति । धातोरित्येव । नेह दिवमिच्छति दिव्यति ॥ **क्यस्य विभाषा** ।६।४।५०। हलः परयोः क्यच्क्यङो- र्लोपो वार्धधातुके । आदेः परस्य । अतो लोपः । तस्य स्थानिवत्त्वाल्लघूपधगुणो न । समि- धिता समिध्यिता ॥ **काम्यच्च** ।३।१।९। उक्तविषये काम्यच् स्यात् । पुत्रमात्मन इच्छति पुत्रकाम्यति पुत्रकाम्यिता ॥ **उपमानादाचारे** ।३।१।१०। उपमानात्कर्मणः सुबन्तादाचारेऽर्थे क्यच् । पुत्रमिवाचरति पुत्रीयति छात्रम् । विष्णूयति द्विजम् । (सर्वप्रातिपदिकेभ्यः क्विब्वा वक्तव्यः) अतो गुणे । कृष्ण इवाऽचरति कृष्णति । स्व

---

**सुप आत्मनः क्यच्** इति क्यचि **सुपो धातुप्रातिपदिकयो**रिति सुप्लोपे लि- टस्तिपि शपि शपयोर्लोपे **हलि** चेति उपधाया दीर्घत्वे **अतो गुण** इति पूर्वरूपत्वे ॥ गी- र्यति ॥ एवमात्मनः पुरमिच्छतीति ॥ पूर्यति । आत्मनोदिवमिच्छतीत्यत्र दिव्शब्दस्य प्रातिपदिकत्वात् **हलिचे**ति सूत्रेण धातोरित्योपधाया दीर्घकरणलाभ दीर्घत्वे । दिव्य- ति । समिधमात्मन इच्छति क्यचि **सनाद्यन्ते**ति धात्वे लुटि तासि तिपि **लुटः प्रथमस्ये**ति तिपो डात्वे टिलोपे **क्यस्य विभाषे**ति यलोपे ॥ समिधिता ॥ यस्ऽ लोपाभावे ॥ समिध्यिता । पुत्रमात्मन इच्छतीत्यर्थे **काम्यच्च** इत्यनेन काम्यचि **सनाद्यन्ते**ति धातुत्वे **सुपो धातुप्रातिपदिकयो**रिति विभक्तिलोपे पुत्रकाम्य इति जातं तत्र लटस्तिपि शपि शपयोर्लोपे **अतोगुणे** इति पररूपत्वे ॥ पुत्रकाम्यति । एवं पूर्व- वत् पुत्रकाम्य इति विधाय लुटस्तिपि **लुटः प्रथमस्ये**ति डात्वे डित्त्वसामर्थ्यादभस्यापि टेर्लोपे **आर्द्धधातुकस्येड्वलादे**रिति इटि **अतो लोप** इत्यनेन याकारान्त्यापत्यकार- लोपे संयोगे च कृते ॥ पुत्रकाम्यिता ॥ पुत्रीयति छात्रमित्यत्र **उपमानादाचारे** इति सू- त्रेण क्यचि ककारचकारयोर्लोपे **सनाद्यन्ते**तिधातुत्वे **सुपो धातुप्रातिपदिकयो**- रिति सुपो लोपे **क्यचि चे**ति सूत्रेण त्रकारोत्तरवर्त्यवर्णस्य ईवर्णे कृते पुत्रीय इति जाते लटस्तिपि शपि शपयोर्लोपे **अतोगुणे** इति पररूपे च कृते ॥ पुत्रीयति ॥ विष्णूयति ॥ द्विजमित्यत्रापि क्यचि ककारचकारयोर्लोपे सुब्लोपे च विष्णु य इति जातं तत्र **अकृत्सा- र्वधातुकयोर्दीर्घ** इति ष्णकारोत्तरवर्त्युकारस्य दीर्घत्वे विष्णूय इति जातं तत्र **सना- द्यन्ता** इति धातुत्वात् तिपि शपि **अतो गुणे** इति पररूपे च ॥ विष्णूयति ॥ कृष्ण इवाचरतीत्यत्र **सर्वप्रातिपदिकेभ्यः क्विब्वा वक्तव्यः** इति वार्तिकेन क्विपि **लश- क्वतद्धिते** इति ककारस्येत्संज्ञायां हलन्त्यमिति पस्येत्संज्ञायां **उपदेशेऽजनुनासिक इत्** इती- कारस्य चेत्संज्ञायां कृतायां कृते च **तस्य लोप** इति सूत्रेण ककारपकारेकाराणां लोपे वकार एवावशिष्टस्तस्य **वेरपृक्तस्ये**त्यनेन लोपे कृते धातुत्वमङ्गीकृत्य लटस्तिपि शपि **अतो गुणे** इति पररूपे च ॥ कृष्णति ॥ एवमेव स्वमिवाचरतीति ॥ स्वति ॥ लिटि तु **परस्मैपदानां**

इवाचरति स्वति सखौ ॥ **अनुनासिकस्य क्विझलोः क्ङिति** ।६।४।१५। अनुनासिकान्तस्योपधाया दीर्घः स्यात् क्वौ झलादौ च क्ङिति । इदमिवाचरति इदामति । राजेव राजानति । पन्था इव पथीनति ॥ **कष्टाय क्रमणे** ।३।१।१४। चतुर्थ्यन्तात्कष्टशब्दादुत्साहेऽर्थे क्यङ् स्यात् । कष्टाय क्रमते कष्टायते । पापं कर्तुमुत्सहत इत्यर्थः । **शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे** ।३।१।१७। एभ्यः कर्मभ्यः करोत्यर्थे क्यङ् स्यात् । शब्दं करोति शब्दायते । तत्करोति तदाचष्टे इति णिच् । (प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च) प्रातिपदिकाद्धात्वर्थे णिच् स्यादिष्ठे यथा प्रातिपदिकस्य पुंवद्भावरभावटिलोपविन्मतुब्लोपयणादिलोपप्रस्थस्फाद्यादेशभसंज्ञास्तद्वण्णावपि स्युः । इत्यल्लोपः । घटं करोत्याचष्टे वा घटयति ॥ इति नामधातवः ॥ अथ कण्ड्वादयः ॥

---

**णलतुसुस्थलथुस** इति णलि णलयोर्लोपे **लिटि धातोरनभ्यासस्ये**ति द्वित्वे **हलादिः शेष** इत्यभ्यासहल्लोपे सख अ इति जातं तत्र **अचो ञ्णिति** इति वृद्धौ सखा अ इति जातं तत्र **आत औ णल** इति णल्संबन्धिनोऽवर्णस्यौत्वे **वृद्धिरेची**ति वृद्धौ च ॥ सखौ ॥ इदमिवाचरतीत्यत्र **सर्वप्रातिपदिकेभ्यः क्विब्वा वक्तव्य** इति क्विपि क्विपो लोपे **सनाद्यन्ता धातव** इति धातुत्वाल्लटस्तिपि शपि शपयोर्लोपे इदम् अ ति इति जातं तत्र **अनुनासिकस्य क्विझलोः क्ङिति** इति उपधाया दीर्घत्वे संयोगे च कृते ॥ इदामति ॥ एवमेव राजेवाचरतीत्यत्रोपधादीर्घत्वे ॥ राजानति ॥ पन्थेवाचरतीत्यत्रापि क्विपि पूर्ववत् क्विपो लोपे लटस्तिपि शपि शपयोर्लोपे च पथिन् अति इति जातं तत्र **अनुनासिकस्य क्विझलोः क्ङिति** इति उपधादीर्घत्वे ॥ पथीनति॥ कष्टायक्रमते इत्यत्र **कष्टायक्रमणे** इति क्यङि ककारङकारयोरित्संज्ञायांकरणपूर्वं लोपे कृते **सनाद्यन्ता** इति धातुत्वमुरीकृत्य लटस्तिपि शपि शपयोर्लोपे सुपो धातुप्रातिपदिकयोरिति सुपो लोपे कष्टाय अत इति जातं तत्र **अकृत्सार्वधातुकयो**रित्यजन्तस्य दीर्घत्वे **अतो गुणे** इति पूर्वरूपे **टित आत्मनेपदानां टेरे** इति टेरेत्वे ॥ कष्टायते ॥ शब्दं करोतीति शब्दायते इत्यत्र **शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे** इति सूत्रेण क्यङि ककारयोर्लोपे सुब्लोपे शब्दय इति जातं तत्र धातुत्वमङ्गीकृत्य लटस्ते शपि शपयोर्लोपे **अतो गुणे** इति पररूपे **अकृत्सार्वधातुकयोर्दीर्घः** इति दीर्घत्वे टेरेत्वे च कृते ॥ शब्दायते ॥ घटं करोत्याचष्टे वेत्यस्मिन्नर्थे णिचि णकारचकारयोर्लोपे घट इ इति जातं तत्र **सनाद्यन्ता धातव** इति धातुत्वाल्लटस्तिपि शपि शपयोर्लोपे घट इ अति इति जातं तत्र इष्ठवच्चेत्युक्तत्वात् **यचि भम्** इत्यनेन घटशब्दस्य भसंज्ञा जाता तत्र **टेः** भस्य टेर्लोपे इष्ठेमेयस्सु इति सूत्रेण णेरिष्ठतुल्यत्वात्तस्मिन्परे टकारवर्त्यकारस्य टिरूपस्य लोपे कृते घटि अ ति इति जातं तत्र **सार्वधातुकार्धधातुकयो**रिति गुणे **एचोयवायाव** इत्यया-

**कण्ड्वादिभ्यो यक्** ।३।१।२७। एभ्यो धातुभ्यो नित्यं यक् स्यात्स्वार्थे । कण्डूञ् गात्रविघर्षणे १ कण्डूयति कण्डूयते इत्यादि ॥ इति कण्ड्वादयः ॥

## ॥ अथ तिङन्ते आत्मनेपदप्रक्रियाप्रकरणम् ॥

**कर्तरि कर्मव्यतिहारे** ।१।३।१४। क्रियाविनिमये द्योत्ये कर्तर्यात्मनेपदम् । व्यतिलुनीते । अन्यस्य योग्यं लवनं करोतीत्यर्थः ॥ **न गतिहिंसार्थेभ्यः** ।१।३।१५। व्यतिगच्छन्ति व्यतिघ्नन्ति ॥ **नेर्विशः** ।१।३।१७। निविशते ॥ **परिव्यवेभ्यः क्रियः** ।१।३।१८। परिक्रीणीते विक्रीणीते अवक्रीणीते ॥ **विपराभ्यां जेः** ।१।३।१९। विजयते पराजयते ॥ **समवप्रविभ्यः स्थः** ।१।३।२२। संतिष्ठते अवतिष्ठते प्रतिष्ठते वितिष्ठते ॥ **अपह्नवे ज्ञः** ।१।३।४४। शतमपजानीते । अपलपतीत्यर्थः ॥ **अकर्मकाच्च** ।१।३।४५। सर्पिषो जानीते । सर्पिषोपायेन प्रवर्तत इत्यर्थः ॥ **उदश्चरः सकर्मकात्** ।१।३।५३। धर्ममुच्चरते । उल्लङ्घ्य गच्छतीत्यर्थः ॥ **समस्तृतीयायुक्तात्** ।१।३।५४। रथेन संचरते ॥ **दाणश्च सा चेच्चतुर्थ्यर्थे** ।१।३।५५। संपूर्वाद्दाणस्तृतीयान्तेन युक्तादुक्तं स्यात् तृतीया चेच्चतुर्थ्यर्थे । दास्या संयच्छते कामी ॥ **पूर्ववत्सनः** ।१।३।६२। सनः पूर्वो

---

देशे च ॥ घटयति ॥ इति नामधातवः ॥ कण्डूञ् गात्रविघर्षणे इति धातोः **कण्ड्वादिभ्यो यक्** इति यकि ककारलोपे **सनाद्यन्ता धातवः** इति धातुत्वेन लटस्तिपि शपि शपो लोपे च कण्डूय अति इति जातं तत्र **अतो गुणे** इति पररूपत्वे ॥ कण्डूयति ॥ आत्मनेपदिषु च लटस्ते **टित आत्मनेपदानाम्** इति टेरेत्वे च कृते ॥ कण्डूयते ॥ इति कण्ड्वादयः ॥

व्यतिलुनीते इत्यत्र **कर्तरि कर्मव्यतिहारे** इत्यनेनात्मनेपदान्तःपातिनि लटस्तकारे प्राप्ते **क्र्यादिभ्यः श्ना** इति श्नाकारे **प्वादीनां ह्रस्वः** इति ह्रस्वत्वे **ई हल्यघोः** इति सूत्रेणाकारस्य ईकारे कृते टेरेत्वे कृते ॥ व्यतिलुनीते ॥ व्यतिगच्छन्ति व्यतिघ्नन्तीत्यत्र **न गतिहिंसार्थेभ्यः** इत्यनेन नात्मनेपदत्वं, **नेर्विशः** इति सूत्रेणात्मनेपदत्वे निविशते । **परिव्यवेभ्यः क्रियः** इत्यनेनात्मनेपदत्वे परिक्रीणीते विक्रीणीते अवक्रीणीते इति भवन्ति, **विपराभ्यां जेः** इत्यात्मनेपदत्वे विजयते पराजयते । **समवप्रविभ्यः स्थः** इति सूत्रेणात्मनेपदत्वे संतिष्ठते अवतिष्ठते प्रतिष्ठते वितिष्ठते । **अपह्नवे ज्ञः** इति सूत्रेणात्मनेपदत्वे **ई हल्यघोः** रितीकारे च शतमपजानीते इति जातं, **अकर्मकाच्च** इत्यनेनात्मनेपदत्वे **ई हल्यघोः** रितीकारे च सर्पिषो जानीते, **उदश्चरः सकर्मकात्** इति सूत्रेणात्मनेपदत्वे धर्ममुच्चरते । **समस्तृतीयायुक्तात्** इति सूत्रेणात्मनेपदत्वे रथेन संगच्छते । **दाणश्च सा चेच्चतुर्थ्यर्थे** इति सूत्रेणात्मनेपदत्वे दास्या संगच्छते इति जातम् । **पूर्ववत्सनः** इति सूत्रेणात्मनेपदत्वे एधधातोः **धातोः कर्मणः समानकर्तृकादिच्छायां वा** इति सनि एध् सन् इति जाते **आर्धधातुकस्येड्वलादेः** इति इटि **अज्झीनं परेण संयोज्यम्** इति

यो धातुस्तेन तुल्यं सन्नन्तादप्यात्मनेपदं स्यात् । एदिधिषते ॥ **हलन्ताच्च ।१।२।१०।** इक्समीपाद्धलः परो झलादिः सन्कित् । निविविक्षते ॥ **गन्धनावक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषु कृञः ।१।३।३२।** गन्धनं सूचनम् । उत्कुरुते । सूचयतीत्यर्थः । अवक्षेपणं भर्त्सनम् । श्येनो वर्तिकामुत्कुरुते । भर्त्सयतीत्यर्थः । हरिमुपकुरुते । सेवत इत्यर्थः । परदारान्प्रकुरुते । तेषु सहसा प्रवर्तते । एधो दकस्योपस्कुरुते गुणामाधत्ते । कथाः प्रकुरुते । कथयतीत्यर्थः । शतं प्रकुरुते । धर्मार्थं विनियुङ्क्ते । एषु किम् । कटं करोति । भुजोऽनवने । ओदनं भुङ्क्ते । अनवने किम् । महीं भुनक्ति ॥ इत्यात्मनेपदप्रक्रिया ॥

## ॥ अथ तिङन्ते परस्मैपदप्रक्रियाप्रकरणम् ॥

**अनुपराभ्यां कृञः ।१।३।७९।** कर्तृगे च फले गन्धनादौ च परस्मैपदं स्यात् । अनुकरोति पराकरोति ॥ **अभिप्रत्यतिभ्यः क्षिपः ।१।३।८०।** क्षिप प्रेरणे स्वरितेत् । अभिक्षिपति ॥ **प्राद्वहः ।१।३।८१।** प्रवहति ॥ **परेर्मृषः ।१।३।८२।** परिमृषति ॥ **व्याङ्परिभ्यो रमः ।१।३।८३।** रमु क्रीडायाम् । विरमति ॥ **उपाच्च । १।३।८४।** यज्ञदत्तमुपरमति । उपरमयतीत्यर्थः । अन्तर्भावितण्यर्थोऽयम् ॥ इति पदव्यवस्था ॥

---

संयोगे कृते एधि स इति जातं तत्र **सन्यङोः**रिति सूत्रेण द्वित्वं प्राप्तं परं धातोरस्य अजादित्वाद्वितीयस्य धिकारस्य द्वित्वे कृते एधि धिस इति जाते **अभ्यासे चर्च्चे**ति सूत्रेण धस्य दत्वे एदिधिस इति जातं तत्र लटस्तकारे समागते **टित आत्मनेपदानां टेरे** इति टेरेत्वे **आदेशप्रत्यययो**रिति सस्य षत्वे च । एदिधिषते इति सिद्धम् ॥ निविपूर्वकविशधातोः सनि कृते **पूर्ववत्सन** इति सूत्रेणात्मनेपदत्वे लटस्ते चागते **सन्यङो**रिति द्वित्वे निविविश् स त इति जाते **हलन्ताच्चे**त्यनेन सनः कित्वे कित्वात् **क्ङिति चे**ति गुणाभावे **व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः** इति शस्य षत्वे कृते निविविष् स त इति जाते **षढोः कः सि** इति षस्य कत्वे **आदेशप्रत्यययो**रिति सस्य षत्वे कषोः संयोगे क्षकारे कृते टेरेत्वे च कृते ॥ निविविक्षते ॥ **गन्धनावक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषु कृञः** इति सूत्रेण श्येनोवर्तिकामुत्कुरुते इत्यत आरभ्य शतं प्रकुरुते इत्यन्ताः प्रयोगा आत्मनेपदत्ववन्तो भवन्ति । कटं करोतीत्यत्र पूर्वसूत्रान्तःपात्यभावात्नात्मनेपदित्वम् । ओदनं भुङ्क्ते इत्यत्र **भुजोऽनवने** इति सूत्रेणात्मनेपदित्वं जातं, महीं भुनक्तीत्यत्र त्ववनार्थत्वान्नात्मनेपदित्वम् ॥ इत्यात्मनेपदप्रक्रिया ॥

**अनुपराभ्यां कृञः** इति सूत्रेण परस्मैपदत्वे ॥ अनुकरोति पराकरोतीति च सिद्धम् ॥ **अभिप्रत्यतिभ्यः क्षिपः** इति सूत्रेण परस्मैपदित्वे अभिक्षिपति प्रतिक्षिपति अतिक्षि-

## ॥ अथ तिङन्ते भावकर्मप्रक्रियाप्रकरणम् ॥

**भावकर्मणोः** ।१।३।१३। लस्यात्मनेपदम् ॥ **सार्वधातुके यक्** ।३।१।६७। भावकर्मवाचिनि धातोर्यक् सार्वधातुके । भावः क्रिया सा च भावार्थकलकारेणानूद्यते । युष्मदस्मद्भ्यां सामानाधिकरण्याभावात् प्रथमः पुरुषः ॥ तिङ्वाच्यक्रियाया अद्रव्यरूपत्वेन द्वित्वाद्यप्रतीतेर्न द्विवचनादि किन्त्वेकवचनमेवोत्सर्गतः । त्वया मया अन्यैश्च भूयते । बभूवे ॥ **स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट् च** ।६।४।६२। उपदेशे योऽच् तदन्तानां हनादीनां च चिणीवाङ्गकार्यं वा स्यात्स्यादिषु भावकर्मणोर्गम्यमानयोः स्यादीनामिडागमश्च । चिण्वद्भावपक्षेऽयमिट् ।

---

पतीति च सिद्धम् ॥ **प्राद्वहः** इति सूत्रेण परस्मैपदित्वे प्रवहतीति सिद्धम् । **परेर्मृषः** इति सूत्रेण परस्मैपदित्वे परिमृष्यतीति सिद्धम् । **व्याङ्परिभ्यो रमः** इति परस्मैपदित्वे विरमतीति सिद्धम् ॥ **उपाच्चेति** सूत्रेण उपरमति यज्ञदत्तमिति जातम् । अन्तर्भावितण्यर्थे उपरमयतीत्यर्थः ॥ इति परस्मैपदप्रक्रिया ॥

भूधातुर्वर्ततेऽस्मै भावकर्मणोर्लस्यात्मनेपदमिति लटस्ते **सार्वधातुके यक्** इति यकि **टित आत्मनेपदानां टेरे** इति टेरेत्वे च कृते । भूयते । लिटस्ते **लिटस्तझयोरेशिरेच्** इति तकारस्यैकारे **भुवो वुग्लुङ्लिटोः**रिति उको लोपे **लिटि धातोरनभ्यासस्ये**ति द्वित्वे **हलादिः शेषः** इति शेषहल्लोपे भूभूव् ए इति जाते तत्र **ह्रस्वः** इत्यनेन पूर्वभकारोत्तरवर्त्यूकारस्य ह्रस्वत्वे **भवतेरः** इति सूत्रेणाभ्यासोकारस्याकारत्वे **अभ्यासे चर्चेति** भस्य बत्वे कृते कृते च यकारस्यैकारेण सह संयोगे बभूवे इति सिद्धम् । भावे वर्तमानाद्भूधातोर्लुटस्ते **स्यतासी लृलुटोः**रिति तासी **लुटः प्रथमस्य डारौरसः** इति डात्वे डित्त्वसामर्थ्यादभस्यापि टेर्लोपे **स्यसिच्सीयुट्तासिषु भावकर्मणोः**रिति सूत्रेण इटि कृते इटश्च तेनैव सूत्रेण चिण्वद्भावत्वात् **अचो ञ्णितीति** वृद्धौ **एचोऽयवायावः** इति आवि च कृते ॥ भाविता ॥ इति सिद्धम् ॥ अग्रहणपक्षे ॥ भविता ॥ तथैव लृटि **स्यतासी लृलुटोः**रिति स्ये **स्यसिच्सीयुट्तासिषु भावकर्मणोः**रिति इटि चिण्वद्भावमाश्रित्य इटि वृद्धौ आवि **टित आत्मनेपदानां टेरे** इति टेरेत्वे तस्य षत्वे च ॥ भाविष्यते पक्षे भविष्यते ॥ लोटस्त आगते **सार्वधातुके यक्** इति यकि **टित आत्मनेपदानां टेरे** इति टेरेत्वे **आमेतः** इति एकारस्यामि च कृते ॥ भूयताम् ॥ भावे वर्तमानाद्भूधातोर्लङस्ते **सार्वधातुके यक्** इति यकि कलोपे **लुङ्लङ्लृङ्क्ष्वडुदात्तः** इति अटि च कृते ॥ अभूयत ॥ भावे वर्तमानाद्भूधातोराशीर्लिङस्ते समागते **लिङः सीयुट्** इति सीयुटि **सुट् तिथोः**रिति सुटि च भू सीयुट् सुट् त इति जाते तत्रोभयोरुट्भागयोर्लोपे **लोपो व्योर्वली**त्यनेन यलोपे **स्यसिच्सीयुट्तासिष्वि**ति चि

चिण्वद्भावाद्वृद्धिः । भाविता भविता भाविष्यते भविष्यते भूयताम् अभूयत भाविषीष्ट भविषीष्ट ॥ **चिण् भावकर्मणोः** ।३।१।६६। च्लेश्चिण् स्याद्भावकर्मवाचिनि तशब्दे परे । अभावि अभाविष्यत । अकर्मकोऽप्युपसर्गवशात्सकर्मकः । अनुभूयते आनन्दश्चैत्रेण त्वया च । अनुभूयेते अनुभूयन्ते त्वमनुभूयसे अहमनुभूये अन्वभावि अन्वभाविषाताम् अन्वभविषाताम् । णिलोपः । भाव्यते भावयांचक्रे भावयांबभूवे भावयामासे ।

---

ण्वद्भावयति इटि **अचो ञ्णिती**ति वृद्धौ **एचोऽयवायावः** इत्यावि **आदेशप्रत्यययोः**रित्युभयोः सकारयोः षत्वे **ष्टुना ष्टुः**रिति ष्टुत्वे ॥ भाविषीष्ट ॥ चिण्वद्भावाभावे वृद्ध्यभावात् **सार्वधातुकार्धधातुकयो**रिति गुणे अवि च कृते ॥ भविषीष्ट ॥ भावे वर्तमानाद्भूधातोर्लुङस्ते समागते **च्लि लुङी**ति च्लौ **चिण् भावकर्मणो**रिति च्लेश्चिणि चकारणकारयोर्लोपे **अचो ञ्णिती**ति वृद्धौ **एचोऽयवायावः** इति आवि अटि **चिणो लुक्** इति तलोपे च ॥ अभावि ॥ भावभाजो भुवो लृङस्तकार आगते **स्यतासी लृलुटो**रिति स्ये **स्यसिच्सीयुट्तासिष्वि**ति इटि चिण्वद्भावे च **अचो ञ्णिती**ति वृद्धौ आवि **लुङ्लङ्लृङ्क्ष्वि**ति अटि च ॥ अभाविष्यत ॥ चिण्वद्भावाभावपक्षे ॥ अभविष्यत ॥ अनुपूर्वकाद्भूधातोर्लटस्ते **सार्वधातुके यक्** इति यकि **टित आत्मनेपदानां टेरे** इति टेरेत्वे अनुभूयते आनन्दश्चैत्रेण त्वया मया च । आतामि, अनुभूयेते । झे च, अनुभूयन्ते । थासि **थासः से** इति सेकारे कृते त्वं अनुभूयसे । इटि टेरेत्वे **अतो गुणे** इति पररूपत्वे च अहमनुभूये । अनुपूर्वकभूधातोर्लुङस्ते **च्लि लुङी**ति च्लौ **चिण् भावकर्मणो**रिति च्लेश्चिणि चकारणकारयोरित्संज्ञाकरणपूर्वं लोपे अनुभू इ त इति जातं तत्र **अचो ञ्णिती**ति वृद्धौ **एचोऽयवायावः** इति आवि **लुङ्लङ्लृङ्क्ष्वडुदात्तः** इति अटि **चिणो लुक्** इति तलोपे यणि च कृते ॥ अन्वभावि ॥ आतामि **च्लि लुङी**ति च्लौ **च्लेः सिच्** इति सिचि इचो लोपे **आर्धधातुकस्येड्वलादे**रिति इटि **स्यसिच्सीयुट्तासिषु** इति सूत्रेण सिचश्चिण्वद्भाववत्त्वे **अचो ञ्णिती**ति वृद्धौ आवि **लुङ्लङ्लृङ्क्ष्वि**ति अटि **आदेशप्रत्यययो**रिति सस्य षत्वे ॥ अन्वभाविषाताम् ॥ चिण्वद्भावाभावपक्षे वृद्ध्यभावाद्गुणे अवि च कृते ॥ अन्वभविषाताम् ॥ भावे वर्तमानाद्भूधातोर्**हेतुमति चे**ति सूत्रेण णिचि णकारचकारयोर्लोपे **अचो ञ्णिती**ति वृद्धौ भावि इति जातं तत्र **सनाद्यन्ता धातवः** इति धातुत्वे **वर्तमाने लट्** इति लटस्ते **सार्वधातुके यक्** इति यकि ककलोपे **णेरनिटि** इति सूत्रेणात्र अनिडादार्धधातुकपरत्वात् वकारोत्तरवर्तिन इकारस्य लोपे वकारस्य यकारेण सह योगे टेरेत्वे च कृते ॥ भाव्यते ॥ भावे वर्तमानाद्भूधातोर्**हेतुमति चे**ति सूत्रेण णिचि णकारचकारयोर्लोपे **अचो ञ्णिती**ति वृद्धौ भावि इति जातं तत्र **सनाद्यन्ता धातवः** इति धातुत्वे **अनद्यतनपरोक्षे लिट्** इति लिटि **कास्यनेकाच आम् वक्त-**

चिण्वदिट् । भाविता । आभीयत्वेनासिद्धत्वाण्णिलोपः । भावयिता भावयिषीष्ट अभावि

---

ष्य इति आमि **आम** इति लिटो लोपे **सार्वधातुकार्द्धधातुकयो**रिति गुणे **एचोऽयवायाव** इति अवि च भावयामि ति जातं तत्र **सनाद्यन्ता धातव** इति धातुत्वे **कृञ्चानुप्रयुज्यते लिटी**ति सूत्रेण लिट्परे कृञि प्रयुक्ते भावयाम् कृ लिट् इति जाते लिटस्ते **लिटि धातोरनभ्यासस्ये**ति द्वित्वे **उरत्** इति ऋवर्णस्य रपरे अकारे कृते **हलादिः शेषः** इति रलोपे **कुहोश्चु**रिति कस्य चत्वे **लिटस्तझयोरेशिरेच्** इति तकारस्य एशि शलोपे **इको यणची**ति यणि च कृते ॥ भावयांचक्रे ॥ एवं लिट्परे भुवि प्रयुक्ते भावयांबभूवे लिट्परेऽस्तौ च प्रयुक्ते ॥ भावयामासे ॥ लुटि भूधातोर्णिजन्ततासंपादनपूर्वं वृद्धिं विधाय आवि कृते भावीति जातं तत्र **सनाद्यन्ता धातव** इति धातुत्वाल्लुटस्ते **स्यतासी लृलुटो**रिति तासौ भावितास् त इति जातं तत्र **स्यसिच्सीयुट्तासिषु भावकर्मणो**रिति चिण्वद्भावपक्षे इटि भावि इतास् त इति जातं तत्र **असिद्धवदत्राभात्** इति सूत्रेण आभीयत्वेन चिण्वद्भावजस्य इटोऽसिद्धत्वमाश्रित्य **णेरनिटी**ति सूत्रेण णेर्लोपे वकारस्येटः इकारेण सह योगे कृते भावितास् त इति जातं तत्र **लुटः प्रथमस्य डारौरसः** इति डादेशे डित्वसामर्थ्याद्भस्यापि टेर्लोपे च कृते ॥ भाविता ॥ चिण्वद्भावाभावपक्षे तासौ **आर्द्धधातुकस्येड्वलादे**रिति इटि **सार्वधातुकार्द्धधातुकयो**रिति गुणे **एचोऽयवायाव** इति अयि च कृते ॥ भावयिता ॥ भूधातोर्णिचि तत्र **सनाद्यन्ता धातव** इति धातुत्वे ततश्चाशीर्लिङस्ते समागते **लिङः सीयुट्** इति सीयुटि उटो लोपे **लोपो व्योर्वली**ति यलोपे **आर्द्धधातुकस्येड्वलादे**रिति इटि **सुट् तिथो**रिति सुटि उटो लोपे सकारयोर्मूर्द्धन्यत्वे भावि इषीष्ट इति जातं तत्र **सार्वधातुकार्द्धधातुकयो**रिति गुणे कृते **एचोऽयवायाव** इति अयि **ष्टुना ष्टु**रिति ष्टुत्वे च ॥ भावयिषीष्ट ॥ कर्मणि वर्तमानाद्भूधातोर्**हेतुमति चे**ति णिचि णकारचकारयोर्लोपे **अचो ञ्णिती**ति वृद्धौ **एचोऽयवायाव** इति आवि च भावीति जातं तत्र **सनाद्यन्ता धातव** इति धातुत्वे धातुत्वात् लुङस्ते **च्लि लुङी**ति च्लौ **चिण् भावकर्मणो**रिति च्लेश्चिणि चकारणकारयोर्लोपे **णेरनिटी**ति णेर्लोपे **लुङ्लङ्लृङ्क्ष्वडुदात्तः** इति अटि **चिणो लुक्** इति तकारस्य लोपे ॥ अभावि ॥ कर्मणि वर्तमानात् णिजन्तात्भूधातोः **सनाद्यन्ता धातव** इति धातुत्वे लुङः प्रथमस्य द्विवचने आतामागमे भावि आतामिति जातं तत्र **च्लि लुङी**ति च्लौ **च्लेः सिच्** इति सिचि इचो लोपे **स्यसिच्सीयुट्तासिषु भावकर्मणो**रिति चिण्वद्भावपक्षे इटि **लुङ्लङ्लृङ्क्ष्वडुदात्तः** इति अटि अभावि इस् आतामिति जातं तत्र **असिद्धवदत्राभात्** इति सूत्रेणाभीयत्वेन चिण्वद्भावस्य इटोऽसिद्धत्वमाश्रित्य **णेर-**

अभाविषाताम् अभावयिषाताम् । बुभूषांचक्रे बुभूषिता बुभूषिष्यते बुभूष्यते बोभविष्यते । अकृत्सार्वधातुकयोर्दीर्घः । स्तूयते विष्णुः । स्ताविता स्तोता स्ताविष्यते स्तोष्यते अस्तावि

---

**निटी**ति सूत्रेण येर्लोपे सस्य षत्वे संयोगे च कृते ॥ अभाविषाताम् ॥ चिण्वदिडभावपक्षे आतामि **च्लि लुङी**ति च्लौ **च्लेः सिच्** इति सिचि **आर्द्धधातुकस्येड्वलादे**रिति इटि **सार्वधातुकार्द्धधातुकयो**रिति गुणे **एचोऽयवायाव** इति अयि सस्य षे च कृते ॥ अभावयिषाताम् ॥ भावे वर्तमानाद्भूधातो**र्धातोः कर्मणः समानकर्तृकादिच्छायां वे**ति सनि **सन्यङो**रिति धातोर्द्वित्वे **ह्रस्व** इति अभ्यासान्त्यो ह्रस्वत्वे **अभ्यासे चर्च्च** इति पूर्वभस्य बत्वे सस्य षत्वे च कृते बुभूष इति जातं तत्र **सनाद्यन्ता धातव** इति धातुत्वे भावकर्मणोर्लस्यात्मनेपदमिति लटस्ते समागते **सार्वधातुके यक्** इति यकि अल्लोपे **टित आत्मनेपदानां टेरे** इति टेरेत्वे कृते ॥ बुभूष्यते ॥ भावे वर्तमानाद्बुभूषधातोः लिटस्ते **कास्यनेकाच आम् वक्तव्य** इति आमि **आम** इति लिटो लोपे **कृञ्चानुप्रयुज्यते लिटी**ति लिट्परे कृञि प्रयुक्ते **लिटि धातोरनभ्यासस्ये**ति द्वित्वे **उरत्** इति रपरे अकारे **हलादिः शेष** इति रलोपे **कुहोश्चु**रिति कस्य चत्वे **लिटस्तझयोरेशिरेच्** इत्येशि **इको यणची**ति यणि च कृते ॥ बुभूषां चक्रे ॥ बुभूषधातोर्लुटस्ते **स्यतासी लृलुटो**रिति तासौ **आर्द्धधातुकस्येड्वलादे**रिति इटि **लुटः प्रथमस्ये**ति डात्वे डित्वसामर्थ्यादभस्यापि टेर्लोपे ॥ बुभूषिता ॥ लृटस्ते च **स्यतासी लृलुटो**रिति स्ये इटि सस्य षत्वे **टित आत्मनेपदानां टेरे** इति टेरेत्वे ॥ बुभूषिष्यते ॥ भावकर्मणोर्विद्यमानाद्भूधातो**र्धातोरेकाचो हलादेः क्रियासमभिहारे यङ्** इति यङि **सनाद्यन्ता धातव** इति धातुत्वे धातुत्वाल्लटस्तिपि **सार्वधातुके यक्** इति यकि **सन्यङो**रिति धातोर्द्वित्वे **ह्रस्व** इत्यनेनाभ्यासाचो ह्रस्वत्वे **अभ्यासे चर्च्चे**ति भस्य बत्वे **गुणो यङ्लुको**रिति गुणे **टित आत्मनेपदानां टेरे** इति टेरेत्वे ॥ बोभूयते ॥ भावकर्मणोर्विद्यमानात् यङन्ताद्भूधातोर्लृटस्ते **स्यतासी लृलुटो**रिति स्ये **आर्द्धधातुकस्येड्वलादे**रिति इटि **गुणो यङ्लुको**रिति गुणे ॥ बोभूयिष्यते ॥ कर्मणि वर्तमानात्ष्टुधातोर्लटस्ते **सार्वधातुके यक्** इति यकि **धात्वादेः षः स** इति षस्य सत्वे **अकृत्सार्वधातुकयोर्दीर्घ** इति दीर्घत्वे टेरेत्वे च ॥ स्तूयते ॥ लुटस्ते **स्यतासी लृलुटो**रिति तासौ **लुटः प्रथमस्य डारौरस** इति तस्य डात्वे डित्वसामर्थ्यादभस्यापि टेर्लोपे स्तुता इति जातं तत्र **स्यसिच्सीयुट्** इति इटि **अचोञ्णिती**ति वृद्धौ **एचोयवायाव** इति आवि । स्ताविता । चिण्वदिडभावपक्षे **सार्वधातुकार्द्धधातुकयो**रिति गुणे ॥ स्तोता ॥ एवमेव लृटस्ते **स्यतासी लृलुटो**रिति स्ये **स्यसिच्सीयुट्** इति इटि वृद्धौ आवि टेरेत्वे च ॥ स्ताविष्यते ॥

अस्ताविषाताम् । अस्तोषाताम् । ऋ गतौ । गुणोऽर्तीति गुणः । अर्यते । स्मृ स्मरणे । स्मर्यते सस्मरे । उपदेशग्रहणाच्चिण्वदिट् । आरिता अर्ता स्मारिता स्मर्ता । अनिदितामिति नलोपः । स्रस्यते । इदितस्तु नन्द्यते । संप्रसारणम् । इज्यते ॥ **तनोतेर्यकि** ।६।४।४४। आकारान्तादेशो वा स्यात् । तायते तन्यते ॥ **तपोऽनुतापे च** ।३।१।६५। तपश्च्लेश्चिण् न स्यात्कर्मकर्तर्यनुतापे च । अन्वतप्त पापेन । घुमास्थेतीत्वम् । दीयते धीयते ददे ॥ **आतो युक्चिण्कृतोः** ।७।३।३३। आदन्तानां युगागमः स्याच्चिणि ञ्णिति कृति च । दायिता दाता दायिषीष्ट दासीष्ट अदायि अदायिषाताम् भज्यते ॥ भञ्जेश्च

---

चिण्वद्भावाभावपक्षे गुणे कृते ॥ स्तोष्यते ॥ लुङस्ते **च्लि लुङीति** च्लौ **चिण्भावकर्मणोरि**ति चिणि चकारणकारयोर्लोपे **अचो ञ्णिती**ति वृद्धौ **एचोऽयवायाव** इति आवि **चिणो लुक्** इति तकारलोपे अटि च ॥ अस्तावि ॥ आतामि च्लौ च्लेः सिचि इटो लोपे चिण्वद्भावभाजि इटि वृद्धौ आवि सस्य षत्वे च ॥ अस्ताविषाताम् । चिण्वद्भावाभावपक्षे गुणे ॥ अस्तोषाताम् ॥ कर्मणि वर्तमानात् ऋधातोर्लटस्ते सार्वधातुके यक् इति यकि **गुणोऽर्ती**ति गुणे **अचो रहाभ्यां द्वे** इति यद्वित्वे टेरेत्वे च ॥ अर्य्यते ॥ एवमेव स्मृ स्मरणे इति धातोर्यकि गुणे टेरेत्वे **अचो रहाभ्यां द्वे** इति यद्वित्वे च ॥ स्मर्य्यते ॥ भावकर्मवाचिनः स्रन्सुधातोरमे लटि लटस्ते **सार्वधातुके यक्** इति यकि **अनिदितां हल उपधायाः क्ङिति** इति नलोपे टेरेत्वे च ॥ स्रस्यते ॥ भावकर्मसंबन्धिनो नन्दिधातोरमे लटि लटस्ते **सार्वधातुके यक्** इति यकि इदित्वान्नलोपाभावे टेरेत्वे च ॥ नन्द्यते ॥ यज्धातोर्लटस्ते **वचिस्वपियजादीनां किति** इति संप्रसारणे **इग्यणः संप्रसारणम्** इति यस्येकारे **सार्वधातुके यक्** इति यकि टेरेत्वे च ॥ इज्यते ॥ तन्धातोर्लटस्ते **सार्वधातुके यक्** इति यकि टेरेत्वे ॥ तन्यते ॥ **तनोतेर्यकि** इति सूत्रेण पक्षे आदन्तादेशे ॥ तायते ॥ अनुपूर्वं तप् अमे लुङस्ते आगते **च्लि लुङी**ति च्लौ च्लेः सिचि सिचि इटो लोपे **तपोऽनुतापे च** इत्यनेन तपश्च्लेश्चिणभावे **झलो झली**ति सकारलोपे **झषस्तथोर्धोऽधः** इति धत्वे ॥ अन्वतप्त ॥ दाधाधातोर्धातोर्लटस्ते **घुमास्थागापाजहातिसां हलि** इति दकारधकारोत्तरवर्तिन आकारस्येकारे यकि टेरेत्वे च ॥ दीयते ॥ धीयते ॥ दाधातोरमे लिटस्ते **लिटि धा-**

**चिणि** ।६।४।३३। नलोपो वा स्यात् । अभाजि अभञ्जि लभ्यते ॥ **विभाषा चिणणमुलोः** ।७।१।६९। लभेर्नुमागमो वा स्यात् । अलम्भि अलाभि ॥ इति भावकर्मप्रक्रिया ॥

## ॥ अथ तिङन्ते कर्मकर्तृप्रक्रियाप्रकरणम् ॥

यदा कर्मैव कर्तृत्वेन विवक्षितं तदा सकर्मकाणामप्यकर्मकत्वात्कर्तरि भावे च लकारः ॥ **कर्मवत्कर्मणा तुल्यक्रियः** ।३।१।८७। कर्मस्थया क्रियया तुल्यक्रियः कर्ता कर्मवत्स्यात् । कार्यातिदेशोऽयम् । तेन यगात्मनेपदचिण्चिण्वदिटः स्युः । पच्यते फलम् । भिद्यते काष्ठम् । अपाचि अभेदि । भावे भिद्यते काष्ठेन ॥ इति कर्मकर्तृप्रक्रिया ॥

## ॥ अथ तिङन्ते लकारार्थप्रक्रियाप्रकरणम् ॥

**अभिज्ञावचने लृट्** ।३।२।११२। स्मृतिबोधिन्युपपदे भूतानद्यतने धातोर्लृट् ।

---

**लोपो व्योर्वली**ति यलोपे **स्यसिच्सीयुट्तासिषु भावकर्मणो**रिति. इटि **आतो युक् चिण्कृतो**रिति युकि उको लोपे **सुट्तिथो**रिति सुटि टटो लोपे उभयोः सकारयोः षत्वे ष्टुत्वे च ॥ दायिसीष्ट । इडभावपक्षे । दासीष्ट ॥ दा अग्रे लुङस्ते **लुङ्लङ्लृङ्क्ष्वडुदात्त** इति अटि **च्लि लुङी**ति च्लौ **चिण्भावकर्मणो**रिति चिणि चकारणकारयोर्लोपे **आतो युक् चिण्कृतो**रिति युकि उको लोपे **चिणो लुक्** इति तकारलोपे ॥ अदायि ॥ दा अग्रे लुङ आतामि **च्लि लुङि** इति च्लौ **च्लेः सिच्** इति सिचि इचो लोपे **आतो युक् चिण्कृतो**रिति युकि उको लोपे **स्यसिच्सीयुट्तासिषु भावकर्मणो**रिति इटि **लुङ्लङ्लृङ्क्ष्वडुदात्त** इति अटि सस्य षत्वे ॥ अदायिषाताम् ॥ भञ्ज् अग्रे लटस्ते **सार्वधातुके यक्** इति यकि **अनिदितां हल उपधायाः क्ङिति** नकारलोपे टेरेत्वे च ॥ भज्यते ॥ भञ्ज् अग्रे लुङस्ते **च्लि लुङी**ति च्लौ **चिण्भावकर्मणो**रिति च्लेश्चिणि चकारणकारयोर्लोपे **लुङ्लङ्लृङ्क्ष्वडुदात्त** इति अटि अभञ्ज् इत इति जातं तत्र **भञ्जेश्च चिणि** इति नकारलोपे **अत उपधायाः क्ङिति** इत्युपधावृद्धौ **चिणो लुक्** इति चिणः परस्य तकारस्य लोपे ॥ अभाजि ॥ नकारलोपाभावे उपधावृद्ध्यभावात् श्चुत्वे च ॥ अभञ्जि ॥ लभ् अग्रे लटस्ते **सार्वधातुके यक्** इति यकि टेरेत्वे च ॥ लभ्यते ॥ लभ् अग्रे लुङस्ते **च्लि लुङी**ति च्लौ **चिण्भावकर्मणो**रिति च्लेश्चिणि चकारणकारयोर्लोपे लभ् इत इति जाते **विभाषा चिणणमुलो**रिति नुमि उमो लोपे **लुङ्लङ्लृङ्क्ष्वडुदात्त** इति अटि **चिणो लुक्** इति चिणः परस्य तकारस्य लोपे ॥ अलम्भि ॥ नुमभावपक्षे लुङस्ते च्लौ च्लेश्चिणि **चिणो लुक्** इति तकारलोपे अटि **अत उपधाया** इति वृद्धौ ॥ अलाभि ॥ इति भावकर्मप्रक्रिया ॥

लङोऽपवादः । वस निवासे । स्मरसि कृष्ण गोकुले वत्स्यामः । एवं बुध्यसे चेतयसे इत्यादिप्रयोगेऽपि ॥ **न यदि** ।३।२।११३। यद्योगे उक्तं न । अभिजानासि कृष्ण वने अभुञ्ज्महि ॥ **लट् स्मे** ।३।२।११८। लिटोऽपवादः । यजति स्म युधिष्ठिरः ॥ **वर्तमानसामीप्ये वर्तमानवद्वा** ।३।३।१३१। वर्तमाने ये प्रत्यया उक्तास्ते वर्तमानसामीप्ये भूते भविष्यति च वा स्युः । कदागतोऽसि । अयमागच्छामि । अयमागमं वा । कदा गमिष्यसि । एष गच्छामि गमिष्यामि वा ॥ **हेतुहेतुमतोर्लिङ्** ।३।३।१५६। वा स्यात् । कृष्णं नमेच्चेत्सुखं यायात् । कृष्णं नंस्यति चेत्सुखं यास्यति । भविष्यत्येवेष्यते । नेह । हन्तीति पलायते । विधिनिमन्त्रणेति लिङ् । विधिः प्रेरणं भृत्यादेर्निकृष्टस्य प्रवर्तनम् । यजेत । निमन्त्रणं नियोगकरणमावश्यके श्राद्धभोजनादौ दौहित्रादेः प्रवर्तनम् । इह भुञ्जीत । आमन्त्रणं कामचारानुज्ञा । इहासीत । अधीष्टः सत्कारपूर्वको व्यापारः । पुत्रमध्यापयेद्भवान् । संप्रश्नः संप्रधारणम् । किं भो वेदमधीयीय उत तर्कम् । प्रार्थनं याच्ञा । भो भोजनं लभेय । एवं लोट् ॥ इति लकारार्थप्रक्रिया ॥

---

सन्तु श्रीगुरवोऽस्मासु प्रसादसुमुखाः सदा । यदाश्रयेण प्राज्ञोऽपि सर्वज्ञो जायते जनः ॥ १ ॥

नयविनयमयात्मा श्रीरवाजिक्षितीशो
हरिहरपतिभक्ता मोंघिबा तस्य पत्नी ।
परशिवपदभाजौ तावुभौ सर्वदास्ता-
मखिलदखिलमेतन्निर्देशाज्जनोऽयम् ॥ १ ॥

इति श्रीमत्सद्गुरुश्रीकेशवगुरुकृपाकल्पवल्लरीपल्लवायमानायां प्रयोगमणिमालायां
तिङन्तप्रकरणं समाप्तिमगच्छत्

## ॥ अथ कृदन्ते कृत्यप्रक्रियाप्रकरणम् ॥

**धातोः** ।३।१।९१। आतृतीयाध्यायसमाप्त्यन्तं ये प्रत्ययास्ते धातोः परे स्युः । कृदतिङिति कृत्संज्ञा ॥ **वा सरूपोऽस्त्रियाम्** ।३।१।९४। अस्मिन्धात्वधिकारेऽसरूपोऽपवादप्रत्यय उत्सर्गस्य बाधको वा स्यात् स्त्र्यधिकारोक्तं विना ॥ **कृत्याः** ।३।१।९५। ण्वुल्तृचावित्यतः प्राक् कृत्यसंज्ञाः स्युः ॥ **कर्तरि कृत्** ।३।४।६७। कृत्प्रत्ययः कर्तरि स्यादिति प्राप्ते ॥ **तयोरेव कृत्यक्तखलर्थाः** ।३।४।७०। एते भावकर्मणोरेव स्युः ॥ **तव्यत्तव्यानीयरः** ।३।१।९६। धातोरेते प्रत्ययाः स्युः । एधितव्यम् एधनीयं त्वया । भावे औत्सर्गिकमेकवचनं क्लीबत्वम् । चेतव्यश्चयनीयो वा धर्मस्त्वया ।

---

श्रेयः श्रिये श्रये शश्वत्सर्वविद्याश्रयं शिवम् ॥ यत्कृपालोकनादज्ञोऽप्येति सर्वज्ञतां जनः ॥ १ ॥
वन्दे सरस्वतीं देवीं दयामृततरङ्गिणीम् ॥ यद्दयालोककल्लोलैर्निस्तापं निस्तृपं जगत् ॥ २ ॥
सद्गुरू विश्ववन्द्यौ श्रीविद्यापीयूषवर्षिणौ ॥ नमाम्येकस्वरूपी तौ श्रीकेशवमहेश्वरौ ॥ ३ ॥
नामंनामं मुनीन्रम्यान्रम्यान् रम्योक्तियुक्तिभिः ॥ सूत्रवार्तिकभाष्याणां प्रणेतृन्प्रणयार्णवान् ॥४॥
अल्पज्ञाल्पतरप्रज्ञाग्रगण्योऽपि जनस्त्वयम् ॥ श्रीसद्गुरुकृपालेशालम्बो लिखितुमिच्छति ॥ ५ ॥
यत्किंचित्तत्र करुणावरुणालयिताशयाः ॥ सन्तु साहाय्यदाः श्रीमद्वागीशा गुरुशंकराः ॥ ६ ॥

एष धातुर्वर्तते तत्र **धातो**रिति सूत्रेण आतृतीयाध्यायान्तं वर्तमानानां प्रत्ययानां धातोः परत्र भवितव्यतां विधाय **कृदतिङ्** इति सूत्रेण तिङ्भिन्नानां तेषां प्रत्ययानां कृत्संज्ञा । कृत्संज्ञानां च तेषां **कृत्या** इति सूत्रेण **ण्वुल्तृचा**वित्यतः प्राग्विद्यमानानां प्रत्ययानां कृतायां कृत्यसंज्ञायां **कर्तरि कृत्** इति सूत्रेण पूर्वं कर्तरि कृत्प्रत्यये प्राप्ते **तयोरेव कृत्यक्तखलर्था** इति सूत्रेण अकर्मकाद्धातोर्भावे सकर्मकाच्च धातोः कर्मणि कृत्यक्तखलर्थानां प्राप्तौ सत्यां **तव्यत्तव्यानीयर** इति सूत्रेण अकर्मकादेधधातोर्भावे तव्यति कृते तलोपे **आर्द्धधातुकं शेष** इति तव्यस्यार्द्धधातुकतायां **आर्द्धधातुकस्येड्वलादे**रिति इटि एधितव्य इति जातं तत्र **कृत्तद्धितसमासाश्चे**ति प्रातिपदिकत्वे **ङ्याप्प्रातिपदिकाद्**िति स्वादीनां प्राप्तौ प्रथमैकवचने सौ समागते भावे औत्सर्गिकं वचनं क्लीबत्वमिति क्लीबत्वे **स्वमोरम्** इति सोरमि **अमि पूर्व** इति पूर्वरूपादेशे च कृते ॥ एधितव्यम् ॥ तव्येप्येवमेव । अनीयरि च एधनीयम् त्वया ॥ एवं चिधातोः कर्मणि तव्ये अनीयरि च प्रत्यये **सार्वधातुकार्द्धधातुकयो**रिति गुणे चेतव्य इति जातम् । अनीयरि गुणे च **एचोऽयवायाव** इति सूत्रेण एकारस्यायि कृते चयनीय इति जातं तत्र कृदन्तत्वाद्विभक्तिकार्ये कृते चेतव्यः चयनीयो वा धर्मस्त्वया ॥ पच्धातोः **केलिमर उपसंख्यान-**

---

१ वाऽसरूपोऽस्त्रियाम् ॥ निरवकाशमूलकेन अपवादेन सर्वत्र बाधे प्राप्ते क्वचिदुत्सर्गस्यापि प्रवृत्त्यर्थमिदं तेन 'अचोयत्' ऋहलोर्ण्यत्, इत्यपवादविषये तव्यदादयोऽपि प्रयुज्यन्ते भव्यं भवितव्यम् ।

( केलिमर उपसंख्यानम् ) पचेलिमा माषाः । पक्तव्या इत्यर्थः । भिदेलिमाः सरलाः । भेत्तव्याः । कर्मणि प्रत्ययाः ॥ **कृत्यल्युटो बहुलम्** ।३।३।११३। क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेव ॥ विधेर्विधानं बहुधा समीक्ष्य चतुर्विधं बाहुलकं वदन्ति ॥ १ ॥ स्नात्यनेनेति स्नानीयं चूर्णम् । दीयतेऽस्मै दानीयो विप्रः ॥ **अचो यत्** ।३।१।९७। अजन्ताद्धातोर्यत्स्यात् । चेयम् ॥ **ईद्यति** ।६।४।६५। यति परे आत ईत्स्यात् । देयम् ग्लेयम् ॥ **पोरदुपधात्** । ३।१।९८। पवर्गान्तादुदुपधाद्यत्स्यात् । ण्यतोऽपवादः । शप्यम् लभ्यम् ॥ **एतिस्तुशास्वृदृजुषः क्यप्** ।३।१।१०९। एभ्यः क्यप् स्यात् ॥ **ह्रस्वस्य पिति कृति तुक्** ।६।१।७१। इत्यः स्तुत्यः । शासु अनुशिष्टौ ॥ **शास इदङ्हलोः** ।६।४।३४। शास उपधाया इत्स्यादङि हलादौ क्ङिति । शिष्यः वृत्यः आदृत्यः जुष्यः ॥ **मृजेर्विभाषा** ।३।१।११३। मृजेः

---

मिति केलिमरि **लशक्वतद्धिते** इति ककारस्येत्संज्ञायां **तस्य लोप** इति कलोपे रलोपे संयोगे च पचेलिम इति जातं तत्र विभक्तिकार्ये प्रथमाबहुवचने जसि जलोपे **प्रथमयोः पूर्वसवर्ण** इति पूर्वसवर्णदीर्घत्वे सस्य रुत्वे रस्य विसर्गे च पचेलिमास्तथा माषाः पक्तव्या इत्यर्थः । एवमेव भिद् धातोः केलिमरि भिदेलिमाः सरला भेत्तव्या इत्यर्थः ॥ स्नात्यनेनेत्यत्र बाहुलकत्वात् करणे **तव्यत्तव्यानीयर** इत्यनीयरि विभक्तिकार्ये च कृते स्नानीयम् चूर्णम् ॥ दीयतेऽस्मै इत्यत्रापि संप्रदाने बाहुलकत्वादनीयरि विभक्तिकार्ये च कृते दानीयो विप्रः ॥ चिधातोरचो **यत्** इति यति **आर्द्धधातुकं शेष** इति यतश्चार्द्धधातुकत्वे **सार्वधातुकार्द्धधातुकयो**रिति गुणे विभक्तौ च चेयम् ॥ दाधातोरपि **अचो यत्** इति यति **ईद्यति** इति सूत्रेण दकारोत्तरवर्तिन आकारस्य ईकारे **सार्वधातुकार्द्धधातुकयो**रिति गुणे विभक्तौ च देयम् ॥ ग्लैधातोरपि **अचो यत्** इति यति **आदेच उपदेशेऽशिति** इति सूत्रेण ग्लकारोत्तरवर्तिन ऐकारस्य आकारे कृते ग्लाय इति जातं तत्र **ईद्यति** इति सूत्रेण ग्लकारोत्तरवर्तिन आकारस्य ईकारे कृते ग्ली य इति जातं तत्र **सार्वधातुकार्द्धधातुकयो**रिति गुणे विभक्तिकार्ये च ग्लेयम् ॥ शप्धातोरपि **पोरदुपधात्** इति यति संयोगे विभक्तौ च शप्यम् ॥ एवमेव लभ्धातोः **पोरदुपधात्** इति यति संयोगे विभक्तौ च लभ्यम् ॥ इण् गतौ इत्यस्माद्धातोः **एतिस्तुशास्वृदृजुषः क्यप्** इति क्यपि कपयोर्लोपे इ य इति जातं तत्र **ह्रस्वस्य पिति कृति तुक्** इति तुकि उकोलोपे संयोगे विभक्तौ च इत्यः ॥ एवमेव स्तुधातोः क्यपि स्तुत्यः ॥ शासु अनुशिष्टौ इत्यस्माद्धातोरपि **एतिस्तुशास्वृदृजुषः क्यप्** इति क्यपि कपयोर्लोपे शास् य इति जातं तत्र **शास इदङ्हलो**रित्यनेन उपधाया इकारे **आदेशप्रत्यययो**रिति सस्य षत्वे संयोगे विभक्तौ च शिष्यः ॥ वृञ् धातोः **एतिस्तुशास्वृदृजुषः क्यबिति** क्यपि कपयोर्लोपे **ह्रस्वस्य पिति कृति तुक्** इति तुकि उकोलोपे संयोगे विभक्तौ च

कप्यत्वा । मृज्यः ॥ **ऋहलोर्ण्यत्** ।३।१।१२४। ऋवर्णान्ताद्धलन्ताच्च धातोर्ण्यत् । कार्यम् हार्यम् धार्यम् ॥ **चजोः कु घिण्यतोः** ।७।३।५२। चजोः कुत्वं स्याद्घिति ण्यति च परे ॥ **मृजेर्वृद्धिः** ।७।२।११४। मृजेरिको वृद्धिः सार्वधातुकार्धधातुकयोः । मार्ग्यः ॥ **भोज्यं भक्ष्ये** ।७।३।६९। भोग्यमन्यत् ॥ इति कृत्यप्रक्रिया ॥

## ॥ अथ कृदन्ते कृत्प्रक्रियाप्रकरणम् ॥

**ण्वुल्तृचौ** ।३।१।१३३। धातोरेतौ स्तः । कर्तरि कृदिति कर्त्रर्थे ॥ **युवोरनाकौ** ।७।१।१। यु वु एतयोरनाकौ स्तः । कारकः कर्ता ॥ **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** ।३।१।१३४। नन्द्यादेर्ल्युर्ग्रह्यादेर्णिनिः पचादेरच् स्यात् । नन्दयतीति नन्दनः । जनमर्दयतीति जनार्दनः । लवणः । ग्राही स्थायी मन्त्री । पचादिराकृतिगणः ॥

---

कृत्यः ॥ आङ्पूर्वकात् दृधातोः क्यपि तुकि विभक्तिकार्ये च कृते आदृत्यः ॥ जुषू सेवायां धातोः क्यपि कपयोर्लोपे संयोगे विभक्तिकार्ये च जुष्यः ॥ मृज् धातोर्**मृजेर्विभाषे**ति क्यपि कपयोर्लोपे संयोगे वि० का० कृ० मृज्यः ॥ डुकृञ्करणे धातोरग्रे **ऋहलोर्ण्यत्** इति ण्यति णतयोर्लोपे **अचोञ्णिती**ति वृद्धौ विभक्तौ **अचो रहाभ्यां द्वे** इति यद्वित्वे कार्य्यम् ॥ एवं हृञ्धातोर्ण्यति हार्य्यम् ॥ धृञ् धातोर्ण्यति धार्य्यं ॥ मृजूधातोः क्यबभावपक्षे **ऋहलोर्ण्यत्** इति ण्यति णतयोर्लोपे **चजोः कुघिण्यतो**रिति कुत्वे **मृजेर्वृद्धि**रिति वृद्धौ विभक्तौ च मार्ग्यः ॥ भुजधातो**र्ऋहलोर्ण्यत्** इति ण्यति **सार्वधातुकार्द्धधातुकयो**रिति गुणे संयोगे विभक्तौ च भोज्यम् भक्ष्ये ॥ पक्षे **चजोः कुघिण्यतो**रिति कुत्वे गुणे च भोग्यम् ॥ इति कृत्यप्रक्रिया ॥

करोतीति कारक इत्यत्र **ण्वुलतृचौ** इति ण्वुलि णस्य **चुटू** इत्यनेन लस्य **हलन्त्य**मित्यनेनेत्संज्ञायां **तस्य लोप** इति तयोर्लोपे कृ वु इत्यवशिष्टं तत्र **युवोरनाकौ** इत्यनेन योरकादेशे **अचोञ्णिती**ति वृद्धौ विभक्तौ च कारकः ॥ एवं करोतीति कर्ता इत्यत्रापि **ण्वुलतृचौ** इत्यनेन तृचि चलोपे **आर्द्धधातुकं शेष** इति तृच आर्धधातुकत्वे **सार्वधातुकार्द्धधातुकयो**रिति गुणे कर्तृ इति जातं तत्र प्रथमैकवचने सौ **ऋदुशनस्पुरुदंसोनेहसां चे**ति तकारोत्तरवर्तिनऋकारस्य अनङि ङस्य नकारोत्तरवर्त्यकारस्य चेत्संज्ञायां लोपे च **हल्ङ्याब्भ्य** इति सूत्रेण सुलोपे **सर्वनामस्थाने चासंबुद्धौ** इति नान्तपदोपधाया दीर्घत्वे **न लोपः प्रातिपदिकान्तस्ये**ति नकारलोपे च कृते कर्ता ॥ नन्दयतीति नन्दन इत्यत्र नन्दिधातो**र्नन्दिग्रहिपचादिभ्यो ल्युणिन्यच** इति ल्युप्रत्यये समागते लकारलोपे **युवोरनाकौ** इति योरनादेशे संयोगे विभक्तौ च नन्दनः ॥ एवमेव जनमर्दयतीति जनार्दन इत्यत्रापि ल्यौ ललोपे योरनादेशे च जनार्दनः ॥ लूञ् छेदने धातो**र्नन्दिग्रहिपचादिभ्यो ल्युणिन्यच** इति ल्यौ ललोपे योरनादेशे

**इगुपधज्ञाप्रीकिरः कः** ।३।१।१३५। एभ्यः कः स्यात् । बुधः कृशः ज्ञः प्रियः किरः ॥ **आतश्चोपसर्गे** ।३।१।१३६। प्रज्ञः सुग्लः ॥ **गेहे कः** ।३।१।१४४। गेहे कर्तरि ग्रहेः कः स्यात् । गृहम् ॥ **कर्मण्यण्** ।३।२।१। कर्मण्युपपदे धातोरण् प्रत्ययः स्यात् । कुम्भं करोतीति कुम्भकारः ॥ **आतोऽनुपसर्गे कः** ।३।२।३। आदन्ताद्धातोरनुपसर्गात्कर्मण्युपपदे कः स्यात् । आतो लोपः । अणोऽपवादः । गोदः धनदः कम्बलदः । अनुपसर्गे किम् । गोसंदायः । ( मूलविभुजादिभ्यः कः ) मूलानि विभु-

---

**सार्वधातुकार्धधातुकयो**रिति गुणे नन्दादिगणे निपातनात् नस्य णत्वे विभक्तौ च लवणः ॥ गृह्णातीति ग्राही इत्यत्र गृहिधातो**र्नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** इति णिनि णकारेकारयोर्लोपे संयोगे ग्राहिन् इति जातं तत्र सौ **हल्ङ्याब्भ्य** इति सुलोपे **अत उपधाया** इति वृद्धौ **नलोपः प्रातिपदिकान्तस्ये**ति नलोपे च ग्राही ॥ एवं तिष्ठतीति स्थायी इत्यत्र स्थाधातो**र्नन्दिग्रहिपचादिभ्य** इति सूत्रेण णिनि णकारेकारयोर्लोपे **आतो युक् चिण्कृतो**रिति युकि उकौ लोपे संयोगे **सर्वनामस्थाने चासंबुद्धौ** इत्युपधादीर्घत्वे **नलोपः प्रातिपदिकान्तस्ये**ति नलोपे च स्थायी ॥ एवं मन्त्री ॥ एवं बोधयतीति बुध इत्यत्र बुधधातो**रिगुपधज्ञाप्रीकिरः क** इति सूत्रेण कप्रत्यय आगते **लशक्वतद्धिते** इति ककारस्येत्संज्ञाया **तस्य लोप** इति लोपे च बुध् अ इति जाते तत्र **पुगन्तलघूपधस्य चे**ति गुणे प्राप्ते **क्ङिति चे**ति गुणाभावे संयोगे विभक्तौ च बुधः एवं कृशः ॥ जानातीति ज्ञ इत्यत्र ज्ञाधातो**रिगुपधज्ञाप्रीकिरः कः** इति के कलोपे **आतो लोप इटि चे**ति आकारलोपे संयोगे विभक्तौ च ज्ञः ॥ प्रीणातीति प्रिय इत्यत्र प्रीधातो**रिगुपधज्ञाप्रीकिरः क** इति के कलोपे **अचि श्नुधातु**रिति इयङि संयोगे च कृते प्रियः ॥ एवं किरतीति किर इत्यत्र कृधातो**रिगुपधज्ञाप्रीकिरः क** इति के कलोपे **ऋत इद् धातो**रिति सूत्रेण रपरे इकारे जाते संयोगे विभक्तौ च किर ॥ प्रपूर्वकज्ञाधातो **आतश्चोपसर्गे कः** इति के कलोपे **आतो लोप इटि चे**त्याकारलोपे संयोगे च प्रज्ञ ॥ सुपूर्वकग्लैधातोः **आदेच उपदेशेऽशिति** इत्यनेन ऐकारस्य आत्वे **आतश्चोपसर्गे** इति कप्रत्यये कलोपे कृते कृते च **आतो लोप इटि** चेत्यनेनाकारलोपे संयोगे च सुग्ल ॥ ग्रहिधातो**र्गेहे क** इति सूत्रेण के कलोपे **ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति चे**ति सूत्रेण सम्प्रसारणे कृते **पुगन्तलघूपधस्ये**ति गुणे प्राप्ते **क्ङिति चे**ति गुणाभावे संयोगे विभक्तौ च गृहम् ॥ कुम्भं करोतीत्यत्र **कर्मण्यण्** इत्यणि निशिष्टस्य प्रातिपदिकत्वे **सुपो धातुप्रातिपदिकयो**रिति सुब्लोपे कुम्भ कृ अ इति जाते **अचो ञ्णिती**ति वृद्धौ कुम्भकारः ॥ गां ददातीत्यत्र **आतोऽनुपसर्गे क** इति कलोपे **आतो लोप इटि चे**त्याकारलोपे संयोगे च गोदः ॥ एवं धनदः कम्बलदः इत्याद्यूह्यम् ॥ सूत्रे अनुपसर्गे इत्युक्तत्वात् गां सम्प्रददातीत्यत्र **आतो**-

जति मूलविभुजो रथः । आकृतिगणोऽयम् । महीध्रः कुध्रः ॥ **चरेष्टः ।३।२।१६।** अधिकरणे उपपदे । कुरुचरः ॥ **भिक्षासेनादायेषु च ।३।२।१७।** भिक्षाचरः सेनाचरः । आदायेति ल्यबन्तम् । आदायचरः ॥ **कृञो हेतुताच्छील्यानुलोम्येषु ।३।२।२०।** एषु द्योत्येषु करोतेष्टः स्यात् ॥ **अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्य ।८।३।४६।** आदुत्तरस्यानव्ययस्य विसर्गस्य समासे नित्यं सादेशः करोत्यादिषु परेषु । यशस्करी विद्या श्राद्धकरः वचनकरः ॥ **एजेः खश् ।३।२।२८।** ण्यन्तादेजेः खश् स्यात् ॥ **अरुर्द्विषदजन्तस्य मुम् ।६।३।६७।** अरुषो द्विषतोऽजन्तस्य च मुमागमः स्यात्खिदन्ते परे न त्वव्ययस्य । शित्वाच्छबादिः । जनमेजयतीति जनमेजयः ॥ **प्रियवशे वदः खच् ।३।२।३८।** प्रियंवदः वशंवदः ॥ **आत्ममाने खश्च ।३।२।८३।** स्वकर्मके मनने वर्तमानान्मन्यतेः सुपि खश् स्यात्

---

ऽनुपसर्गे क इति कप्रत्ययाभावे **कर्मण्यण्** इत्यनेन अणि **आतो युक्चिण्कृतोः** रिति युकि उको लोपे संयोगे विभक्तौ च गोसंप्रदायः ॥ मूलानि विभुजतीत्यत्र **मूलविभुजादिभ्यः कः** इति के कलोपे संयोगे च मूलविभुजो रथः ॥ एवं महीं धरतीति महीध्रः ॥ कुं धरतीति कुध्रः इत्यादयो ज्ञेयाः ॥ कुरुषु चरतीत्यत्र सुब्लोपे **चरेष्ट** इति टे टस्येत्संज्ञायां लोपे संयोगे च कुरुचरः ॥ एवं भिक्षाचरः सेनाचरः आदायचरः इति रूपाणि ज्ञेयानि ॥ यशः करोतीत्यत्र सुब्लोपे **कृञो हेतुताच्छिल्यानुलोम्येषु** इति टे टलोपे **अतःकृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्येति** विसर्गस्य सकारे यशस्कृ अ इति जातं तत्र **सार्वधातुकार्धधातुकयो**रिति गुणे यशस्करः **टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरप** इति टित्वात् ङीपि ङपयोर्लोपे भत्वे **यस्येति** चेत्यकारलोपे संयोगे विभक्तौ च यशस्करी विद्या ॥ ताच्छील्ये श्राद्धं कर्तुं शीलमस्येति श्राद्धकरः ॥ वचनं करोतीत्यत्र आनुलोम्यात्कृञष्टे टलोपे गुणे च वचनकरः ॥ जनं एजयतीत्यत्र **हेतुमति चेति** णिचि णचयोर्लोपे **एजेः खश्** इति खशि खशयोर्लोपे **कर्तरि शप्** इति शपि शपयोर्लोपे जन एज् इ अ अ इति जातं तत्र **अरुर्द्विषदजन्तस्य मुम्** इति सूत्रेण मुमि उमौ लोपे जनम् एज् इ अ अ इति जातं तत्र **सार्वधातुकार्धधातुकयो**रिति गुणे जनम् एज् ए अ अ इति जातं तत्र **एचोऽयवायावः** इति अयि संयोगे जनमेजय अ इति जातं तत्र **अतो गुणे** इति पररूपैकादेशे विभक्तौ च जनमेजयः ॥ प्रियं वदतीत्यत्र सुब्लोपे **प्रियवशे वदः खच्** इति खचि खचयोर्लोपे **अरुर्द्विषदजन्तस्य मुम्** इति मुमि उमौ लोपे संयोगे च ॥ प्रियंवदः ॥ एवं वशंवदतीति वशंवदः ॥ आत्मानं पण्डितं मन्यत इत्यत्र **सुपो धातुप्रातिपदिकयो**रिति सुब्लोपे **आत्ममाने खश्चेति** खशि **लशक्वतद्धिते** इति खस्येत्संज्ञायां **हलन्त्यमिति**

चाण्णिनिः। पण्डितमात्मानं मन्यते पण्डितंमन्यः पण्डितमानी ॥ **अन्येभ्योऽपि दृश्यन्ते** ।३।२।७५। मनिन् क्वनिप् विच् एते प्रत्यया धातोः स्युः ॥ **नेड्वशि कृति** ।७।२।८। वशादेः कृत इण्न स्यात्। शॄ हिंसायाम्। सुशर्मा प्रातरित्वा ॥ **विड्वनोरनुनासिकस्यात्** ।६।४।४१। अनुनासिकस्यात्स्यात्। विजायत इति विजावा। ओणृ अपनयने। अवावा। विच्। रुष रिष हिंसायाम्। रोट् रेट् सुगण् ॥ **क्विप् च** ।३।२।७६। अयमपि दृश्यते। उखास्रत् पर्णध्वत् वाहभ्रट् ॥ **सुप्यजातौ णि**-

---

शस्येत्संज्ञाया **तस्य लोप** इति खशयोर्लोपे पण्डितमन्य इति जाते तत्र **अरुर्द्विषदजन्तस्य मुम्** इति मुमि उमो लोपे विभक्तौ च पण्डितमन्य ॥ एवं आत्मानं पण्डितं मन्यत इत्यत्र **आत्ममाने** खश्चेति सूत्रे चकारग्रहणात्पक्षे णिनि सुब्लोपे णस्येत्संज्ञाया लोपे च पण्डितमन् इन् इति जाते तत्र प्रथमैकवचने सौ **अत उपधाया** इति सूत्रेण अजन्ताङ्गवृद्धौ **सर्वनामस्थाने चासंबुद्धौ** इति नान्तोपधावृद्धौ पण्डितमानिन् स् इत्यवशिष्टे **हल्ङ्याब्भ्य** इति सुलोपे **नलोपः प्रातिपदिकान्तस्ये**ति नलोपे च जाते पण्डितमानी ॥ सुपूर्वकशॄधातोरन्**येभ्योपि दृश्यन्ते** इत्यनेन मनिनि सुशॄ मनिन् इति जाते तत्र इन्भागलोपे मन्भागस्य चार्द्धधातुकत्वे **सार्वधातुकार्द्धधातुकयो**रिति गुणे **आर्द्धधातुकस्येड्वलादे**रिति इटि प्राप्ते **नेड्वशिकृति** इत्यनेनेटो निषेधे **सर्वनामस्थाने चासंबुद्धौ** इति नान्तोपधादीर्घत्वे **नलोपः प्रातिपदिकान्तस्ये**ति नलोपे च सुशर्मा ॥ प्रातः पूर्वकेण्धातोर**न्येभ्योऽपि दृश्यन्ते** इत्यनेन क्वनिपि ककलोपे पलोपे इलोपे च प्रातर् इ वन् इति जाते तत्र सयोगे **ह्रस्वस्य पिति कृति तुक्** इति तुकि उकोलोपे **सर्वनामस्थाने चासंबुद्धा**विति नान्तोपधादीर्घत्वे नलोपे च प्रातरित्वा ॥ विपूर्वकजन्धातोः क्वनिपि कपयोरिकारस्य च लोपे विजन् वन् इति जाते तत्र **विड्वनोरनुनासिकः स्यात्** इति नकारस्याकारे **अकः सवर्णे दीर्घ** इति दीर्घत्वे विजावन् इति जाते तत्र **सर्वनामस्थाने चासंबुद्धौ** इति नान्तोपधादीर्घे नलोपे च ॥ विजावा ॥ ओणृ अपनयने इति धातोर्वनिपि **विड्वनोरनुनासिकः स्यात्** इति णकारस्याकारे ओ आवन् इति जाते तत्र **एचोऽयवायावः** इति अवादेशे सौ नान्तोपधादीर्घे नलोपे च अवावा ॥ रुष् हिंसाया धातोरन्**येभ्योपि दृश्यन्ते** इति विचि चलोपे इलोपे **वेरपृक्तस्ये**ति वलोपे **पुगन्तलघूपधस्ये**ति गुणे सौ सुलोपे **झलां जशोऽन्ते** इति षस्य डे **वावसाने** इति डस्य टे च रोट् ॥ एवं रिष् हिंसायामिति धातोर्विचि रेट् ॥ एवं सुपूर्वकगणधातोर्विचि सुगण् इत्यादयो विच्यन्ता ज्ञेयाः। उखा स्रंसतीत्यत्र **क्विप् च** अयमपि दृश्यते इति क्विपि उखास्रंस् क्विप् इति जाते तत्र ककलोपे पलोपे इलोपे **वेरपृक्तस्ये**ति वलोपे सौ सुलोपे च उखास्रंस् इत्यवशिष्टे तत्र **अनिदितां हल उपधायाः क्ङिति** इति नलोपे **वसुस्रंसुध्वंस्वनडुहां द** इति सस्य दत्वे **वावसाने** इति दस्य तकारे च उखास्रत् ॥ एवं पर्णानि ध्वंसतीति

**निस्ताच्छील्ये ।३।२।७८।** अजात्यर्थे सुपि धातोर्णिनिस्ताच्छील्ये द्योत्ये । उष्णभोजी ॥ **मनः ।३।२।८२।** सुपि मन्यतेर्णिनिः स्यात् । दर्शनीयमानी ॥ **खित्यनव्ययस्य ।६।३।६६।** कालिंमन्या ॥ **करणे यजः ।३।२।८५।** करणे उपपदे भूतार्थयजेर्णिनिः कर्तरि । सोमेनेष्टवान् सोमयाजी । अग्निष्टोमयाजी ॥ **दृशेः क्वनिप् ।३।२।९४।** कर्मणि भूते । पारं दृष्टवान् पारदृश्वा ॥ **राजनि युधि कृञः ।३।२।९५।** क्वनिप्स्यात् । युधिरन्तर्भावितण्यर्थः । राजानं योधितवान् राजयुध्वा राजकृत्वा ॥ **सहे च ।३।२।९६।** कर्मणीति निवृत्तम् । सह योधितवान् सहयुध्वा सहकृत्वा ॥ **सप्तम्यां जनेर्डः ।३।२।९७ तत्पुरुषे कृति बहुलम् ।६।३।१४।** ङेरलुक् ।

---

पर्णध्वत् इति ज्ञेयम् ॥ वाहाद्भ्रन्स्यत इति वाहभ्रन्स् इत्यत्र **क्विप्चेति** क्विपि क्विपो लोपे **अनिदितां हल उपधायाः क्ङिति** इति नलोपे **व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः** इति सस्य षत्वे सौ सुलोपे **झलां जशोऽन्ते** इति षस्य डत्वे **वावसाने** इति डस्य टे वाहभ्रट् ॥ उष्णं भोक्तुं शीलमस्येत्यत्र **सुप्यजातौ णिनिस्ताच्छील्ये** इति णिनि णलोपे इलोपे **पुगन्तलघूपधस्येति** गुणे सौ सुलोपे नान्तोपधादीर्घत्वे नलोपे च उष्णभोजी ॥ दर्शनीयमात्मानं मन्यत इत्यत्र सुब्लोपे **मनः** इति सूत्रेण णिनौ णलोपे इलोपे **अत उपधाया** इत्युपधादीर्घत्वे सौ सुलोपे दीर्घे **नलोपः प्रातिपदिकान्तस्येति** नलोपे च दर्शनीयमानी ॥ आत्मानं कालीं मन्यते सा इत्यत्र **आत्ममाने खश्चेति** खशि खलोपे शलोपे **दिवादिभ्यः श्यन्** इति श्यनि कालीं मन्य अ इति जातं तत्र **अतो गुणे** इति पररूपे **अजाद्यतष्टाप्** इति टापि टलोपे **अकः सवर्णे** इति दीर्घे सौ हल्ङ्याब्भ्य इति सुलोपे **खित्यनव्ययस्येति** ह्रस्वे **अरुर्द्विषदजन्तस्येति** मुमि उमो लोपे च कालिंमन्या ॥ सोमेनेष्टवानित्यत्र **करणे यज** इति सूत्रेण णिनौ सोमयज् इन् इति जातं तत्र **अत उपधाया** इति वृद्धौ सौ सुलोपे **सर्वनामस्थाने चासंबुद्धौ** इत्युपधादीर्घत्वे **नलोपः प्रातिपदिकान्तस्येति** नलोपे च सोमयाजी ॥ एवं अग्निष्टोमयाजी ॥ पारं दृष्टवानित्यत्र **दृशेः क्वनिप्** इति क्वनिपि कलोपे इलोपे पलोपे सुब्लोपे च पारदृश् वन् इत्यवशिष्टं तत्र सौ सुलोपे नान्तोपधादीर्घे नलोपे च पारदृश्वा ॥ राजानं योधितवानित्यत्र **राजनि युधि कृञः** इत्यनेन क्वनिपि कलोपे इलोपे पलोपे सुब्लोपे च राजयुध् वन् इति जातं तत्र सौ सुलोपे नान्तोपधादीर्घे नलोपे च राजयुध्वा ॥ एवं राजानं कृतवानित्यत्र **राजनि युधि कृञ** इति क्वनिपि कलोपे इलोपे पलोपे सुब्लोपे च राजकृ वन् इति जातं तत्र **ह्रस्वस्य पिति कृति तुक्** इति तुकि राजकृत्वा ॥ सह योधितवानित्यत्र **सहे चेति** सूत्रेण क्वनि सहयुध्वा ॥ सहकृत्वा ॥ सरसिजातमित्यत्र **सप्तम्यां जनेर्ड** इति डे डस्येत्संज्ञायां लोपे सुब्लोपे च सरस् जन् अ इति जातं तत्र **टेः**

सरसिजं सरोजम् ॥ **उपसर्गे च संज्ञायाम्** ।३।२।९९। प्रजा स्यात्सन्ततौ जने ॥ **क्तक्तवतू निष्ठा** ।१।१।२६। एतौ निष्ठासंज्ञौ स्तः ॥ **निष्ठा** ।३।२।१०२। भूतार्थवृत्तेर्धातोर्निष्ठा स्यात् । तत्र तयोरेवेति भावकर्मणोः क्तः । कर्तरि कृदिति कर्तरि क्तवतुः । उकावितौ । स्नातं मया । स्तुतस्त्वया विष्णुः । विश्वं कृतवान् विष्णुः ॥ **रदाभ्यां निष्ठातो नः पूर्वस्य च दः** ।८।२।४२। रदाभ्यां परस्य निष्ठातस्य नः स्यान्निष्ठापेक्षया पूर्वस्य धातोर्दस्य च । शॄ हिंसायाम् । ऋत इत् । रपरः । णत्वम् । शीर्णः भिन्नः छिन्नः ॥ **संयोगादेरातो धातोर्यण्वतः** ।८।२।४३। निष्ठातस्य नः स्यात् । द्राणः ग्लानः ॥ **ल्वादिभ्यः** ।८।२।४४। एकविंशतेर्लूञादिभ्यः प्राग्वत् । लूनः । ज्याधातुः । ग्रहिज्येति संप्रसारणम् ॥ **हलः** ।६।४।२। अङ्गावयवाद्धलः परं यत्संप्रसारणं तदन्तस्य दीर्घः । जीनः ॥ **ओदितश्च** ।८।२।४५। भुजो भुग्नः ।

---

इति सूत्रेण जन् धातोरनुनासिकस्यात्वे लोपे सस्य रुत्वे उत्वे गुणे संयोगे विभक्तौ च सरोजम् ॥ **तत्पुरुषे कृति बहुलमिति** सूत्रेण ङ्योपाभावपक्षे ॥ सरसिजम् ॥ प्रकर्षेण जायते इत्यर्थे प्रपूर्वकाज्जन्धातोः **उपसर्गे च संज्ञायां** ड इति सूत्रेण डप्रत्यये डित्त्वाट्टिलोपे संयोगे **अजाद्यतष्टाप्** इति टापि सौ **हल्ङ्याब्भ्य** इति सुलोपे च प्रजा ॥ स्नाधातुर्वर्तते तत्र **निष्ठा** इति सूत्रेण निष्ठा प्राप्ता निष्ठाशब्देन किं बोध्यमितिचेत् **क्तक्तवतू निष्ठा** इति सूत्रेण क्तस्य क्तवतोश्च निष्ठासंज्ञा ततस्तौ द्वावपि प्राप्तौ तत्र **तयोरेव कृत्यक्तखलर्थाः** इति सूत्रेणात्र भावे क्ते जाते **लशक्वतद्धिते** इति ककलोपे सौ सोरमि च स्नातम् ॥ कर्मणि च क्ते जाते स्तुतस्त्वया विष्णुरिति जातम् ॥ विश्वं कृतवान् इत्यत्र **कर्तरि कृत्** इति सूत्रेण भूतार्थवृत्तेः कृधातोः क्तवतौ समागते ककलोपे तकारोत्तरवर्त्युकारलोपे च कृतवत् इति जातं तत्र दीर्घे **उगिदचां सर्वनामस्थाने धातोरि**ति नुमि उभो लोपे कृतवन्त् इति जातं तत्र सौ सुलोपे **संयोगान्तस्ये**ति तलोपे कृतवान् ॥ शॄ हिंसायां धातोः इति सूत्रेण क्तप्रत्यये जाते ककलोपे **रदाभ्यां निष्ठातो नः पूर्वस्य च दः** इति सूत्रेण तकारस्य नकारे **ऋत इद्धातोरि**ति रपरे इकारे शिर् न इति जातं तत्र **अट्कुप्वाङ्नुम्व्यवायेऽपी**ति नस्य णत्वे विभक्तौ च शीर्णः ॥ एवं भिद्धातोः परतः क्तप्रत्यये **रदाभ्यां निष्ठातो नः पूर्वस्य च द** इति तकारस्य नकारे दकारस्य च नकारे भिन्नः ॥ एवमेव छिन्नः ॥ द्रा धातोर्निष्ठेति क्ते ककलोपे **संयोगादेरातो धातोर्यण्वत** इति तकारस्य नकारे नकारस्य च णत्वे द्राणः ॥ ग्लानः ॥ लूञ् धातोर्निष्ठेति क्ते **ल्वादिभ्य** इति सूत्रेण तकारस्य नकारे लूनः ॥ ज्याधातोर्निष्ठेति क्ते ककलोपे ग्रहिज्येति प्रवर्तमाने संप्रसारणाच्चेति आकारस्य पूर्वरूपे **ल्वादिभ्य** इति तकारस्य नकारे **हलः** इति सूत्रेण दीर्घे विभक्तौ च जीनः ॥ भुजो भङ्ग धातोर्निष्ठेति क्ते ककलोपे **ओदितश्चे**ति

टुओश्वि । उच्छूनः ॥ **शुषः कः** ।८।२।५१। निष्ठातस्य कः । शुष्कः ॥ **पचो वः** ।८।२।५२। पक्वः । क्षै हर्षक्षये ॥ **क्षायो मः** ।८।२।५३। क्षामः ॥ **निष्ठायां सेटि** ।६।४।५२। णेर्लोपः । भावितः भावितवान् । दृह् हिंसायाम् ॥ **दृढः स्थूलबलयोः** ।७।२।२०। स्थूले बलवति च निपात्यते ॥ **दधातेर्हिः** ।७।४।४२। तादौ किति । हितम् ॥ **दोदद्घोः** ।७।४।४६। घुसंज्ञकस्य दा इत्यस्य दद् स्यात्तादौ किति । चर्त्वम् । दत्तः ॥ **लिटः कानज्वा** ।६।२।१०६। **क्वसुश्च** ।६।२।१०७। लिटः कानच् क्वसुश्च वा स्तः । तङानावात्मनेपदम् । चक्राणः ॥ **म्वोश्च** ।८।२।६५। मान्तस्य धातोर्नत्वं म्वोः परतः । जगन्वान् ॥ **लटः शतृशानचावप्रथमासमाना-**

---

निष्ठासंबन्धिनस्तकारस्य नकारे **चोः कुरि**ति जस्य गत्वे सुग्नः ॥ उदुपसर्गपूर्वकटुओश्वि गतिवृद्ध्यो धातोरादि**र्ञिटुडव** इति टोरित्संज्ञायां **उपदेशेऽजनुनासिक इदि**त्यनेन ओकारस्य चेत्संज्ञायां **तस्य लोप** इति तयोर्लोपे च उत्श्वि इत्यवशिष्टं तत्र **निष्ठे**ति सूत्रेण क्ते कलोपे श्वयतेर्यजादित्वात् संप्रसारणे पूर्वरूपैकादेशे **हल** इति दीर्घे विभक्तौ च उच्छूनः ॥ शुष् धातो**र्निष्ठे**ति क्ते कलोपे **शुषः कः** इति तकारस्य ककारे विभक्तौ च शुष्कः ॥ डुपचष्पाके धातोर्डुलोपे सलोपे अलोपे च **निष्ठे**ति क्ते कलोपे **पचो व** इति तकारस्य वकारे तस्यासिद्धत्वेन झल् परत्वात् **चोः कुरि**ति चस्य कत्वे विभक्तौ च पक्वः ॥ क्षै धातो**र्निष्ठे**ति क्ते कलोपे **आदेच उपदेशेऽशिति** इति सूत्रेण ऐकारस्याकारे **क्षायो म** इत्यनेन तकारस्य मकारे विभक्तौ च क्षामः ॥ णिजन्ताद्भूधातो**र्निष्ठे**ति क्ते कलोपे णलोपे चलोपे च भू इत इति जाते **अचो ञ्णिती**ति वृद्धौ आवि भाव् इत इति जातं तत्र **आर्द्धधातुकस्येड्वलादे**रिति इटि भाव् इ इत इति जातं तत्र **निष्ठायां सेटी**ति णेर्लोपे संयोगे विभक्तिकार्ये च कृते भावितः ॥ एवं क्तवति इटि णिलोपे वृद्धौ आवि **उगिदचां सर्वनामस्थाने** इति नुमि उमो लोपे उपधादीर्घत्वे विभक्तिकार्ये च भावितवान् ॥ दृह्धातो**र्निष्ठे**ति क्ते कलोपे **हो ढ** इति हस्य ढत्वे **झषस्तथोर्धोध** इति तकारस्य धत्वे **ष्टुना ष्टुरि**ति धस्य ढत्वे **ढो ढे लोप** इति ढलोपे विभक्तौ च दृढः ॥ धाधातो**र्निष्ठे**ति क्ते कलोपे **दधातेर्हिरि**ति धाकारस्य हिकारे विभक्तिकार्ये च कृते हितम् ॥ दाधातो**र्निष्ठे**ति क्ते कलोपे **दो दद्घोरि**ति सूत्रेण दा इत्यस्य ददि कृते **खरि चे**ति द्वितीयदस्य तकारे विभक्तिकार्ये च दत्तः ॥ चकारेति चक्राण इत्यत्र **लिटः कानज्वे**ति कानचि ककारचकारयोर्लोपे कृ आन इति जातं तत्र **लिटि धातोरनभ्यासस्ये**ति धातोर्द्वित्वे अभ्यासकार्ये **इको यणची**ति यणि **रषाभ्यां नो णः समानपदे** इति नस्य णत्वे विभक्तिकार्ये च कृते चक्राणः ॥ जगामेति जगन्वानित्यत्र **क्वसुश्चे**त्यनेन क्वसौ कलोपे सान्तःपात्युकारलोपे जगम्वस् इति जातं तत्र **म्वोश्चे**त्यनेन मस्य नत्वे जगन्वसि इति जाते **सान्तमहतः संयोगस्ये**ति दीर्घत्वे **हल्ङ्याब्भ्य** इति

क्विब्वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घोऽसंप्रसारणं च । वक्तीति वाक् । पृच्छतीति प्राट् । आयतं स्तौतीत्यायतस्तूः । कटं प्रवते कटप्रूः । जूरुक्तः । श्रयति हरिं श्रीः ॥ **दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे** ।३।२।१८२। दाबादेः ष्ट्रन् स्यात्करणेऽर्थे । दात्यनेन दात्रम् नेत्रम् ॥ **तितुत्रतथसिसुसरकसेषु च** ।७।२।९। एषां दशानां कृत्प्रत्ययानामिण्न । शस्त्रम् योत्रम् योक्त्रम् स्तोत्रम् तोत्रम् सेत्रम् सेक्त्रम् मेढ्रम् पत्रम् दंष्ट्रा नद्ध्री ॥ **अर्तिलूधूसूखनसहचर इत्रः** ।३।२।१८४। अ-

---

त्रः ॥ प्राक्पूर्वकस्तुधातोः क्विपि क्विपो लोपे **ह्रस्वस्य पिति कृति तुक्** इति तुकि उको लोपे सौ सुलोपे च प्रायस्तुत् ॥ वक्तीति वाक् इत्यत्र वचिधातोः **क्विब्वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घोऽसंप्रसारणं** चेत्यनेन क्विपि दीर्घत्वेऽसंप्रसारणत्वे च वाच् इति जातं तत्र सौ सुलोपे **चोः कुरि**ति चस्य कत्वे च वाक् ॥ एवं प्रच्छतीति प्राट् इत्यत्रापि ज्ञेयम् । आयतं स्तौतीत्येवंशील इत्यत्र **क्विब्वचिप्रच्छ्यायते**त्यनेन क्विपि दीर्घत्वे संप्रसारणाभावे च आयतस्तूशब्दो जातस्तत्र कृदन्तत्वात्प्रातिपदिकत्वे सौ सस्य रौ रस्य विसर्गे च आयतस्तूः । कटप्रूरप्येवं जूरप्येवं ॥ श्रीरित्यत्रापि तेनैव सूत्रेण क्विपि क्विब्लोपे विभक्तिकार्ये च श्रीः ॥ दात्यनेनेति दात्रमित्यत्र दाप् लवने धातोः **दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे** इत्यनेन ष्ट्रनि कृते **षः प्रत्ययस्ये**त्यनेन षस्येत्संज्ञायां **तस्य लोप** इति षकारलोपे **हलन्त्य**मित्यनेन नकारस्येत्संज्ञायां **तस्य लोप** इति लोपे च दात्रशब्दो जातस्तत्र विभक्तिकार्ये कृते दात्रं ॥ एवं नयत्यनेनेति नेत्रम् ॥ शस्त्रमित्यत्र शस् हिंसायां धातोष्ट्रनि षलोपे नलोपे उदात्तत्वा**दार्धधातुकस्येड्वलादे**रिति इट्प्राप्तौ **तितुत्रथसिसुसरकसेषु** चेत्यनेन इडभावे कृते कृते च संयोगे शस्त्रशब्दो जातस्तत्र विभक्तिकार्ये शस्त्रम् ॥ एवं युधातोः ष्ट्रनि गुणे विभक्तिकार्ये च योत्रम् ॥ युज् धातोः ष्ट्रनि **पुगन्तलघूपधस्ये**ति गुणे **चोः कुरि**ति कुत्वेन जस्य गत्वे गस्य च **खरि** चेत्यनेन कत्वे विभक्तिकार्ये च योक्त्रम् ॥ स्तुधातोः ष्ट्रनि गुणे च स्तोत्रम् ॥ तुद्धातोः ष्ट्रनि गुणे च तोत्रम् ॥ सिधातोः ष्ट्रनि गुणे सेत्रम् ॥ सिच् सेचने धातोः ष्ट्रनि गुणे **चोः कुरि**ति चस्य के विभक्तिकार्ये च सेक्त्रम् ॥ मिहधातोः ष्ट्रनि **पुगन्तलघूपधस्ये**ति गुणे **हो ढ** इति हस्य ढत्वे **झषस्तथोर्धोऽधः** इति तकारस्य धकारे **ष्टुना ष्टु**रिति धस्य ढे **ढो ढे लोप** इति पूर्वढस्य लोपे विभक्तिकार्ये च कृते मेढ्रम् ॥ दशधातोः ष्ट्रनि ङीवोऽनित्त्वाद् **अजाद्यतष्टाब्**िति टापि च दंष्ट्रा ॥ नहधातोः ष्ट्रनि षलोपे **नहो ध** इत्यनेन हस्य धकारे **झषस्तथोर्धोऽधः** इति धकारे **झरो झरि सवर्णे** इति धकारलोपे षित्वात् **षिद्गौरादिभ्यश्चे**ति ङीषि नद्ध्री ॥ ऋ गतौ धातोः **अर्तिलूधूसूखनसहचर इत्रः** इत्यनेन इत्रे गुणे च

रित्रम् लवित्रम् धवित्रम् सवित्रम् खनित्रम् सहित्रम् । चरित्रम् ॥ **पुवः संज्ञायाम्। ३।२।१८५।** पवित्रम् ॥ **अथोणादयः** ॥ कृवापाजिमिस्वदिसाध्यशूभ्य उण् ॥ करोतीति कारुः । वातीति वायुः । पायुर्गुदम् । जायुरौषधम् । मायुः पित्तम् । साध्नोति परकार्यमिति साधुः ॥ आशु शीघ्रम् ॥ **उणादयो बहुलं ।३।३।१।** एते वर्तमाने संज्ञायां च बहुलं स्युः । केचिदविहिता अप्यूह्याः । संज्ञासु धातुरूपाणि प्रत्ययाश्च ततः परे ॥ कार्याद्विद्यादनूबन्धमेतच्छास्त्रमुणादिषु ॥ **तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्। ३।३।१०।** क्रियार्थायां क्रियायामुपपदे भविष्यत्यर्थे धातोरेतौ स्तः । मान्तत्वादव्ययत्वम् । कृष्णं द्रष्टुं याति कृष्णदर्शको याति ॥ **कालसमयवेलासु तुमुन् ।३।३।१६७।** कालार्थेषूपपदेषु तुमुन् । कालः समयो वेला वा भोक्तुम् ॥ **भावे ।३।३।१८।** सिद्धावस्थापन्ने धात्वर्थे वाच्ये धातोर्घञ् । पाकः ॥ **अकर्तरि च कारके संज्ञायाम् ।३। ३।१९।** कर्तृभिन्ने कारके घञ् स्यात् ॥ **घञि च भावकरणयोः ।६।४।२७।** रञ्जे-

---

कृते अरित्रम् ॥ एवं लूधातोरित्रे गुणे अवि च लवित्रम् ॥ धूधातोर्धवित्रम् ॥ सुधातोः सवित्रम् ॥ खन् धातोरित्रे खनित्रम् ॥ सहधातोः सहित्रम् ॥ चरधातोश्चरित्रम् ॥ पूधातोः **पुवः संज्ञाया**मित्यनेन इत्रे कृते गुणे अवि च पवित्रम् ॥ **अथोणादयः** ॥ कृधातोः **कृवापाजिमिस्वादिसाध्यशूभ्य उण्** इत्यनेन उणि **अचो ञ्णिती**ति वृद्धौ च कृतायां कारुः ॥ वाधातोः **कृवापाजी**ति उणि **आतो युक्चिण्कृतो**रिति युकि उको लोपे च वायुः ॥ एवं पाधातोरुणि युकि उको लोपे च पायुः ॥ जिधातोः **कृवापाजी**ति उणि **अचो ञ्णिती**ति वृद्धौ आयादेशे च . जायुः ॥ माधातोरुणि **आतो युगि**ति युकि उको लोपे च मायुः ॥ साधधातोरुणि साधुः ॥ अशधातोरुणि **अत उपधाया** इत्युपधादीर्घे आशु ॥ एवं स्वदधातोरुणि उपधादीर्घे च स्वादु ॥ कृष्णं द्रष्टुं यातीत्यत्र **तुमुन्ण्वुलौ क्रियायां क्रियार्थाया**मित्यनेन दृश्धातोः तुमुनि उनो लोपे **व्रश्चभ्रस्ज**ेति शस्य षत्वे **ष्टुना ष्टु**रिति तस्य टत्वे द्रष्टुम् इति जाते कृदन्तत्वात्प्रातिपदिकत्वे सौ समागते **कृन्मेजन्त** इत्यनेन मान्तत्वादव्ययत्वे **अव्ययादाप्सुप** इति सुपो लोपे कृष्णं द्रष्टुं यातीति जातम् ॥ दृशधातोर्ण्वुलि च **चुटू** इति णस्येत्संज्ञायां **तस्य लोप** इति णलोपे लस्यापीत्संज्ञायां लोपे च दृश् व इति जाते तत्र **युवोरनाकौ** इत्यनेन वोरकादेशे **पुगन्तलघूपधस्ये**ति गुणे विभक्तिकार्ये च कृष्णं दर्शको याति ॥ भुज्धातोः **कालसमयवेलासु तुमुन्** इति तुमुनि उनो लोपे **चोः कु**रिति कुत्वे **पुगन्तलघूपधस्ये**ति गुणे च भोक्तुम् ॥ पचनं पाक इत्यत्र पच्धातो**र्भावे** इति सूत्रेण घञि कृते **अत उपधाया** इत्युपधादीर्घत्वे घकारञकारयोर्लोपे **चजोः कु**रिति कुत्वे विभक्तिकार्ये च पाकः ॥ रंज्यत इति राग इत्यत्र रंज्धातोः **अकर्तरि च कारके संज्ञायां** इत्यनेन घञि कृते **घञि च भावकरणयो**रिति नकारलोपे घकारञकारयोर्लोपे **अत उ-**

क्विब्वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घोऽसंप्रसारणं च । वक्तीति वाक् । प्राट् । आयतं स्तौतीत्यायतस्तूः । कटं प्रवते कटप्रूः । जूरुक्तः । श्रयति हरिं श्रीः ॥ **दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे** ।३।२।१८२। दाबादेः ष्ट्रन् स्यात्करणेऽर्थे । दात्यनेन दात्रम् नेत्रम् ॥ **तितुत्रतथसिसुसरकसेषु च** ।७।२।९। एषां दशानां कृत्प्रत्ययानामिण्न । शस्त्रम् योत्रम् योक्त्रम् स्तोत्रम् तोत्रम् सेत्रम् सेक्त्रम् मेढ्रम् पत्रम् दंष्ट्रा नध्री ॥ **अर्तिलूधूसूखनसहचर इत्रः** ।३।२।१८४। अ-

---

त्रः ॥ प्रावपूर्वकस्तुधातोः क्विपि क्विपो लोपे **ह्रस्वस्य पिति कृति तुक्** इति तुकि उकारलोपे सौ सुलोपे च प्रावस्तुत् ॥ वक्तीति वाक् इत्यत्र वचिधातोः **क्विब्वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घोऽसंप्रसारणं** चेत्यनेन क्विपि दीर्घत्वेऽसंप्रसारणत्वे च वाच् इति जातं तत्र सौ सुलोपे **चोः कुः**रिति चस्य कत्वे च वाक् ॥ एवं प्रच्छतीति प्राट् इत्यत्रापि ज्ञेयम् । आयतं स्तौतीत्येवंशील इत्यत्र **क्विब्वचिप्रच्छ्यायते**त्यनेन क्विपि दीर्घत्वे संप्रसारणाभावे च आयतस्तूशब्दो जातस्तत्र कृदन्तात्वात्प्रातिपदिकत्वे सौ सस्य रौ रस्य विसर्गे च आयतस्तूः । कटप्रूरप्येवं जूरप्येवं ॥ श्रीरित्यत्रापि तेनैव सूत्रेण क्विपि क्विल्लोपे विभक्तिकार्ये च श्रीः ॥ दात्यनेनेति दात्रमित्यत्र दाप् लवने धातोः **दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे** इत्यनेन ष्ट्रनि कृते **षः प्रत्ययस्ये**त्यनेन षस्येत्संज्ञाया **तस्य लोप** इति षकारलोपे **हलन्त्य**मित्यनेन नकारस्येत्संज्ञायां **तस्य लोप** इति लोपे च दात्रशब्दो जातस्तत्र विभक्तिकार्ये कृते दात्रं ॥ एवं नयत्यनेनेति नेत्रम् ॥ शस्त्रमित्यत्र शस् हिंसायां धातोष्ट्रनि षलोपे नलोपे उदात्तत्वादार्धधातुकस्येड्वलादेरिति इट्प्राप्तौ **तितुत्रतथसिसुसरकसेषु** चेत्यनेन इडभावे कृते कृते च संयोगे शस्त्रशब्दो जातस्तत्र विभक्तिकार्ये शस्त्रम् ॥ एवं युधातोः ष्ट्रनि गुणे विभक्तिकार्ये च योत्रम् ॥ युज् धातोः ष्ट्रनि **पुगन्तलघूपधस्ये**ति गुणे **चोः कु**रिति कुत्वेन जस्य गत्वे गस्य च **खरि** चेत्यनेन कत्वे विभक्तिकार्ये च योक्त्रम् ॥ स्तुधातोः ष्ट्रनि गुणे च स्तोत्रम् ॥ तुद्धातोः ष्ट्रनि गुणे च तोत्रम् ॥ सिधातोः ष्ट्रनि गुणे सेत्रम् ॥ सिच् सेचने धातोः ष्ट्रनि गुणे **चोः कु**रिति चस्य के विभक्तिकार्ये च सेक्त्रम् ॥ मिहधातोः ष्ट्रनि **पुगन्तलघूपधस्ये**ति गुणे **हो ढ** इति हस्य ढत्वे **झषस्तथोर्धोऽधः** इति तकारस्य धकारे **ष्टुना ष्टु**रिति धस्य ढे **ढो ढे लोप** इति पूर्वढस्य लोपे विभक्तिकार्ये च कृते मेढ्रम् ॥ दशधातोः ष्ट्रनि डीबोऽनित्यत्वाद् **अजाद्यतष्टाबि**ति टापि च दंष्ट्रा ॥ नहधातोः ष्ट्रनि षलोपे **नहो ध** इत्यनेन हस्य धकारे **झषस्तथोर्धोऽध** इति धकारे **झरो झरि सवर्णे** इति धकारलोपे षित्वात् **षिद्गौरादिभ्यश्चे**ति ङीषि नध्री ॥ ऋ गतौ धातोः **अर्तिलूधूसूखनसहचर इत्रम्** इत्यनेन इत्रे गुणे च

रित्रम् लवित्रम् धवित्रम् सवित्रम् खनित्रम् सहित्रम् । चरित्रम् ॥ **पुवः संज्ञायाम्।** ३।२।१८५। पवित्रम् ॥ **अथोणादयः** ॥ कृवापाजिमिस्वदिसाध्यशूभ्य उण् ॥ करोतीति कारुः । वातीति वायुः । पायुर्गुदम् । जायुरौषधम् । मायुः पित्तम् । साध्नोति परकार्यमिति साधुः ॥ आशु शीघ्रम् ॥ **उणादयो बहुलं** ।३।३।१। एते वर्तमाने संज्ञायां च बहुलं स्युः । केचिदविहिता अप्यूह्याः । संज्ञासु धातुरूपाणि प्रत्ययाश्च ततः परे ॥ कार्याद्विद्यादनूबन्धमेतच्छास्त्रमुणादिषु ॥ **तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्।** ३।३।१०। क्रियार्थायां क्रियायामुपपदे भविष्यत्यर्थे धातोरेतौ स्तः । मान्तत्वादव्ययत्वम् । कृष्णं द्रष्टुं याति कृष्णदर्शको याति ॥ **कालसमयवेलासु तुमुन्** ।३।३।१६७। कालार्थेषूपपदेषु तुमुन् । कालः समयो वेला वा भोक्तुम् ॥ **भावे** ।३।३।१८। सिद्धावस्थापन्ने धात्वर्थे वाच्ये धातोर्घञ् । पाकः ॥ **अकर्तरि च कारके संज्ञायाम्** ।३।३।१९। कर्तृभिन्ने कारके घञ् स्यात् ॥ **घञि च भावकरणयोः** ।६।४।२७। रञ्जे-

---

कृते अरित्रम् ॥ एवं लूधातोरित्रे गुणे अवि च लवित्रम् ॥ धूधातोर्धवित्रम् ॥ सुधातोः सवित्रम् ॥ खन् धातोरित्रे खनित्रम् ॥ सहधातोः सहित्रम् ॥ चरधातोश्चरित्रम् ॥ पूधातोः **पुवः संज्ञाया**मित्यनेन इत्रे कृते गुणे अवि च पवित्रम् ॥ **अथोणादयः** ॥ कृधातोः **कृवापाजिमिस्वदिसाध्यशूभ्य उण्** इत्यनेन उणि **अचोञ्णिती**ति वृद्धौ च कृतायां कारुः ॥ वाधातोः **कृवापाजी**ति उणि **अतो युक्चिण्कृतो**रिति युकि उको लोपे च वायुः ॥ एवं पाधातोरुणि युकि उको लोपे च पायुः ॥ जिधातोः **कृवापाजी**ति उणि **अचोञ्णिती**ति वृद्धौ आयादेशे च जायुः ॥ माधातोरुणि **आतो युगि**ति युकि उको लोपे च मायुः ॥ साधधातोरुणि साधुः ॥ अशधोरुणि **अत उपधाया** इत्युपधादीर्घे आशु ॥ एवं स्वदधातोरुणि उपधादीर्घे च स्वादु ॥ कृष्णं द्रष्टुं यातीत्यत्र **तुमुन्ण्वुलौ क्रियायां क्रियार्थाया**मित्यनेन दृश्धातोः तुमुनि उनो लोपे **व्रश्चभ्रस्ज**ेति शस्य षत्वे **ष्टुना ष्टु**रिति तस्य टत्वे द्रष्टुम् इति जाते कृदन्तप्रातिपदिकत्वे सौ समागते **कृन्मेजन्त** इत्यनेन मान्तत्वादव्ययत्वे **अव्ययादाप्सुप** इति सुपो लोपे कृष्णं द्रष्टुं यातीति जातम् ॥ दृशधातोर्ण्वुलि च **चुटू** इति णस्येत्संज्ञायां **तस्य लोप** इति णलोपे लस्यापीत्संज्ञायां लोपे च दृश् व इति जाते तत्र **युवोरनाकौ** इत्यनेन वोरकादेशे **पुगन्तलघूपधस्ये**ति गुणे विभक्तिकार्ये च कृष्णं दर्शको याति ॥ भुज्धातोः **कालसमयवेलासु तुमुन्** इति तुमुनि उनो लोपे **चोः कु**रिति कुत्वे **पुगन्तलघूपधस्ये**ति गुणे च भोक्तुम् ॥ पचनं पाक इत्यत्र पच्धातो**र्भावे** इति सूत्रेण घञि कृते **अत उपधाया** इत्युपधादीर्घत्वे घकारञकारयोर्लोपे **चजोः कु**रिति कुत्वे विभक्तिकार्ये च पाकः ॥ रज्यत इति राग इत्यत्र रंज्धातोः **अकर्तरि च कारके संज्ञायां** इत्यनेन घञि कृते **घञि च भावकरणयो**रिति नकारलोपे घकारञकारयोर्लोपे **अत उ-**

नलोपः स्यात् । रागः । अनयोः किम् । रज्यत्यस्मिन्निति रङ्गः ॥ **निवासचितिशरीरोपसमाधानेष्वादेश्च कः ।३।३।४१।** एषु चिनोतेर्घञ् आदेश्च ककारः ॥ उपसमाधानं राशीकरणम् । निकायः कायः । गोमयनिकायः ॥ **एरच् ।३।३।५६।** इवर्णान्तादच् । चयः जयः ॥ **ऋदोरप् ।३।३।५७।** ऋवर्णान्तादुवर्णान्तादप् । करः गरः यवः लवः स्तवः पवः । ( घञर्थे कविधानम् ) प्रस्थः ॥ **ड्वितः क्त्रिः ।३।३।८८।** क्त्रेर्मम् नित्यम् । क्त्रिप्रत्ययान्तान्मम् निर्वृत्तेऽर्थे । पाकेन निर्वृत्तं पक्त्रिमम् । डुवप् उप्त्रिमम् ॥ **ट्वितोऽथुच् ।३।३।८९।** टुवेपृ कम्पने । वेपथुः ॥ **यजयाचयतविच्छप्रच्छरक्षो नङ् ।३।३।९०।** यज्ञः याच्ञा यत्नः विश्नः रक्ष्णः ॥ **स्वपो नन् ।३।३।९१।** स्वप्नः ॥ **उपसर्गे घोः किः ।३।३।९२।** प्रधिः उपधिः ॥ **स्त्रियां क्तिन् ।३।३।९४।** स्त्रीलिङ्गे भावे क्तिन् स्यात् । घञोऽपवादः । कृतिः स्तुतिः । ( अ-

---

**पधाया** इत्युपधावृद्धौ **चोः कुरिति** कुत्वे च कृते रागः ॥ रज्यत्यस्मिन्निति रङ्ग इत्यत्र भावकरणत्वाभावान्नलोपाभावे रङ्गः ॥ निपूर्वकाच्चिधातो**र्निवासचितिशरीरोपसमाधानेष्वादेश्च क** इति घञि आदेशस्य ककारे कृते निकिघञ् इति जाते घस्येत्संज्ञायां लोपे ञस्येत्संज्ञायां लोपे **अचो ञ्णिति**ति वृद्धौ **एचोऽयवायाव** इत्यायादेशे विभक्तिकार्ये च कृते निकायः ॥ एवं चिधातोः कायः ॥ गोमयनिकाय इत्यत्राप्येवमेव ॥ चिधातोः **एरच्** इत्यनेन अचि गुणे च कृते चयः ॥ एवं जिधातोः जयः ॥ कृधातोः **ऋदोरप्** इत्यनेन अपि कृते गुणे च करः ॥ गृधातो **ऋदोरप्** इत्यपि गुणे गरः ॥ युधातो**र्ऋदोरप्** इत्यपि गुणे अवि यवः । एवं लुधातोरपि गुणे अवि च लवः ॥ एवं स्तवः पवश्च ॥ प्रपूर्वकस्थाधातो**र्घञर्थे कविधान**मित्यनेन कप्रत्यये **आतो लोप इटि** चेत्याकारलोपे च प्रस्थः ॥ पक्त्रिममित्यत्र पचधातो**र्ड्वितः क्त्रि**रित्यनेन क्त्रौ **क्त्रेर्मम् नित्य**मित्यनेन मपि कृते पच् त्रिमप् इति जातं तत्र पलोपे विभक्तिकार्ये च पक्त्रिमम् ॥ उप्त्रिममित्यत्र डुवप्धातो**र्ड्वितः क्त्रिः** इत्यनेन क्त्रौ **क्त्रेर्मम् नित्य**मित्यनेन ममि मलोपे **वचिस्वपियजादीनां किति** इति संप्रसारणे उप्त्रिमम् ॥ वेपथुरित्यत्र **ट्वितोऽथुच्** इत्यनेन टुवेपृधातोः अथुचि विभक्तिकार्ये च कृते वेपथुः ॥ यज्ञ इत्यत्र यज्धातोः **यजयाचयतविच्छप्रच्छरक्षो नङ्** इत्यनेन नङि यज् न इति जातं तत्र **स्तोः श्चुना श्चुः** इति नस्य ञत्वे **जञोर्ज्ञः** इति ज्ञे कृते यज्ञः ॥ याच्धातोर्नङि **अजाद्यतष्टाप्** इति टापि **स्तोः श्चुना श्चुः** इति नस्य ञत्वे याच्ञा ॥ एवं विश्नः प्रश्नः रक्ष्णः इत्यादयो ज्ञेयाः । स्वप्धातोः **स्वपो नन्** इति नपि स्वप्नः ॥ प्रधिरित्यत्र प्रपूर्वकधाधातोः **उपसर्गे घोः कि**रिति सूत्रेण कौ ककारस्येत्संज्ञायां लोपे च **आतो लोप इटि** चेति सूत्रेण धकारोत्तरवर्त्याकारलोपे संयोगे च कृते प्रधिः ॥ एवं उपधिः ॥ कृतिरित्यत्र **स्त्रियां क्तिन्** इत्यनेन क्तिनि ककारलोपे विभक्तिकार्ये च कृतिः ॥ एवं स्तुधातोः **स्त्रियां क्तिन्** इति

ल्वादिभ्यः क्तिन्निष्ठावद्वाच्यः ) तेन नत्वम् । कीर्णिः लूनिः धूनिः पूनिः । ( सम्पदादिभ्यः क्विप् ) सम्पत् विपत् आपत् । क्तिन्नपीष्यते । सम्पत्तिः विपत्तिः आपत्तिः ॥ **ऊतियूतिजूतिसातिहेतिकीर्तयश्च ।३।३।९७।** एते निपात्यन्ते । **ज्वरत्वरस्रिव्यविमवामुपधायाश्च ।६।४।२०।** एषामुपधावकारयोरूठ् अनुनासिके क्वौ झलादौ क्ङिति । अतः क्विप् । जूः तूः स्रूः ऊः मूः ॥ **इच्छा ।३।३।१०१।** इषेर्निपातोऽयम् । **अ प्रत्ययात् ।३।३।१०२।** प्रत्ययान्तेभ्यो धातुभ्यः स्त्रियामकारः प्रत्ययः स्यात् । चिकीर्षा पुत्रकाम्या । **गुरोश्च हलः ।३।३।१०३।** गुरुमतो हलन्तात्स्त्रियामप्रत्ययः स्यात् । ईहा ॥ **ण्यासश्रन्थो युच् ।३।३।१०७।** अकारस्यापवादः कारणा हारणा ॥ **नपुंसके भावे क्तः ।३।३।११४। ल्युट् च ।३।३।११५।** हसितम् हसनम् ॥ **पुंसि**

---

क्तिनि नलोपे कलोपे विभक्तिकार्ये च कृते स्तुतिः ॥ कीर्णिरित्यत्र कॄधातोः **स्त्रियां क्तिन्** इत्यनेन क्तिनि **ऋल्वादिभ्यः क्तिन्निष्ठावद्वाच्य** इत्यनेन क्तिनो निष्ठावत्त्वे **ॠत इद्** इत्यनेन इदि कृते किर्त्तिरिति जाते **रदाभ्यां** इत्यनेन तकारस्य नत्वे नकारस्य णत्वे च कृते **र्वोरुपधाया दीर्घ** इति दीर्घत्वे च कीर्णिः ॥ लूञ्धातोः **स्त्रियां क्तिन्** इति इति क्तिनि **ऋल्वादिभ्यः क्तिन्निष्ठावद्वाच्य** इति क्तिनो निष्ठावत्त्वे **ल्वादिभ्यः** इति तकारस्य नकारे लूनिः ॥ एवं धूनिः ॥ संपत् इत्यत्र संपूर्वकपदधातोः **संपदादिभ्यः क्विप्** इति क्विपि ककारवकारेकारपकाराणामित्संज्ञाकरणपूर्वं लोपे कृते कृते च कृदन्ततामाश्रित्य विभक्तिकार्ये संपत् ॥ एवं विपूर्वकपदधातो क्विपि विपत् ॥ **क्तिन्नपीष्यत** इत्यनेन क्तिनि संपत्तिः विपत्तिः आपत्तिः ॥ ज्वरधातोः क्विपि क्विपो लोपे कृदन्तत्वात्सौ **ज्वरत्वरस्रिव्यविमवामुपधायाश्चे**त्यनेन उपधावकारयोरूठि कृते ज् ऊठ् र् इति जाते ठकारस्येत्संज्ञायां लोपे संयोगे च जूर् इति जाते कृदन्तत्वात्सौ **हल्ङ्याब्भ्य** इति सुलोपे रस्य **खरवसानयो**रिति विसर्गे जूः ॥ त्वर् धातोः क्विपि तूः ॥ स्रिविधातोः क्विपि स्रूः । अवूधातोः क्विपि ऊः ॥ मवूधातोः क्विपि ऊठि च मूः ॥ **इषेर्निपातोऽय**मित्यनेन चिकीर्षधातोः **अप्रत्ययात्** इत्यनेन अकारप्रत्यये कृते चिकीर्ष अ इति जाते **अतो लोप** इत्यकारलोपे कृदन्तत्वात्प्रातिपदिकत्वात् टापि चिकीर्षा ॥ एवं पुत्रमिच्छतीति पुत्रकाम्या इत्यत्रापि ज्ञेयम् ॥ ईहा इत्यत्र ईह् धातोः **गुरोश्च हल** इत्यनेन अप्रत्यये **अजाद्यतष्टाप्** इति टापि ईहा ॥ कृधातोर्णिचि वृद्धौ च कारीति जाते **ण्यासश्रन्थो युच्** इत्यनेन युचि कृते कारि युच् इति जाते तत्र **युवोरनाकौ** इत्यनेन युकारस्यानादेशे कारि अन इति जाते तत्र **णेरनिटि** इत्यनेन णेर्लोपे कार् न इति जाते **अट्कुप्वाङ्** इति नस्य णत्वे टापि च कृते कारणा ॥ एवं णिजन्तात् हारिधातोर्युचि हारणा ॥ हस्धातोर्नपुंसके **भावे क्त** इति क्ते कलोपे **आर्द्धधातुकस्येड्वलादे**रिति इटि विभक्तिकार्ये च हसितम् ॥ **ल्युट्चे**त्यनेन ल्युटि लकारटकारयोरित्संज्ञायां लोपे **युवोरनाकौ**

**संज्ञायां घः प्रायेण** ।३।३।११८। **छादेर्घेऽद्व्युपसर्गस्य** ।६।४।९६। द्विप्रभृत्युपसर्गहीनस्य छादेर्ह्रस्वो घे परे । दन्ताश्छाद्यन्तेऽनेन दन्तच्छदः । आकुर्वन्त्यस्मिन्नित्याकरः ॥ **अवे तॄस्त्रोर्घञ्** ।३।३।१२०। अवतारः कूपादेः । अवस्तारो जवनिका ॥ **हलश्च** ।३।३।१२१। हलन्ताद्घञ् । घापवादः । रमन्ते योगिनोऽस्मिन्निति रामः । अपमृज्यतेऽनेन व्याध्यादिरित्यपामार्गः ॥ **ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल्** ।३।३।१२६। करणाधिकरणयोरिति निवृत्तम् । एषु दुःखसुखार्थेषूपपदेषु खल् । तयोरेवेति भावे कर्मणि च । कृच्छ्रे दुष्करः कटो भवता । अकृच्छ्रे ईषत्करः सुकरः ॥ **आतो युच्** ।३।३।१२८। खलोऽपवादः । ईषत्पानः सोमो भवता । दुष्पानः सुपानः ॥ **अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा** ।३।४।१८। प्रतिषेधार्थयोरलंखल्वोरुपपदयोः क्त्वा स्यात् । प्राचांग्रहणं पूजार्थम् अमैवाव्ययेनेति नियमान्नोपपदसमासः । दो दद्घोः । अलं दत्त्वा । घुमास्थेतीत्वम् । पीत्वा खलु । अलंखल्वोः किम् । माकार्षीत् । प्रतिषेधयोः किम् । अलंकारः ॥ **समानकर्तृकयोः पूर्वकाले** ।३।४।२१। समानकर्तृकयोर्धात्वर्थयोः पूर्वकाले विद्यमानाद्धातोः क्त्वा स्यात् । भुक्त्वा व्रजति । द्वित्वमतन्त्रम् । भुक्त्वा

---

इत्यनेन योरनादेशे विभक्तिकार्ये च हसनम् ॥ दन्तच्छद इत्यत्र **पुंसि संज्ञायां घः प्रायेण** इत्यनेन दन्तपूर्वकछदि धातोर्घे घकारलोपे **णेरनिटी**त्यनेन दकारोत्तरवर्तिन इकारस्य लोपे **छादेर्घेऽद्व्युपसर्गस्ये**ति छकारोत्तरवर्त्याकारह्रस्वत्वे विभक्तिकार्ये च कृते दन्तच्छदः ॥ आङ्पूर्वककृधातोः **पुंसि संज्ञायां घः प्रायेणे**ति घे घकारलोपे **सार्वधातुकार्धधातुकयो**रिति गुणे आकरः ॥ अवपूर्वकात् तॄधातोः **अवे तॄस्त्रोर्घञ्** इत्यनेन घञि **अचो ञ्णिती**ति वृद्धौ विभक्तिकार्ये च अवतारः ॥ एवं अवपूर्वकस्तॄधातोर्घञि वृद्धौ च अवस्तारः ॥ रम् धातोर्हलश्चेत्यनेन घञि **अत उपधायाः** इत्युपधावृद्धौ वि० का० रामः ॥ अपआङ्पूर्वकमृजधातोर्हलश्चेत्यनेन घञि **मृजेर्वृद्धि**रिति वृद्धौ अपामार्ज इति जाते तत्र **चजोः कु घिण्ण्यतो**रिति जस्य गत्वे वि० का० अपामार्गः ॥ दुःपूर्वककृधातोः **ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल्** इति खलि खकारलकारयोर्लोपे **सार्वधातुकार्धधातुकयो**रिति गुणे वि० का० दुष्करः ॥ एवं ईषत्करः सुकरः ॥ ईषत्पूर्वकपाधातोः **आतो युच्** इति युचि चकारलोपे **युवोरनाकौ** इति योरनादेशे वि० का० ईषत्पानः ॥ दुष्पानः सुपानः ॥ अलंपूर्वकदाधातोः **अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा** इत्यनेन क्त्वाप्रत्यये ककारलोपे **दो दद्घो**रिति दाधातोर्ददादेशे **खरि चे**ति दस्य तकारे च कृते अलं दत्वा इति जाते तत्र **क्त्वातोसुन्कसुनः** इत्यनेन अव्ययत्वे **अव्ययादाप्सुपः** इति सुब्लोपे अलंदत्वा ॥ एवं खलन्तात्पाधातोः क्त्वाप्रत्यये कलोपे **घुमास्थे**ति पकारोत्तरवर्त्याकारस्य ईकारादेशे पीत्वा खल्विति जातं तत्राव्ययत्वात्सुब्लोपे पीत्वा-खलु ॥ भुक्त्वा व्रजतीत्यत्र **समानकर्तृकयोः पूर्वकाले** इत्यनेन पूर्वं विद्यमानाद्भुजि-

पीत्वा व्रजति ॥ **न क्त्वा सेट्** ।१।२।१८। सेट् क्त्वा कित्र स्यात् । शयित्वा । सेट् किम् । कृत्वा ॥ **रलो व्युपधाद्धलादेः संश्च** ।१।२।२६। इवर्णोवर्णोपधाद्धलादे रल-न्तात्परौ क्त्वासनौ सेटौ वा कितौ स्तः । द्युतित्वा द्योतित्वा । लिखित्वा । लेखित्वा । व्युपधात्किम् । वर्तित्वा । रलः किम् । सेवित्वा । हलादेः किम् । एषित्वा । सेट् किम् । भुक्त्वा ॥ **उदितो वा** ।७।२।५६। उदितः परस्य क्त्वा इड्वा । शमित्वा शान्त्वा । दे-वित्वा द्युत्वा । दधातेर्हिः । हित्वा ॥ **जहातेश्च क्त्वि** ।७।४।४३। हित्वा । हाङस्तु हात्वा ॥ **समासेऽनञ्पूर्वे क्त्वो ल्यप्** ।७।१।३७। अव्ययपूर्वपदेऽनञ्समासे क्त्वो ल्यबादेशः स्यात् । तुक् । प्रकृत्य । अनञ् किम् । अकृत्वा ॥ **आभीक्ष्ण्ये णमुल् च**

---

धातोः क्त्वाप्रत्यये भुक्त्वा व्रजति एवं पीत्वा व्रजति ॥ शीङ्धातोः **समानकर्तृकयोः पूर्वकाले** इत्यनेन क्त्वाप्रत्यये **आर्द्धधातुकस्येड्वलादे**रिति इटि **न क्त्वा सेट्** इत्यनेन कित्त्निषेधे सार्वधातुकार्द्धधातुके गुणे अयादेशे च शयित्वा ॥ कृधातोः क्त्वाप्रत्यये सेट्कत्वाभावात् कित्त्निषेधाभावः कित्त्निषेधाभावाद्गुणाभावे कृत्वा ॥ द्युतधातोः **समानकर्तृकयोः पूर्वकाले** इति क्त्वाप्रत्यये **आर्द्धधातुकस्येड्वलादे**रिति इटि जाते तत्र **न क्त्वा सेट्** इत्यनेन नित्यकित्त्निषेधे प्राप्ते **रलो व्युपधाद्धलादेः संश्चे**त्यनेन पाक्षिके क्त्वाप्रत्ययस्य कित्त्वा-भावे **सार्वधातुकार्द्धधातुकयो**रिति गुणे द्योतित्वा, पक्षे कित्त्वात् **क्ङिति चे**ति निषेधे द्युतित्वा ॥ एवं लिखित्वा लेखित्वा ॥ वर्तित्वेत्यत्र इवर्णोवर्णोपधत्वाभावात् **न क्त्वा सेट्** इत्यनेन नित्यं कित्त्निषेधात्**पुगन्तलघूपधस्ये**ति गुणे वर्तित्वा ॥ सेवित्वेत्यत्र रलन्ताभावा-न्न **क्त्वा सेट्** इति नित्यकित्त्निषेधे **पुगन्तलघूपधस्ये**ति गुणे च कृते सेवित्वा । एवं एषित्वेत्यत्र हलादित्वाभावात् **न क्त्वा सेट्** इत्यनेन नित्यकित्त्निषेधे **पुगन्तलघूपधस्ये**ति गुणे एषित्वा ॥ भुक्त्वेत्यत्र सेट्त्वाभावात्कित्त्निषेधाभावान्न गुणः ॥ शम्धातोः **समानकर्तृकयोः पूर्वकाले** इति क्त्वाप्रत्यये **उदितो वे**त्यनेन पाक्षिके इटि शमित्वा ॥ इडभावे च **अनुना-सिकस्य क्वि झलो**रिति दीर्घे **नश्चापदान्तस्य झली**ति मस्यानुस्वारे **अनुस्वारस्य ययि परसवर्ण** इति परसवर्णे च कृते शान्त्वा ॥ दिव्धातोः क्त्वाप्रत्यये **उदितो वे**ति इटि **पुगन्तलघूपधस्ये**ति गुणे च देवित्वा ॥ इडभावे **च्छ्वोः शूडनुनासिके चे**ति ऊठि कृते द्युत्वा ॥ धाधातोः क्त्वाप्रत्यये **दधातेर्हिः** इत्यनेन धास्थाने हिकारे कृते हित्वा ॥ हाधातोः क्त्वाप्रत्यये **जहातेश्च क्त्वि** इत्यनेन हास्थाने हिकारे कृते हित्वा ॥ हाङ्धातोः क्त्वाप्रत्यये हात्वा ॥ प्रपूर्वककृधातोः क्त्वाप्रत्यये **समासेऽनञ्पूर्वे क्त्वो ल्यप्** इति क्त्वा इत्यस्य ल्यपि लकारसकारयोर्लोपे **ह्रस्वस्य पिति कृति तुक्** इति तुकि उको लोपे च प्रकृत्य ॥ नञ्पूर्वककृधातोः क्त्वाप्रत्यये नञ्समासत्वाल्ल्यबभावे अकृत्वा ॥ स्मृधातोः **आभीक्ष्ण्ये णमु-ल्चे**ति णमुलि णकारस्य **चुटू** इति उकारस्य **उपदेशेऽजनुनासिक इत्** इति लकारस्य **हलन्त्य**मित्येभिः सूत्रैरित्संज्ञायां **तस्य लोप** इति लोपे स्मृ अम् इति जाते तत्र **अचो-**

३।४।२२। आभीक्ष्ण्ये द्योत्ये पूर्वविषये णमुल् स्यात् क्त्वा च ॥ **नित्यवीप्सयोः** ।८।१।४। आभीक्ष्ण्ये वीप्सायां च द्योत्ये पदस्य द्वित्वं स्यात् । आभीक्ष्ण्यं तिङन्तेष्वव्ययसंज्ञकेषु कृदन्तेषु । स्मारंस्मारं नमति शिवम् । स्मृत्वास्मृत्वा । पायंपायम् । भोजंभोजम् । श्रावंश्रावम् ॥ **अन्यथैवंकथमित्थंसु सिद्धाप्रयोगश्चेत्** ।३।४।२७। एषु कृञो णमुल् स्यात्सिद्धोऽप्रयोगोऽस्य एवंभूतश्चेत् कृञ् । व्यर्थत्वात्प्रयोगानर्ह इत्यर्थः । अन्यथाकारम् एवङ्कारम् कथङ्कारम् इत्थङ्कारं भुङ्क्ते । सिद्धेति किम् । शिरोऽन्यथा कृत्वा भुङ्क्ते । इति कृदन्तप्रक्रिया ॥

## ॥ अथ विभक्त्यर्थप्रकरणम् ॥

**प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा** ।२।३।४६। नियतोपस्थि-

---

ञ्णितीति वृद्धौ स्मारम् ॥ **नित्यवीप्सयो**रिति द्वित्वे स्मारस्मारमिति जाते तत्र **कृन्मेजन्त** इत्यनेन मान्तत्वादव्ययत्वे **अव्ययादाप्सुपः** इति सुलोपे स्मारं स्मारं नमति शिवम् ॥ **आभीक्ष्ण्ये णमुल्**चेत्यनेन चकारात्क्त्वाप्रत्यये **नित्यवीप्सयो**रिति द्वित्वे च स्मृत्वा स्मृत्वा ॥ पाधातोर्णमुलि **आतो युक्** इति युकि उक्तो लोपे **नित्यवीप्सयो**रिति द्वित्वे पायम् पायम् ॥ भुजिधातोः **आभीक्ष्ण्ये णमुल्**चेति णमुलि **पुगन्तलघूपधस्येति** गुणे **नित्यवीप्सयो**रिति द्वित्वे भोजमोजम् ॥ श्रुधातोर्णमुलि **अचोञ्णिती**ति वृद्धौ आवादेशे **नित्यवीप्सयो**रिति द्वित्वे श्रावश्रावम् ॥ अन्यथापूर्वात्कृधातो **अन्यथैवंकथमित्थंसुसिद्धाप्रयोगश्चेत्** इति णमुलि **अचोञ्णिती**ति वृद्धौ अन्यथाकारम् ॥ एवपूर्वात्कृधातोर्णमुलि वृद्धौ च एवङ्कारम् ॥ कथपूर्वकात्कृधातोर्णमुलि वृद्धौ च कथङ्कारम् ॥ इत्थपूर्वकात्कृधातोर्णमुलि वृद्धौ च इत्थङ्कारम् ॥ शिरोन्यथाकृत्वा भुङ्क्ते इत्यत्र कृञ सिद्धप्रयोगत्वान्न णमुल् ॥

इति श्रीमत्सद्गुरकेशवकृपाकल्पवल्लरीपल्लवायमानाया प्रयोगमणिमालाया पूर्णतामगच्छत्कृदन्तप्रक्रिया ॥ .

विश्वगिरीश्वरौ गिया श्रीकेशवमहेश्वरौ । छायानघा दयाता सर्वेभ्य सर्वदौ गुरू ॥ १ ॥
श्रीमान् श्रेय श्रिय दद्यादतुलामचलामयाम् । देव श्रीराजराजेशोऽस्माभ्यमभ्यर्थिताधिकाम् ॥१॥
अनन्यशिवभक्तयासशिवसायुज्यमुक्तिकौ । वन्दे दयामयात्मानौ श्रीकेशवमहेश्वरौ ॥ २ ॥

उद्देशेनचिरेण्यव्ययात् **प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमे**ति सूत्रेण

---

१ प्रातिपदिकार्थेति ॥ पक्षे प्रातिपदिकार्थ इति पक्षे लिङ्गस्यापि प्रातिपदिकार्थत्वाल्लिङ्गग्रहणं व्यर्थं सत् ज्ञापक भवति यस्मिन् प्रातिपदिके उच्चारिते यस्यार्थस्य नियमेनोपस्थितिः स प्रातिपदिकार्थ । कृष्ण इति प्रातिपदिके उच्चारिते वसुदेवापत्यत्वपुंस्त्वमित्यादीनां नियमेनोपस्थितत्वात्तस्य प्रातिपदिकार्थसंज्ञा । एवं स र्वत्राप्यूह्यम् ॥

तिकः प्रातिपदिकार्थः । मात्रशब्दस्य प्रत्येकं योगः । प्रातिपदिकार्थमात्रे लिङ्गमात्राद्याधिक्ये ( परिमाणमात्रे ) संख्यामात्रे च प्रथमा स्यात् । प्रातिपदिकार्थमात्रे । उच्चैः नीचैः कृष्णः श्रीः ज्ञानम् । लिङ्गमात्रे । तटः तटी तटम् । परिमाणमात्रे । द्रोणो व्रीहिः । वचनं संख्या । एकः द्वौ बहवः ॥ **संबोधने च** ।२।३।४७। प्रथमा स्यात् । हे राम ॥ **कर्तुरीप्सिततमं कर्म** ।१।४।४९। कर्तुः क्रियया आप्तुमिष्टतमं कारकं कर्मसंज्ञं स्यात् ॥ **कर्मणि द्वितीया** ।२।३।२। अनुक्ते कर्मणि द्वितीया स्यात् ॥ हरिं भजति । अभिहिते तु कर्मादौ प्रथमा । हरिः सेव्यते । लक्ष्म्या सेवितः ॥ **अकथितं च** ।१।४।५१। अपादानादिविशेषैरविवक्षितं कारकं कर्मसंज्ञं स्यात् । दुह्याच्पच्दण्ड्रुधिप्रच्छिचिब्रूशासुजिमन्थ्मुषाम् ॥ कर्मयुक्स्यादकथितं तथा स्यान्नीहृकृष्वहाम् ॥ १ ॥ गां दोग्धि पयः ।

---

प्रातिपदिकार्थमात्रे प्रथमा, कृष्ण इत्यत्र वसुदेवापत्यरूपकृष्णशब्दात् प्रातिपदिकार्थमात्रे प्रथमा, श्रीरित्यत्र जलधितनयारूपश्रीशब्दात्प्रातिपदिकार्थमात्रे प्रथमा, ज्ञानमित्यत्र बुद्धिप्रकाशनरूपज्ञानशब्दात् प्रातिपदिकार्थमात्रे प्रथमा, सर्वत्र नियतोपस्थितिकप्रातिपदिकत्वात् प्रथमा, तटः तटी तटमित्यत्र प्रातिपदिकार्थत्वेऽपि लिङ्गाधिक्ये प्रथमा, द्रोणो व्रीहिरित्यत्र द्रोणशब्दात् परिमाणाधिक्यमात्रात्प्रथमा, एकः द्वौ बहवः इत्यत्र वचनमात्राधिक्यात्प्रथमा, हे राम इत्यत्र **संबोधने चे**ति सूत्रेण संबोधनाधिक्ये प्रथमा । हरिं भजतीत्यत्र **कर्तुरीप्सिततमं कर्मे**ति सूत्रेण कर्मसंज्ञायां **कर्मणि द्वितीये**ति सूत्रेण द्वितीया । हरिः सेव्यत इत्यत्र तिङ्प्रत्ययेन उक्तकर्मत्वान्न द्वितीया । लक्ष्म्या हरिः सेवित इत्यत्र कृत्प्रत्ययेनोक्तकर्मत्वान्न द्वितीया । शतेन क्रीतः शत्य इत्यत्र तद्धितप्रत्ययेनोक्तकर्मत्वान्न द्वितीया । प्राप्तानन्द इत्यत्र समासान्तत्वेनोक्तकर्मत्वान्न द्वितीया । गोः पयो दोग्धीत्यत्र गोशब्दात् अपादानस्य अविवक्षितत्वात् **अकथितं चे**त्यनेन कर्मसंज्ञायां **कर्मणि द्वितीये**ति द्वितीया गांपयोदोग्धि । बलेर्वसुधां याचते इत्यत्र बलिशब्दात् अपादानस्याविवक्षितत्वात् **अकथितं चे**त्यनेन कर्मसंज्ञायां **कर्मणि द्वि-**

---

१ संबोधने च । प्रातिपदिकार्थेति सूत्रे मात्रग्रहणात्संबोधनाधिक्ये अप्राप्ता प्रथमा अनेन विधीयते । संबोधनं च प्रकृतवाक्यार्थविषयकबोधाश्रयत्वप्रकारकेच्छोद्देश्यम् ॥ हे राम मां पाहीत्यत्र समन्वयः ॥

२ कर्तुरीप्सिततमं कर्म ॥ आप् धातोः संबन्धरूपोऽर्थस्तस्य प्रकारत्वसंबन्धेन सनर्थे इच्छायामन्वयस्तस्य विषयत्वसंबन्धेन तमार्थे उद्देश्येऽन्वयः कर्तृपदं तन्निष्ठव्यापारवाचकं तथाच कर्तृ वृत्ति व्यापार प्रयोज्य फलाश्रयत्व प्रकारकेच्छोद्देश्यं कारकं सत् कर्मसंज्ञं स्यादिति सूत्रार्थः । देवदत्तो हरिं भजतीत्यत्र कर्ता देवदत्तस्तद्वृत्ति व्यापारः भजनानुकूलस्तदाश्रयत्वप्रकारिका या इच्छा हरिर्मे भजनाश्रयो भवतु इत्याकारिका इच्छोद्देश्यो यो हरिस्तस्य कर्मसंज्ञा एवं सर्वत्र समन्वयः ॥ स्फुटतरं तु मत्कृत वैय्याकरणतरङ्गतोऽवसेयम् ।

३ अकथितं च । अन्तः स्थितद्रवद्रव्यविभागानुकूलो दुहेरर्थः । परस्वत्वनिवृत्तिपूर्वकस्वस्वत्वोत्पत्त्यनुकूलो देहीत्याद्यभिलापरूपो याचेरर्थः विक्लृत्यनुकूलः पचेरर्थः । शासनानुकूलो दण्डयतेरर्थः । निर्गमप्रतिरोधपूर्वक यत्किञ्चित्स्थित्यनुकूलो रुन्धेरर्थः । जिज्ञासाविषयार्थः केन पथा गन्तव्यमित्याद्यभिलापरूपः पृच्छेरर्थः । विभागानुकूलश्चिनोतेरर्थ इत्यादयोऽर्थाः स्वयमेव सर्वेषां धातूनां कल्पनीयाः ।

बलिं याचते वसुधाम् । तण्डुलानोदनं पचति । गर्गान् शतं दण्डयति । व्रजमवरुणद्धि गाम् । माणवकं पन्थानं पृच्छति । वृक्षमवचिनोति फलानि । माणवकं धर्मं ब्रूते शास्ति वा । शतं जयति देवदत्तम् । सुधां क्षीरनिधिं मथ्नाति । देवदत्तं शतं मुष्णाति । ग्राममजां नयति हरति कर्षति वहति वा । अर्थनिबन्धनेयं संज्ञा । बलिं भिक्षते वसुधाम् । माणवकं धर्मं भाषते अभिधत्ते वक्तीत्यादि ॥ **[1]स्वतन्त्रः कर्ता** ।१।४।५४। क्रियायां स्वातन्त्र्येण विवक्षितोऽर्थः कर्ता स्यात् ॥ **[2]साधकतमं करणम्** ।१।४।४२। क्रियासिद्धौ प्रकृष्टोपकारकं करणसंज्ञं स्यात् ॥ **कर्तृकरणयोस्तृतीया** ।२।३।१८। अनभिहिते कर्तरि करणे च तृतीया स्यात् । रामेण बाणेन हतो वाली ॥ **कर्मणा यमभिप्रैति स संप्रदानम्** ।१।४।३२। दानस्य कर्मणा यमभिप्रैति स संप्रदानसंज्ञः स्यात् ॥ **चतुर्थी संप्रदाने** ।२।३।१३। विप्राय गां ददाति ॥ **नमःस्वस्तिस्वाहास्वधालंवषड्योगाच्च** ।२।३।१६। एभिर्योगे चतुर्थी । हरये नमः । प्रजाभ्यः स्वस्ति । अग्नये स्वाहा । पितृभ्यः स्वधा । अलमिति पर्याप्त्यर्थग्रहणम् । तेन दैत्येभ्यो हरिरलं

---

**तीये**ति द्वितीया बलिं याचते वसुधाम् । तन्दुलेभ्योदनं पचतीत्यत्र अधिकरणस्याविवक्षितत्वात् । गर्गेभ्यः शतं दण्डयतीत्यत्र अपादानस्याविवक्षितत्वात् । व्रजेऽवरुणद्धि गामित्यत्र अधिकरणस्याविवक्षितत्वात् । माणवकाय पन्थानं पृच्छतीत्यत्र संप्रदानस्याविवक्षितत्वात् । वृक्षेभ्योऽवचिनोति फलानीत्यत्र अपादानस्याविवक्षितत्वात् । माणवकाय धर्मं ब्रूते शास्ति वेत्यत्र संप्रदानस्याविवक्षितत्वात् । शतं जयति देवदत्तादित्यत्र अपादानस्याविवक्षितत्वात् । सुधायै क्षीरनिधिं मथ्नातीत्यत्र संप्रदानस्याविवक्षितत्वात् । देवदत्तात् शतं मुष्णातीत्यत्र अपादानस्याविवक्षितत्वात् ग्रामे अजां नयति हरति कर्षति वहति वेत्यत्र अधिकरणस्याविवक्षितत्वात् । बलेर्भिक्षते वसुधामित्यत्र अपादानस्याविवक्षितत्वात् । माणवकाय धर्मं भाषते इत्यत्र संप्रदानस्याविवक्षितत्वाच्चैवं सर्वेपूक्तेषु अपादानादीनामविवक्षितत्वात् **अकथितं** चेत्यनेन कर्मसंज्ञायां कर्मणि द्वितीया ज्ञेया । रामेण बाणेन हतो वाली इत्यत्र **साधकतमं करण**मित्यनेन करणसंज्ञायां **कर्तृकरणयोस्तृतीया** इत्यनेन रामशब्दात्कर्तरि तृतीया बाणशब्दाच्च करणे तृतीया ज्ञेया । रामकर्तृकबाणकरणकहननाश्रयो वाली इत्यर्थः ॥ विप्राय गां ददातीत्यत्र **कर्मणा यमभिप्रैति स संप्रदान**मित्यनेन संप्रदानसंज्ञायां **चतुर्थी संप्रदाने** इति सूत्रेण चतुर्थी ज्ञेया, विप्रसंप्रदानकगोकर्मकदानानुकूलव्यापारवान् देवदत्तः । हरये नम इत्यत्र **नमःस्वस्तिस्वाहास्वधालंवषड्योगाच्चे**त्यनेन नमोयोगे चतुर्थी ज्ञेया । प्रजाभ्यः स्वस्तीत्यत्र स्वस्तियोगे, अग्नये स्वाहेत्यत्र स्वाहायोगे, पितृभ्यः स्वधा इत्यत्र स्वधायोगे, दैत्येभ्यो हरिरलमित्यत्र अलंयोगे च, चतुर्थी ज्ञेया ।

---

१ स्वतन्त्रः कर्ता । प्रधानीभूतधात्वर्थं प्रति आश्रयस्य स्वातन्त्र्यम् । उक्तं च । धातुनोक्तक्रिये नित्यं कारके कर्तृतेष्यते ॥ २ साधकतमं करणम् । यद्व्यापारानन्तरं क्रियानिष्पत्तिस्तत्प्रकृष्टम् । उक्तं च । क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरम् विवक्ष्यते यदा यत्र करणं तत्तदा स्मृतमिति ॥

प्रभुः समर्थः शक्त इत्यादि ॥ **ध्रुवमपायेऽपादानम्** ।१।४।२४। अपायो विश्लेषस्तस्मिन्साध्ये यद् ध्रुवमवधिभूतं कारकं तदपादानं स्यात् ॥ **अपादाने पञ्चमी** ।२।३।२८। ग्रामादायाति । धावतोऽश्वात्पततीत्यादि ॥ **षष्ठी शेषे** ।२।३।५०। कारकप्रातिपदिकार्थव्यतिरिक्तः स्वस्वामिभावादिः संबन्धः शेषस्तत्र षष्ठी । राज्ञः पुरुषः । कर्मादीनामपि संबन्धमात्रविवक्षायां षष्ठ्येव । सतां गतम् । सर्पिषो जानीते । मातुः स्मरति । एधो दकस्योपस्कुरुते । भजे शंभोश्चरणयोः ॥ **आधारोऽधिकरणम्** ।१।४।४५। कर्तृकर्मद्वारा तन्निष्ठक्रियाया आधारः कारकमधिकरणं स्यात् ॥ **सप्तम्यधिकरणे च** ।२।३।३६। अधिकरणे सप्तमी स्यात् । चकाराद्दूरान्तिकार्थेभ्यः । औपश्लेषिको वैषयिकोऽभिव्यापकश्चेत्याधारस्त्रिधा । कटे आस्ते । स्थाल्यां पचति । मोक्षे इच्छास्ति । सर्वस्मिन्नात्मास्ति । वनस्य दूरे अन्तिके वा ॥ इति विभक्त्यर्थाः ॥

## ॥ अथ समासप्रकरणम् ॥

समासः पञ्चधा । तत्र समसनं समासः । स च विशेषसंज्ञाविनिर्मुक्तः केवलसमासः प्रथमः १ प्रायेण पूर्वपदार्थप्रधानोऽव्ययीभावो द्वितीयः २ प्रायेणोत्तरपदार्थप्रधानस्तत्पुरुषस्तृतीयः ३ ( तत्पुरुषभेदः कर्मधारयः । कर्मधारयभेदो द्विगुः ) । प्रायेणान्यपदार्थ-

---

ग्रामात् आयातीत्यत्र **ध्रुवमपायेऽपादान**मिति सूत्रेण ग्रामशब्दस्यापादानत्वात् **अपादाने पञ्चमी**त्यनेन पञ्चमी । एवं धावतोऽश्वात्पततीत्यत्राप्यपादाने पञ्चमी ग्रामापादानकदेवदत्तकर्तृक आगमनानुकूलो व्यापारः । संबन्धविवक्षायां षष्ठी, राज्ञः पुरुष इत्यत्र **षष्ठी शेषे** इत्यनेन षष्ठी । सतां गतमित्यत्र कर्मादीनामपि संबन्धमात्रविवक्षायं षष्ठीति वार्तिकेन कर्मादीनां संबन्धमात्रस्य विवक्षायां षष्ठी । सर्पिषो जानीते इत्यत्र करणसंबन्धमात्रविवक्षायां षष्ठी । मातुःस्मरतीत्यत्र कर्मसंबन्धविवक्षायां षष्ठी । भजे शंभोश्चरणयोरित्यत्रापि कर्मसंबन्धविवक्षायां षष्ठी । कटे आस्ते इत्यत्र **आधारोधिकरण**मित्यनेन अधिकरणसंज्ञायां **सप्तम्यधिकरणे च** इत्यनेन औपश्लेषिक आधारे सप्तमी । एवं स्थाल्यां पचतीत्यत्रापि सप्तमी । मोक्षे इच्छास्तीत्यत्र वैषयिके आधारे सप्तमी । सर्वस्मिन्नात्मास्तीत्यत्र अभिव्याप्य आधारे सप्तमीसंज्ञायां दूरे अन्तिके वेत्यत्र **दूरान्तिकार्थेभ्य** इत्यनेन सप्तमी ॥ इति विभक्त्यर्थप्रकरणम् ॥

भूतपूर्व इत्यत्र पूर्व अम् भूत सु इत्यलौकिकविग्रहे **सह सुपे**ति समासे जाते **सुपो धातुप्रातिपदिकयो**रिति सूत्रेण सुपोलोपे पूर्वभूत इति जातं तत्र **प्रथमानिर्दिष्टं समास उपसर्जन**मिति सूत्रेणोभयोरुपसर्जनसंज्ञायां **उपसर्जनं पूर्वं** इत्यनेनात्रोभयोरपि प्रथमानिर्दिष्टत्वात्केन पूर्वं भाव्यमित्याशङ्कायां यद्यपि पूर्वशब्दस्य लौकिकालौकिकोभयविधोपसर्जनवि-

---

१ ध्रुवमपायेऽपादानम् । अत्र ध्रुवपदेन स्थैर्यं न विवक्षितं किन्तु प्रकृतधातूपात्तगत्यनाविष्टत्वे सति तज्जन्यविभागाश्रयत्वम् । तथार्थादवधेरेवेत्याह अवधिभूतमिति ॥

प्रधानो बहुव्रीहिश्चतुर्थः ४ प्रायेणोभयपदार्थप्रधानो द्वन्द्वः पञ्चमः ५ ॥ **समर्थः पदविधिः ।२।१।१।** पदसंबन्धी यो विधिः स समर्थाश्रितो बोध्यः ॥ **प्राक्कडारात्समासः ।२।१।३।** कडाराः कर्मधारय इत्यतः प्राक् समास इत्यधिक्रियते ॥ **सह सुपा ।२।१।४।** सुप् सुपा सह वा समस्यते । समासत्वात्प्रातिपदिकत्वेन सुपो लुक् । परार्थाभिधानं वृत्तिः । कृत्तद्धितसमासैकशेषसनाद्यन्तधातुरूपाः पञ्च वृत्तयः । वृत्त्यर्थावबोधकं वाक्यं विग्रहः । स च लौकिकोऽलौकिकश्चेति द्विधा । तत्र पूर्वं भूतो भूतपूर्वं इति लौकिकः । पूर्वभूत सु इत्यलौकिकः । भूतपूर्वः । भूतपूर्वे चरडिति निर्देशात्पूर्वनिपातः ( इवेन सह समासो विभक्त्यलोपश्च ) वागर्थौ इव वागर्थाविव । इति केवलसमासः प्रथमः १ ॥

## अथाव्ययीभावः २ ॥

**अव्ययीभावः ।२।१।५।** अधिकारोऽयं प्राक् तत्पुरुषात् ॥ **अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासंप्रतिशब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसंपत्तिसाकल्यान्तवचनेषु ।२।१।६।** विभक्त्यर्थादिषु वर्तमानमव्ययं सुबन्तेन सह नित्यं समस्यते । प्रायेणाविग्रहो नित्यसमासः । प्रायेणास्वपदविग्रहो वा । विभक्तौ । हरि ङि अधि इति स्थिते ॥ **प्रथमानिर्दिष्टं समास उपसर्जनम् ।१।२।४३।** समासशास्त्रे प्रथमानिर्दिष्टमुपसर्जनसंज्ञं स्यात् ॥ **उपसर्जनं पूर्वम् ।२।२।३०।** समासे उपसर्जनं प्राक् प्रयोज्यम् । इत्यधेः प्राक् प्रयोगः । सुपो लुक् । एकदेशविकृतस्यानन्यत्वात्प्रातिपदिकसंज्ञायां स्वाद्युत्पत्तिः । अव्ययी-

---

शिष्टत्वात्पूर्वशब्देनैव पूर्वं भाव्यं तथापि **भूतपूर्वे चरट्** इति निर्देशाद्भूतशब्देनैव पूर्वं भाव्यं तथा सति भूतपूर्व इति जाते तत्र समासत्वात्प्रातिपदिकत्वे सौ विभक्तिकार्ये च कृते भूतपूर्वः । वागर्थौ इवेत्यत्र **इवेन सह समासो विभक्त्यलोपश्चे**त्यनेन समासे विभक्त्यलोपे च **एचोऽयवायावः** इत्यादि वागर्थाविव ॥ हरौ इत्यधिहरि इत्यत्र हरि ङि अधि इति स्थिते **अव्ययं विभक्ती**ति सूत्रेण समासे **प्रथमानिर्दिष्टं समास उपसर्जन**मित्यनेन अधीत्यस्योपसर्जनसंज्ञायां **उपसर्जनं पूर्व**मित्यनेन अधीत्यस्य पूर्वनिपातत्वे अधि हरि ङि इति जाते **सुपो धातुप्रातिपदिकयो**रिति ङिलोपे अधिहरि इति जाते समासत्वात्प्रातिपदिकत्वे सौ चागते अव्ययीभावसमासस्य **अव्ययीभावश्चे**त्यनेनाव्ययत्वात् **अव्ययादाप्सुपः** इत्यनेन सुलोपे अधिहरि ॥ गोपि इति अधि गोपमित्यत्र गोपा ङि अधि इति विग्रहे **अव्ययं विभक्ती**ति सूत्रेण समासे **प्रथमानिर्दिष्टं समास उपसर्जन**मिति सूत्रेण अधिपदस्योपसर्जनत्वे **उपसर्जनं पूर्व**मित्यनेन अधीत्यस्य पूर्वनिपाते अधिगोपा ङि इति जाते **सुपो धातुप्रातिपदिक-**

---

१ प्रथमानिर्दिष्टमिति ॥ अत्र सूत्रे समासपदं समासविधायके शास्त्रे लाक्षणिकम् । अन्यथा समासे विकीर्षिते यत् प्रथमान्तमित्यर्थे कृष्ण श्रित इत्यादौ श्रितादिशब्दस्य पूर्वप्रयोगापत्तेः ।

भावश्चेत्यव्ययत्वात्सुपो लुक् । अधिहरि ॥ **अव्ययीभावश्च** ।२।४।१८ अयं नपुंसकं स्यात् । गाः पातीति गोपाः तस्मिन्नित्यधिगोपम् ॥ **नाव्ययीभावादतोऽम्त्वपञ्चम्याः** ।२।४।८३। अदन्तादव्ययीभावात्सुपो न लुक् तस्य पञ्चमीं विना अमादेशश्च स्यात् ॥ **तृतीयासप्तम्योर्बहुलम्** ।२।४।८४। अदन्तादव्ययीभावात्तृतीयासप्तम्योर्बहुलमम्भावः स्यात् । उपकृष्णम् उपकृष्णेन । मद्राणां समृद्धिः सुमद्रम् । यवनानां व्यृद्धिर्दुर्यवनम् । मक्षिकाणामभावो निर्मक्षिकम् । हिमस्यात्ययोऽतिहिमम् । निद्रा संप्रति न युज्यत इत्यतिनिद्रम् । हरिशब्दस्य प्रकाश इतिहरि । विष्णोः पश्चादनुविष्णु । योग्यतावीप्सापदार्थानतिवृत्तिसादृश्यानि यथार्थाः । रूपस्य योग्यमनुरूपम् । अर्थमर्थं प्रति प्रत्यर्थम् । शक्तिमनतिक्रम्य यथाशक्ति ॥ **अव्ययीभावे चाकाले** ।६।३।८१। सहस्य सः स्यादव्ययीभावे न तु काले । हरेः सादृश्यं सहरि । ज्येष्ठस्यानुपूर्व्येणेत्यनुज्येष्ठम् । चक्रेण युग-

---

योरिति ङिलोपे प्रातिपदिकत्वात्सौ समागते **अव्ययीभावश्चे**त्यनेन नपुंसकत्वे **ह्रस्वो नपुंसके प्रातिपदिकस्ये**ति ह्रस्वत्वे **अतोऽमि**त्यनेन सोरमि **अमि पूर्वः** इति पूर्वरूपादेशे च अधिगोपम् ॥ कृष्णस्य समीपे इत्युपकृष्णमित्यत्र कृष्ण ङस् उप इति विग्रहे **अव्ययं विभक्ती**ति सूत्रेण सामीप्यद्योतकेनोपशब्देन सह समासे **प्रथमानिर्दिष्ट**मित्यनेन उप इत्यस्योपसर्जनत्वे **उपसर्जनं पूर्व**मित्यनेन उप इत्यस्य पूर्वनिपाते उपकृष्ण ङस् इति जातं तत्र **सुपो धातुप्रातिपदिकयो**रिति ङसो लोपे प्रातिपदिकत्वात्सौ प्राप्ते अव्ययीभावत्वात् **अव्ययादाप्सुपः** इति सुलोपे प्राप्ते **नाव्ययीभावादतोऽम्त्वपञ्चम्याः** इति सुलोपाभावे सोरमि च कृते **अमि पूर्वः** इत्यनेन पूर्वरूपादेशे उपकृष्णम् ॥ उपकृष्ण टा इत्यत्र **तृतीयासप्तम्योर्बहुल**मित्यनेनामोऽभावे **टाङसिङसामिनात्स्याः** इति इनादेशे गुणे च उपकृष्णेन ॥ पक्षे ॥ उपकृष्णम् ॥ एवं सप्तम्यामपि उपकृष्णे उपकृष्णम् ॥ एवं सुमद्रम् ॥ दुर्यवनम् ॥ निर्मक्षिकम् ॥ अतिहिमम् ॥ अतिनिद्रम् ॥ इतिहरि ॥ अनुविष्णु ॥ अनुरूपम् ॥ प्रत्यर्थम् ॥ यथाशक्ति इत्यादीनि रूपाणि **अव्ययं विभक्ती**ति सूत्रे तत्तदर्थवाचकाव्ययैः सह समासे उपसर्जनीभूतानां चाव्ययानां पूर्वनिपातत्वे प्रातिपदिकत्वाद्विभक्तिकार्ये च कृते भवन्ति ॥ सहरि इत्यत्र **अव्ययं विभक्ती**त्यनेन सादृश्यवाचिना सहेत्यव्ययेन सह समासे **उपसर्जनं पूर्व**मित्यनेन सहेत्यस्य पूर्वनिपाते सहहरि ङस् इति जातं तत्र **सुपोधातुप्रातिपदिकयो**रिति ङसो लोपे अव्ययीभावात्सुलोपे च **अव्ययीभावे चाकाले** इत्यनेन सहस्य सादेशे सहरि ॥ अनुज्येष्ठमित्यत्र **अव्ययं विभक्ती**ति सूत्रेण आनुपूर्व्यार्थवाचिनाऽनुनाव्ययेन समासे पूर्वनिपाते सुब्लोपे सोरमि च ॥ अनुज्येष्ठम् ॥ सचक्रमित्यत्र **अव्ययं विभक्ती**ति सूत्रेण यौगपद्यवाचिना सहेत्यव्ययेन सह समासे पूर्वनिपाते **अव्ययीभावे चाकाले** इति सूत्रेण सहेत्यस्य सादेशे सचक्र टा इति जातं तत्र **सुपो धातुप्रातिपदिकयो**रिति टालोपे सौ सोरमि च सचक्रम् ॥ ससखीत्यत्र **अव्ययं विभक्ती**ति सूत्रेण सा-

प्रधानो बहुव्रीहिश्चतुर्थः ४ प्रायेणोभयपदार्थप्रधानो द्वन्द्वः पञ्चमः ५ ॥ **समर्थः पदविधिः** ।२।१।१। पदसंबन्धी यो विधिः स समर्थाश्रितो बोध्यः ॥ **प्राक्कडारात्समासः** ।२।१।३। कडाराः कर्मधारय इत्यतः प्राक् समास इत्यधिक्रियते ॥ **सह सुपा** ।२।१।४। सुप् सुपा सह वा समस्यते । समासत्वात्प्रातिपदिकत्वेन सुपो लुक् । परार्थाभिधानं वृत्तिः । कृत्तद्धितसमासैकशेषसनाद्यन्तधातुरूपाः पञ्च वृत्तयः । वृत्त्यर्थावबोधकं वाक्यं विग्रहः । स च लौकिकोऽलौकिकश्चेति द्विधा । तत्र पूर्वं भूतो भूतपूर्व इति लौकिकः । पूर्व अम् भूत सु इत्यलौकिकः । भूतपूर्वः । भूतपूर्वे चरडिति निर्देशात्पूर्वनिपातः ( इवेन सह समासो विभक्त्यलोपश्च ) वागर्थाविव वागर्थाविव । इति केवलसमासः प्रथमः १ ॥

## अथाव्ययीभावः २ ॥

**अव्ययीभावः** ।२।१।५। अधिकारोऽयं प्राक् तत्पुरुषात् ॥ **अव्ययंविभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासंप्रतिशब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसंपत्तिसाकल्यान्तवचनेषु** ।२।१।६। विभक्त्यर्थादिषु वर्तमानमव्ययं सुबन्तेन सह नित्यं समस्यते । प्रायेणाविग्रहो नित्यसमासः । प्रायेणास्वपदविग्रहो वा । विभक्तौ । हरि ङि अधि इति स्थिते ॥ **प्रथमानिर्दिष्टं समास उपसर्जनम्** ।१।२।४३। समासशास्त्रे प्रथमानिर्दिष्टमुपसर्जनसंज्ञं स्यात् ॥ **उपसर्जनं पूर्वम्** ।२।२।३०। समासे उपसर्जनं प्राक् प्रयोज्यम् । इत्यधेः प्राक् प्रयोगः । सुपो लुक् । एकदेशविकृतस्यानन्यत्वात्प्रातिपदिकसंज्ञायां स्वाद्युत्पत्तिः । अव्ययी-

शिष्टत्वात्पूर्वशब्देनैव पूर्वं भाव्य तथापि **भूतपूर्वे चरट्** इति निर्देशाद्भूतशब्देनैव पूर्वं भाव्य तथा सति भूतपूर्व इति जाते तत्र समासत्वात्प्रातिपदिकत्वे सौ विभक्तिकार्ये च कृते भूतपूर्वः । वागर्थौ इवेत्यत्र **इवेन सह समासो विभक्त्यलोपश्च**ेत्यनेन समासे विभक्त्यलोपे च गुणोपवाधाद **वागर्थाविव** इत्यादि वागर्थाविव ॥ हरौ इत्यधिहरि इत्यत्र हरि ङि अधि इति स्थिते **अव्ययं विभक्ती**ति सूत्रेण समासे **प्रथमानिर्दिष्टं समास उपसर्जन**मित्यनेन अधीत्यस्योपसर्जनसंज्ञाया **उपसर्जनं पूर्व**मित्यनेन अधीत्यस्य पूर्वनिपातत्वे अधि हरि ङि इति जाते **सुपो धातुप्रातिपदिकयो**रिति ङिलोपे अधिहरि इति जाते समासत्वात्प्रातिपदिकत्वे सौ चागते अव्ययीभावसमासस्य **अव्ययीभावश्चे**त्यनेनाव्ययत्वात् **अव्ययादाप्सुप** इत्यनेन सुलोपे अधिहरि ॥ गोपि इति अधि गोपमित्यत्र गोपा ङि अधि इति विग्रहे **अव्ययं विभक्ती**ति सूत्रेण समासे **प्रथमानिर्दिष्टं समास उपसर्जन**मिति सूत्रेण अधिपदस्योपसर्जनत्वे **उपसर्जनं पूर्व**मित्यनेन अधीत्यस्य पूर्वनिपाते अधिगोपा ङि इति जाते **सुपो धातुप्रातिपदिक**-

१ प्रथमानिर्दिष्टमिति ॥ अत्र सूत्रे समासपदं समासविधायके शास्त्रे लाक्षणिकम् । अन्यथा समासे निर्दिष्टं ... प्रथमाभिधेये ... इत्यादौ निपातादिशब्दस्य पूर्वप्रयोगापत्तेः ।

भावश्चेत्यव्ययत्वात्सुपो लुक् । अधिहरि ॥ **अव्ययीभावश्च ।२।४।१८** अयं नपुंसकं स्यात् । गाः पातीति गोपाः तस्मिन्नित्यधिगोपम् ॥ **नाव्ययीभावादतोऽम्त्वपञ्चम्याः ।२।४।८३।** अदन्तादव्ययीभावात्सुपो न लुक् तस्य पञ्चमीं विना अमादेशश्च स्यात् ॥ **तृतीयासप्तम्योर्बहुलम् ।२।४।८४।** अदन्तादव्ययीभावात्तृतीयासप्तम्योर्बहुलमम्भावः स्यात् । उपकृष्णम् उपकृष्णेन । मद्राणां समृद्धिः सुमद्रम् । यवनानां व्यृद्धिर्दुर्यवनम् । मक्षिकाणामभावो निर्मक्षिकम् । हिमस्यात्ययोऽतिहिमम् । निद्रा संप्रति न युज्यत इत्यतिनिद्रम् । हरिशब्दस्य प्रकाश इतिहरि । विष्णोः पश्चादनुविष्णु । योग्यतावीप्सापदार्थानतिवृत्तिसादृश्यानि यथार्थाः । रूपस्य योग्यमनुरूपम् । अर्थमर्थं प्रति प्रत्यर्थम् । शक्तिमनतिक्रम्य यथाशक्ति ॥ **अव्ययीभावे चाकाले ।६।३।८१।** सहस्य सः स्यादव्ययीभावे न तु काले । हरेः सादृश्यं सहरि । ज्येष्ठस्यानुपूर्व्येणेत्यनुज्येष्ठम् । चक्रेण युग-

---

**यो**रिति ङिलोपे प्रातिपदिकत्वात्सौ समागते **अव्ययीभावश्चे**त्यनेन नपुंसकत्वे **ह्रस्वो नपुंसके प्रातिपदिकस्ये**ति ह्रस्वत्वे **अतोऽमि**त्यनेन सोरमि **अमि पूर्वे** इति पूर्वरूपादेशे च अधिगोपम् ॥ कृष्णस्य समीपे इत्युपकृष्णमित्यत्र कृष्ण ङस् उप इति विग्रहे **अव्ययं विभक्ती**ति सूत्रेण सामीप्यद्योतकेनोपशब्देन सह समासे **प्रथमानिर्दिष्ट**मित्यनेन उप इत्यस्योपसर्जनत्वे **उपसर्जनं पूर्व**मित्यनेन उप इत्यस्य पूर्वनिपाते उपकृष्ण ङस इति जातं तत्र **सुपो धातुप्रातिपदिकयो**रिति ङसो लोपे प्रातिपदिकत्वात्सौ प्राप्ते अव्ययीभावत्वात् **अव्ययादाप्सुप** इति सुलोपे प्राप्ते **नाव्ययीभावादतोऽम्त्वपञ्चम्या** इति सुलोपाभावे सोरमि च कृते **अमि पूर्वे** इत्यनेन पूर्वरूपादेशे उपकृष्णम् ॥ उपकृष्ण टा इत्यत्र **तृतीयासप्तम्योर्बहुल**मित्यनेनामोऽभावे **टाङसिङसामिनात्स्याः** इति इनादेशे गुणे च उपकृष्णेन ॥ पक्षे ॥ उपकृष्णम् ॥ एवं सप्तम्यामपि उपकृष्णे उपकृष्णम् ॥ एवं सुमद्रम् ॥ दुर्यवनम् ॥ निर्मक्षिकम् ॥ अतिहिमम् ॥ अतिनिद्रम् ॥ इतिहरि ॥ अनुविष्णु ॥ अनुरूपम् ॥ प्रत्यर्थम् ॥ यथाशक्ति इत्यादीनि रूपाणि **अव्ययं विभक्ती**ति सूत्रे तत्तदर्थवाचकाव्ययैः सह समासे उपसर्जनीभूतानां चाव्ययानां पूर्वनिपातत्वे प्रातिपदिकत्वाद्विभक्तिकार्ये च कृते भवन्ति ॥ सहरि इत्यत्र **अव्ययं विभक्ती**त्यनेन सादृश्यवाचिना सहेत्यव्ययेन सह समासे **उपसर्जनं पूर्व**मित्यनेन सहेत्यस्य पूर्वनिपाते सहहरि ङस् इति जातं तत्र **सुपो धातुप्रातिपदिकयो**रिति ङसो लोपे अव्ययीभावात्सुलोपे च **अव्ययीभावे चाकाले** इत्यनेन सहस्य सादेशे सहरि ॥ अनुज्येष्ठमित्यत्र **अव्ययं विभक्ती**ति सूत्रेण आनुपूर्व्यार्थवाचिनाऽनुनाव्ययेन समासे पूर्वनिपाते सुब्लोपे सोरमि च ॥ अनुज्येष्ठम् ॥ सचक्रमित्यत्र **अव्ययं विभक्ती**ति सूत्रेण यौगपद्यवाचिना सहेत्यव्ययेन सह समासे पूर्वनिपाते **अव्ययीभावे चाकाले** इति सूत्रेण सहेत्यस्य सादेशे सचक्र टा इति जातं तत्र **सुपो धातुप्रातिपदिकयो**रिति टालोपे सौ सोरमि च सचक्रम् ॥ ससखीत्यत्र **अव्ययं विभक्ती**ति सूत्रेण सा-

पत्सचक्रम् । सदृशः सख्या ससखि । क्षत्राणां संपत्तिः सक्षत्रम् । तृणमप्यपरित्यज्य सतृणमत्ति । अग्निग्रन्थपर्यन्तमधीते साग्नि ॥ **नदीभिश्च** ।२।१।२०। नदीभिः सह संख्या समस्यते । समाहारे चायमिष्यते । पञ्चगङ्गम् द्वियमुनम् ॥ **तद्धिताः** ।४।१।७६। आपञ्चमसमाप्तेरधिकारोऽयम् ॥ **अव्ययीभावे शरत्प्रभृतिभ्यः** ।५।४।१०७। शरदादिभ्यष्टच् स्यात्समासान्तोऽव्ययीभावे । शरदः समीपमुपशरदम् । प्रतिविपाशम् । जराया जरश्च । उपजरसमित्यादि ॥ **अनश्च** ।५।४।१०८। अन्नन्तादव्ययीभावाट्टच् स्यात् ॥ **नस्तद्धिते** ।६।४।१४४। नान्तस्य भस्य टेर्लोपस्तद्धिते । उपराजम् अध्यात्मम् ॥ **नपुंसकादन्यतरस्याम्** ।५।४।१०९। अन्नन्तं यत्क्लीबं तदन्तादव्ययीभावाट्टज्वा स्यात् । उपचर्मम् उपचर्म ॥ **झयः** ।५।४।१११। झयन्तादव्ययीभावाट्टच् स्यात् । उपसमिधम् उपसमित् ॥ इत्यव्ययीभावः ॥ २ ॥

---

सदृशवाचिना सहेत्यव्ययेन समासे पूर्वनिपाते **अव्ययीभावे चाकाले** इति सहस्य सादेशे विभक्तिकार्ये च ससखि ॥ सक्षत्रमित्यत्र **अव्ययं विभक्ती**ति सूत्रेण संपत्त्यर्थवाचिना सह इत्यव्ययेन समासे पूर्वनिपाते सहस्य सादेशे च सक्षत्रम् ॥ सतृणमित्यत्र **अव्ययं विभक्ती**ति साकल्यवाचिना सहेत्यव्ययेन सह समासे पूर्वनिपाते सहस्य सादेशे विभक्तिकार्ये च सतृणमत्ति ॥ साग्नीत्यत्र **अव्ययं विभक्ती**ति सूत्रेण पर्यन्तवाचिना सहेत्यव्ययेन सह समासे पूर्वनिपाते सहस्य सादेशे विभक्तिकार्ये च कृते साग्नि ॥ पञ्चानां गङ्गानां समाहारः पञ्चगङ्गमित्यत्र पञ्चन् आम् गङ्गा आम् इति विग्रहे **नदीभिश्चे**त्यनेन समासे सुपो लोपे **नलोपः प्रातिपदिकान्तस्ये**ति नलोपे पञ्चगङ्गा इति जाते तत्र **स नपुंसक**मित्यनेन नपुंसकत्वे **ह्रस्वो नपुंसके** इत्यनेन ह्रस्वत्वे पञ्चगङ्ग इति जाते तत्र प्रातिपदिकत्वात्सौ **अतो**ऽमिति सोरमि **अमि पूर्वः** इति पूर्वरूपादेशे पञ्चगङ्गम् ॥ एवं द्वियमुनम् ॥ उपशरदमित्यत्र **अव्ययं विभक्तीत्यनेन** समासे पूर्वनिपाते **अव्ययीभावे शरत्प्रभृतिभ्य** इत्यनेन टचि टचयोर्लोपे सौ **नाव्ययीभावादि**ति सोरमि **अमि पूर्वः** इति पूर्वरूपैकादेशे ॥ ॥ उपशरदम् ॥ एवं विपाशं प्रतीति प्रतिविपाशम् ॥ उपजरसमित्यत्र **अव्ययं विभक्ती**ति समासे पूर्वनिपाते **अव्ययीभावे शरत्प्रभृतिभ्य** इति टचि **जराया जरश्चे**ति जरसि विभक्तिकार्ये कृते उपजरसम् ॥ राज्ञः समीपमुपराजमित्यत्र **अव्ययं विभक्ती**ति समासे पूर्वनिपाते उपराजन् इति जाते तत्र **अनश्चे**ति सूत्रेण टचि टचयोर्लोपे **नस्तद्धिते** इति सूत्रेण टिलोपे विभक्तिकार्ये च उपराजम् ॥ एवमात्मनीत्यध्यात्मम् ॥ उपचर्ममित्यत्र **अव्ययं विभक्ती**ति समासे पूर्वनिपाते **नपुंसकादन्यतरस्या**मिति टचि टिलोपे च उपचर्मम् । पक्षे टचोऽभावे **नलोपः प्रातिपदिकान्तस्ये**ति नलोपे उपचर्म ॥ उपसमिधमित्यत्र **अव्ययं विभक्ती**ति समासे पूर्वनिपाते **झय** इति टचि उपसमिधम् । पक्षे उपसमित् ॥ इत्यव्ययीभावः ॥

## ॥ अथ तत्पुरुषः ॥

**तत्पुरुषः** ।२।१।२२। अधिकारोऽयम् प्राग्बहुव्रीहेः ॥ **द्विगुश्च** ।२।१।२३। द्विगुरपि तत्पुरुषसंज्ञकः स्यात् ॥ **द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः** ।२।१।२४। द्वितीयान्तं श्रितादिप्रकृतिकैः सुबन्तैः सह समस्यते वा स च तत्पुरुषः । कृष्णं श्रितः कृष्णश्रित इत्यादि ॥ **तृतीया तत्कृतार्थेन गुणवचनेन** ।२।१।३०। तृतीयान्तं तृतीयान्तार्थकृतगुणवचनेनार्थेन च सह वा प्राग्वत् । शङ्कुलया खण्डः शङ्कुलाखण्डः । धान्येनार्थो धान्यार्थः । तत्कृतेति किम् । अक्ष्णा काणः ॥ **कर्तृकरणे कृता बहुलम्** ।२।१।३२। कर्तरि करणे च तृतीया कृदन्तेन बहुलं प्राग्वत् । हरिणा त्रातो हरित्रातः । नखैर्भिन्नो नखभिन्नः । कृद्ग्रहणे गतिकारकपूर्वस्याऽपि ग्रहणम् । नखनिर्भिन्नः ॥ **चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः** ।२।१।३६। चतुर्थ्यन्तार्थाय यत्तद्वाचिना अर्थादिभिश्च चतुर्थ्यन्तं वा प्राग्वत् । यूपाय दारु यूपदारु । तदर्थेन प्रकृतिविकृतिभाव एवेष्टः । तेनेह न । रन्धनाय स्थाली । ( अर्थेन नित्यसमासो विशेष्यलिङ्गता चेति

कृष्णं श्रित इत्यत्र **द्वितीयाश्रितातीते**ति समासे कृष्ण अम् श्रित सु इति स्थिते **सुपोधातुप्रातिपदिकयो**रिति सुब्लुकि विभक्तिकार्ये च कृष्णश्रितः ॥ शङ्कुलया खण्ड इत्यत्र **तृतीया तत्कृतार्थेन गुणवचनेने**ति सूत्रेण समासे सुब्लुकि प्रातिपदिकत्वात् विभक्तिकार्ये च शङ्कुलाखण्डः ॥ एवं धान्येन अर्थ इत्यत्र **तृतीयातत्कृतार्थेन गुणवचनेने**ति समासे **सुपो धातुप्रातिपदिकयो**रिति सुब्लोपे विभक्तिकार्ये च धान्यार्थः ॥ यदि **तृतीयातत्कृतार्थेने**ति सूत्रेण तत्कृतेति नापठिष्यंश्चेद्भगवान् पाणिनिस्तर्हि अक्ष्णा काण इत्यत्राप्यभविष्यत्समासः ॥ हरिणा त्रात इत्यत्र **कर्तृकरणे कृता बहुल**मिति सूत्रेण समासे सुब्लोपे विभक्तिकार्ये च कृते हरित्रातः ॥ एवं नखैर्भिन्नो नखभिन्नः ॥ नखैर्निर्भिन्न इत्यत्र कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणात्समासे **सुपो धातुप्रातिपदिकयो**रिति सुपोलोपे विभक्तिकार्ये च नखनिर्भिन्नः ॥ यूपाय दारु इत्यत्र **चतुर्थी तदर्थार्थबलिहितसुखरक्षितै**रित्यनेन समासे **सुपो धातुप्रातिपदिकयो**रिति सुपो लोपे यूपदारु ॥ रन्धनाय स्थाली इत्यत्र चतुर्थ्यां सत्यामपि तदर्थत्वाभावान्न समासः ॥ द्विजाय अयमित्यत्र **अर्थेन नित्यसमासो विशेष्यलिङ्गता चेति वक्तव्य**मिति वार्तिकेन समासे द्विज ङे अर्थ सु इति विग्रहे सुब्लोपे विभक्तिकार्ये च द्विजार्थः सूपः । एवं द्विजार्था यवागूः । द्विजार्थं पयः । भूतेभ्यो बलिः भूतबलिः । गोभ्यो हितं गोहितं । गोभ्यः सुखं गोसुखं इत्यादिषु **चतुर्थी तदर्थार्थबलिहितसुखरक्षितै**रित्यनेन सूत्रेण समासो विधेयः ॥ चो-

१ चतुर्थी तदर्थार्थबलिहितेति । तच्छब्देन प्रकृता चतुर्थी परामृश्यते । तदन्तमहत्त्वादिसामर्थ्या तदन्तविधिः । तदाह चतुर्थ्यन्तार्थाय यदिति चतुर्थ्यन्तवाच्याय यूपाय यद्दार्वादि तद्वाचिना चतुर्थ्यन्तं समस्यत इत्यर्थः ।

वक्तव्यम् ) द्विजार्थः सूपः द्विजार्था यवागूः द्विजार्थं पयः । भूतबलिः । गोहितम् गोसुखम् गोरक्षितम् ॥ **पञ्चमी भयेन ।२।१।३७।** चोराद्भयं चोरभयम् ॥ **स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन ।२।१।३९। पञ्चम्याः स्तोकादिभ्यः ।६।३।२।** अलुगुत्तरपदे । स्तोकान्मुक्तः । अन्तिकादागतः । अभ्याशादागतः । दूरादागतः । कृच्छ्रादागतः ॥ **षष्ठी ।२।२।८।** सुबन्तेन प्राग्वत् । राजपुरुषः ॥ **पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे ।२।२।१।** अवयविना सह पूर्वादयः समस्यन्ते एकत्वसंख्याविशिष्टश्चेदवयवी । षष्ठीसमासापवादः । पूर्वं कायस्य पूर्वकायः । अपरकायः । एकाधिकरणे किम् । पूर्वश्छात्राणाम् ॥ **अर्धं नपुंसकम् ।२।२।२।** समांशवाच्यर्धशब्दो नित्यं क्लीबे प्राग्वत् ॥ अर्धं पिप्पल्या अर्धपिप्पली ॥ **सप्तमी शौण्डैः ।२।१।४०।** सप्तम्यन्तं शौण्डादिभिः प्राग्वत् । अक्षेषु शौण्डः अक्षशौण्ड इत्यादि । द्वितीयातृतीयेत्यादियोगविभागादन्यत्रापि तृतीयादिविभक्तीनां प्रयोगवशात्समासो ज्ञेयः ॥ **दिक्संख्ये संज्ञायाम् ।२।१।५०।** संज्ञायामेवेति नियमार्थं सूत्रम् । पूर्वेषुकामशमी । सप्तर्षयः । तेनेह न । उत्तरा वृक्षाः । पञ्च ब्राह्मणाः ॥ **तद्धितार्थोत्तरपदसमाहारे-**

---

राद्भयमित्यत्र **पञ्चमी भयेने**ति सूत्रेण समासे सुब्लोपे विभक्तिकार्ये च चोरभयम् ॥ स्तोकान्मुक्त इत्यत्र **स्तोकान्तिकदूरार्थे**ति सूत्रेण क्तान्तेन सह समासे **पञ्चम्याः स्तोकादिभ्य** इत्यनेन पञ्चम्या अलुकि स्तोकान्मुक्तः । एवमेव अन्तिकादागतः । अभ्याशादागतः । दूरादागतः । कृच्छ्रादागतः ॥ राज्ञः पुरुष इत्यत्र **षष्ठी सुबन्तेन प्राग्वदि**त्यनेन समासे राजन् ङस् पुरुष सु इति विग्रहे **सुपो धातुप्रातिपदिकयो**रिति सुब्लोपे **नलोपः प्रातिपदिकान्तस्ये**ति नकारलोपे विभक्तिकार्ये च राजपुरुषः । कायस्य पूर्वमित्यत्र **पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे** इत्यनेन समासे प्रथमानिर्दिष्टपूर्वशब्दस्य उपसर्जनत्वात् **उपसर्जनं पूर्व**मित्यनेन पूर्वशब्दे पूर्वं प्रयुक्ते **सुपो धातुप्रातिपदिकयो**रिति सुब्लोपे विभक्तिकार्ये च पूर्वकायः ॥ एवमपरकायः ॥ पूर्वश्छात्राणामित्यत्र एकाधिकरणत्वाभावान्न समासः ॥ अर्धं पिप्पल्या इत्यत्र **अर्द्धं नपुंसक**मित्यनेन समासे **उपसर्जनं पूर्व**मिति सूत्रेणार्द्धशब्दे पूर्वं प्रयुक्ते सुब्लोपे विभक्तिकार्ये च कृते अर्द्धपिप्पली ॥ अक्षेषु शौण्ड इत्यत्र **सप्तमी शौण्डै**रित्यनेन समासे सुब्लोपे विभक्तिकार्ये च अक्षशौण्डः ॥ पूर्वेषुकामशमीत्यत्र **दिक्संख्ये संज्ञाया**मित्यनेन समासः सुब्लोपे विभक्तिकार्ये च पूर्वेषुकामशमी ॥ सप्त च ते ऋषयश्चेत्यत्र **दिक्संख्ये संज्ञाया**मित्यनेन समासे सप्त जस् ऋषि जस् इति विग्रहे सुब्लोपे विभक्तिकार्ये च सप्तर्षयः ॥ उत्तरावृक्षाः ॥

---

१ तद्धितार्थोत्तरपदसमाहारे च । एषापि षष्ठी विषयभेदाद्भिद्यते । इत्याशयेनाह तद्धितार्थे विषये इत्यादि । यदि च तद्धितार्थे वाच्ये इति व्याख्यायेत तर्हि पौर्वशाल इत्यादौ तद्धितो न स्यात् तदर्थस्य समासेनैवोक्तत्वात् । तद्धितार्थे परे इति तु नोक्तं तद्धिते परे समासः समासे कृते तद्धित इति अन्योऽन्याश्रयप्रसङ्गात् ॥

सर्पः क्वचिन्न । रामो जामदग्न्यः ॥ **उपमानानि सामान्यवचनैः** ।२।१।५५। घन इव श्यामो घनश्यामः । ( शाकपार्थिवादीनां सिद्धये उत्तरपदलोपस्योपसंख्यानम् ) शाकप्रियः पार्थिवः शाकपार्थिवः । देवपूजको ब्राह्मणो देवब्राह्मणः ॥ **नञ्** ।२।२।६। नञ् सुपा सह समस्यते ॥ **नलोपो नञः** ।६।३।७३। नञो नस्य लोप उत्तरपदे । न ब्राह्मणः अब्राह्मणः ॥ **तस्मान्नुडचि** ।६।३।७४। लुप्तनकारान्नञ उत्तरपदस्याजादेर्नुडागमः स्यात् । अनश्वः । नैकधेत्यादौ तु नशब्देन सह सुप्सुपेति समासः ॥ **कुगतिप्रादयः** ।२।२।१८। एते समर्थेन नित्यं समस्यन्ते । कुत्सितः पुरुषः कुपुरुषः ॥ **ऊर्यादिच्विडाचश्च** ।१।४।६१। ऊर्यादयश्च्व्यन्ताश्च क्रियायोगे गतिसंज्ञाः स्युः । ऊरीकृत्य शुक्लीकृत्य पटपटाकृत्य । सुपुरुषः । ( प्रादयो गताद्यर्थे प्रथमया ) प्रगत आचार्यः प्राचार्यः । ( अत्यादयः क्रान्ताद्यर्थे द्वितीयया ) अतिक्रान्तो मालामिति विग्रहे ॥ **एकविभक्ति चापूर्वनिपाते** ।१।२।४४। विग्रहे यन्नियतविभक्तिकं तदुपसर्जनसंज्ञं स्यान्न तु तस्य पूर्वनिपातः ॥ **गोस्त्रियोरुपसर्जनस्य** ।१।२।४८। उपसर्जनं यो गो-

---

च कृष्णसर्पः ॥ रामो जामदग्न्य इत्यत्र बहुलग्रहणान्न समासः ॥ घन इव श्याम इत्यत्र **उपमानानि सामान्यवचनैः** नीलं च तदुत्पलं चेत्यत्र **विशेषणं विशेष्येण बहुलमि**त्यनेन समासे सुब्लोपे विभक्तिकार्ये च घनश्यामः ॥ शाकं प्रियं यस्य स. शाकप्रियः शाकप्रियश्चासौ पार्थिवश्चेत्यत्र **विशेषणं विशेष्येण बहुल**मित्यनेन समासे सुब्लोपे शाकप्रियपार्थिव इति जाते तत्र **शाकपार्थिवादीनां सिद्धये उत्तरपदलोपस्योपसंख्यान**मित्यनेन शाकपदापेक्षयोत्तरपदत्वाभावः प्रियशब्दस्य लोपे वि० का० शाकपार्थिवः । एवं देवपूजको ब्राह्मण इत्यत्रापि ज्ञेयम् ॥ नब्राह्मण इत्यत्र **नञ्** सुपा सह समस्यते इति सूत्रेण समासे सुपो लोपे **नलोपो नञ** इति सूत्रेण नलोपे अब्राह्मणः ॥ न अश्व इत्यत्र नञ् इति सूत्रेण समासे **नलोपो नञ** इति सूत्रेण नलोपे च अ अश्व इति जातं तत्र **तस्मान्नुडचि** इत्यनेन नुटि अनुट् अश्व इति जाते उठो लोपे संयोगे विभक्तिकार्ये च अनश्व ॥ नैकधेत्यत्र **सुप्सुपेति** सूत्रेण नकारेण समासे नैकधा ॥ कुपुरुष इत्यत्र **कुगतिप्रादय** इति सूत्रेण समासे सुपो लोपे वि० का० कुपुरुषः ॥ ऊरीकृत्येत्यत्र **ऊर्यादिच्विडाचश्चे**ति सूत्रेण ऊरीत्यस्य गतिसंज्ञायां **कुगतिप्रादय** इत्यनेन समासे ऊरीकृत्य । एवं शुक्लीकृत्य । पटपटाकृत्य ॥ प्रादित्वात्समासे च्व्यन्तत्वेन गतित्वे सुपुरुषः ॥ प्रगत आचार्य इत्यत्र **प्रादयो गताद्यर्थे प्रथमया** इति समासे सुब्लोपे च प्राचार्यः ॥ अतिक्रान्तो मालामित्यत्र **अत्यादयः क्रान्ताद्यर्थे द्वितीययेति** सूत्रेण समासे सुब्लोपे अतिमाला इति जातं तत्र **एकविभक्ति चापूर्वनिपाते** इति सूत्रेण अतियोगे नियतविभक्तिकत्वस्य मालापदस्य उपसर्जनसंज्ञायां **गोस्त्रियोरुपसर्जनस्येति** सूत्रेण उपसर्जनीभूतस्त्रीप्रत्ययान्तप्रातिपदिकस्य-

---

१ गोस्त्रियोरुपसर्जनस्य ॥ उपसर्जनत्वं च अन्यपदार्थनिष्ठविशेष्यतानिरूपितप्रकारताश्रयीभवत्त्वम् ।

शब्दः स्त्रीप्रत्ययान्तं च तदन्तस्य प्रातिपदिकस्य ह्रस्वः स्यात् । अतिमालः । ( अवादयः क्रुष्टाद्यर्थे तृतीयया ) अवक्रुष्टः कोकिलया अवकोकिलः । ( पर्यादयो ग्लानाद्यर्थे चतुर्थ्या ) परिग्लानोऽध्ययनाय पर्यध्ययनः । ( निरादयः क्रान्ताद्यर्थे पञ्चम्या ) निष्क्रान्तः कौशाम्ब्याः निष्कौशाम्बिः ॥ **तत्रोपपदं सप्तमीस्थम्** ।३।१।९२। सप्तम्यन्ते पदे कर्मणीत्यादौ वाच्यत्वेन स्थितं कुम्भादि तद्वाचकं पदमुपपदसंज्ञं स्यात् ॥ **उपपदमतिङ्** ।२।२।१९। उपपदं सुबन्तं समर्थेन नित्यं समस्यतेऽतिङन्तश्चायं समासः । कुम्भं करोतीति कुम्भकारः । अतिङ् किम् । माभवान् भूत् । माङि लुङिति सप्तमीनिर्देशान्माङुपपदम् । गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः । व्याघ्री अश्वक्रीति कच्छपीत्यादि ॥ **तत्पुरुषस्याङ्गुलेः संख्याव्ययादेः** ।५।४।८६। संख्या-

---

पस्य मालाशब्दस्य ह्रस्वत्वे अतिमालः ॥ अवक्रुष्टः कोकिलयेत्यत्र **अवादयः क्रुष्टाद्यर्थे तृतीययेति** समासे सुब्लोपे अवकोकिला इति जातं तत्र **एकविभक्ति चापूर्वनिपाते** इति सूत्रेण कोकिलेत्यस्योपसर्जनत्वे **गोस्त्रियोरुपसर्जनस्येति** सूत्रेणोपसर्जनीभूतटबन्तपदस्य ह्रस्वत्वे वि० का० अवकोकिलः ॥ परिग्लानोऽध्ययनायेत्यत्र **पर्य्यादयो ग्लानाद्यर्थे चतुर्थ्येति** सूत्रेण समासे सुब्लोपे विभक्तिकार्ये च कृते पर्य्यध्ययनः ॥ निष्क्रान्तः कौशाम्ब्या इत्यत्र **निरादयः क्रान्ताद्यर्थे पञ्चम्या** इति समासे सुब्लोपे **गोस्त्रियोरुपसर्जनस्येति** सूत्रेण ह्रस्वत्वे निष्कौशाम्बिः ॥ कुम्भं करोतीत्यत्र **कर्मण्यण्** इत्यनेन अणि कुम्भ अस् कृ अण् इति विग्रहे **अचोञ्णितीति** वृद्धौ **तत्रोपपदं सप्तमीस्थमिति** सूत्रेण कुम्भशब्दस्योपपदसंज्ञायां **उपपदमतिङ्** इति सूत्रेण समासे कुम्भ अस् कार इति विग्रहे सुब्लोपे विभक्तिकार्ये च कृते कुम्भकारः ॥ माभवान् भूत् इत्यत्र **माङि लुङिति** सप्तमीनिर्देशान्मा इत्यस्य यद्यप्युपपदसंज्ञा वर्तत एव तथापि तिङन्तत्वात् **उपपदमतिङ्** इति सूत्रेण न समासः ॥ विशेषेण आसमन्ताज्जिघ्रतीत्यत्र गतित्वात्सुबुत्पत्तेः पूर्वं **कुगतिप्रादय** इत्यनेन समासे व्याघ्र इति जातं तत्र **जातेरस्त्रीविषयादयोपधात्** इत्यनेन ङीषि ङषयोर्लोपे **यचिभमिति** भसंज्ञायां **यस्येति चेति** अकारोत्तरवर्त्ति-अकारलोपे संयोगे विभक्तिकार्ये च व्याघ्री ॥ अश्वेन क्रीयते स्म इति विग्रहे अश्व टा क्रीत इति विग्रहे **गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक्सुबुत्पत्तेरिति** समासे सुब्लोपे अश्वक्रीत इति जातं तत्र **क्रीतात्करणपूर्वात्** इत्यनेन ङीषि **यचि भमिति** भसंज्ञायां **यस्येति चेति** सूत्रेण तकारोत्तरवर्त्त्यकारलोपे संयोगे सौ **हल्ङ्याब्भ्य इति** सलोपे च अश्वक्रीती ॥ कच्छाभ्यां पिबतीत्यत्र **आतोऽनुपसर्गे कः** इति कप्रत्यये ककारलोपे **आतो लोप इटि चेति** पान्तःपात्याकारलोपे **गतिकारकोपपदानां कृद्भिरिति** समासे **सुपो धातुप्रातिपदिकयोरिति** सुब्लोपे **क्रीतात्करणपूर्वात्** इति ङीषि ङषयोर्लोपे **यचिभमिति** भसंज्ञायां **यस्येति चेत्यनेन** पकारोत्तरवर्त्त्याकारलोपे

व्ययादेरङ्गुल्यन्तस्य समासान्तोऽच् स्यात् । द्वे अङ्गुली प्रमाणमस्य द्व्यङ्गुलम् । निर्गतमङ्गुलिभ्यो निरङ्गुलम् ॥ **अहःसर्वैकदेशसंख्यातपुण्याच्च रात्रेः** ।५।४।८७। एभ्यो रात्रेरच् स्याच्चात्संख्याव्ययादेः । अहर्ग्रहणं द्वन्द्वार्थम् ॥ **रात्राह्नाहाः पुंसि** ।२।४।२९। एतदन्तौ द्वन्द्वतत्पुरुषौ पुंस्येव । अहश्च रात्रिश्चाहोरात्रः । सर्वरात्रः संख्यातरात्रः । संख्यापूर्वं रात्रं क्लीवम् । द्विरात्रम् ॥ त्रिरात्रम् ॥ **राजाहःसखिभ्यष्टच्** ।५।४।९१। एतदन्तात्तत्पुरुषाट्टच् स्यात् । परमराजः ॥ **आन्महतः समानाधिकरणजातीययोः** ।६।३।४६। महत आकारोऽन्तादेशः स्यात्समानाधिकरणे उत्तरपदे जातीये च परे । महाराजः । प्रकारवचने जातीयर् । महाप्रकारो महाजातीयः ॥ **द्व्यष्टनः संख्यायामबहुव्रीह्यशीत्योः** ।६।३।४७। आत्स्यात् । द्वौ च दश च द्वादश ।

---

संयोगे विभक्तिकार्ये च कृते कच्छपी ॥ द्वे अङ्गुली प्रमाणमस्येत्यत्र **तत्पुरुषस्याङ्गुलेः संख्याव्ययादेरि**त्यनेन समासान्ते डच् प्रत्यये जाते द्वि औ अङ्गुलि औ अ इति विग्रहे तत्र **सुपो धातुप्रातिपदिकयो**रिति सुब्लोपे द्विअङ्गुलि अ इति जातं तत्र **इको यणची**ति यणि च द्व्यङ्गुलि अ इति जातं तत्र **यचि भ**मिति भसंज्ञायां **यस्येति चे**त्यनेन लकारोत्तरवर्तीकारलोपे संयोगे विभक्तिकार्ये च द्व्यङ्गुलम् ॥ एवं निर्गतमङ्गुलीभ्यो निरङ्गुलम् ॥ अहश्च रात्रिश्चेत्यत्र **अहःसर्वैकदेशसंख्यातपुण्याच्च रात्रेः** इति सूत्रेण अहःपूर्वाद्रात्रिशब्दादचि कृते अहन् रात्रि अच् इति जातं भसंज्ञायां **यस्येति चे**त्यनेन तकारोत्तरवर्तिन इकारस्य लोपे **अहन्** इत्यनेन नस्य रुत्वे **हशि चे**ति रस्योत्वे **आद्गुण** इति गुणे अहोरात्र इति जातं **परवल्लिङ्गं द्वन्द्वतत्पुरुषयो**रिति स्त्रीत्वे प्राप्ते तद्बाधित्वा **रात्राह्नाहाः पुंसी**ति सूत्रेण पुंस्त्वे सौ सस्य रुत्वे रस्य विसर्गे च अहोरात्रः ॥ एवं सर्वरात्रः ॥ संख्यातरात्रः ॥ द्विरात्रम् ॥ त्रिरात्रमित्यत्र पूर्ववत्स्त्रीत्वं बाधित्वा पुंस्त्वे प्राप्ते पुंस्त्वं बाधित्वा **संख्यापूर्वं रात्रं क्ली**बमित्यनेन क्लीबत्वम् ॥ परमश्चासौ राजा चेत्यत्र **विशेषणं विशेष्येण बहुल**मित्यनेन समासे सुब्लोपे **राजाहःसखिभ्यष्टच्** इति टचि टचयोर्लोपे परमराजन् अ इति जाते **यचि भ**मिति भसंज्ञायां **नस्तद्धिते** इति नान्तटिलोपे संयोगे विभक्तिकार्ये च कृते परमराजः ॥ महांश्चासौ राजा चेत्यत्र **विशेषणं विशेष्येण बहुल**मिति समासे सुब्लोपे **राजाहःसखिभ्यष्टच्** इति टचि टचयोर्लोपे **नस्तद्धिते** इति टिलोपे महत् राज इति जाते **आन्महतः समानाधिकरणजातीययो**रिति सूत्रेण समानाधिकरणे राज इत्युत्तरपदे महतस्तकारस्याकारादेशे **अकः सवर्णे दीर्घ** इति दीर्घे विभक्तिकार्ये च महाराजः ॥ एवं महाप्रकारो महाजातीयः ॥ द्वौ च दश च द्वादशेत्यत्र **चार्थे द्वन्द्व** इत्यनेन समासे सुब्लोपे द्विदश इति जातं तत्र **द्व्यष्टनः संख्यायामबहुव्रीह्यशीत्यो**रिति सूत्रेण द्विशब्दस्याकारान्तादेशे कृते द्वादश ॥ एवं अष्टाविंशतिः ॥ कुक्कुटश्च मयूरी चेत्यत्र **चार्थे द्वन्द्व** इति समासे

अष्टाविंशतिः ॥ **परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः** ।२।४।२६। एतयोः परपदस्येव लिङ्गं स्यात् । कुक्कुटमयूर्याविमे । मयूरीकुक्कुटाविमौ । अर्धपिप्पली । (द्विगुप्राप्तापन्नालंपूर्वगतिसमासेषु प्रतिषेधो वाच्यः ) पञ्चसु कपालेषु संस्कृतः पञ्चकपालः पुरोडाशः । प्राप्तो जीविकां प्राप्तजीविकः । आपन्नजीविकः । अलं कुमार्यै अलंकुमारिः ॥ अत एव ज्ञापकात्समासः । निष्कौशाम्बिः ॥ **अर्धर्चाः पुंसि च** ।२।४।३१। अर्धर्चादयः शब्दाः क्लीबे च स्युः । अर्धर्चः । अर्धर्चम् । एवं ध्वजतीर्थशरीरमण्डपयूपदेहाङ्कुशपात्रसूत्रादयः । सामान्ये नपुंसकम् । मृदु पचति । प्रातः कमनीयम् ॥ इति तत्पुरुषः ॥ ३ ॥

## अथ बहुव्रीहिः ॥ ४ ॥

**शेषो बहुव्रीहिः** ।२।२।२३ अधिकारोऽयं प्राग्द्वन्द्वात् ॥ **अनेकमन्यपदार्थे** ।२।२।२४। अनेकं प्रथमान्तमन्यस्य पदस्यार्थे वर्तमानं वा समस्यते स बहुव्रीहिः ॥ **सप्तमीविशेषणे बहुव्रीहौ** ।२।२।३५। सप्तम्यन्तं विशेषणं च बहुव्रीहौ पूर्वं स्यात् । कण्ठेकालः । अत एव ज्ञापकाद्व्यधिकरणपदो बहुव्रीहिः ॥ **हलदन्तात्सप्तम्याः संज्ञायाम्** ।६।३।९। हलन्तादन्तात्सप्तम्या अलुक् । प्राप्तमुदकं यं प्राप्तोदको ग्रामः ॥ ऊढरथोऽनड्वान् । उपहृतपशू रुद्रः । उद्धृतौदना स्थाली । पीताम्बरो हरिः । वीरपुरुषको ग्रामः । ( प्रादिभ्यो धातुजस्य वाच्यो वाचोत्तरपदलोपः ) प्रपतितपर्णः प्रपर्णः ।

---

सुब्लोपे **परवल्लिङ्गं द्वन्द्वतत्पुरुषयो**रित्यनेन परवल्लिङ्गत्वे प्रथमाद्विवचन औ समागते **इको यणची**ति यणि च कृते कुक्कुटमयूर्यौ ॥ एवं मयूरीकुक्कुटौ ॥ पञ्चसु कपालेषु संस्कृतः पञ्चकपाल इत्यत्र **परवल्लिङ्गं द्वन्द्वतत्पुरुषयो**रिति परवल्लिङ्गत्वे प्राप्ते **द्विगुप्राप्तापन्नालं पूर्वगतिसमासेषु प्रतिषेधो वाच्य** इत्यनेन परवल्लिङ्गत्वप्रतिषेधे विभक्तिकार्ये च पञ्चकपालः पुरोडाशः ॥ एवं प्राप्तजीविकः ॥ आपन्नजीविकः ॥ अलंकुमारि इत्यादिषु **द्विगुप्राप्तापन्नालंपूर्वगतिसमासेष्वि**त्यनेन परवल्लिङ्गत्वनिषेधो ज्ञेयः ॥ अर्द्धर्चं ॥ अर्द्धर्चः ॥ इत्यत्र **अर्द्धर्चाः पुंसिचे**त्यनेन क्लीबत्वं पुंस्त्वं च ॥ मृदु पचति ॥ प्रातः कमनीयम् ॥ इत्यादौ ॥ **सामान्ये नपुंसक**मित्यनेन नपुंसकत्वं ज्ञेयम् ॥ इति तत्पुरुषः ॥

कण्ठे काल इत्यत्र **सप्तमीविशेषणे बहुव्रीहौ** इत्यनेन सप्तम्यन्तस्य पूर्वनिपातो **सुपो धातुप्रातिपदिकयो**रिति सुब्लोपे प्राप्ते **हलदन्तात्सप्तम्याः संज्ञाया**मित्यनेन सप्तम्या अलुकि वि० कार्ये च । कण्ठेकालः ॥ प्राप्तं उदकं यमित्यत्र **अनेकमन्यपदार्थे** इति समासे सुब्लोपे **आद्गुण** इति गुणे प्रातिपदिकत्वाद्विभक्तिकार्ये च प्राप्तोदको ग्रामः ॥ ऊढो रथो येन स ऊढरथोऽनड्वान् ॥ उपहृतः पशुर्यस्मै सः उपहृतपशू रुद्रः ॥ उद्धृत ओदनो यस्याः सा उद्धृतौदना स्थाली ॥ पीतं अम्बरं यस्य सः पीताम्बरो हरिः ॥ वीराः पुरुषा यस्मिन् सः वीरपुरुषको ग्रामः ॥ इत्येतेषु **अनेकमन्यपदार्थे** इत्यनेन समासे सुब्लोपे विभक्तिकार्ये च कृते तानि तानि रूपाणि भवन्ति ॥ वीरपुरुषक इत्यत्र तु **शेषाद्विभाषे**त्यनेन कविधा-

( नञोऽस्त्यर्थानां वाच्यो वाचोत्तरपदलोपः ) अविद्यमानपुत्रोऽपुत्रः ॥ **स्त्रियाः पुंवद्भाषितपुंस्कादनूङ्समानाधिकरणे स्त्रियामपूरणीप्रियादिषु** ।६।३।३४। उक्तपुंस्कादनूङ् ऊङोऽभावोऽस्यामिति बहुव्रीहिः । निपातनात्पञ्चम्या अलुक् षष्ठ्याश्च लुक् । तुल्ये प्रवृत्तिनिमित्ते यदुक्तपुंस्कं तस्मात्पर ऊङोऽभावो यत्र तथाभूतस्य स्त्रीवाचकशब्दस्य पुंवाचकस्येव रूपं स्यात् समानाधिकरणे स्त्रीलिङ्गे उत्तरपदे न तु पूरण्यां प्रियादौ च परतः । गोस्त्रियोरिति ह्रस्वः । चित्रगुः । रूपवद्भार्यः । अनूङ् किम् । वामोरूभार्यः ॥ **अप्पूरणीप्रमाण्योः** ।५।४।११६। पूरणार्थप्रत्ययान्तं यत्स्त्रीलिङ्गं तदन्तात्प्रमाण्यन्ताच्च बहुव्रीहेरप् स्यात् । कल्याणी पञ्चमी यासां रात्रीणा ताः कल्याणीपञ्चमा रात्रयः । स्त्री प्रमाणी यस्य स स्त्रीप्रमाणः । अप्रियादिषु किम् । कल्याणीप्रिय इत्यादि ॥ **बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच्** ।५।४।११३। स्वाङ्गवाचिसक्थ्यक्ष्यन्ताद्बहुव्रीहेः षच् स्यात् । दीर्घसक्थः । जलजाक्षी । स्वाङ्गात्किम् । दीर्घसक्थि शकटम् । स्थूलाक्षा वेणुयष्टिः । अक्ष्णोऽदर्शना-

---

नमधिकम् । प्रपतितानि पर्णानि यस्येत्यत्र **प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तरपदलोप** इत्यनेन समासे उत्तरपदलोपविकल्पे च कृते प्रपतितपर्ण. प्रपर्ण. ॥ न विद्यमान पुत्रो यस्येत्यत्र नञोऽस्त्यर्थानामिति समासे लोपविकल्पे **नलोपो नञः** इत्यनेन नलोपे वि० का० कृ० अपुत्र ॥ लोपाभावपक्षे तु अविद्यमानपुत्र ॥ चित्रा गावो यस्येत्यत्र **अनेकमन्यपदार्थे** इति समासे सुब्लोपे च चित्रा गो इति जाते तत्र **गोस्त्रियोरुपसर्जनस्ये**ति ह्रस्वत्वे चित्रागु इति जाते तत्र **स्त्रियाः पुंवद्भाषितपुंस्का**दित्यनेन स्त्रीवाचकस्य चित्रा इत्यस्य पुंवद्भावे कृते चित्रगु इति जाते तत्र **गोस्त्रियोरुपसर्जनस्ये**ति गकारोत्तरवर्तिन ओकारस्य ह्रस्वत्वे वि० का० कृ० चित्रगु ॥ एवं रूपवती भार्या यस्येत्यत्र सुब्लोपे पुंवद्भावे **गोस्त्रियोरुपसर्जनस्ये**ति यकारोत्तरवर्तिन आकारस्य ह्रस्वे वि० का० कृ० रूपवद्भार्य ॥ वामोरूभार्य इत्यत्र अनूङ् इति निषेधान्न पुंवद्भावः ॥ कल्याणपञ्चमा इत्यत्र कल्याणीषु पञ्चमीषु इति विग्रहे सुब्लोपे **अप्पूरणीप्रमाण्यो**रिति सूत्रेण अपि पकारलोपे कल्याणी पञ्चमी अ इति जाते **यचिभ**मिति भत्वे **यस्येति** चेति मोत्तरवर्तिन इकारस्य लोपे कल्याणीपञ्चम इति जाते तत्र **अजाद्यतष्टाप्** इति टापि वि० का० कल्याणीपञ्चमारात्रय इति जाते अत्र सामानाधिकरणे पञ्चमीशब्दे पूरणप्रत्ययान्तत्वान्न कल्याणीत्यस्य पुंवद्भाव । स्त्रीप्रमाण इत्यत्र भाषितपुंस्कत्वाभावात्स्त्रीशब्दस्य न पुंवद्भाव । कल्याणीप्रिय इत्यत्र समानाधिकरणे प्रियशब्दस्य विद्यमानत्वात्कल्याणीत्यस्य न पुंवद्भावः ॥ दीर्घे सक्थिनी यस्येत्यत्र **अनेकमन्यपदार्थे** इति सूत्रेण समासे सुब्लोपे च दीर्घसक्थिन् इति जाते तत्र **बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच्** इत्यनेन षचि षस्य **षः प्रत्ययस्ये**ति षलोपे चलोपे **यचिभ**मिति भसञ्ज्ञायां **नस्तद्धिते** इति नान्तटिलोपे सयोगे वि० का० कृ० दीर्घसक्थ. ॥ जलजाक्षीत्यत्र **अनेकमन्यपदार्थे** इति समासे सुब्लोपे **बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्**

दिति वक्ष्यमाणोऽच् ॥ **द्वित्रिभ्यां ष मूर्ध्नः ।५।४।११५।** आभ्यां मूर्ध्नः षः स्याद्बहुव्रीहौ । द्विमूर्धः । त्रिमूर्धः ॥ **अन्तर्बहिर्भ्यां च लोम्नः ।५।४।११७।** आभ्यां लोम्नोऽप्स्याद्बहुव्रीहौ । अन्तर्लोमः । बहिर्लोमः ॥ **पादस्य लोपोऽहस्त्यादिभ्यः ।५।४।१३८।** हस्त्यादिवर्जितादुपमानात्परस्य पादशब्दस्य लोपः स्याद्बहुव्रीहौ । व्याघ्रस्येव पादावस्य व्याघ्रपात् । अहस्त्यादिभ्यः किम् । हस्तिपादः । कुसूलपादः ॥ **संख्यासुपूर्वस्य ।५।४।१४०।** पादस्य लोपः स्यात्समासान्तो बहुव्रीहौ । द्विपात् सुपात् ॥ **उद्विभ्यां काकुदस्य ।५।४।१४८।** लोपः स्यात् । उत्काकुत् । विकाकुत् ॥ **पूर्णाद्विभाषा ।५।४।१४९।** पूर्णकाकुत् पूर्णकाकुदः ॥ **सुहृद्दुर्हृदौ मित्रामित्रयोः ।५।४।१५०।** सुदुर्भ्यां हृदयस्य हृद्भावो निपात्यते । सुहृन्मित्रम् दुर्हृदमित्रः ॥ **उरःप्रभृतिभ्यः कप् ।५।४।१५१।** **कस्कादिषु च ।८।३।४८।** एष्विण उत्तरस्य विसर्गस्य षोऽन्यस्य तु

---

षच् इति षचि षचयोर्लोपे भसंज्ञायां टिलोपे संयोगे च जलजाक्ष इति जातं तत्र **षिद्गौरादिभ्यश्चे**ति ङीषि ङषयोर्लोपे पुनर्भसंज्ञायां **यस्येति** चेत्यकारलोपे संयोगे वि० का० कृ० ॥ जलजाक्षी ॥ दीर्घसक्थि शकटमित्यत्र स्वाङ्गत्वाभावान्न षच् । स्थूलाक्षा वेणुयष्टिरित्यत्रापि स्वाङ्गत्वाभावान्न षच् षचोऽभावान्ङीषोप्यभावे **अक्ष्णोऽदर्शना**दित्यनेन अचि **अजाद्यतष्टाप्** इति टापि च स्थूलाक्षा ॥ द्वौ मूर्द्धानौ यस्येत्यत्र **द्वित्रिभ्यां ष मूर्द्ध्नः** इति सूत्रेण षे **षः प्रत्ययस्ये**ति षलोपे **यचि भ**मिति भसंज्ञायां **नस्तद्धिते** इति नान्तटिलोपे संयोगे च द्विमूर्द्धः ॥ एवं त्रिमूर्द्धः ॥ अन्तर्लोमानि यस्येत्यत्र **अनेकमन्यपदार्थे** इति बहुव्रीहौ सुब्लोपे अन्तर्लोमन् इति जातं तत्र **अन्तर्बहिर्भ्यां च लोम्न** इति सूत्रेण अपि कृते पलोपे भसंज्ञायां **नस्तद्धिते** इति नान्तटिलोपे संयोगे वि० का० कृ० अन्तर्लोमः ॥ एवं बहिर्लोमः ॥ व्याघ्रस्येव पादौ यस्येत्यत्र **अनेकमन्यपदार्थे** इति बहुव्रीहौ सुब्लोपे व्याघ्रपाद इति जातं तत्र **पादस्य लोपोऽहस्त्यादिभ्य** इत्यनेन दकारोत्तरवर्त्यकारलोपे व्याघ्रपात् । हस्तिपादः कुसूलपादः इत्यत्र हस्त्यादित्वान्नलोपः । द्वौ पादौ यस्य सुष्ठु पादौ यस्येत्यत्र च बहुव्रीहौ सुब्लोपे **संख्यासुपूर्वस्ये**त्यनेन दकारोत्तरवर्त्यकारलोपे **वावसाने** इति दस्य ते द्विपात् सुपात् ॥ उत्काकुदं यस्य विकाकुदं यस्येत्यत्र पूर्ववद्बहुव्रीहौ सुब्लोपे **उद्विभ्यां काकुदस्ये**त्यनेन दकारोत्तरवर्त्यकारलोपे **वावसाने** इति दस्य ते च कृते उत्काकुत् विकाकुत् । पूर्णकाकुत् इत्यत्र **पूर्णाद्विभाषे**त्यनेन लोपे पूर्णकाकुत् लोपाभावे च पूर्णकाकुदः ॥ सुष्ठु हृदयं यस्य दुष्टं हृदयं यस्येत्यत्र च बहुव्रीहौ सुब्लोपे **सुहृद्दुर्हृदौ मित्रामित्रयो**रिति सूत्रेण हृदयस्य हृद्भावनिपाते **वावसाने** इति दस्य ते च कृते सुहृन्मित्रम् ॥ दुर्हृदमित्रम् ॥ व्यूढं उरो यस्येत्यत्र **अनेकमन्यपदार्थे** इति बहुव्रीहौ सुब्लोपे व्यूढ उरस् इति जातं तत्र **उरःप्रभृतिभ्यः कप्** इति कपि पकारलोपे **खरवसानयो**रिति सस्य विसर्गे **कस्कादिषु चे**त्यनेन विस-

स इति सः। व्यूढोरस्कः प्रियसर्पिष्कः ॥ **निष्ठा** ।२।२।३६। निष्ठान्तं बहुव्रीहौ पूर्वं स्यात्। युक्तयोगः ॥ **शेषाद्विभाषा** ।५।४।१५४। अनुक्तसमासान्ताद्बहुव्रीहेः कब्वा। महायशस्कः महायशाः ॥ इति बहुव्रीहिः ॥ ४ ॥

## अथ द्वन्द्वसमासः ॥ ५ ॥

**चार्थे द्वन्द्वः** ।२।२।२९। अनेकं सुबन्तं चार्थे वर्तमानं वा समस्यते स द्वन्द्वः। समुच्चयान्वाचयेतरेतरयोगसमाहाराश्चार्थाः। ईश्वरं गुरुं च भजस्वेति परस्परनिरपेक्षस्यानेकस्यैकस्मिन्नन्वयः समुच्चयः। भिक्षामट गां चानयेत्यन्यतरस्यानुषङ्गिकत्वेनान्वयोऽन्वाचयः। अनयोरसामर्थ्यात्समासो न। धवखदिरौ छिन्धीति। मिलितानामन्वय इतरेतरयोगः। संज्ञापरिभाषम्। समूहः समाहारः ॥ **राजदन्तादिषु परम्** ।२।२।३१। एषु पूर्वं प्रयोगार्हं परं स्यात्। दन्तानां राजा राजदन्तः। धर्मादिष्वनियमः। अर्थधर्मौ धर्मार्थावित्यादि ॥ **द्वन्द्वे घि** ।२।२।३२। द्वन्द्वे घिसंज्ञं पूर्वं स्यात्। हरिश्च हरश्च हरिहरौ ॥ **अजाद्यदन्तम्** ।२।२।३३। इदं द्वन्द्वे पूर्वं स्यात्। ईशकृष्णौ ॥ **अल्पाच्तरम्** ।२।२।३४। शिवकेशवौ ॥ **पिता मात्रा** ।१।२।७०। मात्रा सहोक्तौ पिता वा शिष्यते। माता च पिता च पितरौ मातापितरौ वा ॥ **द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्** ।२।४।२। एषां द्वन्द्व एकवत्। पाणिपादम्। मार्दङ्गिकवैणविकम्।

---

गेस्य सकारे च कृते व्यूढोरस्क ॥ एव प्रिय सर्पिर्यस्येत्यत्र कपि प्रियसर्पिष्कः ॥ युक्तो योगो येन स इत्यत्र **अनेकमन्यपदार्थे** इति बहुव्रीहौ सुब्लोपे च **निष्ठा** इत्यनेन निष्ठान्तस्य पूर्वनिपाते युक्तयोग. ॥ महायशस्क इत्यत्र **शेषाद्विभाषे**त्यनेन कपि महायशस्कः ॥ कबभावपक्षे तु महायशा ॥ इति बहुव्रीहि. ॥

धवश्च खदिरश्चेत्यत्र इतरेतरयोगत्वा**चार्थे द्वन्द्व** इत्यनेन द्वन्द्वसमासे सुब्लोपे विभक्तिकार्ये च कृते धवखदिरौ ॥ संज्ञा च परिभाषा च अनयो. समाहार इत्यत्र समाहारत्वा**चार्थे द्वन्द्व** इति द्वन्द्वसमासे सुब्लोपे **स नपुंसक**मित्यनेन नपुंसकत्वे प्रथमैकवचनस्य **सोरतोऽमि**त्यनेन अमि **अमि पूर्वः** इति पूर्वरूपे च संज्ञापरिभाषम्॥ दन्तानां राजा इत्यत्र **उपसर्जनं पूर्व**मित्यनेन पूर्वप्रयोगार्हस्य दन्तशब्दस्य **राजदन्तादिषु पर**मित्यनेन परप्रयोगे राजदन्त ॥ धर्मश्च अर्थश्चेत्यत्र **धर्मादिषु न नियम** इत्यनेन नियमाभावात् धर्मार्थौ अर्थधर्मौ वा ॥ हरिश्च हरश्चेत्यत्र **द्वन्द्वे घि** इति सूत्रेण घिसंज्ञावति हरिशब्दे पूर्वं प्रयुक्ते हरिहरौ ॥ ईशश्च कृष्णश्चेत्यत्र **अजाद्यदन्त**मित्यनेन ईशशब्दस्य अजाद्यदन्तत्वात्पूर्वप्रयोगे ईशकृष्णौ ॥ शिवश्च केशवश्चेत्यत्र **चार्थे द्वन्द्व** इति द्वन्द्वे सुब्लोपे **अल्पाच्तरम्** इत्यनेन अल्पाचि शिवशब्दे पूर्वं प्रयुक्ते शिवकेशवौ ॥ माता च पिता चेत्यत्र **चार्थे द्वन्द्व** इति द्वन्द्वे सुब्लोपे मातृपितृ इति जाते तत्र **पिता मात्रा** इति सूत्रेण पितृशब्देऽवशिष्टे औ गुणे च पितरौ पक्षे मातापितरौ ॥ पाणिश्च पादश्चेत्यत्र द्वन्द्वे सुब्लोपे **द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्**

रथिकाश्वारोहम् ॥ **द्वन्द्वाच्चुदषहान्तात्समाहारे** ।५।४।१०६। चवर्गान्तादषहा-न्ताच्च द्वन्द्वाट्टच्स्यात्समाहारे । वाक् च त्वक् च वाक्त्वचम् । त्वक्स्रजम् । शमीदृषदम् । वाक्त्विषम् । छत्रोपानहम् । समाहारे किम् । प्रावृट्शरदौ ॥ ५ ॥ इति द्वन्द्वसमासः ॥

## अथ समासान्ताः ॥ ६ ॥

**ऋक्पूरब्धूः पथामानक्षे** ।५।४।७४। अ अनक्ष इति छेदः । ऋगाद्यन्तस्य समासस्य अप्रत्ययोऽन्तावयवः । अक्षे या धूस्तदन्तस्य तु न । अर्धर्चः । विष्णुपुरम् । विमलापं सरः । राजधुरा । अक्षे तु अक्षधूः । दृढधूरक्षः । सखिपथः । रम्यपथो देशः ॥ **अक्ष्णोऽदर्शनात्** ।५।४।७६। अचक्षुःपर्यायादक्ष्णोऽच्स्यात्समासान्तः ॥ **उपसर्गादध्वनः** ।५।४।८५। प्रगतोऽध्वानं प्राध्वो रथः ॥ **न पूजनात्** ।५।४।६९। पूजनार्थात्परेभ्यः समासान्ता न स्युः । सुराजा अतिराजा ॥ इति समासान्ताः ॥ ६ ॥

---

इत्यनेनात्र प्राण्यङ्गत्वात् एकवद्भावे पाणिपादम् ॥ एवं मार्दङ्गिकवैणविकमित्यत्र तूर्याङ्गत्वादेकवद्भावो रथिकाश्वारोहमित्यत्र च सेनाङ्गत्वादेकवद्भावो भवति ॥ वाक् च त्वक् चेत्यत्र **चार्थे द्वन्द्व** इति द्वन्द्वे सुब्लोपे च वाक् त्वच् इति जातं तत्र **द्वन्द्वाच्चुदषहान्तात्समाहारे** इत्यनेनात्र च्वन्तत्वाट्टचि टचो लोपे संयोगे विभक्तिकार्ये च कृते वाक्त्वचम् ॥ एवं त्वक्स्रजम् ॥ शमीदृषदम् ॥ वाक्त्विषम् ॥ छत्रोपानहम् इत्यादीनि **द्वन्द्वाच्चुदषहान्तात्समाहारे** इत्यनेन क्रमेण च्वन्तदान्तषान्तहान्तत्वाच्च टचि कृते रूपाणि भवन्ति ॥ प्रावृद् च शरच्चेत्यत्र दान्तत्वे सत्यपि समाहारस्याभावाच्च टच् तेन प्रावृट्शरदौ ॥ इति द्वन्द्वः ॥

ऋचः अर्द्धं अर्द्धर्चं इत्यत्र **अर्द्धं नपुंसकम्** इति समासे सुब्लोपे अर्द्ध ऋच् इति जाते **आद्गुणः** इति गुणे अर्द्धर्च् इति जातं तत्र **ऋक्पूरब्धूःपथामानक्षे** इत्यनेन अप्रत्यये वि० का० कृ० अर्धर्चः ॥ विष्णुपुरमित्यत्र पुरन्तत्वादप्रत्ययः ॥ विमलापं सर इत्यत्र अबन्तत्वादप्रत्ययः । राजधुरा इत्यत्र धुरन्तत्वादप्रत्ययश्च भवति । अक्षधूरित्यत्र अक्षत्वादप्रत्ययाभावः। एवं दृढधूरक्ष इत्यत्रापि अक्षत्वादप्रत्ययाभावो भवति । सखिपथ इत्यत्र पथान्तत्वादप्रत्ययो भवति ॥ एवं रम्यपथ इत्यत्रापि ज्ञेयम् ॥ गवामक्षीवेत्यत्र **अक्ष्णोऽदर्शनादि**ति सूत्रेण अचक्षुःपर्यायादक्षिशब्दादचि **यचि भमि**ति भसंज्ञायां टिलोपे संयोगे अवङि गवाक्षः ॥ प्रगतोऽध्वानमित्यत्र **उपसर्गादध्वनः** इति सूत्रेण अचि भसंज्ञायां **नस्तद्धिते** इति नान्तटिलोपे संयोगे च प्राध्वो रथः । सुराजा अतिराजा इत्यत्र **राजाहःसखिभ्यष्टच्** इति टचि प्राप्ते **न पूजनात्** इति सूत्रेण टचो निषेधे सुराजा अतिराजा ॥ इति श्रीमत्सद्गुरुश्रीकेशवगुरुकृपाकल्पवल्लरीपल्लवायमानायां प्रयोगमणिमालायां समाप्तिमगच्छत्समासप्रकरणम् ॥

सर्वमङ्गलमाङ्गल्यमूलं श्रीसर्वमङ्गला ॥ श्रीसर्वमङ्गलेशश्च सर्वमङ्गलदोऽस्तु नः ॥
त्यक्त्वा दयामयात्मानौ श्रीकेशवमहेश्वरौ ॥ कमन्यमाश्रये विद्यावाप्तये चित्त मे वद ॥

स इति सः । व्यूढोरस्कः प्रियसर्पिष्कः ॥ **निष्ठा** ।२।२।३६। निष्ठान्तं बहुव्रीहौ पूर्वं स्यात् । युक्तयोगः ॥ **शेषाद्विभाषा** ।५।४।१५४। अनुक्तसमासान्ताद्बहुव्रीहेः कब्वा । महायशस्कः महायशाः ॥ इति बहुव्रीहिः ॥ ४ ॥

## अथ द्वन्द्वसमासः ॥ ५ ॥

**चार्थे द्वन्द्वः** ।२।२।२९। अनेकं सुबन्तं चार्थे वर्तमानं वा समस्यते स द्वन्द्वः । समुच्चयान्वाचयेतरेतरयोगसमाहाराश्चार्थाः । ईश्वरं गुरुं च भजस्वेति परस्परनिरपेक्षस्यानेकस्यैकस्मिन्नन्वयः समुच्चयः । भिक्षामट गां चानयेत्यन्यतरस्यानुषङ्गिकत्वेनान्वयोऽन्वाचयः । अनयोरसामर्थ्यात्समासो न । धवखदिरौ छिन्धीति । मिलितानामन्वय इतरेतरयोगः । संज्ञापरिभाषम् । समूहः समाहारः ॥ **राजदन्तादिषु परम्** ।२।२।३१। एषु पूर्वं प्रयोगार्हं परं स्यात् । दन्तानां राजा राजदन्तः । धर्मादिष्वनियमः । अर्थधर्मौ धर्मार्थावित्यादि ॥ **द्वन्द्वे घि** ।२।२।३२। द्वन्द्वे घिसंज्ञं पूर्वं स्यात् । हरिश्च हरश्च हरिहरौ ॥ **अजाद्यदन्तम्** ।२।२।३३। इदं द्वन्द्वे पूर्वं स्यात् । ईशकृष्णौ ॥ **अल्पाच्तरम्** ।२।२।३४। शिवकेशवौ ॥ **पिता मात्रा** ।१।२।७०। मात्रा सहोक्तौ पिता वा शिष्यते । माता च पिता च पितरौ मातापितरौ वा ॥ **द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्** ।२।४।२। एषां द्वन्द्व एकवत् । पाणिपादम् । मार्दङ्गिकवैणविकम् ।

गेस्य सकारे च कृते व्यूढोरस्कः ॥ एवं प्रियं सर्पिर्यस्येत्यत्र कपि प्रियसर्पिष्कः ॥ युक्तो योगो येन स इत्यत्र **अनेकमन्यपदार्थे** इति बहुव्रीहौ सुब्लोपे च **निष्ठा** इत्यनेन निष्ठान्तस्य पूर्वनिपाते युक्तयोगः ॥ महायशस्क इत्यत्र **शेषाद्विभाषे**त्यनेन कपि महायशस्कः ॥ कबभावपक्षे तु महायशाः ॥ इति बहुव्रीहिः ॥

धवश्च खदिरश्चेत्यत्र इतरेतरयोगत्वा**च्चार्थे द्वन्द्व** इत्यनेन द्वन्द्वसमासे सुब्लोपे विभक्तिकार्ये च कृते धवखदिरौ ॥ संज्ञा च परिभाषा च अनयोः समाहार इत्यत्र समाहारत्वा**च्चार्थे द्वन्द्व** इति द्वन्द्वसमासे सुब्लोपे **स नपुंसक**मित्यनेन नपुंसकत्वे प्रथमैकवचनस्य **सोरतो**मित्यनेन अमि **अमि पूर्वः** इति पूर्वरूपे च संज्ञापरिभाषम् ॥ दन्तानां राजा इत्यत्र **उपसर्जनं पूर्व**मित्यनेन पूर्वप्रयोगार्हस्य दन्तशब्दस्य **राजदन्तादिषु पर**मित्यनेन परप्रयोगे राजदन्तः॥ धर्मश्च अर्थश्चेत्यत्र **धर्मादिषु न नियम** इत्यनेन नियमाभावात् धर्मार्थौ अर्थधर्मौ वा ॥ हरिश्च हरश्चेत्यत्र **द्वन्द्वे घि** इति सूत्रेण घिसंज्ञावति हरिशब्दे पूर्वं प्रयुक्ते हरिहरौ ॥ ईशश्च कृष्णश्चेत्यत्र **अजाद्यदन्त**मित्यनेन ईशशब्दस्य अजाद्यदन्तत्वात्पूर्वप्रयोगे ईशकृष्णौ ॥ शिवश्च केशवश्चेत्यत्र **चार्थे द्वन्द्व** इति द्वन्द्वे सुब्लोपे **अल्पाच्तरम्** इत्यनेन अल्पाचि शिवशब्दे पूर्वं प्रयुक्ते शिवकेशवौ ॥ माता च पिता चेत्यत्र **चार्थे द्वन्द्व** इति द्वन्द्वे सुब्लोपे मातृपितृ इति जातं तत्र **पिता मात्रा** इति सूत्रेण पितृशब्देऽवशिष्टे औ गुणे च पितरौ पक्षे मातापितरौ ॥ पाणिश्च पादश्चेत्यत्र द्वन्द्वे सुब्लोपे **द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्**

रथिकाश्वारोहम् ॥ **द्वन्द्वाच्चुदषहान्तात्समाहारे** ।५।४।१०६। चवर्गान्ताद्दषहान्ताच्च द्वन्द्वाट्टच्स्यात्समाहारे । वाक् च त्वक् च वाक्त्वचम् । त्वक्स्रजम् । शमीदृषदम् । वाक्त्विषम् । छत्रोपानहम् । समाहारे किम् । प्रावृट्शरदौ ॥ ५ ॥ इति द्वन्द्वसमासः ॥

## अथ समासान्ताः ॥ ६ ॥

**ऋक्पूरब्धूः पथामानक्षे** ।५।४।७४। अ अनक्ष इति छेदः । ऋगाद्यन्तस्य समासस्य अप्रत्ययोऽन्तावयवः । अक्षे या धूस्तदन्तस्य तु न । अर्धर्चः । विष्णुपुरम् । विमलापं सरः । राजधुरा । अक्षे तु अक्षधूः । दृढधूरक्षः । सखिपथः । रम्यपथो देशः ॥ **अक्ष्णोऽदर्शनात्** ।५।४।७६। अचक्षुःपर्यायादक्ष्णोऽच्स्यात्समासान्तः ॥ **उपसर्गादध्वनः** ।५।४।८५। प्रगतोऽध्वानं प्राध्वो रथः ॥ **न पूजनात्** ।५।४।६९। पूजनार्थात्परेभ्यः समासान्ता न स्युः । सुराजा अतिराजा ॥ इति समासान्ताः ॥ ६ ॥

---

इत्यनेनात्र प्राण्यङ्गत्वात् एकवद्भावे पाणिपादम् ॥ एवं मार्दङ्गिकवैणविकमित्यत्र तूर्याङ्गत्वादेकवद्भावो रथिकाश्वारोहमित्यत्र च सेनाङ्गत्वादेकवद्भावो भवति ॥ वाक् च त्वक् चेत्यत्र **चार्थे द्वन्द्व** इति द्वन्द्वे सुब्लोपे च वाक् त्वच् इति जातं तत्र **द्वन्द्वाच्चुदषहान्तात्समाहारे** इत्यनेनात्र च्वन्तत्वाट्टचि टचो लोपे संयोगे विभक्तिकार्ये च कृते वाक्त्वचम् ॥ एवं त्वक्स्रजम् ॥ शमीदृषदम् ॥ वाक्त्विषम् ॥ छत्रोपानहम् इत्यादीनि **द्वन्द्वाच्चुदषहान्तात्समाहारे** इत्यनेन क्रमेण च्वन्तदान्तषान्तहान्तत्वाच्च टचि कृते रूपाणि भवन्ति ॥ प्रावृट् च शरच्चेत्यत्र दान्तत्वे सत्यपि समाहारत्वाभावान्न टच् तेन प्रावृट्शरदौ ॥ इति द्वन्द्वः ॥

ऋचः अर्द्धं अर्द्धर्चं इत्यत्र **अर्द्धं नपुंसकम्** इति समासे सुब्लोपे अर्द्ध ऋच् इति जाते **आद्गुणः** इति गुणे अर्द्धर्च् इति जातं तत्र **ऋक्पूरब्धूःपथामानक्षे** इत्यनेन अप्रत्यये वि० का० कृ० अर्धर्चः ॥ विष्णुपुरमित्यत्र पुरन्तत्वादप्रत्ययः ॥ विमलापं सर इत्यत्र अबन्तत्वादप्रत्ययः । राजधुरा इत्यत्र धुरन्तत्वादप्रत्ययश्च भवति । अक्षधूरित्यत्र अक्षत्वादप्रत्ययाभावः । एवं दृढधूरक्ष इत्यत्रापि अक्षत्वादप्रत्ययाभावो भवति । सखिपथ इत्यत्र पथान्तत्वादप्रत्ययो भवति ॥ एवं रम्यपथ इत्यत्रापि ज्ञेयम् ॥ गवामक्षीवेत्यत्र **अक्ष्णोऽदर्शनादि**ति सूत्रेण अचक्षुःपर्यायादक्षिशब्दादचि **यचि भमि**ति भसंज्ञायां टिलोपे संयोगे अवङि गवाक्षः ॥ प्रगतोऽध्वानमित्यत्र **उपसर्गादध्वनः** इति सूत्रेण अचि भसंज्ञायां **नस्तद्धिते** इति नान्तटिलोपे संयोगे च प्राध्वो रथः । सुराजा अतिराजा इत्यत्र **राजाहःसखिभ्यष्टच्** इति टचि प्राप्ते **न पूजनात्** इति सूत्रेण टचो निषेधे सुराजा अतिराजा ॥ इति श्रीमत्सद्गुरुश्रीकेशवगुरुकृपाकल्पवल्लरी पल्लवायमानायां प्रयोगमणिमालायां समासिमगच्छत्समासप्रकरणम् ॥

सर्वमङ्गलमाङ्गल्यमूलं श्रीसर्वमङ्गला ॥ श्रीसर्वमङ्गलेशश्च सर्वमङ्गलदोऽस्तु नः ॥

स्वक्त्या दयामया मानौ श्रीकेशवमहेश्वरौ ॥ कमन्यमाश्रये विद्याप्तये चित्त मे वद ॥

## अथ तद्धितप्रकरणम् ॥

**समर्थानां प्रथमाद्वा** ।४।१।८२। इदं पदत्रयमधिक्रियते । प्राग्दिश इति यावत् ॥ **अश्वपत्यादिभ्यश्च** ।४।१।८४। एभ्योऽण् स्यात्प्राग्दीव्यतीयेष्वर्थेषु । अश्वपतेरपत्यादि आश्वपतम् । गाणपतम् ॥ **दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः** ।४।१।८५। दित्यादिभ्यः पत्युत्तरपदाच्च प्राग्दीव्यतीयेष्वर्थेषु ण्यः स्यात् । अणोऽपवादः । दितेरपत्यं दैत्यः । अदितेरादित्यस्य वा आदित्यः । प्राजापत्यः । ( देवाद्यञञौ ) दैव्यम् दैवम् ( बहिषष्टिलोपो यञ्च ) बाह्यः ( ईकक्च ) ॥ **किति च** ।७।२।११८। किति तद्धिते चाचामादेरचो वृद्धिः स्यात् । बाहीकः । ( गोरजादिप्रसङ्गे यत् ) गोरपत्यादि गव्यम् ॥ **उत्सादिभ्योऽञ्** ।४।१।८६। औत्सः ॥ इत्यपत्यादिविकारान्तार्थाः प्रत्ययाः ॥ * ॥ **स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात्** ।४।१।८७। धान्यानां भवन इत्यतः प्रागर्थेषु स्त्रीपुं-

---

अश्वपतेरपत्यमित्यत्र **अश्वपत्यादिभ्यश्चेति** सूत्रेण अणि **सुपो धातुप्रातिपदिकयोरि**ति सुब्लोपे णलोपे **यचि भमि**ति भसंज्ञायां **यस्येति** चेति तकारोत्तरवर्तिन इकारस्य लोपे **तद्धितेष्वचामादे**रिति सूत्रेणाद्यचो वृद्धौ आश्वपतम् ॥ एवं गणपतेरपत्यादि गाणपतम् ॥ दितेरपत्यमित्यत्र **तस्यापत्य**मित्यनेन अणि प्राप्ते तं बाधित्वा **दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः** इति सूत्रेण ण्यप्रत्यये सुब्लोपे णकारलोपे भसंज्ञायां **यस्येति** चेति दकारोत्तरवर्तिन इकारस्य लोपे **तद्धितेष्वचामादे**रिति सूत्रेणाद्यचो दकारोत्तरवर्तिन इकारस्य वृद्धौ संयोगे वि० का० कृ० दैत्यः ॥ एवं ॥ आदित्यस्यापत्यमित्यत्र आदित्यशब्दाण्ण्यप्रत्यये णकारलोपे भसंज्ञायां **यस्येति** चेत्यकारान्तःपात्यकारलोपे आदित् य य इति जाते **हलो यमां यमि लोप** इति यकारलोपे संयोगे वि० का० कृ० आदित्यः । प्रजापतेः अपत्यमित्यत्र पत्युत्तरपदत्वाण्ण्यप्रत्यये सुब्लोपे भसंज्ञायां **यस्येति चे**ति तकारोत्तरवर्तिन इकारस्य लोपे संयोगे आद्याचोवृद्धौ वि० का० कृ० प्राजापत्यः ॥ देवस्यापत्यमित्यत्र **देवाद्यञञौ** इति यञि सुब्लोपे भसंज्ञायां भलोपे आदिवृद्धौ संयोगे विभक्तौ च दैव्यम् ॥ अञि प्रत्यये दैवम् ॥ बहिर्भवो बाह्य इत्यत्र **बहिषष्टिलोपो यञ्च** चेति वार्तिकेन टिलोपे यञि च कृते बह्यञ् इति जाते ञलोपे आदिवृद्धौ विभक्तौ च बाह्यः ॥ बहिर्भवो बाहीक इत्यत्र **ईकक्चे**ति वार्तिकेन ईककि कृते बहिष् ईकक् इति जाते टिलोपे कलोपे **किति चे**ति सूत्रेण अचो वृद्धौ विभक्तौ च बाहीकः ॥ गोरपत्यमित्यत्र **तस्यापत्य**मित्यणः प्राप्तौ तं बाधित्वा **गोरजादिप्रसङ्गे यत्** इति यति सुब्लोपे **वान्तो यि प्रत्यये**इत्यवादेशे विभक्तौ च गव्यम् ॥ उत्सस्यापत्यमित्यत्र **उत्सादिभ्योऽञ्** इति अञि सुब्लोपे भसंज्ञायां भलोपे आदिवृद्धौ वि० औत्सः ॥ स्त्रिया अपत्यमित्यत्र **स्त्रीपुंसाभ्यां नञ्स्नञौ** इत्यनेन नञि सुब्लोपे च स्त्री नञ् इति जातं तत्र ञलोपे आदिवृद्धौ भसंज्ञायां भलोपे संयोगे विभक्तौ च स्त्रैणः

साभ्यां क्रमान्नञ्स्नञौ स्तः । स्त्रैणः पौंस्नः ॥ **तस्यापत्यम्** ।४।१।९२। षष्ठ्यन्तात्कृतसंधेः समर्थादपत्येऽर्थे उक्ता वक्ष्यमाणाश्च प्रत्यया वा स्युः ॥ **ओर्गुणः** ।६।४।१४६। उवर्णान्तस्य भस्य गुणस्तद्धिते । उपगोरपत्यमौपगवः । आश्वपतः दैत्यः औत्सः स्त्रैणः पौंस्नः ॥ **अपत्यं पौत्रप्रभृति गोत्रम्**।४।१।१६२। अपत्यत्वेन विवक्षितं पौत्रादि गोत्रसंज्ञं स्यात् ॥ **एको गोत्रे** ।४।१।९३। गोत्रे एक एवापत्यप्रत्ययः स्यात् । उपगोर्गोत्रापत्यमौपगवः ॥ **गर्गादिभ्यो यञ्** ।४।१।१०५। गोत्रापत्ये । गर्गस्य गोत्रापत्यं गार्ग्यः । वात्स्यः ॥ **यञञोश्च** ।२।४।६४। गोत्रे यद्यञन्तमञन्तं च तदवयवयोरेतयोर्लुक् स्यात्तत्कृते बहुत्वे न तु स्त्रियाम् । गर्गाः वत्साः ॥ **जीवति तु वंश्ये युवा** ।४।१।१६३। वंश्ये पित्रादौ जीवति पौत्रादेर्यदपत्यं चतुर्थादि तद्युवसंज्ञमेव स्यात् ॥ **गोत्राद्यून्यस्त्रियाम्** ।४।१।९४। यून्यपत्ये गोत्रप्रत्ययान्तादेव प्रत्ययः स्यात् । स्त्रियां तु न युवसंज्ञा ॥ **यञिञोश्च** ।४।१।१०१। गोत्रे यौ यञिञौ तदन्तात्फक् स्यात् ॥ **आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्** ।७।१।२। प्रत्ययादेः फस्य आयन् ढस्य एय् खस्य ईन् छस्य ईय् घस्य इय् स्युः । गर्गस्य युवापत्यं गार्ग्यायणः दाक्षायणः ॥ **अत इञ्** ।४।१।९५। अपत्येऽर्थे । दाक्षिः ॥ **बाह्वादिभ्यश्च** ।४।१।९६। बाहविः औ-

---

एवं स्नञि पौंस्नः ॥ उपगोरपत्यमित्यत्र **तस्यापत्यम**मित्यनेन अणि संज्ञायां **ओर्गुण** इत्यनेन गुणे **तद्धितेष्वचामादे**रित्यादिवृद्धौ **एचोयवायाव** इत्यवादेशे संयोगे च औपगवः ॥ उपगोर्गोत्रापत्यमित्यत्र **अपत्यं पौत्रप्रभृति गोत्र**मिति गोत्रसंज्ञायां **तस्यापत्य**मित्यनेन अणि औपगवः ॥ **एको गोत्रे** इति सूत्रेण औपगवशब्दादपत्यप्रत्ययाभावः ॥ गर्गस्य गोत्रापत्यमित्यत्र **गर्गादिभ्यो यञ्** इति यञि सुब्लोपे भसंज्ञायां **यस्येति चे**त्यकारलोपे **तद्धितेष्वचामादे**रित्याद्यच्वृद्धौ गार्ग्यः ॥ एवं वात्स्यः ॥ गर्गस्य गोत्रापत्यानि गर्गा इत्यत्र **गर्गादिभ्यो यञ्** इति यञि सुब्लोपे भसंज्ञायां **यस्येति चे**त्यकारलोपे **तद्धितेष्वचामादे**रित्याद्यच्वृद्धौ गार्ग्या इति जातं तत्र **यञञोश्चे**त्यनेन गकारोत्तरवर्तियकारलोपे **निमित्ताभावे नैमित्तिकस्याप्यभाव** इति यकारनिमित्तवृद्ध्यभावे गर्गाः एवं वत्साः ॥ गर्गस्य युवापत्यं गार्ग्यस्य गोत्रापत्यमित्यत्र **जीवति तु वंश्ये युवा** इति सूत्रेण युवसंज्ञायां **यञिञोश्चे**ति सूत्रेण यञन्तात् गार्ग्यशब्दात्फकि फलोपे **आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्** इत्यनेन फस्य स्थाने आयनि कृते गार्ग्य आयन् अ इति जाते **यचि भ**मिति भसंज्ञायां **यस्येति चे**ति ग्यकारोत्तरवर्त्यकारलोपे संयोगे **अट्कुप्वाङ्नुम्व्यवायेपी**ति नस्य णत्वे गार्ग्यायणः ॥ एवं दक्षस्य युवापत्यं दाक्षेर्गोत्रापत्यं दाक्षायणः ॥ दक्षस्यापत्यमित्यत्र **अत इञ्** इति इञि सुब्लोपे भसंज्ञायां **यस्येति चे**ति क्षकारोत्तरवर्त्यकारलोपे **तद्धितेष्वचामादे**रिति वृद्धौ दाक्षिः ॥

डुलोमिः। आकृतिगणोऽयम् ॥ **अनृष्यानन्तर्ये बिदादिभ्योऽञ्** ।४।१।१०४। ये त्वत्रानृषयस्तेभ्योऽपत्येऽन्यत्र तु गोत्रे। बिदस्य गोत्रं बैदः बैदौ बिदाः। पुत्रस्यापत्यं पौत्रः पौत्रौ पौत्राः। एवं दौहित्रादयः ॥ **शिवादिभ्योऽण्** ।४।१।११२। अपत्ये। शैवः गाङ्गः ॥ **ऋष्यन्धकवृष्णिकुरुभ्यश्च** ।४।१।११४। ऋषिभ्यः—वासिष्ठः वैश्वामित्रः। अन्धकेभ्यः—श्वाफल्कः। वृष्णिभ्यः—वासुदेवः। कुरुभ्यः नाकुलः साहदेवः ॥ **मातुरुत्संख्यासंभद्रपूर्वायाः** ।४।१।११५। सङ्ख्यादिपूर्वस्य मातृशब्दस्य उदादेशः स्यादण् प्रत्ययश्च। द्वैमातुरः। षाण्मातुरः। भाद्रमातुरः ॥ **स्त्रीभ्यो ढक्** ।४।१।१२०। स्त्रीप्रत्ययान्तेभ्यो ढक्। वैनतेयः ॥ **कन्यायाः कनीन च** ।४।१।११६। चादण्। कानीनो व्यासः कर्णश्च ॥ **राजश्वशुराद्यत्** ।४।१।१३७। (राज्ञो जातावेवेति वाच्यम्) ॥ **ये चाभावकर्मणोः** ।६।४।१६८। यादौ तद्धिते

---

बाहोरपत्यमित्यत्र **बाह्वादिभ्यश्चे**ति सूत्रेण इञि भसञ्ज्ञाया **ओर्गुणे** इति गुणे **एचोऽयवायाव** इति अवि बाहविः ॥ उडुलोम्नोऽपत्यमित्यत्र **बाह्वादिभ्यश्चे**ति सूत्रेण इञि सुप्लोपे उडुलोमन् इ इति जाते तत्र भसञ्ज्ञाया **नस्तद्धिते** इति टिलोपे **तद्धितेष्वचामादे**रिति वृद्धौ औडुलोमिः ॥ बिदस्य गोत्रापत्यमित्यत्र **अनृष्यानन्तर्ये बिदादिभ्योऽञ्** इति अञि भसञ्ज्ञाया **यस्येति**चेत्यकारलोपे **तद्धितेष्वचामादे**रिति वृद्धौ बैदः ॥ एवं पुत्रस्यापत्यमित्यत्र पौत्रः दुहितुरपत्यमित्यत्र **बिदादिभ्योऽञ्** इति अञि दुहितृ अ इति जाते तत्र **तद्धितेष्वचामादे**रित्यादिवृद्धौ **इको यणची**ति यणि च दौहित्रः ॥ शिवस्यापत्यमित्यत्र **शिवादिभ्योऽण्** इत्यणि भसञ्ज्ञायामकारलोपे आद्यचो वृद्धौ च कृतायां शैवः ॥ एवं गङ्गाया अपत्यं गाङ्गः ॥ वसिष्ठस्यापत्यमित्यत्र **ऋष्यन्धकवृष्णिकुरुभ्यश्चे**त्यणि भसञ्ज्ञायामकारलोपे वृद्धौ च वासिष्ठः ऋषित्वात्, एवं वैश्वामित्रः ॥ श्वफल्कस्यापत्यमित्यत्र अन्धकत्वादणि श्वाफल्कः ॥ वसुदेवस्यापत्यमित्यत्र वृष्णित्वादणि वासुदेवः। नकुलस्यापत्यमित्यत्र सहदेवस्यापत्यमित्यत्र च कुरुत्वादणि नाकुलः ॥ साहदेवः ॥ द्वयोर्मात्रोरपत्यमित्यत्र **मातुरुत्संख्यासंभद्रपूर्वाया** इति सूत्रेण मातुरुदादेशे अणि च द्विमातुर् अ इति जाते तत्र संयोगे **तद्धितेष्वचामादे**रिति वृद्धौ च द्वैमातुरः ॥ एवं षण्णां मातृणामपत्यं षाण्मातुरः ॥ भद्रमातुरपत्यं भाद्रमातुरः ॥ विनताया अपत्यमित्यत्र **स्त्रीभ्यो ढक्** इत्यनेन ढकि ककारलोपे विनता ढ इति जाते तत्र **आयनेयीनीयियः फढखछघां प्रत्ययादीना**मित्यनेन ढस्थाने एयादेशे **यचि भ**मिति भसञ्ज्ञाया **यस्येति**चेति तकारोत्तरवर्त्यकारलोपे **किति चे**ति वृद्धौ संयोगे च ॥ वैनतेयः कन्याया अपत्यमित्यत्र **कन्यायाः कनीन** च इति सूत्रेण कन्यास्थाने कनीनादेशे चकारादणि च कृते कनीन अ इति जाते तत्र **तद्धितेष्वचामादे**रिति वृद्धौ कानीनः ॥ राज्ञोऽपत्यमित्यत्र **राजश्वशुराद्यत्** इति सूत्रेण जातिवाचिनो राजशब्दात् यति भसञ्ज्ञाया **नस्तद्धिते**

परेऽण् प्रकृत्या स्यान्न तु भावकर्मणोः । राजन्यः । जातावेवेति किम् ॥ **अन् ।६।४।१६७।** अन् प्रकृत्या स्यादणि परे । राजनः श्वशुर्यः ॥ **क्षत्राद्घः ।४।१।१३८।** क्षत्रियः । जातावेव । क्षात्रिरन्यत्र ॥ **रेवत्यादिभ्यष्ठक् ।४।१।१४६। ठस्येकः ।७।३।५०।** अङ्गात्परस्य ठस्येकादेशः स्यात् ॥ रैवतिकः ॥ **जनपदशब्दात्क्षत्रियादञ् ।४।१।१६८।** जनपदक्षत्रियवाचकाच्छब्दादञ् स्यादपत्ये । पाञ्चालः । क्षत्रियसमानशब्दाज्जनपदात्तस्य राजन्यपत्यवत् । पञ्चालानां राजा पाञ्चालः । (पूरोरण् वक्तव्यः) पौरवः । (पाण्डोर्ड्यण्) पाण्ड्यः ॥ **कुरुनादिभ्यो ण्यः ।४।१।१७२।** कौरव्यः नैषध्यः ॥ **ते तद्राजाः ।४।१।१७४।** अञादयस्तद्राजसंज्ञाः स्युः ॥ **तद्राजस्य बहुषु तेनैवास्त्रियाम् ।२।४।६२।** बहुष्वर्थेषु तद्राजस्य लुक् तदर्थकृते बहुत्वे न तु स्त्रियाम् । इक्ष्वाकवः पञ्चालाः इत्यादि ॥ **कम्बोजाल्लुक् ।४।१।१७५।**

---

इत्यनेन नान्तटिलोपे प्राप्ते ये **चाभावकर्मणो**रित्यनेन अनः प्रकृतिभावे राजन्यः जातिमात्राभावे राज्ञोऽपत्यमित्यत्र **तस्यापत्य**मित्यनेन अणि णलोपे **अन्** इत्यनेन अनः प्रकृतिभावे च राजनः ॥ श्वशुरस्यापत्यमित्यत्र **राजश्वशुराद्यत्** इति यति भसंज्ञायां **यस्येति** चेति रकारोत्तरवर्त्यकारलोपे श्वशुर्यः ॥ क्षत्रस्यापत्यमित्यत्र **क्षत्राद्घः** इति सूत्रेण घप्रत्यये कृते क्षत्र घ इति जातं तत्र **आयनेयीनीयियः फढखछघां प्रत्ययादीना**मित्यनेन घस्य इयि **यचि भ**मिति भसंज्ञायां **यस्येति** चेत्यकारलोपे च क्षत्रियः ॥ जात्यभावे तु क्षत्रस्यापत्यमित्यत्र **अत इञ्** इत्यनेन इञि भसंज्ञायामलोपे वृद्धौ च क्षात्रिः ॥ रेवत्या अपत्यमित्यत्र रेवत्यादिभ्यष्ठक् इति ठकि कलोपे **ठस्येक** इत्यनेन ठस्य इकादेशे भसंज्ञायामकारलोपे **किति** चेति वृद्धौ रैवतिकः ॥ . पञ्चालस्यापत्यमित्यत्र **जनपदशब्दात्क्षत्रियादञ्** इति अञि ञलोपे भसंज्ञायामलोपे **तद्धितेष्वचामादे**रिति वृद्धौ च पाञ्चालः ॥ पञ्चालानां राजा इत्यत्रापि **क्षत्रियसमानशब्दा**दिति वार्तिकादञि पाञ्चालः ॥ पूरोरपत्यमित्यत्र **पूरोरण्** इति अणि भसंज्ञायां **ओर्गुण** इति गुणे **एचोयवायाव** इति अवादेशे वृद्धौ च पौरवः ॥ पाण्डूनां राजा इत्यत्र **पाण्डोर्ड्यण्** इति ड्यणि डकारणकारयोर्लोपे भसंज्ञायां **टेः**रिति टिरूपस्य डकारोत्तरवर्त्युकारलोपे संयोगे च पाण्ड्यः ॥ कुरूणां राजेत्यत्र **कुरुनादिभ्यो ण्यः** इति ण्ये णलोपे भसंज्ञायां **ओर्गुण** इति गुणे अवादेशे संयोगे च कौरव्यः ॥ एवं नैषध्यः ॥ इक्ष्वाकोरपत्यानि इत्यत्र **जनपदशब्दात्क्षत्रियादञ्** इति अञि **तेतद्राजा** इत्यनेन अञस्तद्राजसंज्ञायां **तद्राजस्य बहुषु तेनैवास्त्रिया**मित्यनेन अञो लोपे इक्ष्वाकवः ॥ एवं पञ्चालानामपत्यानि राजानो वेत्यत्र **ते तद्राजा** इति तद्राजसंज्ञायां लुकि च पञ्चालाः ॥ कम्बोजानां राजा इत्यत्र **जनपदशब्दात्क्षत्रियादञ्** इत्यञि **ते तद्राजा** इत्यनेनाञस्तद्राजसंज्ञायां **कम्बोजाल्लुक्** इत्यनेन तद्राजसंज्ञस्याञो लुकि

अस्माच्चद्राजस्य लुक् । कम्बोजः कम्बोजौ । (कम्बोजादिभ्य इति वक्तव्यम्) चोलः शकः केरलः यवनः ॥ इत्यपत्याधिकारः ॥ * ॥ **तेन रक्तं रागात्** ।४।२।१। अण् स्यात् । रज्यतेऽनेनेति रागः । कषायेण रक्तं वस्त्रं काषायम् ॥ **नक्षत्रेण युक्तः कालः** ।४।२।३। अण् स्यात् (तिष्यपुष्ययोर्नक्षत्राणि यलोप इति वाच्यम्) पुष्येण युक्तं पौषमहः ॥ **लुबविशेषे** ।४।२।४। पूर्वेण विहितस्य लुप् स्यात् । षष्टिदण्डात्मकस्य कालस्यावान्तरविशेषश्चेन्न गम्यते । अद्य पुष्यः ॥ **दृष्टं साम** ।४।२।७। तेनेत्येव । वसिष्ठेन दृष्टं वासिष्ठं साम ॥ **वामदेवाड्ड्यड्ड्यौ** ।४।२।९। वामदेवेन दृष्टं साम वामदेव्यम् ॥ **परिवृतो रथः** ।४।२।१०। अस्मिन्नर्थेऽण् प्रत्ययो भवति । वस्त्रेण परिवृतो वास्त्रो रथः ॥ **तत्रोद्धृतममत्रेभ्यः** ।४।२।१४। शरावे उद्धृतः शाराव ओदनः ॥ **संस्कृतं भक्षाः** ।४।२।१६। सप्तम्यन्तादण् स्यात्संस्कृतेऽर्थे यत्संस्कृतं भक्षाश्चेत्ते स्युः । भ्राष्ट्रेषु संस्कृता भ्राष्ट्रा भक्षाः ॥ **सास्य देवता** ।४।२।२४। इन्द्रो देवता अस्येति ऐन्द्रं हविः । पाशुपतं बार्हस्पत्यम् ॥ **शुक्राद्घन्** ।४।२।२६। शुक्रि-

---

कम्बोजः कम्बोजौ ॥ चोलानां राजा शकानां राजा केरलानां राजा यवनानां राजा इत्यत्र **कम्बोजादिभ्य इति वक्तव्यमिति** वार्तिकेन तद्राजसंज्ञस्याञो लुकि चोलः शकः केरलः यवनः इति रूपाणि जातानि ॥ इत्यपत्याधिकारः ॥ कषायेण रक्तं वस्त्रमित्यत्र **तेन रक्तं रागादिति** सूत्रेण अणि सुब्लुकि वृद्धौ भसंज्ञायां **यस्येति चेत्य**कारलोपे संयोगे च काषायम् ॥ पुष्येण युक्तमित्यत्र **नक्षत्रेण युक्तः काल** इति सूत्रेण अणि सुब्लुकि पुष्य अ इति जातं तत्र भसंज्ञायां **यस्येति चेति** यकारोत्तरवर्त्यकारलोपे **तद्धितेष्वचामादेरिति** वृद्धौ **तिष्यपुष्ययोर्नक्षत्राणि यलोप इति वाच्यमिति** वार्तिकेन यलोपे संयोगे च पौषमहः ॥ पुष्येण युक्त इत्यत्र **नक्षत्रेण युक्तः काल** इत्यणि **लुबविशेषे** इत्यनेन अविशेषणादणो लोपे पुष्यः ॥ वसिष्ठेन दृष्टमित्यत्र **दृष्टं सामेति** सूत्रेण अणि भसंज्ञायामकारलोपे वृद्धौ च वासिष्ठं साम ॥ वामदेवेन दृष्टं सामेत्यत्र **वामदेवाड्ड्यड्ड्यौ** इति ड्यति डटयोर्लोपे सुब्लुकि भसंज्ञायामकारलोपे संयोगे च वामदेव्यम् साम ॥ वस्त्रेण परिवृत इत्यत्र **परिवृतो रथ** इत्यनेन अणि सुब्लुकि भत्वे भत्वादकारलोपे वृद्धौ च वास्त्रो रथः ॥ शरावे उद्धृत इत्यत्र **तत्रोद्धृतममत्रेभ्य** इत्यणि सुब्लुकि भत्वे भत्वादलोपे वृद्धौ च शारावः ओदनः ॥ भ्राष्ट्रेषु संस्कृता इत्य

यम् ॥ **सोमाट्ट्यण्** ।४।२।३०। सौम्यम् ॥ **वाय्वृतुपित्रुषसो यत्** ।४।२।३१। वायव्यम् । ऋतव्यम् ॥ **रीङ् ऋतः** ।७।४।२७। अकृद्यकारे असार्वधातुके यकारे च्वौ च परे ऋदन्ताङ्गस्य रीङादेशः । यस्येति च । पित्र्यम् उषस्यम् ॥ **पितृव्यमातुलमातामहपितामहाः** ।४।२।३६। एते निपात्यन्ते । पितुर्भ्राता पितृव्यः । मातुर्भ्राता मातुलः । पितुः पिता पितामहः ॥ **तस्य समूहः** ।४।२।३७। काकानां समूहः काकम् ॥ **भिक्षादिभ्योऽण्** ।४।२।३८। भिक्षाणां समूहो भैक्षम् । गर्भिणीनां समूहो गार्भिणम् । इह भस्याढे तद्धित इति पुंवद्भावे कृते ॥ **इनण्यनपत्ये** ।६।४।१६४। अनपत्यार्थेऽणि परे इन्प्रकृत्या स्यात् । तेन नस्तद्धित इति टिलोपो न । युवतीनां समूहो यौवतम् ॥ **ग्रामजनबन्धुभ्यस्तल्** ।४।२।४३। तलन्तं स्त्रियाम् । ग्रा-

---

इति जातं तत्र **आयनेयिनीयिय** इत्यनेन घस्थाने इयादेशो भत्वे भत्वादकारलोपे संयोगे च शुक्रियम् ॥ वायुर्देवतास्येत्यत्र **वाय्वृतुपित्रुषसोयत्** इति यति सुब्लोपे तलोपे भत्वे **ओर्गुण** इति गुणे **वान्तोयी**त्यवादेशे च वायव्यम् ॥ एवम् ऋतव्यम् ॥ पिता देवतास्येति **वाय्वृतुपित्रुषसोयत्** इति यति सुब्लोपे तलोपे पितृय इति जातं **रीङृतः** इति रीङादेशे पित्रीय इति जातं भत्वे भत्वाच्च रकारवर्तिन ईकारस्य लोपे संयोगे च पित्र्यम् ॥ उषा देवतास्येत्यत्र **वाय्वृतुपित्रुषसो यत्** इति यति सुब्लोपे संयोगे च उषस्यम् ॥ पितुर्भ्रातेत्यत्र **पितृव्यमातुलमातामहपितामहाः** इति सूत्रेण पितृशब्दात् भ्रात्रर्थे व्यत्प्रये सुब्लोपे च भ्रातृव्यः ॥ एवं मातृशब्दात् डुलचि सुब्लोपे डचयोर्लोपे मातृ उल इति जातं भत्वे भत्वात् **टेरि**ति टिलोपे मातुलः ॥ मातुः पितामातामह इत्यत्र **मातृपितृभ्यां पितरि डामहच्** इति डामहचि सुब्लोपे डकारचकारयोर्लोपे भसंज्ञायां **टेरि**ति सूत्रेण डिति भस्य तकारोत्तरवर्तिन ऋकारस्य लोपे संयोगे च मातामहः ॥ एवं पितुः पिता पितामहः ॥ काकानां समूह इत्यत्र **तस्य समूह** इत्यनेन अणि सुब्लोपे भसंज्ञायां ककारोत्तरवर्त्यकारलोपे काकम् ॥ भिक्षाणां समूह इत्यत्र **तस्य समूह** इत्यनेन अणि प्राप्ते **अचित्तहस्तिधेनोष्ठक्** इत्यनेन भिक्षाया अचित्तत्वाट्ठकि प्राप्ते ठकं बाधित्वा **भिक्षादिभ्योऽण्** इत्यणि सुब्लोपे भसंज्ञायां भत्वादाकारलोपे **तद्धितेष्वचामादे**रिति वृद्धौ भैक्षम् ॥ एवं गर्भिणीनां समूहो गार्भिणम् इत्यत्रापि **स्त्रीभ्योढक्** इति ढकि प्राप्ते तं बाधित्वा **भिक्षादिभ्योऽण्** इत्यणि सुब्लोपे भत्वे भत्वादेव **भस्याढे तद्धिते** इति सूत्रेण पुंवद्भावे कृते गार्भिण् अ इति जातं तत्र **नस्तद्धिते** इत्यनेन नान्तटिलोपे प्राप्ते **इनण्यनपत्ये** इति सूत्रेण अणि इनः प्रकृतिभावे संयोगे **तद्धितेष्वचामादे**रिति वृद्धौ गार्भिणम् ॥ एवं युवतीनां समूहो यौवतम् इत्यत्रापि भिक्षादित्वादणि सुब्लोपे भत्वे पुंवद्भावे वृद्धौ च यौवतम् ॥ ग्रामाणां समूह इत्यत्र **ग्रामजनबन्धुभ्यस्तल्** इत्यनेन समूहार्थे तलि सुब्लोपे ललोपे **अजाद्यतष्टाप्** इति

शैवः ॥ **अदूरभवश्च** ।४।२।७०। विदिशाया अदूरभवं नगरं वैदिशम् ॥ **जनपदे लुप्** ।४।२।८१। जनपदे वाच्ये चातुरर्थिकस्य लुप् ॥ **लुपि युक्तवद्व्यक्तिवचने** ।१।२।५१। लुपि सति प्रकृतिवल्लिङ्गवचने स्तः । पञ्चालानां निवासो जनपदः पञ्चालाः कुरवः अङ्गाः वङ्गाः कलिङ्गाः ॥ **वरणादिभ्यश्च** ।४।२।८२। अजनपदार्थ आरम्भः । वरणानामदूरभवं नगरं वरणाः ॥ **कुमुदनडवेतसेभ्यो ड्मतुप्** ।४।२।८७। **झयः** ।८।२।१०। झयन्तान्मतोर्मस्य वः । कुमुद्वान् नड्वान् ॥ **मादुपधायाश्च मतोर्वोऽयवादिभ्यः** ।८।२।९। मवर्णावर्णान्तान्मवर्णावर्णोपधाच्च यवादिवर्जितात्परस्य मतोर्मस्य वः । वेतस्वान् ॥ **नडशादाड्ड्वलच्** ।४।२।८८। नड्वलः ॥ **शिखाया वलच्** ।४।२।८९। शिखावलः ॥ इति चातुरर्थिकाः ॥ * ॥ **शेषे** ।४।२।९२। अपत्यादिचतुरर्थ्यन्तादन्योऽर्थः शेषस्तत्राणादयः स्युः । चक्षुषा गृह्यते चाक्षुषं रूपम् । श्रावणः शब्दः । औपनिषदः पुरुषः । दृषदि पिष्टा दार्षदाः सक्तवः । चतुर्भिरुह्यं चातुरं शक-

---

भत्वे भत्वादकारलोपे संयोगे च शैवः ॥ विदिशाया अदूरभवमित्यत्र **अदूरभवश्चे**त्यनेन अणि वृद्धौ भत्वे भत्वादाकारलोपे संयोगे च ॥ वैदिशम् ॥ पञ्चालानां निवास इत्यत्र **तस्य निवास** इत्यनेन अणि सुब्लोपे **जनपदे लुप्** इति सूत्रेण अणो लुपि **लुपि युक्तवद्व्यक्तिवचने** इति सूत्रेण प्रकृतिवल्लिङ्गवचने जसि च पञ्चालाः ॥ एवं कुरवः अङ्गाः वङ्गाः कलिङ्गाः इत्यादयोपि । **तस्य निवास** इत्यणि **जनपदे लुप्** इति लुपि जसि जकारलोपे **प्रथमयोः पूर्वसवर्ण** इति पूर्वसवर्णदीर्घे सस्य रुत्वे रस्य विसर्गे च भवन्ति । वरणानामदूरभवमित्यत्र **अदूरभवश्चे**त्यणि **वरणादिभ्यश्चे**ति अणो लुपि जसि च वरणाः ॥ कुमुदमस्यास्ति इत्यत्र **कुमुदनडवेतसेभ्यो ड्मतुप्** इति ड्मतुपि डकारोकारपकाराणां लोपे सुब्लोपे **टे**रिति सूत्रेण डित्वसामर्थ्यादभस्यापि टेर्लोपे कुमुमत् इति जातं तत्र **झय** इति सूत्रेण मस्य वत्वे **अत्वसन्तस्य चाधातो**रिति **उगिदचा**मिति नुमि उमो लोपे च कुमुद्वान् त्स् इति जातं **हल्ङ्याब्भ्य** इति सुलोपे **संयोगान्तस्य लोप** इति तलोपे च कुमुद्वान् ॥ एवं नड्वान् ॥ वेतस्वानित्यत्र **कुमुदनडवेतसेभ्यो ड्मतुप्** इति ड्मतुपि डकारोकारपकारलोपे टिलोपे सुब्लोपे च वेतस् मत् इति जातं **मादुपधायाश्च मतोर्वोऽयवादिभ्य** इति सूत्रेण मकारस्थाने वकारे **अत्वसन्तस्य चाधातो**रिति दीर्घे **उगिदचा**मिति नुमि उमो लोपे **हल्ङ्याब्भ्यिति** सुलोपे **संयोगान्तस्य लोप** इति तलोपे च वेतस्वान् ॥ नडाः सन्ति अस्येत्यत्र **नडशादाड्ड्वलच्** इति ड्वलचि सुब्लोपे भत्वे **टे**रिति टिलोपे च नड्वलः ॥ शिखास्त्यस्येत्यत्र **शिखाया वलच्** इति वलचि चलोपे विभक्तौ च शिखावलः ॥ इति चातुरर्थिकाः ॥

चक्षुषा गृह्यते इत्यत्र **शेषे** इति सूत्रेण अणि सुब्लोपे **तद्धितेष्वचामादे**रिति वृद्धौ विभक्तौ च चाक्षुषम् रूपम् । एवं श्रवणेन गृह्यते इत्यत्र **शेषे** इत्यनेन अणि भत्वे भ-

टम् । चतुर्दश्यां दृश्यते चातुर्दशं रक्षः । तस्य विकार इत्यतः प्राक् शेषाधिकारः ॥ **राष्ट्राऽवारपाराद्घखौ** ।४।२।९३। आभ्यां क्रमाद्घखौ स्तः शेषे । राष्ट्रे जातादि राष्ट्रियः ॥ अवारपारीणः । (अवारपाराद्विगृहीतादपि विपरीताच्चेति वक्तव्यम्) अवारीणः पारीणः पारावारीणः । इह प्रकृतिविशेषाद्घादयष्ट्युट्युलन्ताः प्रत्यया उच्यन्ते तेषां जातादयोऽर्थविशेषाः समर्थविभक्तयश्च वक्ष्यन्ते ॥ **ग्रामाद्यखञौ** ।४।२।९४। ग्राम्यः ग्रामीणः ॥ **नद्यादिभ्यो ढक्** ।४।२।९७। नादेयम् माहेयम् वाराणसेयम् ॥ **दक्षिणापश्चात्पुरसस्त्यक्** ।४।२।९८। दाक्षिणात्यः पाश्चात्यः पौरस्त्यः ॥ **द्युप्रागपागुदक्प्रतीचो यत्** ।४।२।१०१। दिव्यम् । प्राच्यम् अपाच्यम् उदीच्यम् प्रतीच्यम् ॥ **अव्ययात्त्यप्** ।४।२।१०४। (अमेहक्वतसित्रेभ्य एव) अमात्यः इहत्यः

---

त्यादकारलोपे वृद्धौ संयोगे विभक्तौ च श्रावणः शब्दः ॥ एवमुपनिषदा गृह्यते इत्यत्र **शेषे** इत्यणि **तद्धितेष्वचामादेः** इति वृद्धौ विभक्तौ च औपनिषदः ॥ दृषदि पिष्टा इत्यत्र **शेषे** इत्यनेन अणि सुब्लोपे **तद्धितेष्वचामादेः** इति वृद्धौ विभक्तौ दार्षदाः सक्तवः ॥ एवं चतुर्भिरुह्यते इत्यत्र **शेषे** इत्यणि वृद्धौ चातुरम् शाकटम् ॥ चतुर्दश्यां दृश्यते इत्यत्र **शेषे** इत्यणि सुब्लोपे भत्वे भस्यादीकारलोपे वृद्धौ चातुर्दशम् रक्षः ॥ राष्ट्रे जात इत्यत्र **राष्ट्रावारपाराद्घखौ** इत्यनेन घप्रत्यये सुब्लोपे **आयनेयीनीयियः** इत्यनेन घस्थाने इयादेशे भत्वे भत्वादकारलोपे च राष्ट्रियः ॥ अवारपारे जात इत्यत्र **राष्ट्रावारपाराद्घखौ** इत्यनेन खप्रत्यये सुब्लोपे **आयनेयीनीयियः** इति खस्थाने ईनादेशे भत्वे भत्वादकारलोपे संयोगे **अट्कुप्वाङ्नुम्व्यवायेऽपि** इति नस्य णत्वे अवारपारीणः ॥ अवारे जात इत्यत्र **अवारपाराद्विगृहीतादपि विपरीताच्चेति वक्तव्यम्** इत्यनेन खे खस्थाने ईनादेशे भत्वादकारलोपे नस्य णत्वे च अवारीणः ॥ एवं पारे जातः पारीणः पारावारे जात इत्यत्र विपरीतत्वात्खे खस्य ईनादेशे भत्वे भत्वादकारलोपे नस्य णत्वे च पारावारीणः ॥ ग्रामे भव इत्यत्र **ग्रामाद्यखञौ** इति ये सुब्लोपे भत्वे भत्वादलोपे संयोगे विभक्तौ च ग्राम्यः ॥ खञि खस्थाने **आयनेयीनीयियः** इत्यनेन ईनादेशे भत्वे भत्वादकारलोपे नस्य णत्वे ग्रामीणः ॥ नद्यां जातमित्यत्र **नद्यादिभ्यो ढक्** इति ढकि ककारलोपे सुब्लोपे ढस्थाने **आयनेयीनीयियः** इत्यनेन एयादेशे भत्वे भत्वादीलोपे **किति च** इति वृद्धौ नादेयम् ॥ एवं माहेयम् ॥ वाराणसेयम् ॥ दक्षिणस्यां भव इत्यत्र **दक्षिणापश्चात्पुरसस्त्यक्** इति त्यकि सुब्लोपे ककारलोपे **किति च** इति वृद्धौ दाक्षिणात्यः । एवं पश्चाद्भव इत्यत्र त्यकि **किति च** इति वृद्धौ पाश्चात्यः ॥ एवं पुरो भव इत्यत्र त्यकि **किति च** इति वृद्धौ पौरस्त्यः ॥ दिवि भवमित्यत्र **द्युप्रागपागुदक्प्रतीचो यत्** इति यति सुब्लोपे तलोपे संयोगे च दिव्यम् । प्राच्यम् । अपाच्यम् ॥ उदीच्यम् ॥ प्रतीच्यम् इत्येतानि **द्युप्रागपागुदक्प्रतीचो यत्** इत्यनेन यति सुब्लोपे

कल्यः ततस्त्यः तत्रत्यः ( त्यब्नेर्ध्रुव इति वक्तव्यम् ) नित्यः ॥ **वृद्धिर्यस्याचामादिस्तद्वृद्धम् ।१।१।७३।** यस्य समुदायस्याचां मध्ये आदिर्वृद्धिस्तद्वृद्धसंज्ञं स्यात् ॥ **त्यदादीनि च ।१।१।७४।** वृद्धसंज्ञानि स्युः ॥ **वृद्धाच्छः ।४।२।११४।** शालीयः मालीयः तदीयः । ( वा नामधेयस्य वृद्धसंज्ञा वक्तव्या ) देवदत्तीयः दैवदत्तः ॥ **गहादिभ्यश्च ।४।२।१३८।** गहीयः ॥ **युष्मदस्मदोरन्यतरस्यां खञ्च ।४।३।१।** चाच्छः । पक्षेऽण् । युवयोर्युष्माकं वायं युष्मदीयः । अस्मदीयः ॥ **तस्मिन्नणि च युष्माकास्माकौ ।४।३।२।** युष्मदस्मदोरेतावादेशौ स्तः खञि अणि च । यौष्माकीणः आस्माकीनः यौष्माकः आस्माकः ॥ **तवकममकावेकवचने ।४।३।३।** एकार्थवाचिनोर्युष्मदस्मदोस्तवकममकौ स्तः खञि अणि च । तावकीनः तावकः । माम-

---

त्लोपे संयोगे विभक्तौ च रूपाणि भवन्ति ॥ अमा सह भवतीति अमात्य इत्यत्र **अव्ययात्यप्** इत्यनेन त्यपि यलोपे विभक्तौ च अमात्यः ॥ एवं इहत्यः क्वत्यः ततस्त्यः तत्रत्यः ॥ नित्य इत्यत्र **त्यब्नेर्ध्रुवे** इत्यनेन निरूपादव्ययात्त्यपि पलोपे विभक्तौ च नित्यः ॥ शालायां भव इत्यत्र **वृद्धिर्यस्याचामादिस्तद्वृद्धम्** इत्यनेन शालाशब्दस्य वृद्धसंज्ञायां **वृद्धाच्छ** इत्यनेन छे सुब्लोपे शाला छ इति जातं तत्र **आयनेयीनीयियः** इति छस्थाने ईयादेशे भत्वे भत्वादाकारलोपे संयोगे विभक्तौ च शालीयः ॥ एवं मालीयः ॥ तस्यायमित्यत्र **त्यदादीनि च** इति वृद्धसंज्ञायां **वृद्धाच्छ** इति छे तदीयः ॥ देवदत्तस्यायमित्यत्र **वा नामधेयस्येति** वृद्धसंज्ञायां **वृद्धाच्छ** इति छे छस्य ईयादेशे भत्वे भत्वादलोपे संयोगे विभक्तौ च देवदत्तीयः ॥ वृद्धसंज्ञाभावे **शेषे** इत्यणि **तद्धितेष्वचामादेरि**ति वृद्धौ भत्वे भत्वादलोपे च दैवदत्तः ॥ गहस्यायमित्यत्र **गहाच्छ** इति छे **आयनेयीनीयियः** इति छस्य ईयादेशे भत्वे भत्वाद्रलोपे संयोगे विभक्तौ च गहीयः ॥ युवयोर्युष्माकं वायमित्यत्र **युष्मदस्मदोरन्यतरस्यां खञ्चे**ति सूत्रेण छे छस्य ईयादेशे विभक्तौ च युष्मदीयः ॥ एवमावयोरस्माकं वायमित्यत्र **युष्मदस्मदोरन्यतरस्यां खञ्चे**ति छे छस्य ईयादेशे संयोगे विभक्तौ च अस्मदीयः ॥ खञि तु **आयनेयीनीयियः** इत्यनेन खस्य ईनादेशे युष्मद् ईन इति जातं तत्र **तस्मिन्नणि च युष्माकास्माकौ** इति सूत्रेण युष्मदः स्थाने युष्माकादेशे युष्माक ईन इति जातं भत्वे भत्वादलोपे संयोगे विभक्तौ **तद्धितेष्वचामादे**रिति वृद्धौ तस्य णत्वे च यौष्माकीणः ॥ एवं आस्माकीनः ॥ पक्षे अणि सुब्लोपे युष्मद् अ अस्मद् अ इति जातं **तस्मिन्नणि च युष्माकास्माकौ** इत्यनेन युष्मदो युष्माकादेशे अस्मद अस्माकादेशे च युष्माक अ अस्माक अ इति जातं भत्वे भत्वादलोपे वृद्धौ संयोगे च यौष्माकः आस्माकः ॥ तव अयमित्यत्र **युष्मदस्मदोरन्यतरस्यां खञ्चे**त्यनेन खञि सुब्लोपे **तवकममकावेकवचने** इत्यनेन तवकादेशे खस्थाने ईनादेशे भत्वे भत्वादलोपे तावकीनः ॥ अण्

कीन मामकः छे तु ॥ **प्रत्ययोत्तरपदयोश्च** ।७।२।९८। मपर्यन्तयोरेतयोरेकार्थवाचिनोस्त्वमौ स्तः प्रत्यये उत्तरपदे च परतः । त्वदीयः मदीयः त्वत्पुत्रः मत्पुत्रः ॥ **मध्यान्मः** । ४।३।८। मध्यमः ॥ **कालाट्ठञ्** ।४।३।११। कालवाचिभ्यष्ठञ् स्यात् । कालिकम् मासिकम् सांवत्सरिकम् । अव्ययानां भमात्रे टिलोपः । सायंप्रातिकः पौनः पुनिकः ॥ **प्रावृष एण्यः** ।४।३।१७। प्रावृषेण्यः ॥ **सायंचिरंप्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च** ।४।३।२३। सायमित्यादिभ्यश्चतुर्भ्योऽव्ययेभ्यश्च कालवाचिभ्यष्ट्युट्युलौ स्तस्तयोस्तुट् च । सायन्तनम् चिरन्तनम् । प्राह्णे प्रगेऽनयोरेदन्तत्वं निपात्यते । प्राह्णेतनम् प्रगेतनम् दोषातनम् ॥ **तत्र जातः** ।४।३।२५। सप्तमीसमर्थाज्जात इत्यर्थेऽणादयो घादयश्च स्युः । स्रुघ्ने जातः स्रौघ्नः । उत्से जातः औत्सः । राष्ट्रे जातः राष्ट्रियः । अवारपारे जातः अवारपारीणः इत्यादि ॥ **प्रावृषष्ठप्** ।४।३।२६। एण्यापवादः । प्रावृषिकः ॥ **प्रायभवः** ।४।३।३९। तत्रेत्येव ।

---

पक्षे **तवकममकावेकवचने** इत्यनेन युष्मदस्तवकादेशे भत्वे भत्वादल्लोपे वृद्धौ तावक ॥ एवं मामक ॥ तत्र अयमित्यत्र **युष्मदस्मदोरन्यतरस्यां खञ्चेति** सूत्रे चकारात् छप्रत्यये सुब्लोपे छस्य ईयादेशे **प्रत्ययोत्तरपदयोश्चेति** सूत्रेण युष्मदो मपर्यन्तस्य त्वादेशे त्व अत् ईय इति जाते **अतो गुणे** पररूपे संयोगे च त्वदीय ॥ एवं मदीय ॥ तव पुत्र इत्यत्र **प्रत्ययोत्तरपदयोश्चेत्यनेन** पुत्रशब्दे उत्तरपदस्थे त्वादेशे त्व अ पुत्र इति जातम् । तत्र **अतोगुणे** इति पररूपादेशे त्वत्पुत्र ॥ एवं मत्पुत्र ॥ मध्ये जात इत्यत्र **मध्यान्म** इत्यनेन मप्रत्यये विभक्तौ मध्यम ॥ काले जातमित्यत्र **कालात् ठञ्** इति ठञि **ठस्येक** इति ठस्येकादेशे काल इक इति जाते भत्वे भत्वादल्लोपे संयोगे च कालिकम् ॥ एवं मासिकम् ॥ सांवत्सरिकम् ॥ सायंप्रातर्भव इत्यत्र **कालाट्ठञ्** इति ठञि **ठस्येक** इति ठस्य इकादेशे साय प्रातर् इक इति जाते भसंज्ञायां **अव्ययानां भमात्रे टिलोप** इति टिलोपे सायंप्रातिक ॥ एवं पुनः पुनर्जात इत्यत्र **कालाट्ठञ्** इति ठञि **ठस्येक** इति ठस्येकादेशे पुन पुनर् इक इति जाते तत्र भसंज्ञायां **अव्ययानां भमात्रे टिलोप** इति टिलोपे वृद्धौ च पौन पुनिक ॥ प्रावृषि जात इत्यत्र **प्रावृष एण्य** इति एण्यादेशे संयोगे च प्रावृषेण्य ॥ सायंभवमित्यत्र **सायंचिरंप्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट्चेत्यनेन** ट्युप्रत्यये ट्यु इत्यस्य च तुडागमे उटो लोपे ट्यु इत्यस्य टलोपे च सायन्तयु इति जाते तत्र **युवोरनाकौ** इति अनादेशे संयोगे च सायन्तनम् ॥ एवं चिरन्तनम् ॥ प्राह्णेतनम् ॥ प्रगेतनमित्यत्र एदन्तत्वनिपातनाद्रूपे ज्ञेये ॥ दोषातनमप्येवमेव । स्रुघ्ने जात इत्यत्र **तत्र जात** इत्यणि वृद्धौ स्रौघ्न ॥ उत्से जात इत्यत्र **तत्र जात** इत्यणि **तद्धितेष्वचामादेरिति** वृद्धौ औत्स ॥ राष्ट्रे जात इत्यत्र जात इत्यनेन आदिग्रहणाच्छप्रत्यये छस्य च **आयनेयीनि** सूत्रेण ईयादेशे भत्वे भत्वादल्लोपे राष्ट्रीय ॥ अवारपारे जात इत्यत्र **तत्र जात** इत्यनेन खञि खस्य **आयनेयी**ति ईनादेशे भत्वे भत्वादल्लोपे च आवारपारीण ॥ प्रा-

**रूप्यः** ।४।३।८१। समादागतं समरूप्यम् । पक्षे गहादित्वाच्छः । समीयम् विषमीयम् । देवदत्तरूप्यम् दैवदत्तम् ॥ **मयट् च** ।४।३।८२। सममयम् देवदत्तमयम् ॥ **प्रभवति** ।४।३।८३। हिमवतः प्रभवति हैमवती गङ्गा ॥ **तद्गच्छति पथिदूतयोः** ।४।३।८५। स्रुघ्नं गच्छति स्रौघ्नः पन्था दूतो वा ॥ **अभिनिष्क्रामति द्वारम्** ।४।३।८६। स्रुघ्नमभिगच्छति स्रौघ्नं कान्यकुब्जद्वारम् ॥ **अधिकृत्य कृते ग्रन्थे** ।४।३।८७। शारीरकमधिकृत्य कृतो ग्रन्थः शारीरकीयः ॥ **सोऽस्य निवासः** ।४।३।८९। स्रुघ्नो निवासोऽस्य स्रौघ्नः ॥ **तेन प्रोक्तम्** ।४।३।१०१। पाणिनिना प्रोक्तं पाणिनीयम् ॥ **तस्येदम्** ।४।३।१२०। उपगोरिदं औपगवम् ॥ इति शैषिकाः ॥ **तस्य विकारः** ।४।३।१३४। (अश्मनो विकारे टिलोपो वक्तव्यः) अश्मनो विकारः आश्मः । भास्मनः । मार्त्तिकः ॥ **अवयवे च प्राण्योषधिवृक्षेभ्यः** ।४।३।१३५।

---

औपाध्यायकः ॥ एवं पितामहादागत इत्यत्र **विद्यायोनिसंबन्धेभ्यो वुञ्** इति योनिसंबन्धात् वुञि ञलोपे **युवोरनाकौ** इति वुस्थाने अकादेशे भत्वे भत्वादलोपे आदिवृद्धौ च पैतामहक' ॥ समादागतमित्यत्र **हेतुमनुष्येभ्योऽन्यतरस्यामि**ति रूप्यप्रत्यये सुब्लोपे विभक्तौ च समरूप्यम् ॥ पक्षे **गहादिभ्यश्च्छ** इति छस्थाने ईयादेशे भत्वे भत्वादकारलोपे विभक्तौ च समीयम् ॥ एवं विषमादागत विषमरूप्यम् ॥ विषमीयम् ॥ देवदत्तादागत देवदत्तरूप्यम् ॥ पक्षे **तत आगत** इत्यणि सुब्लोपे भत्वे भत्वादलोपे **तद्धितेष्वचामादे**रिति वृद्धौ दैवदत्तम् ॥ समादागतमित्यत्र **मयट्चे**ति सूत्रेण मयटि सुब्लोपे च सममयम् ॥ एवं देवदत्तमयम् ॥ हिमवतः प्रभवतीत्यत्र **प्रभवतीति** सूत्रेण अणि **तद्धितेष्वचामादे**रिति वृद्धौ हैमवत इति जातं **टिड्ढाणञ्** इति ङीपि भत्वे भत्वाट्टिलोपे सयोगे च हैमवती गङ्गा ॥ स्रुघ्नं गच्छतीत्यत्र **तद्गच्छतिपथिदूतयो**रित्यणि सुब्लोपे वृद्धौ च स्रौघ्नः ॥ स्रुघ्नं अभिगच्छतीत्यत्र **अभिनिष्क्रामति द्वार**मित्यणि वृद्धौ च स्रौघ्नम् कान्यकुब्जद्वारम् ॥ शारीरकमधिकृत्य कृतो ग्रन्थः इत्यत्र **अधिकृत्यकृते ग्रंथे** इत्यनेन छप्रत्यये **आयनेयी**रिति सूत्रेण छस्थाने ईयादेशे भत्वे भत्वादलोपे सयोगे विभक्ती च शारीरकीयः ॥ स्रुघ्नो निवासोऽस्येत्यत्र **सोऽस्य निवास** इत्यणि आदिवृद्धौ च स्रौघ्न. ॥ पाणिनिना प्रोक्तमित्यत्र **तेन प्रोक्त**मित्यनेन छप्रत्यये **आयनेयी**ति छस्थाने ईयादेशे भत्वे भत्वादकारलोपे सयोगे विभक्तौ च पाणिनीयम् ॥ उपगोरिदमित्यत्र **तस्येद**मित्यणि आदिवृद्धौ भत्वे भत्वा**दोर्गुण** इति गुणे **एचोयवायाव** इत्यवादेशे च औपगवम् ॥ इति शैषिकाः पूर्णतामगच्छन् ॥ अश्मनो विकार इत्यत्र **तस्य विकार** इत्यनेन अणि **नस्तद्धित** इति टिलोपे प्राप्ते **अन्** इति सूत्रेण टिलोपबाधे **अश्मनो विकारे टिलोप** इति वार्तिकेन टिलोपे कृते **तद्धितेष्वचामादे**रिति वृद्धौ विभक्तौ च आश्म' ॥ भस्मनो विकार इत्यत्र **तस्य विकार** इत्यणि **नस्तद्धित**

चाद्विकारे । मयूरस्यावयवो विकारो वा मायूरः । मौर्वं काण्डं भस्म वा । पैप्पलम् ॥ **मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः** ।४।३।१४३। प्रकृतिमात्रान्मयड्वा स्याद्विकारावयवयोः । अश्ममयम् । आश्मनम् । अभक्ष्येत्यादि किम् । मौद्गः सूपः । कार्पासमाच्छादनम् ॥ **नित्यं वृद्धशरादिभ्यः** ।४।३।१४४। आम्रमयम् ॥ **गोश्च पुरीषे** ।४।३।१४५। गोः पुरीषं गोमयम् ॥ **गोपयसोर्यत्** ।४।३।१६०। गव्यम् पयस्यम् ॥ इति प्राग्दीव्यतीयाः ॥*॥ **प्राग्वहतेष्ठक्** ।४।४।१। तद्वहतीत्यतः प्राक् ठगधिक्रियते ॥ **तेन दीव्यति खनति जयति जितम्** ।४।४।२। अक्षैर्दीव्यति खनति जयति जितं वा आक्षिकः ॥ **संस्कृतम्** ।४।४।३। दध्ना संस्कृतं दाधिकम् । मारिचिकम् ॥ **तरति** ।४।४।५। तेनेत्येव । उडुपेन तरति औडुपिकः ॥ **चरति** ।४।

---

इति टिलोपे प्राप्ते **अन्** इति सूत्रेण **टेः** प्रकृतिभावे वृद्धौ च आश्मनः ॥ मृत्तिकाया विकार इत्यत्र **तस्य विकार** इत्यनेनाणि **तद्धितेष्वचामादे**रिति वृद्धौ भत्वे भत्वादाकारलोपे संयोगे विभक्तौ च मार्तिकः ॥ मयूरस्य अवयवो विकारो वेत्यत्र **अवयवे च प्राण्योषधिवृक्षेभ्य** इत्यणि आदिवृद्धौ भत्वे भत्वादलोपे विभक्तौ च मायूरः ॥ मूर्वाया अवयवो विकारो वेत्यत्र **अवयवे च प्राण्योषधिवृक्षेभ्य** इत्यणि आदिवृद्धौ भत्वे भत्वादाकारलोपे च मौर्वम् ॥ काण्डम् भस्म ॥ पिप्पल्या अवयवो विकारो वेत्यत्र **अवयवे च प्राण्योषधिवृक्षेभ्य** इत्यणि **तद्धितेष्वचामादे**रिति वृद्धौ भसंज्ञायां भत्वादीकारलोपे च पैप्पलम् ॥ अश्मनो विकार इत्यत्र **मयड्वैतयोर्भाषायामभक्ष्याच्छादनयो**रिति सूत्रेण मयटि सुब्लोपे **नलोपः प्रातिपदिकान्तस्ये**ति नलोपे अश्ममयः ॥ अश्मनोऽवयवो आश्मनम् ॥ मुद्गानां विकार इत्यत्र भक्ष्यत्वान्मयडभावे **तस्यविकार** इत्यणि वृद्धौ च मौद्गः ॥ कर्पासानां विकार इत्यत्र आच्छादनत्वान्मयडभावे **तस्य विकार** इत्यनेन अणि वृद्धौ च कार्पासः ॥ आम्राणां विकारोऽवयवो वेत्यत्र **नित्यं वृद्धशरादिभ्य** इत्यनेनात्र **वृद्धिर्यस्याचामादि**रिति सूत्रेणाम्रशब्दस्य वृद्धसंज्ञया-न्मयटि सुब्लोपे विभक्तौ च आम्रमयम् ॥ गोः पुरीषमित्यत्र **गोश्च पुरीषे** इत्यनेन मयटि गोमयम् ॥ गोर्विकार इत्यत्र **गोपयसोर्यत्** इति सूत्रेण यति गो य इति **वान्तोऽयी**ति सूत्रेण अवादेशे गव्यम् ॥ पयसो विकार इत्यत्र **गोपयसोर्यत्** इति सुब्लोपे संयोगे च पयस्यम् ॥ इति प्राग्दीव्यतीयप्रकरणं समाप्तम् ॥ अक्षैर्दीव्यति खनति जयति जितं वेत्यत्र **तेन दीव्यतिखनतिजयतिजितम**िति सूत्रेण ठकि । **ठस्येक** इति ठस्य इकादेशे भत्वे भत्वादकारलोपे **तद्धितेष्वचामादे**रिति वृद्धौ आक्षिकः ॥ दध्ना संस्कृतमित्यत्र **संस्कृत**मिति सूत्रेण ठकि **ठस्येक** इति ठस्येकादेशे भत्वे भत्वादिकारलोपे वृद्धौ च दाधिकम् ॥ एवं मरीचेन संस्कृतं मारिचिकम् ॥ उडुपेन तरति इत्यत्र **तरती**ति सूत्रेण ठकि **ठस्येक** इति ठस्येकादेशे भत्वे भत्वादकारलोपे संयोगे वृद्धौ मा-

४।८। तृतीयान्ताद्गच्छति भक्षयति वेत्यर्थयोष्ठक् स्यात् । हस्तिना चरति हास्तिकः । दध्ना चरति दाधिकः ॥ **संसृष्टे** ।४।४।२२। दध्ना संसृष्टं दाधिकम् ॥ **उञ्छति** ।४।४।३२। बदराण्युञ्छति बादरिकः ॥ **रक्षति** ।४।४।३३। समाजं रक्षति सामाजिकः॥ **शब्ददर्दुरं करोति** ।४।४।३४। शब्दं करोति शाब्दिकः । दर्दुरं करोति दार्दुरिकः॥ **धर्मं चरति** ।४।४।४१। धार्मिकः ( अधर्माच्चेति वक्तव्यम् ) आधर्मिकः ॥ **शिल्पम्** ।४।४।५५। मृदङ्गवादनं शिल्पमस्य मार्दङ्गिकः ॥ **प्रहरणम्** ।४।४।५७। तदस्मै त्येव । असिः प्रहरणमस्य आसिकः । धानुष्कः ॥ **शीलम्** ।४।४।६१। अपूपभक्षणं शीलमस्य आपूपिकः ॥ **निकटे वसति** ।४।४।७३। नैकटिको भिक्षुकः ॥ इति ठगधिकारः ॥*॥ **प्राग्घिताद्यत्** ।४।४।७५। तस्मै हितमित्यतः प्राग् यदधिक्रियते ॥ **तद्वहति रथयुगप्रासंगम्** ।४।४।७६। रथं वहति रथ्यः । युग्यः । प्रासंग्यः ॥

---

रिचिकम् ॥ हस्तिना चरतीत्यत्र **चरती**ति सूत्रेण ठकि **ठस्येक** इति इकादेशे भत्वे भत्वा**द्यस्तद्धित** इति टिलोपे **तद्धितेष्वचामादे**रिति वृद्धौ हास्तिकः ॥ एवं दध्ना चरतीति दाधिकः ॥ दध्ना संसृष्ट इत्यत्र **संसृष्टे** इति ठकि ठस्येकादेशे भत्वे भत्वादिकारलोपे वृद्धौ च दाधिकः ॥ बदराणि उञ्छतीत्यत्र **उञ्छती**ति सूत्रेण ठकि **ठस्येक** इति इकादेशे भत्वे भत्वादकारलोपे संयोगे वृद्धौ च बादरिकः ॥ समाजं रक्षतीत्यत्र **रक्षती**ति सूत्रेण ठकि इकादेशे भत्वे भत्वादकारलोपे वृद्धौ सामाजिकः ॥ शब्दं करोतीत्यत्र **शब्ददर्दुरं करोती**ति सूत्रेण ठकि ठस्येकादेशे भत्वे भत्वादकारलोपे संयोगे वृद्धौ च शाब्दिकः ॥ एवं दर्दुरं करोतीति दार्दुरिकः ॥ धर्मं चरतीति **चरती**ति सूत्रेण ठकि ठस्येकादेशे भत्वे भत्वादलोपे वृद्धौ च धार्मिकः ॥ अधर्ममाचरतीत्यत्र **अधर्माच्चेति वक्तव्य**मिति वार्तिकेन ठकि **ठस्येक** इति ठस्य इकादेशे भत्वे भत्वादलोपे **तद्धितेष्वचामादे**रिति आदिवृद्धौ आधर्मिकः मृदङ्गवादनं शिल्पमस्येत्यत्र **शिल्पमि**ति सूत्रेण ठकि **ठस्येक** इति ठस्येकादेशे भत्वे भत्वादकारलोपे च मार्दङ्गिकः ॥ असिः प्रहरणमस्येत्यत्र **प्रहरण**मिति सूत्रेण ठकि ठस्येकादेशे भत्वे भत्वादिकारलोपे आदिवृद्धौ च आसिकः ॥ एवं धनुः प्रहरणमस्येत्यत्र **प्रहरण**मिति सूत्रेण ठकि **इसुसुक्तान्तात्कः** इत्यनेन ठस्थाने कादेशे आदिवृद्धौ **ससजुषोरु**रिति सस्य रुत्वे **खरवसानयो**रिति विसर्गे **विसर्जनीयस्य स** इति विसर्गस्य सत्वे **आदेशप्रत्ययो**रिति सस्य षत्वे वृद्धौ च धानुष्कः ॥ अपूपभक्षणं शीलमस्येत्यत्र **शील**मिति सूत्रेण ठकि **ठस्येक** इति ठस्येकादेशे भत्वे भत्वादकार आदिवृद्धौ च आपूपिकः ॥ निकटे वसतीत्यत्र **निकटे वसती**ति सूत्रेण ठकि ठस्येकादेशे भत्वे भत्वादलोप आदिवृद्धौ च नैकटिकः॥ इति ठगधिकारप्रकरणं पूर्णम् ॥ रथं वहतीत्यत्र **तद्वहतिरथयुगप्रासङ्ग**मिति सूत्रेण यति **यचिभ**मिति भत्वे **यस्येति चे**ति भत्वादकारलोपे संयोगे च रथ्यः ॥

**धुरो यड्ढकौ** ।४।४।७७। हलि चेति दीर्घे प्राप्ते ॥ **न भकुर्छुराम्** ।८।२।७९। भस्य कुर्छुरोश्चोपधाया दीर्घो न स्यात् । धुर्यः धौरेयः ॥ **नौवयोधर्मविषमूलमूलसीतातुलाभ्यस्तार्यतुल्यप्राप्यवध्यानाम्यसमसमितसंमितेषु**।४।४।९१। नावा तार्यं नाव्यं जलम् । वयसा तुल्यो वयस्यः । धर्मेण प्राप्यं धर्म्यम् । विषेण वध्यो विष्यः । मूलेन आनाम्यं मूल्यम् । मूलेन समो मूल्यः । सीतया समितं सीत्यं क्षेत्रम् । तुलया संमितं तुल्यम् ॥ **तत्र साधुः** ।४।४।९८। अग्रे साधुः अग्र्यः । सामसु साधुः सामन्यः । ये चाभावकर्मणोरिति प्रकृतिभावः । कर्मण्यः । शरण्यः ॥ **सभाया यः** ।४।४।१०५। सभ्यः ॥ इति यतोऽवधिः ॥*॥ **प्राक् क्रीताच्छः** ।५।१।१। तेन क्रीतमित्यतः प्राक् छोऽधिक्रियते ॥ **उगवादिभ्यो यत्** ।५।१।२। प्राक् क्रीतादित्येव । उवर्णान्ताद्गवादिभ्यश्च यत् स्यात् । छस्यापवादः । शङ्कवे हितं शङ्कव्यं दारु । गव्यम् । (नाभि नभं च) । नभ्योऽक्षः नभ्यमञ्जनम् । **तस्मै हितम्** ।५।१।५। वत्से-

---

एवं धुरं वहतीति धुर्यः ॥ प्रसङ्गं वहतीति प्रासङ्ग्यः ॥ धुरं वहतीत्यत्र **धुरो यड्ढकौ** इति यति **हलि चे**ति उपधादीर्घत्वे **न भकुर्छुरामि**ति सूत्रेण भत्वाद्दीर्घाभावे धुर्यः ॥ ढकि तु **आयनेयी**ति सूत्रेण ढस्थाने एयादेशे **किति चे**ति वृद्धौ धौरेयः ॥ नावा तार्यमित्यत्र **नौवयोधर्मविषमूले**ति सूत्रेण यति **वान्तो यिप्रत्यये** इति अवादेशे च नाव्यम् जलम् ॥ वयसा तुल्य इत्यत्र **नौवयोधर्मविषमूले**ति यति ॥ वयस्यः ॥ एवं धर्मेण प्राप्यं धर्म्यं ॥ विषेण वध्यो विष्यः ॥ मूलेन आनम्यं मूल्यं ॥ मूलेन समो मूल्यः ॥ सीतया समितं सीत्यम् ॥ तुलया संमितं तुल्यम् ॥ एते शब्दा **नौवयोधर्मविषमूले**ति सूत्रेण यति **यचिभमि**ति भसंज्ञायां **यस्येति चे**तिभत्वादकारलोपे संयोगे विभक्तौ च भवन्ति ॥ अग्रे साधुरित्यत्र **तत्र साधु**रिति सूत्रेण यति सुब्लोपे भत्वे भत्वादलोपे च अग्र्यः ॥ सामसु साधुरित्यत्र **तत्र साधु**रिति यति सुब्लोपे सामन् यत् इति जाते **यचि भमि**ति भत्वे **नस्तद्धित** इति टिलोपे प्राप्ते **येचाभावकर्मणो**रिति सूत्रेण अभावकर्मविशिष्टयकारपरत्वात्प्रकृतिभावे संयोगे च सामन्यः ॥ एवं कर्मणि साधुः ॥ कर्मण्यः ॥ शरणे साधुरित्यत्र यति भत्वे भत्वादकारलोपे संयोगे च शरण्यः ॥ सभायां साधुरित्यत्र **सभाया यः** इति सूत्रेण यप्रत्यये सुब्लोपे भत्वे भत्वादाकारलोपे च सभ्यः ॥ इति यतोवधिः ॥ शंकवे हितमित्यत्र **प्राक्क्रीताच्छ** इति छप्राप्तौ तं बाधित्वा **उगवादिभ्यो यत्** इति यति भत्वे **ओर्गुण** इति गुणे **वान्तो यी**ति अवादेशे च शङ्कव्यम् ॥ एवं गवे हितं गव्यम् ॥ नाभये हिमित्यत्र **उगवादिभ्यो यत्** इति यति सुब्लोपे **नाभिनभं चे**ति वार्तिकेन नाभिशब्दस्य नभादेशे भत्वे भत्वादलोपे नभ्यः अक्षः ॥ एवं नभ्यम् अञ्जनं ॥ वत्सेभ्यो हितमित्यत्र **तस्मै हितमिति** सूत्रेण छप्रत्यये सुब्लोपे **आयनेयी**ति छस्थाने ईयादेशे भत्वे भत्वादकारलोपे च वत्सीयः

भ्यो हितौ वत्सीयो गोधुक् ॥ **शरीरावयवाद्यत्** ।५।१।६। दन्त्यम् कण्ठ्यम् नस्यम् ॥ **आत्मन्विश्वजनभोगोत्तरपदात्खः** ।५।१।९। **आत्माध्वानौ खे** ।६।४।१६९। एतौ खे प्रकृत्या स्तः । आत्मने हितं आत्मनीनम् । विश्वजनीनम् । मातृभोगीणः । छयतोः पूर्णोऽवधिः ॥*॥ **प्राग्वतेष्ठञ्** ।५।१।१८। तेन तुल्यमिति वतिं वक्ष्यति ततः प्राक् ठञधिक्रियते ॥ **तेन क्रीतम्** ।४।१।३७। सप्तत्या क्रीतं साप्ततिकम् । प्रास्थिकम् । **तस्येश्वरः** ।५।१।४२। सर्वभूमिपृथिवीभ्यामणञौस्तः ॥ **अनुशतिकादीनां च** ।७।३।२०। सर्वभूमेरीश्वरः सार्वभौमः । पार्थिवः ॥ **पङ्क्तिविंशतित्रिंशच्चत्वारिंशत्पञ्चाशत्षष्टिसप्तत्यशीतिनवतिशतम्** ।५।१।५९। एते रूढिशब्दा निपात्यन्ते ॥ **तदर्हति** ।५।१।६३। लब्धुं योग्यो भवतीत्यर्थे द्वितीयान्ताट्ठञादयः स्युः । श्वेतच्छत्रमर्हति श्वैतच्छत्रिकः ॥ **दण्डादिभ्यो यत्** ।५।१।६६। एभ्यो यत्स्यात् । दण्डमर्हति दण्ड्यः अर्घ्यः वध्यः ॥ **तेन निर्वृत्तम्** ।५।१।७९। अह्ना निर्वृत्तं आह्निकम् ॥ इति ठञोऽवधिः ॥*॥ **तेन तुल्यं क्रिया चे-**

---

गोधुक् ॥ दन्ताय हितमित्यत्र **शरीरावयवाद्यत्** इति यति भत्वे भत्वादलोपे च दन्त्यम् ॥ एवं कण्ठ्यम् ॥ नासिकायै हितमित्यत्र **शरीरावयवाद्यत्** इति यति सुप्लोपे **पद्दन्** इति सूत्रेण नासिका शब्दस्य नसादेशे संयोगे च नस्यम् आत्मने हितमित्यत्र **आत्मन्विश्वजनभोगोत्तरपदात्ख** इति खप्रत्यये **आयनेयी**ति सूत्रेण खस्थाने ईनादेशे भत्वे भत्वा**न्नस्तद्धिते** इति टिलोपे प्राप्ते **आत्माध्वानौ खे** इति प्रकृतिभावे सयोगे च आत्मनीनम् ॥ विश्वजनाय हितमित्यत्र खे खस्येनादेशे भत्वे भत्वादलोपे च विश्वजनीनम् ॥ मातृभोगाय हितमित्यत्र भोगोत्तरपदात्खे खस्य **आयनेयी** इति ईनादेशे भत्वे भत्वादलोपे **ऋवर्णान्नस्य णत्वं वाच्य**मिति नस्य णत्वे मातृभोगीणः ॥ इति छयतोः पूर्णोऽवधिः ॥ सप्तत्या क्रीतमित्यत्र **तेन क्रीत**मित्यनेन ठञि **ठस्येक** इति ठस्य इकादेशे भत्वे भत्वादिकारलोपे **तद्धितेष्वचामादे**रिति वृद्धौ साप्ततिकम् एवं प्रस्थेन क्रीतं प्रास्थिकम् ॥ सर्वभूमेरीश्वर इत्यत्र **तस्येश्वर** इति सूत्रेण अणि **अनुशतिकादीनां** चेत्युभयपदवृद्धौ भत्वे भत्वादिकारलोपे संयोगे च सार्वभौमः ॥ एवं पृथिव्या ईश्वरः इत्यत्र **तस्येश्वर** इति सूत्रेण अञि सुब्लोपे पृथिवी अ इति जाते तत्र भत्वे भत्वादीकारलोपे **तद्धितेष्वचामादे**रिति वृद्धौ संयोगे च पार्थिवः ॥

श्वेतछत्रमर्हतीत्यत्र **तदर्हती**ति सूत्रेण ठञि **ठस्येक** इति ठस्य इकादेशे भत्वे भत्वादकारलोपे **तद्धितेष्वचामादे**रिति वृद्धौ श्वैतछत्रिकः ॥ दण्डमर्हतीत्यत्र **दण्डादिभ्यो यत्** इति यति भत्वे भत्वादलोपे दण्ड्यः ॥ एवमर्घमर्हतीति अर्घ्यः ॥ वधमर्हतीति वध्यः ॥ अह्ना निर्वृत्तमित्यत्र **तेन निर्वृत्त**मिति सूत्रेण ठञि **ठस्येक** इति ठस्य इकादेशे भत्वे भत्वादलोपे वृद्धौ च आह्निकम् ॥ इति ठञोऽवधिः पूर्णः ॥ ब्राह्मणेन तुल्यमित्यत्र **तेन**

५।२।४२। पञ्च अवयवा अस्य पञ्चतयम् ॥ **द्वित्रिभ्यां तयस्यायज्वा** ।५।२।४३। द्वयम् द्वितयम् त्रयम् त्रितयम् ॥ **उभादुदात्तो नित्यम्** ।५।२।४४। उभशब्दात्तयपोयच् स्यात्स चाद्युदात्तः । उभयम् ॥ **तस्य पूरणे डट्** ।५।२।४८। एकादशानां पूरणः एकादशः ॥ **नान्तादसंख्यादेर्मट्** ।५।२।४९। डटो मडागमः । पञ्चानां पूरणः पञ्चमः । नान्तात्किम् ॥ **ति विंशतेर्डिति** ।६।४।१४२। विंशतेर्भस्य तिशब्दस्य लोपो डिति परे विंशः ॥ असंख्यादेः किम् । एकादशः ॥ **षट्कतिकतिपयचतुरां थुक्** ।५।२।५१। एषां थुगागमः स्याड्डटि । षण्णां पूरणः षष्ठः । कतिथः । कतिपयशब्दस्यासंख्यात्वेऽप्यत एव ज्ञापकाड्डट् कतिपयथः । चतुर्थः ॥ **द्वेस्तीयः** ।५।२।५४। डटोऽपवादः । द्वयोः पूरणो द्वितीयः ॥ **त्रेः संप्रसारणं च** ।५।२।५५। तृतीयः ॥ **श्रोत्रियंश्छन्दोऽधीते** ।५।२।८४। श्रोत्रियः वेत्यनुवृत्तेश्छान्दसः ॥ **पूर्वादिनिः** ।५।२।८६। पूर्वं कृतमनेन पूर्वी ॥ **सपूर्वाच्च** ।५।२।८७। कृतपूर्वी ॥

---

अवयवे तयप् इत्यनेन तयपि पलोपे द्वितय इत्यवशिष्टं तत्र **द्वित्रिभ्यां तयस्यायज्वा** इति सूत्रेण तयस्थाने अयचि कृते द्वि अयच् इति जातं तत्र चलोपे भत्वादिकारलोपे विभक्तौ च द्वयम् ॥ अयजादेशाभावपक्षे द्वितयम् ॥ एवं त्रयम् ॥ त्रितयम् ॥ उभौ अवयवौ अस्येत्यत्र **संख्याया अवयवे तयप्** इति तयपि **उभादुदात्तो नित्यम्** इत्ययजादेशे भत्वे भत्वादलोपे च उभयम् ॥ एकादशानां पूरण इत्यत्र **तस्य पूरणे डट्** इति डटि डित्वाट्टिलोपे एकादशः ॥ पञ्चानां पूरण इत्यत्र **तस्य पूरणे डट्** इति डटि **नान्तादसंख्यादेर्मट्** इति डटो मटि टलोपे च **नलोपः प्रातिपदिकान्तस्ये**ति नलोपेच पञ्चमः ॥ विंशतीनां पूरण इत्यत्र **तस्य पूरणे डट्** इति डटि विंशति अ इति जातं तत्र नान्तत्वाभावात् **नान्तादसंख्यादेर्मट्** इति डटो मडभावात् **ति विंशतेर्डिति** इति तिलोपे भत्वादलोपे संयोगे च विंशः ॥ एकादश इत्यत्र नान्तत्वेपि संख्यादित्वान्न मट् ॥ षण्णां पूरण इत्यत्र **तस्य पूरणे डट्** इति डटि **षट् कतिकतिपयचतुरां थुक्** इति थुकि उको लोपे षष् थ् अ इति जातं तत्र **ष्टुना ष्टु**रिति थस्य ठत्वे च षष्ठः ॥ कतीनां पूरण इत्यत्र **तस्य पूरणे डट्** इति डटि **षट्कतिकतिपयचतुरां थुक्** इति थुकि उको लोपे कतिथः ॥ एवं कतिपयानां पूरणः कतिपयथः ॥ चतुर्णां पूरणश्चतुर्थः ॥ द्वयोः पूरण इत्यत्र **तस्य पूरणे डट्** इति डटि प्राप्ते तं बाधित्वा **द्वेस्तीय** इत्यनेन तीयप्रत्यये द्वितीयः ॥ त्रयाणां पूरण इत्यत्र **त्रेः संप्रसारणं चे**ति तीयप्रत्यये संप्रसारणे च कृते तृ इतीय इति तत्र **संप्रसारणाच्चे**ति सूत्रेण पूर्वरूपादेशे कृते तृतीयः ॥ छन्दोऽधीते इत्यत्र **श्रोत्रियंश्छन्दोधीते** इति सूत्रेण श्रोत्रियनि प्रत्यये नलोपे विभक्तौ च श्रोत्रियः ॥ वेत्यनुवर्त्तनात् छंदोधीते इत्यत्र **तदधीतेतद्वेदे**ति सूत्रेण अणि वृद्धौ च छान्दसः ॥ पूर्वं कृतमनेनेत्यत्र **पूर्वादिनिः** इति सूत्रेण इनिप्रत्यये इकारलोपे

**सख्युर्यः** ।५।१।१२६। सख्युर्भावः कर्म वा सख्यम् ॥ **कपिज्ञात्योर्ढक्** ।५।१।१२७। कापेयम् ज्ञातेयम् ॥ **पत्यन्तपुरोहितादिभ्यो यक्** ।५।१।१२८। सैनापत्यम् । पौरोहित्यम् ॥ इति नञ्स्नञोरधिकारः ॥*॥ **धान्यानां भवने क्षेत्रे खञ्** ।५।२।१। भवत्यस्मिन्निति भवनम् । मुद्गानां भवनं क्षेत्रं मौद्गीनम् ॥ **व्रीहिशाल्योर्ढक्** ।५।२।२। व्रैहेयम् शालेयम् ॥ **हैयङ्गवीनं संज्ञायाम्** ।५।२।२३। ह्योगोदोहशब्दस्य हियङ्गुरादेशः विकारार्थे खञ् च निपात्यते । दुह्यत इति दोहः क्षीरम् । ह्योगोदोहस्य विकारः हैयङ्गवीनं नवनीतम् ॥ **तदस्य संजातं तारकादिभ्य इतच्** ।५।२।३६। तारकाः संजाता अस्य तारकितं नभः ॥ पण्डितः । आकृतिगणोऽयम् ॥ **प्रमाणे द्वयसज्दघ्नञ्मात्रचः** ।५।२।३७। तदस्येत्यनुवर्तते । ऊरू प्रमाणमस्य ऊरुद्वयसम् ऊरुदघ्नम् ऊरुमात्रम् ॥ **यत्तदेतेभ्यः परिमाणे वतुप्** ।५।२।३९। यत्परिमाणमस्य यावान् तावान् एतावान् ॥ **संख्याया अवयवे तयप्** ।

---

ख्यम् ॥ कपेर्भावः कर्म वेत्यत्र **कपिज्ञात्योर्ढक्** इति ढकि सुब्लोपे कलोपे **आयनेयी**ति ढस्थाने एयादेशे भत्वे भत्वादिकारलोपे सयोगे च कापेयम् ॥ एवं ज्ञातेर्भावः कर्म वेत्यत्र **कपिज्ञात्योर्ढक्** इति ढकि ढस्य एयादेशे भत्वादिलोपे च ज्ञातेयम् ॥ सेनापतेर्भावः कर्म वेत्यत्र **पत्यन्तपुरोहितादिभ्यो यक्** इति यकि भत्वे भत्वादिकारलोपे आदिवृद्धौ सयोगे च सैनापत्यम् ॥ एवं पुरोहितस्य भावः कर्म पौरोहित्यम् ॥ इति नञ्स्नञोरधिकारः पूर्णः ॥ मुद्गानां भवनं क्षेत्रमित्यत्र **धान्यानां भवने क्षेत्रे खञ्** इति सूत्रेण खञि **आयनेयी**ति सूत्रेण खस्थाने ईनादेशे भत्वे भत्वादलोपे वृद्धौ च मौद्गीनम् ॥ व्रीहीणां भवनं क्षेत्रमित्यत्र **व्रीहिशाल्योर्ढक्** इति ढकि **आयनेयी**ति ढस्थाने एयादेशे भत्वादकारलोपे **किति चे**ति वृद्धौ व्रैहेयम् ॥ एवं शालेयम् ॥ ह्योगोदोहस्य विकार इति **हैयंगवीनं संज्ञाया**मिति सूत्रे ह्योगोदोहशब्दस्य हियङ्गुरूपादेशे खञ्प्रत्यये च जाते हियङ्गु खञ् इति जाते तत्र **आयनेयी**ति खस्थाने ईनादेशे भत्वे भत्वा**दोर्गुणः** इति गुणे आदिवृद्धौ च हैयङ्गवीनम् ॥ तारकाः संजाता अस्येत्यत्र **तदस्य संजातं तारकादिभ्य इतच्** इति इतचि भत्वे भत्वादाकारलोपे सयोगे च तारकितम् ॥ ऊरू प्रमाणमस्येत्यत्र **प्रमाणे द्वयसज् दघ्नञ् मात्रच** इति सूत्रेण द्वयसचि चलोपे विभक्तौ च ऊरुद्वयसम् ॥ एवं दघ्नचि ऊरुदघ्नम् ॥ मात्रचि च ऊरुमात्रम् ॥ यत्परिमाणमस्येत्यत्र **यत्तदेतेभ्यः परिमाणे वतुप्** इति वतुपि यत् वत् इति जाते **आ सर्वनाम्नः** इति सूत्रेण तकारस्य आकारादेशे यावत् इति जाते तत्र **अत्वसन्तस्ये**ति दीर्घे **उगिदचा**मिति नुमि उगो लोपे सुलोपे **संयोगान्तस्ये**ति तकारलोपे च यावान् ॥ एवं तत्परिमाणमस्येति तावान् ॥ एतत्परिमाणमस्येति एतावान् ॥ पञ्च अवयवा अस्येत्यत्र **संख्याया अवयवे तयप्** इति तयपि पलोपे विभक्तौ च पञ्चतयम् ॥ द्वौ अवयवावस्येत्यत्र **संख्याया**-

५।२।४२। पञ्च अवयवा अस्य पञ्चतयम् ॥ **द्वित्रिभ्यां तयस्यायज्वा** ।५।२।४३। द्वयम् द्वितयम् त्रयम् त्रितयम् ॥ **उभादुदात्तो नित्यम्** ।५।२।४४। उभशब्दात्तयपोयच् स्यात्स चाद्युदात्तः । उभयम् ॥ **तस्य पूरणे डट्** ।५।२।४८। एकादशानां पूरणः एकादशः ॥ **नान्तादसंख्यादेर्मट्** ।५।२।४९। डटो मडागमः । पञ्चानां पूरणः पञ्चमः । नान्तात्किम् ॥ **ति विंशतेर्डिति** ।६।४।१४२। विंशतेर्भस्य तिशब्दस्य लोपो डिति परे विंशः ॥ असंख्यादेः किम् । एकादशः ॥ **षट्कतिकतिपयचतुरां थुक्** ।५।२।५१। एषां थुगागमः स्याड्डटि । षण्णां पूरणः षष्ठः । कतिथः । कतिपयशब्दस्यासंख्यात्वेऽप्यत एव ज्ञापकाड्डट् कतिपयथः । चतुर्थः ॥ **द्वेस्तीयः** ।५।२।५४। डटोऽपवादः । द्वयोः पूरणो द्वितीयः ॥ **त्रेः संप्रसारणं च** ।५।२।५५। तृतीयः ॥ **श्रोत्रियंश्छन्दोऽधीते** ।५।२।८४। श्रोत्रियः वेत्यनुवृत्तेश्छान्दसः ॥ **पूर्वादिनिः** ।५।२।८६। पूर्वं कृतमनेन पूर्वी ॥ **सपूर्वाच्च** ।५।२।८७। कृतपूर्वी ॥

---

**अवयवे तयप्** इत्यनेन तयपि पलोपे द्वितय इत्यवशिष्टं तत्र **द्वित्रिभ्यां तयस्यायज्वा** इति सूत्रेण तयस्थाने अयचि कृते द्वि अयच् इति जातं तत्र चलोपे भत्वादिकारलोपे विभक्तौ च द्वयम् ॥ अयजादेशाभावपक्षे द्वितयम् ॥ एवं त्रयम् ॥ त्रितयम् ॥ उभौ अवयवौ अस्येत्यत्र **संख्याया अवयवे तयप्** इति तयपि **उभादुदात्तो नित्यमि**त्ययजादेशे भत्वे भत्वादलोपे च उभयम् ॥ एकादशानां पूरण इत्यत्र **तस्य पूरणे डट्** इति डटि डित्वाट्टिलोपे एकादशः ॥ पञ्चानां पूरण इत्यत्र **तस्य पूरणे डट्** इति डटि **नान्तादसंख्यादेर्मट्** इति डटो मटि टलोपे च **नलोपः प्रातिपदिकान्तस्ये**ति नलोपेच पञ्चमः ॥ विंशतीनां पूरण इत्यत्र **तस्य पूरणे डट्** इति डटि विंशति अ इति जातं तत्र नान्तत्वाभावात् **नान्तादसंख्यादेर्मट्** इति डटो मडभावात् **तिविंशतेर्डिति** इति तिलोपे भत्वादलोपे संयोगे च विंशः ॥ एकादश इत्यत्र नान्तत्वेपि संख्यादित्वान्न मट् ॥ षण्णां पूरण इत्यत्र **तस्य पूरणे डट्** इति डटि **षट् कतिकतिपयचतुरां थुक्** इति थुकि उको लोपे षष् थ् अ इति जातं तत्र **ष्टुना ष्टुरि**ति थस्य ठत्वे च षष्ठः ॥ कतीनां पूरण इत्यत्र **तस्य पूरणे डट्** इति डटि **षट्कतिकतिपयचतुरां थुक्** इति थुकि उको लोपे कतिथः ॥ एवं कतिपयानां पूरणः कतिपयथः ॥ चतुर्णां पूरणश्चतुर्थः ॥ द्वयोः पूरण इत्यत्र **तस्य पूरणे डट्** इति डटि प्राप्ते तं बाधित्वा **द्वेस्तीय** इत्यनेन तीयप्रत्यये द्वितीयः ॥ त्रयाणां पूरण इत्यत्र **त्रेः संप्रसारणं** चेति तीयप्रत्यये संप्रसारणे च कृते तृ इतीय इति तत्र **संप्रसारणाच्चे**ति सूत्रेण पूर्वरूपादेशे कृते तृतीयः ॥ **छन्दोऽधीते** इत्यत्र **श्रोत्रियंश्छन्दोधीते** इति सूत्रेण श्रोत्रियनि प्रत्यये नलोपे विभक्तौ च श्रोत्रियः ॥ वेत्यनुवर्त्तनात् छंदोधीते इत्यत्र **तदधीतेतद्वेदे**ति सूत्रेण अणि वृद्धौ च छान्दसः ॥ पूर्वं कृतमनेनेत्यत्र **पूर्वादिनिः** इति सूत्रेण इनिप्रत्यये इकारलोपे

**इष्टादिभ्यश्च** ।५।२।८८। इष्टमनेनेष्टी अधीती ॥ **तदस्यास्त्यस्मिन्निति मतुप्** ।५।२।९४। गावोऽस्यास्मिन्वा सन्ति गोमान् ॥ **तसौ मत्वर्थे** ।१।४।१९। तान्तसान्तौ भसंज्ञौ स्तो मत्वर्थे प्रत्यये परे । वसोः संप्रसारणम् । विदुष्मान् । गुणवचनेभ्यो मतुपो लुगिष्टः । शुक्लो गुणोऽस्यास्तीति शुक्लः पटः । कृष्णः ॥ **प्राणिस्थादातो लजन्यतरस्याम्** ।५।२।९६। चूडालः चूडावान् । प्राणिस्थात्किम् । शिखावान् दीपः । प्राण्यङ्गादेव । नेह । मेधावान् ॥ **लोमादिपामादिपिच्छादिभ्यः शनेलचः** ।५।२।१००। लोमादिभ्यः शः । लोमशः लोमवान् रोमशः रोमवान् । पामादिभ्यो नः । पामनः । अङ्गात्कल्याणे । अङ्गना । लक्ष्म्या अच्च । लक्ष्मणः । पिच्छादिभ्य इलच् ।

---

भत्वे भत्वादकारलोपे **सर्वनामस्थाने चासंबुद्धा**विति दीर्घे **नलोपः प्रातिपदिकान्तस्ये**ति नलोपे पूर्वी ॥ कृतं पूर्वमनेनेत्यत्र **सपूर्वाच्चे**ति सूत्रेण इनि प्रत्यये कृतपूर्वी ॥ इष्टमनेनेत्यत्र **इष्टादिभ्यश्चे**ति इनिप्रत्यये इकारलोपे उपधादीर्घे नलोपे च इष्टी ॥ एवं अधीतमनेनेत्यत्र **इष्टादिभ्यश्चे**ति सूत्रेण इनि प्रत्यये अधीती ॥ गावोऽस्य अस्मिन् वा सन्तीत्यत्र **तदस्यास्त्यस्मिन्नितिमतुप्** इति सूत्रेण मतुपि मुप्लोपे उप्लोपे च गोमत् इति जातं तत्र **अत्वसन्तस्ये**ति दीर्घे **उगिदचा**मिति नुमि उभो लोपे गोमान्त् स् इति जातं तत्र **हल्ङ्याब्भ्य**इति सलोपे **संयोगान्तस्ये**ति तलोपे च गोमान् ॥ विद्वांसः सन्त्यस्य अस्मिन् वेत्यत्र **तदस्यास्त्यस्मिन्निति**मतुपि मुप्लोपे उपो लोपे च विद्वस् मत् इति जातं तत्र **तसौ मत्वर्थे** इति सूत्रेण भसंज्ञायां भत्वाद्**वसोः संप्रसारण**मित्यनेन संप्रसारणे विदुस् मत् इति जातं तत्र **अत्वसन्तस्ये**ति दीर्घे **उगिदचा**मिति नुमि उभो लोपे **आदेशप्रत्यययो**रिति सत्वे षत्वे **हल्ङ्याब्भ्य**इति सलोपे **संयोगान्तस्ये**ति तलोपे च विदुष्मान् ॥ शुक्लोऽस्यास्तीत्यत्र **तदस्यास्त्यस्मिन्निति** मतुपि **गुणवचनेभ्यो मतुपोलुगिष्ट** इति मतुपो लुकि विभक्तौ च शुक्लः ॥ एवं कृष्णः पटः ॥ चूडास्यास्तीत्यत्र **प्राणिस्थादातो लजन्यतरस्या**मिति लचि चूडालः ॥ पक्षे मतुपि **मादुपधायाश्च मतोर्वोऽयवादिभ्य** इति मस्थाने वकारे कृते

पिच्छिलः पिच्छवान् ॥ **दन्त उन्नत उरच्** ।५।२।१०६। उन्नता दन्ताः सन्त्यस्य दन्तुरः ॥ **केशाद्वोऽन्यतरस्याम्** ।५।२।१०९। केशवः केशी केशिकः केशवान् । (अन्येभ्योऽपि दृश्यन्ते) मणिवः । (अर्णसो लोपश्च) अर्णवः ॥ **अत इनिठनौ** ।५।२।११५। दण्डी दण्डिकः ॥ **व्रीह्यादिभ्यश्च** ।५।२।११६। व्रीही व्रीहिकः ॥ **अस्मायामेधास्रजो विनिः** ।५।२।१२१। यशस्वी यशस्वान् मायावी मेधावी स्रग्वी ॥ **वाचो ग्मिनिः** ।५।२।१२४। वाग्मी ॥ **अर्शआदिभ्योऽच्** ।५।२।१२७। अर्शोऽस्य विद्यते अर्शसः । आकृतिगणोऽयम् ॥ इति मत्वर्थीयाः ॥*॥ **प्राग्दिशो विभक्तिः** ।५।३।१। दिक्शब्देभ्य इत्यतः प्राग्वक्ष्यमाणाः प्रत्यया विभक्तिसंज्ञाः स्युः ॥*॥ अथ स्वार्थिकाः ॥ **किंसर्वनामबहुभ्योऽद्व्यादिभ्यः** ।५।३।२। किमः सर्वनाम्नो बहुशब्दाच्चेति प्राग्दिशोऽधिक्रियते ॥ **पञ्चम्यास्तसिल्** ।५।३।७। पञ्चम्यन्तेभ्यः कि-

---

**लोमादी**ति सूत्रेणात्रापि पिच्छादित्व इलचि भत्वे भत्वादल्लोपे च पिच्छिलः ॥ मतुपि पिच्छवान् ॥ उन्नता दन्ताः सन्त्यस्येत्यत्र **दन्तउन्नत उरच्** इति उरचि भत्वे भत्वादल्लोपे च दन्तुरः ॥ केशाः सन्त्यस्येत्यत्र **केशाद्वोन्यतरस्या**मिति वप्रत्यये केशवः पक्षे मतुपि केशवान् ॥ **अत इनिठनौ** इति इनि प्रत्यये केशी ॥ ठनि प्रत्यये **ठस्येक** इति ठस्थाने इकादेशे भत्वादल्लोपे संयोगे च केशिकः ॥ मणिरस्यास्तीत्यत्र **अन्येभ्योपि दृश्यते** इति वप्रत्यये मणिवः ॥ अर्णांसि सन्त्यस्येत्यत्र **अन्येभ्योपि दृश्यते** इति वप्रत्यये **अर्णसो लोपश्चे**ति सूत्रेण सकारलोपे च अर्णवः ॥ दण्डोस्यास्तीत्यत्र **अत इनिठनौ** इति इन् प्रत्यये भत्वे भत्वादल्लोपे **इन्हन्पूषार्यम्णां शौ** इत्युपधादीर्घत्वे नलोपे च दण्डी ॥ ठनि प्रत्यये तु **ठस्येक** इति इकादेशे भत्वादल्लोपे संयोगे च दण्डिकः ॥ व्रीहयः सन्त्यस्येत्यत्र **व्रीह्यादिभ्यश्चे**ति सूत्रेण इनि प्रत्यये भत्वे भत्वादिकारलोपे उपधादीर्घे नलोपे च व्रीही ॥ ठनि प्रत्यये तु ठस्येकादेशे भत्वे भत्वादिकारलोपे संयोगे च व्रीहिकः ॥ यशोऽस्यास्तीत्यत्र **अस्मायामेधास्रजो विनि**रिति सूत्रेण विनिप्रत्यये इकारलोपे **सर्वनामस्थाने चासंबुद्धा**विति दीर्घे सुलोपे नलोपे च यशस्वी ॥ पक्षे **तदस्यास्त्यस्मिन्नि**ति मतुपि **मादुपधायाश्च मतोर्वोऽयवादिभ्य** इति मस्य वकारे **अत्वसन्तस्येति** दीर्घे **उगिदचां सर्वनामस्थाने** इति नुमि टमो लोपे सुलोपे तकारस्य **संयोगान्तस्ये**ति लोपे यशस्वान् ॥ एवं मायावी मेधावी स्रग्वी ॥ वागस्यास्तीत्यत्र **वाचो ग्मिनि**रिति ग्मिनिप्रत्यये सुब्लोपे **स्कोः संयोगाद्यो**रिति कलोपे तत्र **सर्वनामस्थाने** इत्युपधादीर्घे सुलोपे नलोपे वाग्मी अर्शोऽस्यास्तीत्यत्र **अर्शआदिभ्योऽच्** इत्यचि संयोगे च अर्शसः ॥ इति मतुबर्थाः पूर्णाः ॥ कस्मादित्यत्र **पञ्चम्यास्तसिल्** इति तसिलि सुब्लोपे **प्राग्दिशो**

मादिभ्यस्तसिल्वा स्यात् ॥ **कु तिहोः** ।७।२।१०४। किमः कुः स्यात्तादौ हादौ च विभक्तौ परतः । कुतः कस्मात् ॥ **इदम इश्** ।५।३।३। प्राग्दिशीये परे । इतः ॥ **अन्** ।५।३।५। एतदः प्राग्दिशीये । अनेकाल्त्वात्सर्वादेशः । अतः अमुतः यतः ततः बहुतः । द्व्यादेस्तु द्वाभ्याम् ॥ **पर्यभिभ्यां च** ।५।३।९। आभ्यां तसिल् स्यात् । परितः । सर्वत इत्यर्थः । अभितः । उभयत इत्यर्थः ॥ **सप्तम्यास्त्रल्** ।५।३।१०। कुत्र यत्र तत्र बहुत्र ॥ **इदमो हः** ।५।३।११। त्रलोऽपवादः । इह ॥ **किमोऽत्** ।५।३।१२। वाग्रहणमपकृष्यते । सप्तम्यन्तात्किमोऽद्वा स्यात् पक्षे त्रल् ॥ **क्वाति** ।७।२।१०५। किमः क्वादेशः स्यादति । क्व कुत्र ॥ **इतराभ्योऽपि दृश्यन्ते** ।

---

**विभक्तिरि**त्यनेन तसिलोऽपि विभक्तिसंज्ञाया **कुतिहोः** इति सूत्रेण किमः कादेशे सस्य रुत्वे रोर्विसर्गे च कुतः ॥ अस्मादित्यत्र **पञ्चम्यास्तसिल्** इति तसिलि सुब्लोपे इदम् तस् इति जाते तत्र **इदम इश्** इत्यनेन शित्वात् इदमः सर्वस्य इशादेशे शकारलोपे च इतः ॥ एतस्मादित्यत्र **पञ्चम्यास्तसिल्** इति तसिलि सुब्लोपे **एतदोऽन्** इत्यनेन एतदः सर्वस्य अनादेशे नस्य **हलन्त्यमि**त्यनेनेत्संज्ञाया **तस्य लोप** इति लोपे सस्य रौ रस्य विसर्गे च अतः ॥ अमुष्मादित्यत्र **पञ्चम्यास्तसिल्** इति तसिलि सुब्लोपे अदस् तस् इति जाते तत्र **त्यदादीनाम** इति अत्वे अद अतस् इति जाते **अतो गुणे** इति पररूपे **अदसोसेर्दादु दो म** इत्यनेन दकारोत्तरवर्त्यकारस्योकारे दकारस्य मकारे च कृते अमुतः ॥ यस्मादित्यत्र तसिलि **त्यदादीना**मित्यकारे **अतोगुणे** इति पररूपे च यतः ॥ एवं तस्मादिति ततः ॥ बहोरिति बहुतः । परीत्यव्ययात् **पर्यभि-भ्या**मित्यनेन तसिलि परितः ॥ एवमभितः ॥ कस्मिन् इत्यत्र **सप्तम्यास्त्रल्** इति त्रलि **कुतिहो**रिति किमः कादेशे कुत्र ॥ यस्मिन्नित्यत्र **सप्तम्यास्त्रल्** इति त्रलि **त्यदादीनाम** इत्यकारे **अतोगुणे** इति पूर्वरूपे च यत्र ॥ एवं तत्र ॥ बहुष्विति बहुत्र ॥ अस्मिन् इत्यत्र त्रलि प्राप्ते **इदमो हः** इति हप्रत्यये इदम् ह इति जाते **इदम इश्** इति इशादेशे शलोपे च इह ॥ कस्मिन् इत्यत्र **किमोऽत्** इति अति सुब्लोपे तलोपे च किम् अ इति जाते तत्र **क्वाती**ति सूत्रेण किमः क्वादेशे **उपदेशोऽजनुना-सिक इत्** इत्यनेन अकारस्येत्संज्ञाया लोपे संयोगे च क्व ॥ पक्षे त्रलि **कुतिहो**रिति किमः कुत्वे च कुत्र ॥ स भवानित्यत्र **इतराभ्योऽपि दृश्यन्ते** इति तसिलि सुब्लोपे तद् तस् भवानिति जाते तत्र **त्यदादीनाम** इति अकारे **अतो गुणे** इति पररूपे सस्य रुत्वे रस्य उत्वे च ततोभवान् ॥ एवं त्रलि प्रत्यये तत्रभवान् ॥ एवं तं भवन्तमित्यत्र द्वितीयान्तात्तसिलि ततोभवन्तम् ॥ त्रलि च तत्रभवन्तम् ॥ स दीर्घायुरित्यत्र तसिलि ततोदीर्घायुः ॥ त्रलि च तत्रदीर्घायुः । स देवानां प्रिय इत्यत्र **इतराभ्योऽपि दृश्यन्ते**

५।३।१४। पञ्चमीसप्तमीतरविभक्त्यन्तादपि तसिलादयो दृश्यन्ते । दृशिग्रहणाद्भवदादियोग एव । स भवान् ततो भवान् तत्र भवान् । तं भवन्तम् ततो भवन्तम् तत्रभवन्तम् । एवं दीर्घायुः देवानां प्रियः आयुष्मान् ॥ **सर्वैकान्यकिंयत्तदः काले दा** ।५।३।१५। सप्तम्यन्तेभ्यः कालार्थेभ्यः स्वार्थे दा स्यात् ॥ **सर्वस्य सोऽन्यतरस्यां दि** ।५।३।६। दादौ प्राग्दिशीये सर्वस्य सो वा स्यात् । सर्वस्मिन् काले सदा सर्वदा अन्यदा कदा यदा तदा । काले किम् सर्वत्र देशे ॥ **इदमो र्हिल्** । ५।३।१६। सप्तम्यन्तात् काल इत्येव ॥ **एतेतौ रथोः** ।५।३।४। इदम्शब्दस्य एत इत इत्यादेशौ स्तो रेफादौ थकारादौ च प्राग्दिशीये परे । अस्मिन्काले एतर्हि । काले किम् इह देशे ॥ **अनद्यतने र्हिलन्यतरस्याम्** ।५।३।२१। कर्हि कदा यर्हि यदा तर्हि तदा ॥ **एतदः** ।५।३।५। एत इत एतौ स्तो रेफादौ थकारादौ च प्राग्दिशीये । एतस्मिन्काले एतर्हि ॥ **प्रकारवचने थाल्** ।५।३।२३। प्रकारवृत्तिभ्यः किमादिभ्यस्थाल् स्यात् स्वार्थे । तेन प्रकारेण तथा यथा ॥ **इदमस्थमुः** ।५।३।२४। थालोऽपवादः (एतदोऽपि वाच्यः) अनेन एतेन वा प्रकारेण इत्थम् ॥ **किमश्च** ।५।३।२५।

---

इति तसिलि ततो देवानां प्रियः ॥ त्रलि तत्रदेवानां प्रियः ॥ एवं स आयुष्मान् इत्यत्र तसिलि ततआयुष्मान् ॥ त्रलि तत्रायुष्मान् ॥ सर्वस्मिन् काले इत्यत्र **सर्वैकान्यकिंयत्तदः काले दा** इत्यनेन दाप्रत्यये सुब्लोपे च सर्वदा इति जातं तत्र **सर्वस्य सोन्यतरस्यां दि** इत्यनेन सर्वस्य सादेशे सदा ॥ पक्षे सर्वदा ॥ एवमन्यदा कदा यदा तदा इत्यादीनि रूपाणि ॥ **सर्वैकान्यकिंयत्तदः काले दा** इति सूत्रेण दाप्रत्यये कृते सुब्लोपे **त्यदादीनाम** इत्यकारे **अतो गुणे** इति पूर्वरूपे च भवन्ति ॥ सर्वस्मिन् देशे इत्यत्र कालाभावाद्दा प्रत्ययाभावे **सप्तम्यास्त्रल्** इति त्रलि सर्वत्र ॥ अस्मिन् काले इत्यत्र **इदमो र्हिल्** इति र्हिलि सुब्लोपे च इदम् र्हिल् इति जातं तत्र **एतेतौ रथो**रित्यनेन इदम एतादेशे एतर्हि ॥ अस्मिन् देशे इत्यत्र कालत्वाभावात् र्हिल् प्रत्ययाभावे **इदमो ह** इति हप्रत्यये **इदम इश्** इत्यनेन इदम इशादेशे शकारलोपे च इह देशे ॥ कस्मिन्काले इत्यत्र **अनद्यतने र्हिलन्यतरस्या**मित्यनेन र्हिलि किम् र्हि इति जातं तत्र **किमः क** इति किमः कादेशे कर्हि ॥ पक्षे दाप्रत्यये कदा ॥ एवं यर्हि यदा तर्हि तदा ज्ञेयानि ॥ एतस्मिन् काले इत्यत्र **अनद्यतने र्हिलन्यतरस्या**मित्यनेन र्हिलादेशे सुपो लोपे **एतद** इत्यनेन एतद एतादेशे च एतर्हि ॥ तेन प्रकारेणेत्यत्र **प्रकारवचने थाल्** इत्यनेन थालि सुब्लोपे **त्यदादीनाम** इत्यत्वे **अतोगुणे** पररूपे तथा ॥ अनेन प्रकारेणेत्यत्र **इदमस्थमु**रिति थमो सुब्लोपे इदम् थम् इति जातं तत्र **एतेतौ रथो**रित्यनेनात्र थपरत्वादिदम इतादेशे इत्थम् ॥ एवं एतेन प्रकारेणेत्यत्र **एतदोपि वाच्य** इत्यनेन थमौ इतादेशे च इत्थम् ॥ केन प्रकारेण

केन प्रकारेण कथम् ॥ इति प्राग्दिशीयाः ॥*॥ **अतिशायने तमबिष्ठनौ** ।५।३।५५। अतिशयविशिष्टार्थवृत्तेः स्वार्थे एतौ स्तः । अयमेषामतिशयेनाढ्य आढ्यतमः । लघुतमो लघिष्ठः ॥ **तिङश्च** ।५।३।५६। तिङन्तादतिशये द्योत्ये तमप् स्यात् । **तरप्तमपौ घः** ।१।१।२२। एतौ घसंज्ञौ स्तः ॥ **किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे** । ५।४।११। किम एदन्तात्तिङोऽव्ययाच्च यो घस्तदन्तादामुः स्यात् न तु द्रव्यप्रकर्षे । किन्तमाम् । प्राह्णेतमाम् पचतितमाम् उच्चैस्तमाम् । द्रव्यप्रकर्षे तु उच्चैस्तमस्तरुः ॥ **द्विवचनविभज्योपपदे तरबीयसुनौ** । ५ । ३ । ५७ । द्वयोरेकस्यातिशये विभक्तव्ये चोपपदे सुप्तिङन्तादेतौ स्तः. पूर्वयोरपवादः । अयमनयोरतिशयेन लघुर्लघुतरः लघीयान् । उदीच्याः प्राच्येभ्यः पटुतराः पटीयांसः ॥ **प्रशस्यस्य श्रः** ।५।३।६०। अस्य श्रादेशः स्यादजाद्योः परतः ॥ **प्रकृत्यैकाच्** ।६।४।१६३। इष्ठादिष्वेकाच् प्रकृत्या स्यात् । श्रेष्ठः श्रेयान् ॥ **ज्य च** ।५।३।६१। प्रशस्यस्य ज्यादेशः स्यादिष्ठेयसोः ।

---

इत्यत्र **किमश्च**ेति सूत्रेण थमौ सुब्लोपे **किमः क** इति कादेशे च कथम् ॥ इति प्राग्दिशीयविभक्तिप्रत्यया समाप्ताः ॥ अतिशयेन आढ्य इत्यत्र **अतिशायने तमबिष्ठनौ** इति सूत्रेण तमपि सुब्लोपे विभक्तौ च आढ्यतमः ॥ एवमतिशयेन लघु लघुतमः ॥ इष्ठनि तु भत्वे **टे**रित्यनेन टिलोपे लघिष्ठः ॥ अतिशये किमित्यत्र **अतिशायने तमबिष्ठनौ** इति तमपि किम् तमप् इति जाते तत्र **तरप्तमपौ घ** इति तमपो घसंज्ञायां **किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे** इत्यनेन आमौ **अकः सवर्णे** इति दीर्घे किंतमाम् ॥ एवं प्राह्णेतमाम् । अतिशयेन पचतीत्यत्र **तिङश्च**ेति सूत्रेण तमपि **तरप्तमपौ घ** इति घसंज्ञायां **किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे** इति आमुप्रत्यये उकार लोपे पचतितमाम् ॥ उच्चैस्तमाम् उच्चैस्तमस्तरुरित्यत्र सूत्रे अद्रव्यप्रकर्ष इत्युक्तत्वादामुप्रत्ययाभावे उच्चैस्तमः ॥ अयमनयोरतिशयेन लघुरित्यत्र **द्विवचनविभज्योपपदे तरबीयसुनौ** इति सूत्रेण तरपि सुब्लोपे पलोपे विभक्तौ च लघुतरः ॥ ईयसुनि उनो लोपे सुब्लोपे च लघु ईयस् इति जाते तत्र **टे**रिति सूत्रेणोकारलोपे **अत्वसन्तस्ये**ति दीर्घे लघीयास् इति जाते तत्र **उगिदचा**मिति नुमि उमो लोपे लघीयान् स् स् इति जाते तत्र **हल्ङ्याब्भ्य** इति सलोपे **संयोगान्तस्ये**ति सलोपे च लघीयान् ॥ एवं पटीयान् ॥ अतिशयेन प्रशस्य इत्यत्र **अतिशायने तमबिष्ठनौ** इति इष्ठनि प्रशस्य इष्ठ इति जाते **प्रशस्यस्य श्र** इति प्रशस्यस्य श्रादेशे श्र इष्ठ इति जाते तत्र **टे**रिति सूत्रेण टिलोपे प्राप्ते **प्रकृत्यैकाच्** इति सूत्रेण प्रकृतिभावे गुणे च श्रेष्ठः ॥ एवं द्वयोर्मध्ये प्रशस्य इत्यत्र **द्विवचनविभज्योपपदे तरबीयसुनौ** इति ईयसि **प्रशस्यस्य श्र** इति श्रादेशे **टे**रिति टिलोपे प्राप्ते **प्रकृत्यैकाच्** इति लोपाभावे गुणे च श्रेयस् इति जाते तत्र प्रथमैकवचने सौ **अत्वसन्तस्ये**ति दीर्घे **उगिदचा**मिति नुमि उगो लोपे

ज्येष्ठः ॥ **ज्यादादीयसः** ।६।४।१६०। आदेः परस्य । ज्यायान् ॥ **बहोर्लोपो भू च बहोः** ।६।४।१५८। बहोः परयोरिष्ठेमेयसोर्लोपः स्याद्बहोश्च भुरादेशः । भूमा ॥ **इष्ठस्य यिट् च** ।६।४।१५९। बहोः परस्य इष्ठस्य लोपः स्याद्यिडागमश्च । भूयिष्ठः ॥ **विन्मतोर्लुक्** ।५।३।६५। विनो मतुपश्च लुक् स्यादिष्ठेयसोः । अतिशयेन स्रग्वी स्रजिष्ठः । स्रजीयान् । अतिशयेन त्वग्वान् त्वचिष्ठः त्वचीयान् ॥ **ईषदसमाप्तौ कल्पब्देश्यदेशीयरः** ।५।३।६७। ईषदूनो विद्वान् विद्वत्कल्पः । विद्वद्देश्यः विद्वद्देशीयः पचतिकल्पम् ॥ **विभाषासुपो बहुच् पुरस्तात्तु** ।५।३।६८। ईषदसमाप्तिविशिष्टेऽर्थे सुहल्ङ्याब्भ्य इति सलोपे **संयोगान्तस्येति** सलोपे च श्रेयान् ॥ अतिशयेन प्रशस्य इत्यत्र **अतिशायने तमबिष्ठनौ** इति इष्ठनि नकारलोपे **ज्यच्चेति** सूत्रेण प्रशस्यस्य ज्यादेशे **आद्गुण** इति गुणे च ज्येष्ठः ॥ द्वयोर्मध्ये प्रशस्य इत्यत्र **द्विवचनविभज्योपपदेतरबीयसुनौ** इत्यनेन ईयसुनि उकारनकारयोर्लोपे **ज्यचेति** प्रशस्यस्थाने ज्यादेशे **ज्यादादीयस** इति सूत्रेण अलोन्त्यपरिभाषानुसारादन्त्यस्य सकारस्य आदादेशः प्राप्तः परं त्वादेः **परस्येत्यनेनादेरिकारस्याकारादेशे अकः सवर्णे** इति दीर्घत्वे च ज्यायस् इति जातं तत्र **अत्वसन्तस्येति** दीर्घे **उगिदचा**मिति नुमि उमो लोपे ज्यायान् स् स् इति जातं तत्रान्त्यसकारस्य **हल्ङ्याबिति** लोपे **संयोगान्तस्येति** उपान्त्यसकारलोपे च ज्यायान् ॥ अतिशयेन बहुरित्यत्र **पृथ्वादिभ्य इमनिज्वेति** सूत्रेण इमनिजि बहु इमन् इति जातं तत्र **बहोर्लोपो भू च बहोरिति** सूत्रेण इमन इकारलोपे बहुस्थाने भू इत्यादेशे च जाते भूमन् इति जातं तत्र **सौ सर्वनामस्थाने चासंबुद्धौ** इति दीर्घे **हल्ङ्याबिति** सकारलोपे **नलोपः प्रातिपदिकान्तस्येति** नलोपे च भूमा ॥ पक्षे **द्विवचनविभज्येति** ईयसुनि उनो लोपे बहु ईयस् इति जातं तत्र **बहोर्लोपो भू च बहोरिति** सूत्रेण ईयस इकारलोपे बहुस्थाने भू इत्यादेशे च भूयस् इति जातं **अत्वसन्तस्येति** दीर्घे **उगिदचा**मिति नुमि उमो लोपे सकारयोर्लोपे च भूयान् ॥ अतिशयेन बहुरित्यत्र **अतिशायने तमबिष्ठनौ** इति इष्ठनि **इष्ठस्य यिट् चेति** सूत्रेण इष्ठन इकारलोपे बहोः स्थाने भू इत्यादेशे यिटि च भूयिष्ठः ॥ अतिशयेन स्रग्वीत्यत्र **अतिशायने तमबिष्ठनौ** इति इष्ठनि स्रग्वी इष्ठ इति जातं तत्र **विन्मतोर्लुक्** इति विनो लोपे संयोगे च स्रजिष्ठः ॥ पक्षे **द्विवचनविभज्येति** ईयसुनि उनो लोपे **विन्मतोर्लुगिति** विनो लोपे स्रजीयान् एवं त्वचिष्ठः त्वचीयान् ॥ ईषदूनो विद्वान् इत्यत्र **ईषदसमाप्तौ कल्पब्देश्यदेशीयर** इत्यनेन कल्पपि सुप्लोपे विद्वस्कल्प इति **वसुस्रंसुध्वंस्वनडुहां द** इति सस्य दत्वे **खरि चेति** दस्य ते च विद्वत्कल्पः ॥ एवं देश्यप्रत्यये विद्वद्देश्यः देशीयटि प्रत्यये च विद्वद्देशीयः ॥ एवं किंचिदूनं पचतीत्यत्र कल्पपि प्रत्यये पचतिकल्पम् ॥ ईषदूनः पटुरित्यत्र **विभाषा**

यत्वाद्बहुच् स्यात्स च प्रागेव न तु परतः। ईषदूनः पटुर्बहुपटुः पटुकल्पः। सुपः किम्। यजतिकल्पम्॥ **प्रागिवात्कः** ।५।३।७०। इवे प्रतिकृताविव्यतः प्राकाधिकारः॥ **अव्ययसर्वनाम्नामकच् प्राक्टेः** ।५।३।७१। कापवादः। तिङश्चेत्यनुवर्तते॥ **अज्ञाते** ।५।३।७३। कस्यायमश्वोऽश्वकः उच्चकैः नीचकैः सर्वकैः॥ **कुत्सिते** ।५।३।७४। कुत्सितोऽश्वोऽश्वकः॥ **किंयत्तदोर्निर्धारणे द्वयोरेकस्य डतरच्** ।५।३।९२। अनयोः कतरो वैष्णवः। यतरः ततरः॥ **वा बहूनां जातिपरिप्रश्ने डतमच्।** ।५।३।९३। बहूनां मध्ये एकस्य निर्धारणे डतमज्वा स्यात्। जातिपरिप्रश्न इति प्रत्याख्यातमाकरे। कतमो भवतां कठः। यतमः ततमः। वाग्रहणमकजर्थम्। यकः सकः॥ इति प्रागिवीयाः॥ * ॥ **इवे प्रतिकृतौ** ।५।३।९६। कन्स्यात्। अश्व इव प्रतिकृतिरश्वकः। सर्वप्रातिपदिकेभ्यः स्वार्थे कन्। अश्वकः॥ **तत्प्रकृतवचने मयट्।** ।५।४।२१। प्राचुर्येण प्रस्तुतं प्रकृतं तस्य वचनं प्रतिपादनम्। भावे अधिकरणे वा ल्युट्। आद्ये प्रकृतमन्नमन्नमयम्। अपूपमयम्। द्वितीये तु अन्नमयो यज्ञः। अपूपमयं पर्व॥ **प्रज्ञादिभ्यश्च** ।५।४।३८। अण् स्यात्। प्रज्ञ एव प्राज्ञः। प्राज्ञी स्त्री। दैवतः बा-

---

**सुपो बहुच् पुरस्तात्तु** इति सूत्रेण पटुशब्दात्पुरस्ताद्बहुचि प्रत्यये बहुपटु॥ पक्षे कल्पपि पटुकल्प॥ यजतिकल्पमित्यत्र सुबन्तत्वाभावाद्बहुच्प्रत्ययाभाव॥ कस्यायमश्व इत्यत्र **अज्ञाते** इति सूत्रेण कप्रत्यये सुब्लोपे विभक्तौ च अश्वक॥ उच्चैरित्यत्र **अव्ययसर्वनाम्नामकच्प्राक्टेः** इति टे. पूर्वमकचि उच्चकैः॥ एव नीचकै॥ सर्वैरित्यत्र सर्वनामत्वात् टे पूर्वमकचि सर्वकै। कुत्सितोऽश्व इत्यत्र **कुत्सिते** इत्यनेन कप्रत्यये अश्वक॥ अनयो क इत्यत्र **किंयत्तदोर्निर्धारणे द्वयोरेकस्य डतरच्** इति डतरचि सुब्लोपे च किं डतरच् इति जात तत्र मध्ये ककारोत्तरस्य इम्भागस्य लोपे **चुटू** इति डस्य **हलन्त्यमिति** चस्य चेत्सञ्ज्ञाया **तस्य लोप** इति तयोर्लोपे विभक्तौ च कतर.॥ एवमनयोर्य इति यतर॥ अनयो स इति ततर॥ एषा मध्ये क इत्यत्र **वा बहूनां जातिपरिप्रश्ने डतमच्** इति डतमचि सुपोलोपे किं डतमच् इति जात तत्र डचयोर्लोपे भ्ने भत्वाट्टिलोपे च कतम.॥ एवमेषा मध्ये य इति यतम॥ एवमेषा मध्ये स इति ततम॥ पक्षे **अव्ययसर्वनाम्नामकच्प्राक्टेः** इति सूत्रेण अकचि यकच् अत् इति जात तत्र **हलन्त्यमिति** चस्य **उपदेशेऽजनुनासिक इदिति** ककारोत्तरवर्त्यकारस्य चेत्सञ्ज्ञाया **तस्य लोप** इति तयोर्लोपे यक् अ इत्यवशिष्टे संयोगे विभक्तौ च यक। सक। इति प्रागिवीया॥ अश्व इव प्रतिकृतिरित्यत्र **इवेप्रतिकृतौ** इति कनि नलोपे विभक्तौ च अश्वक॥ अश्व एव इत्यत्र **सर्वप्रातिपदिकेभ्यः स्वार्थे कन्** इति कनि अश्वक॥ प्रकृतमन्नमित्यत्र **तत्प्रकृतवचने मयट्** इति मयटि टलोपे विभक्तौ च अन्नमयम्॥ एवमपूपमयम्॥ अन्नमयो यज्ञ॥ प्रज्ञ एव इत्यत्र **प्रज्ञादि-**

न्धवः ॥ **बह्वल्पार्थाच्छस्कारकादन्यतरस्याम्** ।५।४।४२। बहूनि ददाति बहुशः अल्पशः । (आद्यादिभ्यस्तसेरुपसंख्यानम्) आदौ आदितः मध्यतः अन्ततः पार्श्वतः । आकृतिगणोऽयम् । स्वरेण स्वरतः वर्णतः ॥ **कृभ्वस्तियोगे संपद्यकर्तरि च्विः** ।५।४।५०। (अभूततद्भाव इति वक्तव्यम्) विकारात्मतां प्राप्नुवत्यां प्रकृतौ वर्तमानाद्विकारशब्दात्स्वार्थे च्विर्वा स्यात्करोत्यादिभिर्योगे ॥ **अस्य च्वौ** ।७।४।३२। अवर्णस्य ईः स्यात् च्वौ । वेर्लोपे च्व्यन्तत्वादव्ययत्वम् । अकृष्णः कृष्णः संपद्यते तं करोति कृष्णीकरोति ब्रह्मीभवति गङ्गीस्यात् । (अव्ययस्य च्वावीत्वं नेति वाच्यम्) दोषाभूतमहः दिवाभूता रात्रिः ॥ **विभाषा साति कार्त्स्न्ये** ।५।४।५२। च्विविषये सातिर्वा स्यात्साकल्ये ॥ **सात्पदाद्योः** ।८।३।१११। सस्य षत्वं न स्यात् । दधि सिञ्चति । कृत्स्नं शस्त्रमग्निः संपद्यतेऽग्निसाद्भवति ॥ **च्वौ च** ।७।४।२६। च्वौ च परे पूर्वस्य दीर्घः स्यात् । अग्नीभवति ॥ **अव्यक्तानुकरणाद् द्व्यजवरार्धादनितौ डाच्** ।५।४।५७। द्व्यचोऽवरं द्व्यजवरं न्यूनं न तु ततो न्यूनमनेकाजिति यावत्तादृशमर्धं यस्य तस्माड्डाच् स्यात् कृभ्वस्तिभिर्योगे । (डाचि विवक्षिते द्वे बहुलम्) इति डाचि विवक्षिते द्वित्वं (नित्यमाम्रेडिते डाचीति वक्तव्यम्) डाच्परं यदाम्रेडितं तस्मिन्परे पूर्वपरयोर्वर्णयोः पररूपं स्यात् । इति पकारतकारयोः पकारः । पटपटाकरोति । अव्यक्तानुकरणात्किम् । ईषत्क-

---

भ्यश्चेत्यणि वृद्धौ भवे भवादकारलोपे प्राङः ॥ देवता एव दैवत इत्यत्राप्यणि भवे भवादालोपश्च भवति । बहूनीत्यत्र **बह्वल्पार्थाच्छस्कारकादन्यतरस्या**मित्यनेन शसि बहुशः ॥ एवमल्पशः ॥ आदौ इत्यत्र **आद्यादिभ्यस्तसेरुपसंख्यानम्** इत्यनेन तसि आदितः ॥ एवं मध्यतः पार्श्वतः पृष्ठतः स्वरतः ॥ वर्णत इत्यत्र आकृतिगणत्वात्तसिर्भवति । अकृष्णं करोतीत्यत्र **कृभ्वस्तियोगे संपद्यकर्तरि च्वि**रित्यनेन च्वौ कृष्ण च्वि इति जातं चकारेकारवकाराणां लोपे कृष्ण इत्यवशिष्टं तत्र **अस्य च्वौ** इत्यनेन ष्णकारोत्तरवर्त्यकारस्य ईकारे कृष्णीकरोति ॥ एवं ब्रह्मीभवति ॥ गङ्गीस्यात् ॥ दोषाभूतमहः दिवाभूतारात्रिरित्यत्र **अस्य च्वौ** इत्यनेन अवर्णस्य ईत्वे प्राप्तेऽपि **अव्ययस्य च्वावीत्वं नेति वाच्य**मिति वार्तिकेन नेत्वम् । दधि सिञ्चति इत्यत्र सस्य **आदेशप्रत्यययो**रिति षत्वे प्राप्ते **सात्पदाद्यो**रिति निषेधः ॥ कृत्स्नं शस्त्रमग्निः संपद्यते इत्यत्र **कृभ्वस्तियोग** इति च्वौ चकारवकारेकाराणां लोपे **विभाषा साति कार्त्स्न्ये** इति सातिप्रत्यये अग्निसात् ॥ पटत्करोतीत्यत्र **अव्यक्तानुकरणाद्व्यजवरार्धादनितौ डाच्** इति डाचि पटत् डाच् इति जातं तत्र **डाचि बहुलं द्वे भवत** इति द्वित्वे पटत् पटत् करोतीति जातं **नित्यमाम्रेडिते डाचीति वक्तव्य**मिति वार्तिकेन पूर्वपटत्संबन्धिनि तकारे पररूपतां प्राप्ते पट पटत् डा करोतीति जातं तत्र डित्वाट्टिलोपे संयोगे च पटपटाकरोति ॥ ईषत्करोतीत्यत्र अव्यक्तानुकरणत्वाभावात्

संख्यानम् ) स्त्रैणी पौंस्नी शाक्तीकी आढ्यङ्करणी तरुणी तलुनी ॥ **यञश्च** ।४।१।१६। यञन्तात् स्त्रियां ङीप्स्यात् अकारलोपे कृते ॥ **हलस्तद्धितस्य** ।६।४।१५०। हलः परस्य तद्धितयकारस्योपधाभूतस्य लोप ईति परे । गार्गी ॥ **प्राचां ष्फ तद्धितः** ।४।१।१७। यञन्तात् ष्फो वा स्यात् स च तद्धितः ॥ **षिद्गौरादिभ्यश्च** ।४।१।४१। षिद्भ्यो गौरादिभ्यश्च ङीष्स्यात् । गार्ग्यायणी नर्तकी गौरी अनडुही अनड्वाही । आकृतिगणोऽयम् ॥ **वयसि प्रथमे** ।४।१।२०। प्रथमवयोवाचिनोऽदन्तात्स्त्रियां ङीप् स्यात् । कुमारी ॥ **द्विगोः** ।४।१।२१। अदन्ताद्द्विगोर्ङीप्स्यात् । त्रिलोकी । अजादित्वात्त्रिफला त्र्यनीका सेना ॥ **वर्णादनुदात्तात्तोपधात्तो नः** ।४।१।३९। वर्णवाची योऽनुदात्तान्तस्तोपधस्तदन्तादनुपसर्जनात्प्रातिपदिकाद्वा ङीप् तकारस्य नकारादेशश्च । एता एनी । रोहिता रोहिणी ॥ **वोतो गुणवचनात्** ।४।१।४४। उदन्ताद्गुणवाचिनो वा ङीष्स्यात्

---

वार्तिकेन नञ्प्रत्ययान्तात्स्त्रैणशब्दात् ङीपि स्त्रैणी ॥ स्नञ्प्रत्ययान्तात्पौंस्नशब्दात् ङीपि पौंस्नी ॥ ईकक्प्रत्ययान्तात् शाक्तीकशब्दात् ङीपि शाक्तीकी ॥ ख्युन्प्रत्ययान्तात् आढ्यंकरणशब्दात् ङीपि आढ्यंकरणी ॥ तरुणशब्दात् ङीपि तरुणी । एवं तलुनी ॥ तरुणतलुनशब्दाभ्यां **वयसि प्रथमे** इति सूत्रोपरि वयस्य चरम इति वाच्यमिति ङीपि प्राप्ते तं बाधित्वा गौरादिगणपाठात् ङीषि प्राप्ते तमपि बाधित्वा ङीपैव भाव्यमित्येतदर्थं नञ्स्नञ् इति वार्तिके तरुणतलुनयोर्ग्रहणम् । गार्गी इत्यत्र गार्ग्यशब्दात् **यञश्चे**ति सूत्रेण ङीपि भसंज्ञायामकारलोपे गार्ग्य् ई इति जातं तत्र **हलस्तद्धितस्ये**ति सूत्रेण यकारलोपे संयोगे च गार्गी ॥ गार्ग्यायणीत्यत्र गार्ग्यशब्दात् **प्राचां ष्फ तद्धित** इति सूत्रेण ष्फप्रत्यये **षः प्रत्ययस्ये**ति षस्येत्संज्ञायां **तस्य लोप** इति लोपे **आयनेयीनी**ति सूत्रेण फस्थाने आयनादेशे नस्य णत्वे गार्ग्यायण इति जातं तत्र **षिद्गौरादिभ्यश्चे**ति ङीषि ङषयोर्लोपे भत्वे भत्वादल्लोपे च गार्ग्यायणी ॥ नर्तकशब्दात् **षिद्गौरादिभ्यश्चे**ति ङीषि ङषयोर्लोपे भत्वे भत्वादल्लोपे च नर्तकी ॥ एवं गौरशब्दाद् ङीषि गौरी ॥ अनडुह्शब्दात् **अनडुह्शब्दस्याम् ङीषि वा वाच्य** इति वार्तिकेन आमि **इको यणची**ति यणि **गौरादिभ्यश्चे**ति ङीषि च अनड्वाही ॥ पक्षे अनडुह्शब्दात् ङीषि अनडुही ॥ कुमारशब्दात् **वयसिप्रथमे** इति ङीपि भत्वादल्लोपे कुमारी ॥ त्रयाणां लोकानां समाहारस्त्रिलोकी इत्यत्र त्रिलोकशब्दात् **द्विगो**रिति सूत्रेण ङीपि भत्वादल्लोपे त्रिलोकी ॥ त्रिफला । त्र्यनीका इत्यत्र **द्विगो**रिति सूत्रेण ङीपि प्राप्तेपि अजादिगणे त्रिफलात्र्यनीकाशब्दयोः पाठात् **अजाद्यतष्टाप्** इति टापि त्रिफला । त्र्यनीका । एनी इत्यत्र एतच्छब्दात् **वर्णादनुदात्तात्तोपधात्तोन** इति ङीपि तकारस्थाने नकारे भत्वादल्लोपे संयोगे च एनी ॥ पक्षे **अजाद्यतष्टाप्** इति टापि एता ॥ एवं रोहितशब्दात् ङीपि तकारस्थाने नकारे नस्य णत्वे रोहिणी पक्षे टापि रोहिता ॥ मृदुशब्दात्**वोतो गुणवचनात्** इति

मृद्वी मृदुः ॥ **बह्वादिभ्यश्च** ।४।१।४५। एभ्यो वा ङीष्स्यात् । बह्वी बहुः । (कृदिकारादक्तिनः) रात्रिः रात्री । (सर्वतोऽक्तिन्नर्थादित्येके) शकटी शकटिः ॥ **पुंयोगादाख्यायाम्** ।४।१।४८। या पुमाख्या पुंयोगात्स्त्रियां वर्तते ततो ङीष् । गोपस्य स्त्री गोपी । (पालकान्तान्न) गोपालिका अश्वपालिका ॥ **प्रत्ययस्थात्कात्पूर्वस्यात इदाप्यसुपः** ।७।३।४४। प्रत्ययस्थात्कात्पूर्वस्याकारस्येकारः स्यादापि स आप्सुपः परो न चेत् । सर्विका कारिका । अतः किम् । नौका । प्रत्ययस्थात्किम् । शक्नोतीति शका । असुपः किम् । बहुपरिव्राजका नगरी । (सूर्याद्देवतायां चाब्वाच्यः) सूर्यस्य स्त्री देवता सूर्या । देवतायां किम् (सूर्यागस्त्ययोश्छे च ङ्यां च) यलोपः । सूरी कुन्ती मानुषीयम् ॥ **इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमातुलाचार्याणामानुक्** ।४।१।४९। एषामानुगागमः स्यात् ङीष् च । इन्द्रस्य स्त्री इन्द्राणी वरुणानी भवानी शर्वाणी रुद्राणी मृडानी । (हिमारण्ययोर्महत्त्वे) महद्धिमं हिमानी ।

---

सूत्रेण ङीपि **इको यणचीति** यणि ॥ मृद्वी पक्षे मृदुः ॥ बहुशब्दात् **बह्वादिभ्यश्चेति** ङीपि ङपयोर्लोपे यणि च बह्वी पक्षे बहुः ॥ रात्रिशब्दात्**कृदिकारादक्तिन** इति सूत्रेण ङीपि भत्वादिकारलोपे रात्री पक्षे रात्रिः ॥ शकटिशब्दात् **सर्वतोऽक्तिन्नर्थादित्येके** इति वार्तिकेन ङीपि भत्वादिकारलोपे शकटी ॥ पक्षे शकटिः ॥ गोपस्य स्त्री इत्यत्र **पुंयोगादाख्याया**मिति सूत्रेण गोपशब्दात् ङीपि भत्वादकारलोपे गोपी ॥ गोपालकस्य स्त्री इत्यत्र **पुंयोगादाख्याया**मिति ङीपि प्राप्ते **पालकान्तान्नेति** निषेधे **अजाद्यतष्टाप्** इति टापि भकारलोपे **प्रत्ययस्थात्कादिति** सूत्रेण ककारात्पूर्वस्य लकारोत्तरवर्त्यकारस्थाने इकारे कृते गोपालिका ॥ एवमश्वपालिका ॥ सर्वकशब्दात् **अजाद्यतष्टाप्** इति टापि थकारलोपे **प्रत्ययस्थात्कात्** इति कपूर्वस्य वकारोत्तरवर्त्यकारस्य इकारे सर्विका ॥ एव कारकशब्दादापि कारिका ॥ **प्रत्ययस्थात्कादिति** सूत्रे अत इति नापठिष्यच्चेदाचार्यास्तर्हि नौका इत्यत्र कपूर्वस्य औकारस्यापि स्थाने इकारप्राप्तिः समभविष्यत् । प्रत्ययस्थात्कादित्यनुक्तौ शका इत्यत्र धातुस्थककारात्पूर्वस्यापि शकारोत्तरवर्त्यकारस्य स्थाने इकारः समभविष्यत् । असुप इत्यनुक्तौ बहुपरिव्राजका इत्यत्र सुपः परेऽपि इकारोऽभविष्यदित्येतन्निवारणायैव असुप इत्युक्तम् ॥ सूर्यस्य स्त्री इत्यत्र सूर्यशब्दात् **सूर्याद्देवतायां चाप्** इति चापि चकारपकारयोर्लोपे अकारलोपे सूर्या ॥ सूर्यस्य मानुषी स्त्री इत्यत्र **पुंयोगादाख्याया**मिति ङीषि भत्वादकारलोपे सूर्य् ई इति जाते तत्र **सूर्यागस्त्ययोश्छे च ङ्यां च** इति यलोपे रेफस्य ईकारेण सह योगे सूरी ॥ इन्द्रस्य स्त्री इत्यत्र इन्द्रशब्दात् **पुंयोगादाख्याया**मित्यनेन ङीषि ङषयोर्लोपे इन्द्र ई इति जाते तत **इन्द्रवरुणभवशर्वेति** सूत्रेण आनुकि उकौ लोपे **अकः सवर्णे** इति दीर्घे नस्य णत्वे संयोगे च इन्द्राणी ॥ एव वरुणस्य स्त्री वरुणानी ॥ भवस्य स्त्री भवानी ॥

महद्दरण्यमरण्यानी । ( यवाद्दोषे ) दुष्टो यवो यवानी । ( यवनाल्लिप्याम् ) यवनानां लिपिर्यवनानी । ( मातुलोपाध्याययोरानुग्वा ) मातुलानी मातुली । उपाध्यायानी उपाध्यायी । ( आचार्यादणत्वं च आचार्यस्य स्त्री आचार्यानी । ( अर्यक्षत्रियाभ्यां वा स्वार्थे ) अर्याणी अर्या । क्षत्रियाणी क्षत्रिया ॥ **क्रीतात्करणपूर्वात्** ।४।१।५०। क्रीतान्ताददन्तात्करणादेः स्त्रियां ङीष् स्यात् । वस्त्रक्रीती । क्वचिन्न । धनक्रीता ॥ **स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्** ।४।१।५४। असंयोगोपधमुपसर्जनं यत्स्वाङ्गं तदन्ताददन्तान्ङीष्वा स्यात् । केशानतिक्रान्ता अतिकेशी अतिकेशा चन्द्रमुखी चन्द्रमुखा । असंयोगोपधात्किम् । सुगुल्फा । उपसर्जनात्किम् । शिखा ॥ **न क्रोडादिबह्वचः** ।४।१।५६। क्रोडादेर्बह्वचश्च स्वाङ्गान्न ङीष् । कल्याणक्रोडा । आकृतिगणोऽयम् । **नखमुखात्संज्ञायाम्** ।४।१।५८। न ङीष् ॥ **पूर्वपदात्संज्ञायामगः** ।८।४।३। पूर्वप-

---

शर्वस्य स्त्री शर्वाणी मृडस्य स्त्री मृडानी इत्यादिषु **इन्द्रवरुणभवशर्वे**ति सूत्रेण ङीपि आनुकि च कृते तानि तानि रूपाणि सिद्ध्यन्ति ॥ महद्धिममित्यत्र हिमशब्दात् **हिमारण्ययोर्महत्त्वे** इति वार्तिकेन ङीपि आनुकि च हिमानी ॥ एवं महद्दरण्यमरण्यानी ॥ दुष्टो यव इत्यत्र **यवाद्दोषे** इति वार्तिकेन ङीपि आनुकि च यवानी ॥ यवनानां लीपिरित्यत्र **यवनाल्लिप्या**मिति ङीपि आनुकि च यवनानी ॥ मातुलस्य स्त्री इत्यत्र **इन्द्रवरुणभवशर्वे**ति ङीपि **मातुलोपाध्याययोरानुग्वे**ति आनुकि च मातुलानी ॥ वाग्रहणात् आनुगभावे मातुली ॥ एवमुपाध्यायस्य स्त्री उपाध्यायानी उपाध्यायी ॥ आचार्यस्य स्त्री इत्यत्र **इन्द्रवरुणभवशर्वे**ति सूत्रेण ङीपि आनुकि च **अकः सवर्णे** इति दीर्घे आचार्यान् ई इति जातं तत्र **अट्कुप्वा**ङिति नस्य णत्वे प्राप्ते **आचार्यादणत्वं** चेति णत्वाभावे आचार्यानी ॥ अर्यशब्दात्स्वार्थे **अर्यक्षत्रियाभ्यां वा स्वार्थे** इति वार्तिकेन विकल्पेन ङीपि आनुकि च अर्याणी पक्षे अर्या ॥ एवं क्षत्रियाणी क्षत्रिया ॥ वस्त्रक्रीतशब्दात् **क्रीतात्करणपूर्वा**दिति ङीपि वस्त्रक्रीती ॥ धनक्रीतशब्दात् **गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक्सुबुत्पत्ते**रिति परिभाषाया अप्राप्तौ समासत्वात्पूर्वं टाप् ततोदन्तत्वाभावान्न ङीप् धनक्रीता ॥ केशान् अतिक्रान्ता इत्यत्र अतिकेशशब्दात् **स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्** इति सूत्रेण ङीपि अतिकेशी ॥ एवं चन्द्रमुखी ॥ सुगुल्फा इत्यत्र संयोगोपधत्वान्न ङीप् ॥ शिखेत्यत्र उपसर्जनत्वाभावान्न ङीप् ॥ कल्याणक्रोडशब्दात् **स्वाङ्गाच्चोपसर्जना**दिति ङीपि प्राप्ते **न क्रोडादिबह्वच** इति सूत्रेण ङीपो निषेधे टापि च कल्याणक्रोडा ॥ एवं सुजघना इत्यत्रापि **स्वाङ्गाच्चोपसर्जना**दिति ङीपि प्राप्ते **न क्रोडादिबह्वच** इति तन्निषेधे टाबेव ॥ शूर्पणखा इत्यत्र **स्वाङ्गाच्चोपसर्जना**दिति ङीपि प्राप्ते **नखमुखात्संज्ञाया**मिति निषेधे टापि शूर्पनखा इति जातं तत्र **पूर्वपदात्सं-**

दस्थान्निमित्तात्परस्य नस्य णः स्यात्संज्ञायां न तु गकारव्यवधाने । शूर्पणखा गौरमुखा । संज्ञायां किम् । ताम्रमुखी कन्या ॥ **जातेरस्त्रीविषयादयोपधात्** ।४।१।६३। जातिवाचि यन्न च स्त्रियां नियतमयोपधं ततः स्त्रियां ङीष् स्यात् । तटी वृषली कठी बह्वृची । जातेः किम् । मुण्डा । अस्त्रीविषयात्किम् । बलाका । अयोपधात्किम् । क्षत्रिया। ( योपधप्रतिषेधे गवयहयमुकयमनुष्यमत्स्यानामप्रतिषेधः ) गवयी हयी मुकयी । हलस्तद्धितस्येति यलोपः । मनुषी । (मत्स्यस्य ङ्याम् ) यलोपः । मत्सी ॥ **इतो मनुष्यजातेः** ।४।१।६५। ङीष् । दाक्षी ॥ **ऊङुतः** ।४।१।६६। उदन्तादयोपधान्मनुष्यजातिवाचिनः स्त्रियामूङ् स्यात्। कुरूः । अयोपधात्किम् । अध्वर्युर्ब्राह्मणी ॥ **पङ्गोश्च** ।४।१।६८। पङ्गूः (श्वशुरस्योकाराकारलोपश्च) चादूङ् श्वश्रूः ॥ **ऊरूत्तरपदादौपम्ये** ।४।१।६९। उपमावाचि पूर्वपदमूरूत्तरपदं यत्प्रातिपदिकं तस्मादूङ् स्यात् । करभोरूः ॥ **संहितशफलक्षणवामादेश्च** ।४।१।७०। अनौपम्यार्थं सूत्रम् । संहितोरूः शफोरूः लक्षणोरूः वामोरूः ॥ **शार्ङ्गरवाद्यञो ङीन्** ।४।१।७३। शार्ङ्गरवादेरञो योऽकारस्तदन्ताच्च जातिवाचिनो ङीन् स्यात् । शार्ङ्गरवी वैदी ब्राह्मणी । नृनरयोर्वृद्धिश्च । नारी ॥

---

**ज्ञायामग** इति नस्य णत्वे शूर्पणखा ॥ एवं गौरमुखा ॥ ताम्रमुखी इत्यत्र संज्ञाया अभावान्न ङीषो निषेधः । तटशब्दात् **जातेरस्त्रीविषयादयोपधात्** इति ङीषि भत्वादकारलोपे सयोगे च तटी । एवं वृषली ॥ कठी । बह्वृची । मुण्डा इत्यत्र जातित्वाभावान्न ङीष् ॥ बलाका इत्यत्र नित्यस्त्रीत्वान्न ङीष् । क्षत्रिया इत्यत्र योपधत्वान्न ङीष् ॥ गवयशब्दस्य योपधत्वेऽपि **हयगवयमुकयमत्स्यमनुष्याणामप्रतिषेध** इति वार्तिकेन प्रतिषेधाभावे **जातेरस्त्रीविषयादयोपधादि**ति सूत्रेण ङीषि गवयी ॥ एवं हयी ॥ मुकयी ॥ मत्स्यशब्दात् ङीषि भत्वे भत्वादकारलोपे **सूर्यतिष्यागस्त्यमत्स्यानां य उपधाया** इति सूत्रेण यलोपे प्राप्ते वार्तिकेन नियमात् मत्सी ॥ एवं मनुष्यशब्दात् ङीषि भत्वादकारलोपे **हलस्तद्धितस्य** इत्यनेन यकारलोपे च मनुषी ॥ दाक्षिशब्दात् **इतो मनुष्यजातेः** इत्यनेन ङीषि भत्वे भत्वादिकारलोपे च दाक्षी ॥ कुरु इत्यत्र **ऊङुत** इत्यनेन ऊङि **अकः सवर्णे** इति दीर्घे कुरूः ॥ पङ्गुशब्दात् **पङ्गोश्चे**ति सूत्रेण ऊङि दीर्घे च पङ्गूः ॥ श्वश्रूरित्यत्र श्वशुरशब्दात् **श्वशुरस्योकाराकारलोपश्चे**त्यनेन ऊङि शकारोत्तरवर्त्युकारस्य रकारोत्तरवर्त्यकारस्य च लोपे सयोगे च श्वश्रूः ॥ करभोरुशब्दात् **ऊरूत्तरपदादौपम्ये** इति सूत्रेण ऊङि **अकः सवर्णे** इति दीर्घे च करभोरूः ॥ संहितोरुशब्दात् **संहितशफलक्षणवामादेश्च** इति ऊङि दीर्घे च संहितोरूः ॥ एवं शफोरूः ॥ लक्षणोरूः ॥ वामोरूः ॥ शार्ङ्गरवशब्दात् **शार्ङ्गरवाद्यञो ङीन्** इति ङीनि भत्वादकारलोपे सयोगे च शार्ङ्गरवी ॥ एवं वैदशब्दादञन्तत्वात् **शार्ङ्गरवाद्यञो ङीन्** इति ङीनि भत्वादकारलोपे सयोगे च वैदी ॥ एवं ब्राह्मणी ॥ नरशब्दात् **शार्ङ्ग-**

**यूनस्तिः।४।१।७७।** युवन्शब्दात्स्त्रियां तिः प्रत्ययः स्यात् ॥ युवतिः ॥ इति स्त्रीप्रत्ययाः ॥

शास्त्रान्तरेप्रविष्टानां बालानां चोपकारिका ॥
कृता वरदराजेन लघुसिद्धान्तकौमुदी ॥ १ ॥

इति श्रीवरदराजकृता लघुसिद्धान्तकौमुदी समाप्ता ॥

---

**रथाभ्यो ङीन्** इति ङीनि **ऋनरयोर्वृद्धिश्चेति** वार्तिकेन नकारोत्तरवर्त्यकारस्य स्थाने वृद्धौ नारी ॥ युवन्शब्दात् **यूनस्तिः** इति सूत्रेण तिप्रत्यये **नलोपः प्रातिपदिकान्तस्येति** नकारलोपे युवतिः ॥ श्रीरस्तु ॥ इति श्रीमत्सद्गुरुश्रीकेशवकृपाकल्पवल्लरीपल्लवायमानायां प्रयोगमणिमालायां स्त्रीप्रत्ययाः पूर्णतामगच्छन् ॥

इयं श्रीराजराजेश्वरीराजराजेशयोर्मया ॥ समर्प्यते पदद्वन्द्वे प्रयोगमणिमालिका ॥ १ ॥
नयविनयमयात्मा श्रीरवाजिक्षितीन्द्रो हरिहरपतिभक्ता मोंधिवा तस्य पत्नी ॥
परशिवपदभाजौ तावुभौ सर्वदास्तामलिखदखिलमेतद्यन्निदेशाज्जनोऽयम् ॥ २ ॥
माहेश्वरात्मजनुषोर्द्धशशांकमौलेर्दासस्य वर्यगुरुकेशवधर्मसूनोः ॥
एषा कृतिर्मम जटाशिवमित्रमौलेर्गौरीगिरीशपदयोः कुसुमाञ्जलिः स्यात् ॥ ३ ॥
महाराजश्रीरवाजिपाठशालैकशास्त्रिणा ॥ कृता शंकरलालेन कृतिरेषा सतां मुदे ॥ ४ ॥
देवः प्रयोगमणिमालिकयानया श्रीशैलाधिराजतनयापतिरस्तु तुष्टः ॥
भूयाच्च मय्यधिगतोत्तममोक्षलक्ष्म्योः श्रीकेशवेश्वरमहेश्वरयोः प्रसादः ॥ ५ ॥
दयादृष्टिसुधावृष्ट्या श्रीकेशवमहेशयोः ॥ समंतात्फलितो मेऽयं मनोरथमहाद्रुमः ॥ ६ ॥

शिवमस्तु सदा सदाशिवप्रसादात्
सर्वेषाम् ।

श्रीः ।

# लघुकौमुदीस्थसूत्राणामकारादिवर्णक्रमः ।

अइउण् १ ऋलृक् २ एओङ् ३ ऐऔच् ४ हयवरट् ५ लण् ६ ञमङणनम् ७ झभञ् ८ घढधष् ९ जबगडदश् १० खफछठथचटतव् ११ कपय् १२ शषसर् १३ हल् १४ । इति माहेश्वराणि सूत्राण्यणादिसंज्ञार्थानि ।